आनन्दाश्रमसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः १०१



# शांकरपादभूषणम् ।

मीमांसान्यायवेदान्ताद्यनेकतन्त्रमर्मविवेकनिष्णातपर्वतोपाह्व-

श्रीरघुनाथसूरिविरचितम् ।

प्रथमो भागः (१)



मूल्यं-पञ्चविंशतिपणकयुताः सप्तरूपकाः (७-२५)

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।
ग्रन्थाङ्कः १०१

# शांकरपादभूषणम् ।

मीमांसान्यायवेदान्ताद्यनेकतन्त्रमर्मवेदैकनिष्णातपर्वतोपाह्वश्रीरघुनाथ-
सूरिविरचितम् ।

तत्र प्रथमो भागः ।

सोऽयम् ।
वे० शा० सं० रा० शंकरशास्त्री मारूलकर
वे० शा० सं० रा० दिगम्बरशास्त्री काशीकर
इत्येताभ्यां संशोधितष्टिप्पण्यादिनाऽलंकृतश्च ।

एतत्पुस्तकं
बी. ए. इत्युपपदधारिभिः
विनायक गणेश आपटे
इत्येतैः
पुण्याख्यपत्तने
श्रीमन् ' महादेव चिमणाजी आपटे ' इत्यभिधेय-
महाभागप्रतिष्ठापिते
आनन्दाश्रममुद्रणालये
आयसाक्षरैर्मुद्रयित्वा
प्रकाशितम् ।

शालिवाहनशकाब्दाः १८५४
खिस्ताब्दाः १९३२



मूल्यं त्रयोदशाणकयुतं रूपकचतुष्टयम् ( ४।१३ ) ।

# प्रस्तावना ।

अस्मिन्खलु जगति सुखावाप्त्यर्थमेव स्वस्वसामर्थ्यानुरोधेन सर्वेऽपि प्राणिनो महता नैपुण्येन प्रयतन्ते । कथंचिल्लब्धं च सुखं चिरकालं यथाऽनुभूयेत तथा महान्तं प्रयत्नं प्रकुर्वन्ति । परंतु न कश्चिदपि प्राणी चिरकालं तदनुभवति । किंतु सुखसाधनानां नश्वरत्वात्तन्नाशे सुखनाशात्सर्वेऽपि क्लिश्यन्त एव । एतादृशीं च सर्वेषां प्राणिनामवस्थां पर्यालोच्य तत्समुद्दिधीर्षया श्रीमद्भगवद्बादरायणमहर्षिर्ब्रह्मसूत्राणि प्रणिनाय । तत्र च यस्य ज्ञानेन निरतिशयं नित्यं सुखं सर्वेऽपि प्राणिनः साक्षात्परम्परया वा प्राप्स्यन्ति तादृशं जगत्कारणत्वेन श्रुतिसंमतं ब्रह्म वर्णितम् । किं चान्यैः श्रुतिविरुद्धं जगत्कारणत्वेन यद्वर्णितं तन्न युक्तमित्यपि प्रतिपादितम् । अत्र च चत्वार आचार्या भाष्यं चक्रुः । तत्र श्रीमच्छंकराचार्यैरिमानि सूत्राण्यद्वैतपराणि संयोजितानि । श्रीमद्रामानुजाचार्यैर्विशिष्टाद्वैतपराणीत्युक्तम् । श्रीमद्वल्लभाचार्यैः शुद्धाद्वैतपराणीति प्रतिपादितम् । श्रीमन्मध्वाचार्यैस्तु द्वैतपराण्येवेत्युक्तम् । एवं चेयं महती विप्रतिपत्तिः । न हि सर्वेषामपि मतानि युक्तान्येवेति कल्पयितुं शक्यते । तथा सत्यव्यवस्थापातात् । सिद्धे वस्तुस्वरूपे विकल्पासंभवाच्च । किंचान्येषां मतखण्डनप्रयासस्य वैयर्थ्यं स्यात् । कृतेऽपि श्रीमद्भगवद्व्यासेनान्यमतखण्डने निरुक्तरीत्या पुनरपि मतभेदस्य सत्त्वात् । तत्र च श्रीमच्छंकराचार्याणामेव मते द्वैताद्वैतोभयश्रुतिव्यवस्था सम्यग्रीत्या संगच्छते । अन्येषां मते त्वद्वैतश्रुतिवाक्यानां सम्यग्रीत्या यथाश्रुतार्थो नैव वर्णयितुं पार्यते । यद्यपि रामानुजाचार्या वल्लभाचार्याश्चाद्वैतिनो वयमिति मन्यन्ते तथाऽपि तेऽन्ततो द्वैतिन एव । मध्वाचार्यास्तु स्पष्टमेव द्वैतिनः । एवं च यथा नैयायिकादयो द्वैतिनस्तद्वदेवेमेऽपि द्वैतिन एव ।

अयं तु विशेषः—नैयायिकादयस्तर्कस्य प्राधान्यं श्रुतेस्तु तदनुरोधेनार्थप्रतिपादकत्वं स्वीकृत्य स्वसिद्धान्तं वदन्तो बहिःशत्रवः । रामानुजाचार्यादयस्तु श्रुतिप्राधान्यं बहिर्दर्शयित्वाऽन्ततस्तु तर्कस्यैव प्राधान्यं गृहीत्वा ब्रह्मसूत्राण्येव स्वस्वमतानुरोधेन व्याचक्षाणा अन्तःशत्रव इति । तत्रान्तःशत्रवो जघन्यतराः । यथा हि लोके गृहभेदिन इत्युच्यन्ते । तेषां नाशोऽपि रोक्ष्येण कर्तुं न शक्यते । शत्रुत्वस्य स्पष्टं ज्ञानाभावात् । किंतु तेऽस्याऽऽत्मीया वयमिति बहिर्दर्शयित्वाऽकस्मादेव प्राणनाशं कुर्वन्ति । बहिःशत्रूणां तु शत्रुत्वस्य स्पष्टं ज्ञानात्तन्नाशः सुकरो भवति । श्रीमच्छंकराचार्यास्तु प्रमाणशिरोभूतायाः श्रुतेः

रेव प्राधान्यं स्वीकृत्य तर्कस्य तु श्रुत्यनुरोधेनोपवर्णनं कुर्वन्ति । तत्र बहिःश-त्रुभूतानां नैयायिकादिसांख्यान्तानां तैरेव साक्षात्खण्डनं कृतम् । अन्तःशत्रूणां तु पश्चादुपस्थितत्वान्न तन्मतखण्डनप्रसङ्गः । तत्र चान्तःशत्रुभूतैरानन्दतीर्थीयैः शांकरभाष्यं महता प्रयासेन कथंचित्खण्डितम् । तच्च तत्खण्डनमद्वैतमतद्वेषमूल-कमिति निरभिमानिनां सहृदयानां विदुषां स्पष्टमेव दर्शनपथमायाति । यद्यप्या-नन्दतीर्थीयमतखण्डनं श्रीमन्मधुसूदनसरस्वत्यादिभिर्बहुशः कृतं तथाऽपि श्रीमद्व्यासतीर्थप्रणीतायास्तात्पर्यचन्द्रिकायाः स्वातन्त्र्येण केनापि खण्डनस्या-कृतत्वात्तत्खण्डनं तत्प्रसङ्गेन तत्त्वप्रकाशिकायाश्च खण्डनं कर्तुं श्रीमद्रघुनाथप-ण्डिताः प्रवृत्ताः । यद्यपि रामानुजाचार्यादिभिरप्यद्वैतमतखण्डनं कृतं तथाऽ-पि चन्द्रिकायाम् 'यत्तुभास्याम्' इत्याद्यनुवादपुरःसरं शांकरमतवत्तन्मत-स्यापि खण्डितत्वात्प्रधानमल्लनिबर्हणन्यायेन मध्वमतखण्डने कृते तन्मतखण्डनं कृतप्रायमेवेति न तन्मतखण्डने स्वातन्त्र्येण श्रीमद्रघुनाथसूरीणां प्रयत्नः ।

किंच मध्वमतस्यैव प्रकृष्टान्तःशत्रुत्वं भवति । यथा हि मध्वमतानुया-यिभिः साकं शांकरमतानुयायिनां भोजनकन्यादानग्रहणादिव्यवहारा महाराष्ट्र-देश इदानीमुपलभ्यन्ते न तथा वल्लभरामानुजमतानुयायिभिः साकम् । अतो महदेवान्तःशत्रुत्वं मध्वमतानुयायिनाम् । यद्यपि चित्तपावनाः सन्तो ये शांक-रमतानुयायिनस्तेषां मध्वमतानुयायिभिः साकं कन्यादानग्रहणव्यवहारः सर्वत्र नोपलभ्यते तथाऽपि क्वचित्पुण्यपत्तनादौ दृश्यत एव । अतोऽपि मतद्वयं परि-त्यज्याऽऽनन्दतीर्थीयमतखण्डन एव बद्धपरिकराः सन्तो रघुनाथपण्डिताः प्रवृत्ताः । तत्रेदानीं व्यावहारिकदृष्ट्या शांकरानन्दतीर्थीयमतयोर्गुणदोषविचा-रणा क्रियते । तत्र शांकरमतानुयायिनः शिवविष्ण्वादीनां सर्वासां देवतानां भजनपूजनादिकं कुर्वन्ति । तेषां गृहे हि विष्णुमूर्तिः शालग्रामो वा नेति न कदाऽपि भवति । तथा भस्मगोपीचन्दनादि सर्वं दधति । चन्दनस्य पट्टवर्धनो-र्ध्वपुण्ड्रादि चिह्नं सर्वं दधति । तथा पित्र्ये कर्मण्यपि मध्वमतानुयायिनिवेशं कुर्वन्ति । बहिःशुचित्वं तु प्रकृष्टं नोपलभ्यते । किंतु सामान्यत एव । न चायं दोष इति वाच्यम् । बहिःशुचित्वस्यान्तःकरणशुद्ध्यर्थत्वेन तदाधिक्ये च मनसः संशयाद्याधिक्यापातात् । अत एव बहिःशुचित्वाधिक्यवतां संशयाधि-क्यमुपलभ्यते ।

किंच शांकरमतानुयायिनां स्त्रियो बालाश्च विष्णुरगीतादिकं प्रायशः पठन्ति । मध्वमतानुयायिनस्तु शिवव्यतिरिक्तानां देवतानां भजनपूजनादिकं

कुर्वन्ति । शिवस्य तु स्वप्नेऽपि पूजनं कदाऽपि न कुर्वन्ति । प्रत्युत शिवद्वेष एव प्राधान्येनोपलभ्यते । अत एव तेषां गृहे शिवलिङ्गादिकं नोपलभ्यते क्वचिदपि । शिवचिह्नभूतं भस्मत्रिपुण्ड्रं चन्दनकृतपट्टवर्धनचिह्नं च न कदाऽपि दधति । किंतूर्ध्वपुण्ड्रमेव सदा दधति । तथा पित्र्ये कर्मणि शांकरमतानुयायिसंग्रहं नैव कुर्वन्ति । बहिःशुचित्वं त्वाधिक्येनोपलभ्यते । तथा तेषां स्त्रियो बालाश्चापि शिवशब्दमपि मुखेन नोच्चारयन्ति । कुतः पुनः शिवपरगीतगानम् । किंतु विष्णुपराण्येव गीतानि गायन्ति । किंच कयाचित्स्त्रिया शिवपरपद्यं गीयते चेत्किमेतदिति स्त्रियोऽपि वदन्ति । किंच केनाचिद्बालेन कदाचिच्छिवचिह्नभूतं पट्टवर्धनं ध्रियते चेत्पण्डितो मेधावी मध्वमतानुयायी ब्रूते किमेतत्त्वया वैष्णवेन ध्रियत इति । एवं चैतन्मते शिवद्वेषविषयकः संस्कारो वंशपरम्परागत एवोपलभ्यते ।

ननु शांकरमतानुयायिनोऽपि केचन मध्वमतानुयायिद्वेषं प्रकुर्वाणा उपलभ्यन्त एवेति कथं मध्वमतानुयायिन एव तदीयं द्वेषं कुर्वन्तीत्युच्यत इति चेत् । उच्यते—यद्यपि मध्वमतानुयायिद्वेषं केचन शांकराः कुर्वन्ति तथाऽपि न ते विष्णुदेवताद्वेषं कदाऽपि कुर्वन्ति । यदि च केचन शांकरमतानुयायिनो विष्णुद्वेषं कुर्युस्तर्हि तेऽपि न मान्याः । किंतु जघन्यतरा एव बोध्याः । ये च मध्वमतानुयायिनोऽपि केचन शिवद्वेषं न कुर्युश्चेत्तर्हि तेऽपि मान्या एव ।

अयं तु विशेषः—शांकरमतानुयायिनो मध्वमतानुयायिद्वेषं यत्कुर्वन्ति तत् ' शिवद्वेषिण इमे ' इत्येव बुद्ध्या । मध्वमतानुयायिनस्तु यच्छांकरमतानुयायिद्वेषं कुर्वन्ति तत्तु ' इमे शिवपूजकाः ' इत्येव बुद्ध्येति । एवं चोभयोर्द्वेषस्योत्पादकः शिव एवेति पर्यवसितम् । परंतु ब्रह्मसूत्रेषु भगवता व्यासेन न शिवस्य नापि विष्णोः साक्षादुल्लेखः कृतः । एवं सति कथमिमे मध्वमतानुयायिनः शिवद्वेषं कुर्वन्ति किंवा तेषां शिवेनापराद्धमिति त एव प्रष्टव्याः । अहं तु मन्येऽन्धपरम्परैवेयम् । अथवा सौरपुराणे यदुक्तम्—' भगवता शिवेन मदनदाहे कृते तत्पत्न्या रत्या क्रियमाणं विलापं विलोक्य मदनसचिवो मधुरिमां प्रतिज्ञां चकार—कलियुगेऽहमवतारं गृहीत्वा महता प्रयत्नेन शिवद्वेषं करिष्यामीति ' तन्मूलकोऽयं द्वेष इति विभावनीयम् । युक्तं चैतत् । यतः शिवद्वेष एवोपलभ्यते न त्वन्यासां देवतानाम् ।

ननु नैतत्कारणम् । किंतु श्रुतिस्मृतिपुराणेषु शिवापेक्षया विष्णोर्माहात्म्याधिक्यं श्रूयते । तत्कथं विष्णुसाम्यं तदाधिक्यं वा शिवस्य कल्पयित्वा प्राधा-

न्येन शिवस्य भजनपूजनादिकमिमे शांकरमतानुयायिनः कुर्वन्तीत्येतावदेव शिवद्वेषकारणमिति चेत् । मैवम् । शिवस्यापि विष्ण्वपेक्षया माहात्म्याधिक्यं श्रुतिस्मृतिलिङ्गपुराणेषु बहुषु स्थलेषूपलभ्यत इति तत्रत्यवाक्यपुरःसरं श्रीमद्रघुनाथसूरिभिर्दर्शितत्वेन निरुक्तकारणापेक्षया भिन्नकारणस्य दुर्वचत्वात् । एवं च व्यावहारिकदृष्ट्या मतद्वयगुणदोषपर्यालोचनायां शांकरमतमेव ज्याय इति पर्यवस्यति ।

ननु पण्डितवरैः श्रीमज्जयतीर्थव्यासतीर्थादिभिरपि सुप्रसिद्धमप्यद्वैतमतं परित्यज्य माध्वमतमेवाङ्गीकृतम् । न हि तैरद्वैतमतं न ज्ञायत इति वक्तुं पार्यते । एवं च माध्वमतापेक्षया शांकरमतस्य कथं ज्यायस्त्वं वर्ण्यत इति चेत् । उच्यते—यद्यपि ते पण्डितवरास्तथाऽपि पूर्वजन्मकृतकर्मणा माध्वमताभिनिवेशपराहता इति तदीयग्रन्थपर्यालोचनया स्पष्टं दर्शनपथमायाति । किंचैते माध्वा वयं वैष्णवा इति लोके वदन्तो द्वैतमतप्रचारं महता प्रयत्नेन कुर्वन्ति तदतीवानुचितम् । ननु ये माध्वास्त एव वैष्णवास्त एव च द्वैतमतप्रवर्तका इति लोकेऽबाधितप्रसिद्धेः सत्त्वात्तेषां च स्वमतप्रवर्तकत्वं सर्वथोचितमेव । तच्च मतं सिद्धान्ते श्रुतिवाक्यानां सम्यगन्वयादिना न युक्तमित्यन्यदेतत् । एवं च तेषां स्वमतप्रसिद्धियत्नो नानुचित इति चेत् । अत्रोच्यते—ये हि माध्वा न ते वैष्णवाः । किंतु वैष्णवंमन्याः खलु । यदि च ते वैष्णवाः स्युस्तर्ह्यद्वैतमतप्रवर्तका एव भवेयुः ।

तथा च विष्णुपुराणे—' को भवानिति निर्देशो वाचाऽऽरम्भोऽह्यनर्थकः । शिबिकादारुसंघातो वचनास्थनि संस्थितः ॥ १ ॥ अन्विष्यतां नृपश्रेष्ठ तद्भेदे शिबिका त्वया । एवं छत्रशलाकानां पृथग्भावो विमृश्यताम् ॥ २ ॥ क यातं छत्रमित्येष न्यायस्त्वयि तथा मयि । व(य)स्तु राजेति यल्लोके यच्च राजभटात्मकम् ॥ ३ ॥ तथाऽन्यच्च नृपेत्येतन्न सत्संकल्पनामयम् । एवमेकमिदं ब्रह्म न भेदि सकलं जगत् ॥ ४ ॥ वासुदेवाभिधानस्य स्वरूपं परमात्मनः । तदेतदुपदिष्टं ते संक्षेपेण महामुने ॥ ५ ॥ परमार्थं सारभूतं यदद्वैतमशेषतः । तद्भावभावनापन्नस्ततोऽसौ परमात्मना ॥ ६ ॥ भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत् ॥ इति । तथा मोक्षधर्मेऽपि—'सदर्थे कल्पितं सर्वं तत्सत्यं विष्णुरेव च ' इति । एवं च विष्णुपुराणे बह्वष्वद्वैतपरेषु वाक्येषूपलभ्यमानेषु सत्सु यतश्चैते माध्वा द्वैतमतं प्रतिष्ठापयन्ति तत्सर्वथाऽनुचितमेव ।

ननु तर्हि के वैष्णवाः के च माध्वाः के च शांकरा इति चेत् । शृणु । शांकरमतानुयायिनः सन्तः प्राधान्येन ये विष्णुं पूजयन्ति ते वैष्णवाः । ते चेदानीं भागवता इत्युच्यन्ते । ये च शांकरमतानुयायिनः सन्तः शिवं प्राधान्येन पूजयन्ति ते शैवाः । ये च शांकरमतानुयायिनः सन्तो गणपतिं प्राधान्येन पूजयन्ति ते गाणपताः । ये च शांकरमतानुयायिनः सन्तः शक्तिं प्राधान्येन पूजयन्ति ते शाक्ताः । माध्वास्तु न वैष्णवा न शैवा न गाणपता नापि शाक्ताः । अपि तु वैष्णवंमन्याः शिवद्वेषिण एव । अत एव पूर्वोक्ता वैष्णवापरपर्यायभागवतशब्दव्यवहार्यादयः शाक्तान्ता भिन्नभिन्नदेवतोपास्यकत्वेऽपि परस्परं न द्विषन्ति । माध्वास्तु पूर्वोक्तान्सर्वान्वैष्णवादीन्द्विषन्त्येव । सर्वे च पूर्वोक्ता माध्वाश्च तथा बहु मन्यन्ते । तस्माद्द्वैतमतप्रवर्तकाचार्याणां शिववाचकशंकरशब्दवाच्यत्वेन शिवावतारोऽयमिति प्रसिद्ध्या वा तेषां तन्मतस्य तन्मतानुयायिनां च द्वेष इति पर्यवसन्नम् ।

इदं तु बोध्यम्—मध्वावतारात्पूर्वं वैष्णवादय आसन्नेव । ततश्च मध्वमतप्रवर्तकान्महावैष्णवान्पण्डितप्रवरान्दृष्ट्वा पूर्वोक्तवैष्णवान्तर्गताः केचन विद्याविधुरा अज्ञाः पामरास्तदनुयायित्वं स्वीकृत्य तदीयाचारान्समाचेरुः । ततश्च वैष्णवा अपि ते वैष्णवंमन्याः सन्तः शिवद्वेषिणो बभूवुः । ततश्च वैष्णवंमन्यानां कुले समुत्पन्नाः केचन विद्वांसोऽप्यानुवंशिकसंस्कारेण पित्रादिस्वीकृतमध्वमतानुयायित्वत्यागे सति नरकादिप्राप्तिभीत्या वा तन्मत एवाभिनिवेशं धृत्वा तन्मतदार्ढ्याय महता प्रयत्नेनाद्वैतमतखण्डनप्रचुरान्महतो ग्रन्थान्प्रणिन्युः । ये चाविद्वांसो वैष्णवंमन्यास्ते स्वमतपरमतयोर्ज्ञानाभावान्निरुक्तविद्वदनुरोधेन तदीयाचारमात्रमनुकुर्वन्ति । तदनुरोधेन च तदीयाः स्त्रियो बालाश्चापि शिवद्वेषपुरःसरं विष्णुं कथंचित्पूजयन्ति । ननु ये विद्वांसो मध्वमतानुयायिनस्ते निरुक्तकारणानुरोधेन तन्मतदार्ढ्याय ग्रन्थांस्तदीयाभ्यासं च कुर्वन्तु नाम । परंतु शिवद्वेषं कुतो न त्यजन्तीति चेत् । पित्रादिकृतशिवद्वेषज्ञानस्य जागरूकत्वात् । एवं चास्मदीयोऽयं धर्म एव यः शिवद्वेष इति मन्यमाना न तस्मात्परावर्तन्ते ।

ननु विद्वद्भिरप्यस्माभिर्मध्वमतानुयायिभिर्निरुक्ता दोषा ज्ञायन्त एव । परंतु पित्रादिस्वीकृतमतत्यागे नरकाद्यनर्थप्राप्तिभीतिर्नैव निर्गच्छति । तथा चोच्यते—' अतियजेत निजां यदि देवतामुभयतश्च्यवते जुषतेऽप्यघम् ' इति । एवं च वंशपरम्पराप्राप्तमतत्यागेऽप्राप्तमतस्वीकारे च विकल्पवद्दोषसंभवाद्यथाप्राप्तानुचरणमेव युक्तमिति चेत् । उच्यते—

सर्वेषां हि ब्राह्मणानां सार्थवेदाध्ययने तत्प्रोक्तकर्मानुष्ठाने तत्प्रोक्तब्रह्मज्ञाने चाधिकारो वर्तत एवेति निर्विवादम्। ब्रह्मणश्च सिद्धवस्तुत्वेनानेकरूपवत्त्वाभावोऽवश्यं वाच्यः। तत्र च यदि विप्रतिपत्तिः स्यात्तर्हि ब्रह्मज्ञानासंभवाच्छ्रुतेरप्रामाण्यं स्यात्। अतः श्रुतिप्रामाण्यं संपादयितुं स्वस्य च मोक्षप्राप्त्यर्थं स्वपरम्पराप्राप्तमताभिनिवेशं परित्यज्य स्वातन्त्र्येणैव श्रुतिवाक्यानां तथा तत्तन्मतप्रतिपादकग्रन्थानां च पर्यालोचना कार्या। ततश्च ब्रह्मण ऐकरूप्यज्ञानार्थं तत्तन्मतप्रतिपादकग्रन्थानामधिकार्यनुरोधेन प्रवृत्तिं स्वीकार्य यद्येकवाक्यतया श्रीमच्छंकराचार्यप्रतिपादिताद्वैतमत एव पर्यवसानं जायेत तर्हि सर्वश्रुतिवाक्यानामप्रामाण्याभावात्तत्तन्मतप्रवर्तकाचार्याणां विप्रलम्भकत्वाभावात्कथं स्वमताभिनिवेशत्यागमात्रेण नरकाद्यनर्थप्राप्तिः स्यात्।

प्रत्युत शिवविष्णुभेददर्शिनामेव नरकाद्यनर्थभीतिः। तथा च बृहन्नारदीये—हरिरूपी महादेवो लिङ्गरूपी जनार्दनः। ईषदप्यन्तरं नास्ति भेदकृन्नरकं व्रजेत् ॥ १ ॥ इति। तथा—सृष्टिस्थित्यन्तकारिणीं ब्रह्मविष्णुशिवात्मिकाम्। स संज्ञां याति भगवानेक एव जनार्दनः ॥ १ ॥ इति। तथा—भवानहं च विश्वात्मन्नेक एव हि कारणम्। जगतोऽस्य जगत्यर्थे भेदेनाऽऽवां व्यवस्थितौ ॥ १ ॥ त्वया यदभयं दत्तं तद्दत्तमखिलं मया। मत्तो विभिन्नं नाऽऽत्मानं द्रष्टुमर्हसि शंकर ॥ २ ॥ योऽहं स त्वं जगच्चेदं सदेवासुरमानुषम्। अविद्यामोहितात्मानः पुरुषा भिन्नदर्शनाः ॥ ३ ॥ इति च विष्णुपुराणे। तथा भविष्यपुराणेऽपि—विष्णोरन्यं तु पश्यन्ति ये मां ब्रह्माणमेव च। कुतर्कमतयो मूढाः पच्यन्ते नरकेष्वधः ॥ १ ॥ ये च मूढा दुरात्मानो भिन्नं पश्यन्ति मां हरेः। ब्रह्माणं च तथा तेषां भ्रूणहत्यासमं त्वघम् ॥ २ ॥ इति।

किंच शिवपूजनमात्रेण नातियजनं भवति। किंत्वधिकसंग्रह एवायं भवति। यदि तु विष्णुं सर्वथा परित्यज्य शिवपूजनमेव कुर्यात्किंच विष्णुद्वेषमारभेत तर्हि तदतियजनं भवेत्। विष्णुद्वेषित्वं च लभेत। न च तथा कर्तव्यमिति वदामः। वस्तुतस्त्वद्वैतमतस्वीकारे शिवविष्ण्वोर्भेद एव खपुष्पायमाणो भवति। कुतः पुनर्विरोधः। तन्मते हि मायावच्छिन्नचैतन्यमेव परमेश्वरः। स चैकोऽपि स्वोपाधिभूतमायानिष्ठसत्त्वरजस्तमोगुणभेदेन ब्रह्मा विष्णुर्महेश्वर इत्युच्यते। अत एव—क्वचिद्ब्रह्मा क्वचिद्विष्णुः क्वचिद्रुद्रः प्रशस्यते। नानेन तेषामाधिक्यं न्यूनत्वं वा कथंचन ॥ १ ॥ तत्तत्कल्पीयवृत्तान्तमधिकृत्य महर्षिभिः। पुराणानि प्रणीतानि विद्वांस्तत्र न मुह्यति ॥ २ ॥ इति संग-

च्छते। आनन्दतीर्थीयमते तु परमेश्वरापेक्षया जीवानां भिन्नत्वात्तदन्तःकोटिप्रविष्टस्य शिवस्य सुतरां भिन्नत्वादैश्वर्यतारतम्यानुरोधेन भक्तबुद्धिवैचित्र्येण च द्वेषो निर्बाधः समुत्पद्यते। मतद्वयप्रक्रिया च तत्तद्ग्रन्थेषु स्पष्टैवेति नेह तन्यते। एवं च ये मध्वमतानुयायिनो विद्वांसस्तैस्तन्मतत्यागे कृते न कश्चिद्दोषः। श्रूयते च—पण्डितप्रवरैर्वाईक्षेत्रनिवासिभिरष्टपुत्रइत्युपाह्वैः श्रीमत्काशीनाथशास्त्रिभिर्वंशपरम्पराप्राप्तमपि मध्वमतानुयायित्वं परित्यज्य शांकरमतानुयायित्वं स्वीकृतमिति। ते च श्रीमत्काशीनाथशास्त्रिणो न सामान्यतः पण्डिता आसन्। किंतु तदीयपाण्डित्येन वाराणस्यां पण्डितसमाजस्तथा परितुष्टो यथा 'काश्यामेकः काशीनाथः' इति प्रवादः सकलपाण्डितमुखेषु तदानीमासीत्। प्रकृतमनुसरामः। एवं च मध्वमतानुयायिनामेव प्रकृष्टान्तःशत्रुत्वे पर्यवसानाच्छ्रीमद्रघुनाथसूरयो यदेतन्मतखण्डने प्रवृत्तास्तद्युक्तमेव। अस्मिंश्च ग्रन्थे प्रथमाध्यायस्याऽऽद्यः पादस्तथा द्वितीयाध्यायस्य चाऽऽद्यः पादो व्याख्यातः। 'अत्र प्रतिसूत्रं शांकरमतं प्रथमं दर्शयित्वा तत्राऽऽनन्दतीर्थीयैः प्रदत्तानां दूषणानां परिहारः कृतः। किंचाऽऽनन्दतीर्थीयमतप्रक्रियामनूद्य तन्मतखण्डनं कृतम्। यद्यपि पादद्वयमेवात्र व्याख्यातं तथाऽपि प्रसङ्गतः प्रायशः सर्वेषां दूषणानां परिहारः कृतः। यदि च स्वमताभिनिवेशं परित्यज्य मध्वमतानुयाय्यप्येतद्ग्रन्थपर्यालोचनां कुर्यात्तर्हि सोऽपि निष्कलङ्कं ब्रह्मज्ञानं संपाद्य परमेश्वरस्वरूपतां प्राप्नुयात्। तथा चास्य ग्रन्थस्योभयमतानुयाय्युपकारकत्वेनात्यावश्यकत्वमिति मन्य इत्यलमतिपल्लवितेन।

श्रीमद्रघुनाथपण्डितानां कालस्तु शा० वा० शके (१७७२)। अयं च शांकरपादभूषणाख्यो ग्रन्थो न्यायमीमांसोक्तयुक्तिवादप्रचुरत्वेनातीव दुरवगाह इति सकलविदुषां सुविदितमेव। यद्यप्येतद्ग्रन्थशोधने महतां पण्डितप्रवराणामेवाधिकारस्तथाऽपि भगवच्छंकरस्वरूपपरमगुरु' गोडबोले 'इत्युपाह्वश्रीमद्रामशास्त्रिचरणसेवालब्धानुग्रहः श्रीमन्महामहोपाध्यायाभ्यंकरोपाह्वसद्गुरुवासुदेवशास्त्रिप्रसादलब्धव्याकरणाद्यनेकशास्त्रदृष्टिरानन्दाश्रमव्यवस्थापकापटेकुलोत्पन्नश्रीमद्विनायकरायप्रेरितः प्रवृत्तोऽहमेतद्ग्रन्थपरिशोधने। तत्राऽऽनन्दाश्रमस्थपण्डितप्रधानमारुलकरोपाह्वशंकरशास्त्रिणां विद्यावंशतो ज्येष्ठबन्धूनामेतद्ग्रन्थसंशोधनकर्मण्यवतीव साहाय्यं समभूदिति मुखपृष्ठस्थस्तदभिधानोल्लेख एव परं साक्षी, नैतत्तिरोहितं प्रेक्षावतामिति स्मरामि मुहुर्मुहुः सानन्दमिदमनुकूलाचरितजातम्।

अहं हि कोळेनरसिंहपुरनिवासिवेदपारायणरतश्रीमन्नागेशभट्टात्मजः। मदीयाश्च पितृपर्यन्ताः सर्वे वंशजा मध्वमतानुयायिन आसन्। अहं तु पूर्वजन्मसंस्कारेण बाल्यादारभ्य शिवभक्तिपरायणः। बाल्य एव च पितुः स्वर्गगमनाद्दारिद्र्याच्च विद्याभ्यासं कर्तुं पुण्यपत्तनं समागतः। ततश्च बाल्य एव पूर्वजन्मसुकृतप्रेरणया सपादसंवत्सरं श्रीकाशीक्षेत्रनिवासं कृत्वा पुनः पुण्यपत्तनं समागते मयि गुरुजनैः काशीकर एवायमिति व्यवहारः कृतः। ततश्च शिवभक्तिपरायणं मां पार्यालोच्य श्रीमद्गुरुचरणैर्मन्त्रप्रेरणयोपदिष्टः पाठितश्च। ततश्चाभिजनस्थैर्लोकैः 'किमेतदाचर्यते' इति परिपृष्टे सति नरकपाताद्यनेकानर्थानां महत्संशयजालं मन्मनसि प्रादुरभूत्। ततश्च श्रीमच्छिवविष्ण्वादिदेवता ध्यायंध्यायं श्रीमद्गुरुमुखनिःसृतश्रीमच्छांकरभाष्यसर्वदर्शनसंग्रहाद्यनेकवेदान्तग्रन्थप्रमेयं स्मारंस्मारं श्रीमद्रघुनाथपण्डितप्रणीततद्ग्रन्थयथार्थविबोधसहायभूतश्रीमदानन्दतीर्थीयभाष्यश्रीमज्जयतीर्थप्रणीततत्त्वप्रकाशिकाश्रीमद्व्यासतीर्थप्रणीततात्पर्यचन्द्रिकापर्यालोचनया मतद्वययुक्तिगुणदोषविचारणायां सर्वं संशयजालं खपुष्पायमाणं संजातम्। तथा चेदानीं निःशङ्कं शिवविष्ण्वादिसर्वदेवताः पूजयन्नद्वैतमतरसास्वादं गृह्णन्सुखेन कालं नयामि। एवं चैतादृशे सुमहति कृत्ये श्रीमद्विनायकरावैर्महत्साहाय्यकमनुष्ठितमिति संस्थाजीवातुभूतः श्रीसच्चिदानन्दश्वराचरगुरुस्तेभ्य ऐश्वर्याद्यभिवृद्ध्यादिकमैहिकं पारमार्थिकं च फलं ददात्वित्याशासे।

| | |
|---|---|
| पुण्यपत्तने<br>मार्गशीर्षशुद्धैकादश्यां<br>गुरुवासरे शके १८५४ | रत्नागिरिसंस्कृतपाठशालाध्यापको<br>दिगम्बरशास्त्री। |

# शाङ्करपादभूषणस्थविषयाणामनुक्रमणिका ।

( ३ ) शास्त्रयोनित्वाधिकरणम्

( १७०–२५१ ) ।

## (५) ईक्षत्यधिकरणम्
## (२७८--३२०)।

इति शांकरपादभूषणप्रथमभागस्थितविषयाणामनुक्रमणिका ।

ॐ तत्सद्ब्रह्मणे नमः ।

श्रीमांसान्यायवेदान्तायनेकतन्त्रमर्मवेधैकनिष्णातपर्वतोपाह्व-
श्रीरघुनाथसूरिविरचितं

# शांकरपादभूषणम् ।

---

तत्र जिज्ञासाधिकरणम् ।

सर्वमङ्गलरूपाय भक्ताभीष्टप्रदायिने ।
सच्चिदानन्दरूपाय श्रीपरब्रह्मणे नमः ॥ १ ॥
मेघश्यामलमुज्ज्वलाम्बरधरं मन्दस्मितश्रीमुखं
लक्ष्मीलक्षितवक्षसं सुनयनं गण्डोल्लसत्कुण्डलम् ।
चक्राद्यायुधधारिणं हृदि गतं वन्दारुमन्दारकं
वृन्दारण्यविनोदिनं सकरुणं वन्दे मुकुन्दं मुदा ॥ २ ॥
अद्वैतवस्तुप्रतिपादनाय द्वैतस्य मिथ्यात्वविनिश्चयाय ।
यः सूत्ररूपं निबबन्ध शास्त्रं तं व्यासमाद्यं गुरुमानतोऽस्मि ॥३॥
मिथ्याज्ञानविजृम्भमाणजगतामभ्यन्तरे भुञ्जतः
स्वारब्धानि निरीक्ष्य जीवनिचयान्मूढानविद्यावशात् ।
देवः कारुणिकोऽवतीर्य समशासद्यस्तु शारीरके
भाष्यं तं प्रणमामि शंकरगुरुं निःश्रेयसावाप्तये ॥ ४ ॥
* आनन्दतीर्थादिभिरादरेण यद्दूषितं भाष्यमनल्पबोधैः ।
तदुद्धृतौ तत्कृतिदूषणे च ह्युज्जृम्भतेऽसौ रघुनाथसूरिः ॥ ५ ॥
सर्वज्ञभगवत्पादकृतं सूत्रार्थवर्णनम् ।
वाचस्पत्यादिविज्ञेयमव्युत्पन्नेन दूषितम् ॥ ६ ॥
तदुद्धारे प्रवृत्तस्य परकीयोक्तिदूषणैः ।
+ भाष्यादिभावसाकल्याज्ञानं नैव प्रदुष्यति ॥ ७॥

---

* आनन्दतीर्थादिभिरिति । मध्वाचार्यतच्छिष्यैरित्यर्थः । + भाष्यादिभावेति । शांकरभाष्यस्य भामत्यादिटीकानां च यद्भावसाकल्यं सकलाभिप्रायास्तेषां यदज्ञानं तत्परकीयोक्तदूषणैर्नैव दुष्यतीत्यर्थः । अयं भावः—परकीयोक्तिषु दूषणे दत्तेऽपि शांकरभाष्यभामत्यादीनामशेषाभिप्राया मया ज्ञाता इति न मन्ये । तेषामतीव दुरवगाहित्वादिति गर्वोक्तिं परिहरतीति ।

यक्षानु*रूपो बलिरित्याहुर्यस्मान्मनीषिणः ।
फलं तु श्रीमदाचार्यसेवयेश्वरतोषणम् ॥ ८ ॥
शांक+रानन्दतीर्थीयब्रह्मसूत्रार्थनिर्णये ।
विवादपरिहाराय कुर्वे शांकरभूषणम् ॥ ९ ॥
अद्वैतग्रन्थानालोड्य सारमुद्धृत्य यत्नतः ।
ग्रन्थानानन्दतीर्थीयानाकलय्यापि भूरिशः ॥ १० ॥
आनन्दतीर्थीयनये दूषणं च वदाम्यहम् ।
ह्री=(ह्रीं)पतिश्रीपतिप्रीत्यै रघुनाथो वि×दामपि ॥ ११ ॥
श्रीमच्छांकरसूत्रार्थः शरच्चन्द्र इवामलः ।
अनाद्यज्ञानसंभूतद्वैतवासनया युतैः ॥ १२ ॥
आनन्दतीर्थतच्छिष्यैः स्वग्रन्थेषु प्रदूषितः ।
अद्वैतवादविद्वेषात्स्वकर्मपरिपाकतः ॥ १३ ॥
कलिकालाद्वैया बुद्धया वेदमार्गविरुद्धया ।
तान्दृष्ट्वा शास्त्रतत्त्वज्ञाः पण्डिताः सूक्ष्मबुद्धयः ॥ १४ ॥
न मुह्येयुस्तथाऽप्यज्ञजनो मुह्यान्न संशयः ।
परमार्थाच्च भ्रश्येत विपरीतार्थदर्शनात् ॥ १५ ॥
अतोऽहं तदपार्थत्वं प्रतिपादयितुं जनान् ।
प्रवृत्तः शास्त्रयुक्तिभ्यां तदीशो मेऽनुगृह्यताम् ॥ १६ ॥
मीमांसान्यायपञ्चास्यराघवाचार्यसूरिणाम् ।
शिष्यस्य शांकरे पादभूषणे परदूषणे ॥ १७ ॥
कृतिर्वितनुतां मोदं सतां भक्तिं च मे हरौ ।
भक्त्या प्रसन्नो भगवान्मुक्तिं मम प्रयच्छतु ॥ १८ ॥

---

* ननु अशेषाभिप्रायानभिज्ञेन त्वया कथं परकीयोक्तिषु दूषणं दीयत इत्याशङ्क्याऽऽह—यक्षानुरूप इति । + शांकरानन्दतीर्थीयेति । शंकरेण प्रोक्तः शांकरः, आनन्दतीर्थेन प्रोक्त आनन्दतीर्थीयः, शांकरश्चाऽऽनन्दतीर्थीयश्च शांकरानन्दतीर्थीयौ तौ च तौ ब्रह्मसूत्रार्थौ च शांकरानन्दतीर्थीयब्रह्मसूत्रार्थौ, तयोर्निर्णय इति विग्रहः । = ह्री(ह्रीं)पतीति । ह्री(ह्रीं)पतिः शिवः, श्रीपतिर्विष्णुस्तयोः प्रीतिस्तस्या इत्यर्थः । × विदामपीति । प्रीत्या इति शेषः । विदुषामपि प्रीत्या इत्यर्थः ।

ज्ञा*तज्ज्ञापकमप्रयोजनमनारभ्यमेवेति चे-
च्छास्त्रं नास्य विशिष्टमात्रपरता बन्धस्य नो वस्तुता ।
इत्यासूच्य विशुद्धमेव विषयस्त्वेवं गुरुर्नोऽब्रवी-
दन्यस्त्वस्य विरुद्धमेव तदिदं जिज्ञास्यमस्मत्कृतौ ॥ १९ ॥

## अथातो ब्रह्मजिज्ञासा ॥ १ ॥

अस्मिन्सूत्रे विवरणाद्यभिप्रेतेत्थमधिकरणरचना—प्रत्यगभि-+न्नब्रह्मविचारात्मकवेदान्तमीमांसाशास्त्रमारम्भणीयमुत नाऽऽरम्भणीयमिति वक्ष्यमाणरीत्या विषयाद्यसंभवसंभवरूपपूर्वपक्षसिद्धान्तयुक्तिभ्यां संशये नाऽऽरम्भणीयं विषयप्रयोजनयोरभावात् । तथाहि—नास्य शास्त्रस्य प्रत्यग्ब्रह्मैक्यं विषयः । अहं करोमि भुञ्ज इत्यादिप्रत्यय=सिद्धकर्तृत्वादिजीवधर्मस्य तद्विरुद्धस्याकर्तृत्वादेर्ब्रह्मधर्मस्य चैकत्र समावेशायोगात् । नापि कर्तृत्वादिरूपबन्धनिवृत्तिः प्रयोजनम् । ज्ञानस्याज्ञानमात्रनिवर्तकत्वेन सत्यस्य कर्तृत्वादिबन्धस्य ज्ञानान्निवृत्त्ययोगात् । न चाहं करोमि भुञ्ज इत्यादिप्रत्यक्षस्य स्थूलोऽहमित्यादि×विसंवादिप्रत्यक्ष+सजातीयस्य—

---

* ननु अद्वैतमतप्रतिपादका बहवो ग्रन्था विद्यन्ते तर्हि किमर्थमपूर्वग्रन्थरचनायां भवत्प्रयत्न इत्याशङ्कयाऽऽह——ज्ञातज्ञापकेति । 'अथातो ब्रह्मजिज्ञासा' इत्यादिवेदान्तशास्त्रस्य विशुद्धमेव ब्रह्म विषय इत्यस्मद्गुरुरब्रवीत्, अन्यस्तु अस्य शास्त्रस्य सगुणमेव ब्रह्म विषय इत्यब्रवीदिति अस्मदीयग्रन्थे जिज्ञास्यम् । किं कृत्वा गुरुरब्रवीदित्यत्राऽऽह—आसूच्येति । अयमर्थः—शास्त्रान्तराद्यज्ज्ञातं तदेवैतच्छास्त्रं ज्ञापयति, अत एवाप्रयोजननिति न भ्रमितव्यम् । किंतु विशिष्टब्रह्मप्रतिपादकताऽस्य शास्त्रस्य न, तथा संसारबन्धस्य न सत्यतेत्यासूच्येति । + प्रत्यगभिन्नेति । प्रतिशरीरमञ्चतीति प्रत्यग्जीवस्तदभिन्नं यद्ब्रह्म तद्विचारात्मकेत्याद्यर्थः । = प्रत्ययसिद्धेति । अहं करोमीत्याद्याकारको योऽनुभवस्तेन सिद्धो यः कर्तृत्वादिरूपो जीवधर्मस्तस्येत्यर्थः । × विसंवादीति । स्थूलत्वस्य देहधर्मत्वेन 'स्थूलोऽहम्' इतिसामानाधिकरण्यघटितप्रत्यक्षस्य विसंवादित्वं सर्वसंमतम् । संवादित्वं सफलत्वं तद्विरुद्धत्वं विसंवादित्वम् । + सजातीयस्येति । अस्याग्रिमेण भ्रमत्वोपपत्तावित्यनेन सहान्वयः ।

'उप*लभ्याप्सु चेद्गन्धं केचिद्ब्रूयुरनैपुणाः ।
पृथिव्यामेव तं विद्यादपो वायुं च संश्रितम् ॥'

इति बलवत्प्रमाणानुरोधेन सुरभि जलं सुरभिः पवमान इत्यादिप्रत्यक्षस्य पार्थिवावयवसंसर्गेणैवासङ्गत्वबोधकप्रबलागमानुसारेणान्तःकरणधर्मावगाहितया भ्रमत्वोपपत्तौ स्वाभाविकासङ्गत्ववाधितकर्तृत्वादेर्न ब्रह्मात्मैक्यविरोधित्वमिति संभवत्येव विषय इति वाच्यम् । प्रत्यक्षागमयोर्विरोध = उपजीव्यतया प्रत्यक्षानुसारेणाऽऽगमस्यान्यथानेयत्वात् । अन्यथा वेदान्तार्थावबोधस्यानुदयप्रसङ्गात् । कर्तृत्वादिवद्वर्णपदप्रत्ययानां बाधात्+ ॥ तमःप्रकाशवद्विरुद्धस्वभावयोरात्मदेहाद्योर्मम मनो मम देह इति भेदग्रहे तत्ता×दात्म्यग्रहाधीनतद्धर्माध्यासायोगाच्चेति पूर्वपक्षे सिद्धान्तः—अथातो ब्रह्मजिज्ञासेति । अयमत्र सिद्धान्ताभिप्रायः—

---

* भ्रमत्वोपपत्तौ दृष्टान्तमाह—उपलभ्येत्यादि । सुगन्धिवायुजले उपलभ्य केचिदनैपुणाः पुरुषा अप्सु वायौ च गन्धं ब्रूयुश्चेदपो वायुं च संश्रितं तं गन्धं पृथिव्यामेव विद्याज्जानीयादित्यर्थः । = उपजीव्यतयेति । अनुमित्युपमितिशाब्दादीनां ज्ञानानां प्रत्यक्षमूलकत्वं सर्वसंमतम् । यदा हि हेत्वादीनां प्रत्यक्षं जायेत तदानीमेवानुमित्यादीनि ज्ञानानि उत्पद्येरन्नान्यथेति प्रत्यक्षोपजीव्यकत्वमागमस्येति भावः । + यथा बाधादिति । त्वदुक्तरीत्या जीवगतं कर्तृत्वादिकं मिथ्या तद्वदेव वर्णपदप्रत्ययघटितवेदान्तवाक्यानां मिथ्यात्वेन तज्जन्यबोधस्यापि मिथ्यात्वाद्यथार्थबोधस्यानुदयप्रसङ्गापत्तिः, इष्यते तु यथार्थबोध इति भावः । × तत्तादात्म्येति । आत्मदेहाद्योर्यत्तादात्म्यं नाम, ऐक्यं तज्ज्ञानाधीनो य आत्मदेहादिधर्माध्यासस्तदयोगादित्यर्थः । अयं भावः—आत्मदेहाद्योः पार्थक्यबोधकः 'मम मनः, मम देहः' इत्याकारकोऽनुभवः सर्वजनीनः । यदा तु आत्मदेहाद्योस्तादात्म्यज्ञानं केनचित्कारणेन जायेत तदैवाऽऽत्मनिष्ठधर्माणां देहादिषु देहादिनिष्ठधर्माणां चाऽऽत्मनि आरोपः स्यात् । न चायं संभवति, उक्तानुभवविरोधादिति ।

तमःप्रकाशवद्विरुद्धस्वभावयोरप्यात्मानाऽ*त्मनोर्वक्ष्यमाणन्यायैर-द्वितीयप्रत्यगभिन्नब्रह्मात्मनि निर्णीततात्पर्यकत्वेन प्रबलवेदान्त-वाक्यजन्याखण्डब्रह्मसाक्षात्कारात्मकमनोवृत्तेः पूर्वमहं गौरोऽहं कर्ता भोक्तेति प्रतीयमानतादात्म्यान्यथानुपपत्त्या तादृशमनोवृ-त्तिसमुच्छेद्यसकलभ्रमनिदानत्वेन कल्प्यमानानाद्यज्ञानेन कर्तृ-त्वाद्यध्यासे न काचिदनुपपत्तिरिति संभवत्येव प्रत्यग्ब्रह्मात्मैक्यं विषयः। न चोपजीव्यप्रत्यक्षविरोधाद्वेदान्तार्थाववोधासंभवः पूर्व-पक्षोक्तः सुवचः । वक्ष्यमाणरीत्या प्रत्यक्षादेरागमेन + ता-त्त्विकत्वापहारेऽपि व्यावहारिकसत्तानपहारेण तावन्मात्रेण वेदा-न्तार्थाववोधरूपकार्यक्षमत्वोपपत्तेः। मम मन इत्यादिभिन्नरूपेण भेदग्रहस्याहं मनुष्यः कर्ता, इत्याद्यभेदग्रहाविरोधि÷त्वादा-त्मानात्मनोस्तादात्म्यग्रहाधीनकर्तृत्वाद्यध्याससंभवाच्चेति ।

---

* आत्मानात्मनोरिति । अस्याग्रिमेण प्रतीयमानतादात्म्येत्यनेन सहान्वयो बोध्यः । अयं भावः—वक्ष्यमाणयुक्तिभिर्वेदान्तवाक्यानां तात्पर्यं हि अद्वितीयं जीवाभिन्नं यद्ब्रह्म तत्रैव निर्णीतम् । अतस्तादृशवेदान्तवाक्येभ्य उत्पद्यमानं यद-खण्डब्रह्मसाक्षात्कारात्मकमनोवृत्तिरूपं ब्रह्मज्ञानं तदुत्पत्तेः प्रागनुभूयमानम् ' अहं कर्ता, अहं भोक्ता ' इत्याकारकमात्मानात्मनोर्यत्तादात्म्यं तदुपपत्त्यर्थं सकलभ्रमनि-दानमनादि भावरूपमज्ञानं स्वीकार्यम् । तच्चाज्ञानं वेदान्तवाक्यजन्याखण्डब्रह्म-साक्षात्कारसमुच्छेद्यं बोध्यम् । एवं च तादृशानाद्यज्ञानेनैवाऽऽत्मानात्मनोस्तादात्म्या-ध्यासे तन्मूलककर्तृत्वाद्यध्यासे च सति सर्वोपपत्तौ जीवब्रह्मात्मैक्यं विषयः संभ-वत्येवेति । + तात्त्विकत्वापहारेऽपीति । अद्वैतवेदान्तनये हि त्रिविधा सत्ता। पारमा-र्थिकी व्यावहारिकी प्रातिभासिकी चेति भेदात् । तत्र ब्रह्मणः पारमार्थिकी, घट-पटादीनां व्यावहारिकी, शुक्तिरजतादेः प्रातिभासिकी । तत्राऽऽगमेन ' अहं कर्ता ' इत्यादिप्रत्यक्षस्य पारमार्थिकसत्तापहारेऽपि व्यावहारिकसत्तानपहारेण व्यावहारिकसत्तावैशिष्ट्येन वेदान्तवाक्यार्थाववोधरूपकार्यजनकत्वोपपत्तेः स्यादे-वेत्याशयः ।÷ ग्रहाविरोधित्वादिति ।'मम मनः' इत्यादिभेदग्रहस्य सत्त्वेऽपि कर्तृ-त्वाद्यध्यासमूलभूतः ' अहं गौरः, अहं मनुष्यः, अहं कर्ता ' इत्याद्याकारकोऽभेदग्रहो न हीयते । तथा च तादात्म्यग्रहाधीनो यः कर्तृत्वाद्यध्यासः स संभवत्येवेति भावः ।

अत्रैव वाचस्प*त्यादिसंमतेत्थमधिकरणरचना—उक्तरीत्यैव विषयाद्यसंभवसंभवयुक्तिभ्यां संशये प्रत्यगात्मन एव ब्रह्मत्वात्तस्य चाहमिति प्रकाशमानत्वेनासंदिग्धत्वान्न विचारविषयत्वम् । नाप्यविद्यानिवृत्तिः प्रयोजनम् । उक्तरी+त्याऽऽत्मनि ज्ञायमानेऽपि तदानि×वृत्तेः । न चाहंप्रत्ययः स्थूलोऽहं दुःखीति गृह्णाति तद्विपरीतश्च वेदान्तप्रतिपाद्यः संदिग्ध इति विषयादिसिद्धिरिति वाच्यम् । वेदान्तानामध्ययनविध्यापादितप्रयोजनवदर्थावबोधानामपि प्रबलाहंप्रत्ययबाधितत्वेन जपमात्रोपयोगित्वेनाविवक्षितार्थत्वादुपचरितार्थत्वाद्वा वेदान्तविचारो नाऽऽरब्धव्य इति पूर्वपक्षे वेदान्तवाक्यैर्ज्ञानानन्दैकरसाद्वितीयोदासीनस्वभाव आत्मोपक्रमादिभिः ÷प्रतिपाद्यते । न च क्रिया※सम्भिव्याहारेणैतादृगात्मतत्त्वमभिदधति तत्पराणि सन्ति युक्तमुपचरितार्थानीति वक्तुम् । प्रत्यक्षं तु संभावितदोषमपौरुषेयेण

---

* वाचस्पत्यादिसंमतेति । वाचस्पत्यादिभिर्भामत्यादिटीकासूक्ता याऽधिकरणरचना सा संक्षेपतोऽत्रानूद्यत इत्याशयः । + उक्तरीत्येति । अहमित्यनया रीत्येत्यर्थः । ×तदनिवृत्तेरिति । अहमित्याकारकात्मप्रत्यक्षे सत्यपि प्रपञ्चनिदानभूताविद्यानिवृत्तिर्न दृश्यते । अतो नाविद्यानिवृत्तिः प्रयोजनमात्माभिन्नब्रह्मज्ञानस्येति भावः । ÷ उपक्रमादिभिरिति । आदिना परामर्शोपसंहारौ । उपक्रमः प्रारम्भः । परामर्शो मध्ये निर्देशः । उपसंहारः समाप्तिः । न तु सामान्यतः प्राप्तस्य विशेषे संकोचनरूपः । अयं भावः—उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥ इति तात्पर्यनिर्णयलिङ्गैरात्मा प्रतिपाद्यत इति निश्चीयते । तथाहि—'सदेव सोम्येदमग्र आसीत्' ( छा० ६ । २ । १ ) इत्युपक्रमः । 'ऐतदात्म्यमिदꣳसर्वं तत्सत्यꣳस आत्मा तत्त्वमसि श्वेतकेतो' ( छा० ६ । ८ । ९ ) इत्युपसंहारः । तयोर्ब्रह्मविषयत्वेनैक्यरूपमेकं लिङ्गम् । असकृत्तत्त्वमसीत्युक्तिरभ्यासो द्वितीयं लिङ्गम् । मानान्तरागम्यत्वमपूर्वत्वं तृतीयं लिङ्गम् । एकविज्ञाने सर्वविज्ञानं फलं चतुर्थं लिङ्गम् । सृष्टिस्थितिप्रलयप्रवेशनियमनानि पञ्चार्थवादाः पञ्चमं लिङ्गम् । मृदादिदृष्टान्ता उपपत्तयः षष्ठं लिङ्गम् । एवं चैतैर्लिङ्गैर्वेदान्तानां नित्यशुद्धबुद्धमुक्तस्वभावब्रह्मात्मपरत्वं सिध्यतीति । ※ क्रियासमभिहारेणेति । पौनःपुन्येनेत्यर्थः ।

निर्दोषेणाऽऽगमेन बाध्यते । तेन वेदान्तवेद्यः शुद्धोऽहंप्रत्यये न भातीति विषयादिसंभवादारम्भणीयं ब्रह्ममीमांसाशास्त्रमिति सिद्धान्तः* ।

यत्तु=चन्द्रिकायां कर्तृत्वादिविशिष्टस्यैव संभावितदोषेणातत्त्वावेदकेन प्रत्यक्षानुमानादिना मिथ्याभेदे गृहीतेऽपि तात्त्विकाभेदे मानान्तरविरोधाभावेन तत्त्वंपदमुख्यार्थत्वाय तल्लक्षितचिन्मात्रे भेदाप्रसक्त्या तत्त्वमसीतिवाक्यावैयर्थ्याय च विशिष्टस्यैव निर्दोषया श्रुत्या तात्त्विकाभेदबोधनसंभवेन विषयार्थमध्यास-

---

* सिद्धान्त इति । भामत्यादिषु वाचस्पत्यादिभिः कृत इति शेषः । = चन्द्रिकायामिति । मध्वमतानुयायिना व्यासतीर्थेन प्रणीतायां चन्द्रिकायामित्यर्थः । कर्तृत्वादिविशिष्टस्यैवेत्यस्य मिथ्याभेदे गृहीतेऽपीत्यनेनान्वयः । संभावितेत्यस्य संभाविता दोषा यस्य प्रत्यक्षानुमानादेरित्यर्थः । अतत्त्वावेदकेनेत्यस्य नियमेन तत्त्वबोधकं न भवतीत्यर्थः । अयमाशयः—प्रत्यक्षानुमानादीनि श्रुतिव्यतिरिक्तानि यानि ज्ञानजनकप्रमाणानि तानि निर्दुष्टान्येवेति न नियमः, किंतु दोषविशिष्टान्यपि भवेयुः । अतो यो लोके कर्तृत्वादिविशिष्टानां जीवानां परस्परं भेदो गृह्यते प्रत्यक्षतः, तथाऽनुमानादिना सिद्धस्येश्वरस्य जीवेन सह यो भेदो मन्यतेऽभेदस्याननुभवात् , स मिथ्यैवानुभूयते । वस्तुतस्तु कर्तृत्वादिविशिष्टस्येश्वरत्वविशिष्टेन सहाभेद एव वर्तते, एकस्मिन्नेवाऽऽत्मनि जीवत्वमीश्वरत्वं चेति सत्यं धर्मद्वयं वर्तत इति यावत् । जीवत्वविशिष्टो जीव ईश्वरत्वविशिष्टस्य शरीरं तथा च शरीरशरीरिभावेनैक्यम्, अथवा वृक्ष इत्येकत्वं शाखा इति बहुत्वमित्येतावतैक्यमिति फलितोऽर्थः । एतादृशैक्यं बोधयितुं तत्त्वमसीति वाक्यम् । उक्तरीत्या विशिष्टयोरैक्ये स्वीक्रियमाणे तत्त्वंपदार्थयोर्लक्ष्यार्थत्वाभावेन मुख्यार्थत्वं संपादितं भवति । भवदुक्तरीत्या लक्षणया चिन्मात्रे गृहीते तु लौकिको जीवेश्वरयोर्भेद एव नोपपद्यत इति ऐक्यबोधकस्य तत्त्वमसीति वाक्यस्य वैयर्थ्यं स्यात् । अत उक्तश्रुत्या विशिष्टयोरेवैक्यं बोध्यत इति विषयस्य संभवादनाद्यज्ञानमूलकोऽध्यासो न स्वीकार्य इति ।

स्यावक्तव्यत्वात् । *नापि प्रयोजनार्थं तदुक्तिः । ×सेतुज्ञानाकार्यस्य पापस्य सेतुज्ञानान्निवृत्तेः । तस्माद्विवरणमतं न युक्तमिति व्यासतीर्थेनोक्तम् । तत्र ब्रूमः—तत्त्वमसीतिमहावाक्येन जीवत्वेश्वरत्वरूपविरुद्धधर्मविशिष्टयोस्तात्त्वि+काभेदबोधने 'नेह नानाऽस्ति किंचन, नात्र काचन भिदाऽस्ति' इत्यादेर्विशिष्टयोर्मिथ्यात्वबोधकश्रुत्यन्तरस्य विरोधो दुर्वार एव । जीवत्वेश्वरत्वविशिष्टयोर्भेदस्य = व्यावहारिकत्वेनाभेदस्य ÷ व्यावहारिक-

---

* नापि प्रयोजनेति । एतद्ब्रह्ममीमांसाशास्त्रस्य प्रयोजनं मोक्षः । स च सत्ये संसारबन्धे सति न संभवति । सत्यस्य ज्ञानान्निवर्त्यत्वायोगात् । अतो मोक्षसिद्ध्यर्थमनाद्यज्ञानमूलक एव संसारबन्धः स्वीकार्यः । एवं च ब्रह्मज्ञानेन तन्निवृत्त्या मोक्षः सिद्ध इत्यनाद्यज्ञानमूलकोऽध्यासः स्वीकार्य इत्यपि वक्तुं न शक्यत इत्याशयः । × सेतुज्ञानाकार्यस्येति । श्रीरामचन्द्रविरचितस्य समुद्रसेतुबन्धस्य ज्ञानात्पापं नश्यतीति तत्र तत्रोक्तत्वात्तद्दर्शनेन मनुष्याणां पापं नश्यतीति सर्वैरप्यभियुक्तैर्मन्यते । नहि तत्र सेतुज्ञानकार्यं पापं येन सेतुज्ञानेन निवर्त्येत । एवं च ज्ञानेनाज्ञानकार्यस्यैव निवृत्तिर्भवतीति नियमाभावाद्ब्रह्मज्ञानेन सत्यस्यापि संसारस्य निवृत्तिसंभवान्न तदर्थमनाद्यज्ञानमूलकोऽध्यासः स्वीकार्य इत्यर्थः । + तात्त्विकाभेदेति । अत्रेदं बोध्यम्—विशेष्यविशेषणभावविषये प्रकारचतुष्टयं संभवति । विशिष्टस्य वैशिष्ट्यम्, विशिष्टे वैशिष्ट्यम्, एकत्र द्वयम्, विशेष्ये विशेषणमिति । तत्राऽऽद्योदाहरणं कुण्डली गच्छति । अत्र कुण्डलविशिष्टस्य देवदत्तस्य गमनम् । द्वितीयोदाहरणं राज्ञो रक्तं वस्त्रम् । अत्र रक्तगुणविशिष्टे वस्त्रे राज्ञोऽन्वयः । तृतीयस्योदाहरणं कुण्डली सवस्त्रश्च देवदत्तः । अत्र कुण्डलवस्त्रयोः स्वातन्त्र्येण देवदत्तेऽन्वयः । अन्त्योदाहरणं तु राज्ञः पुरुषस्य वस्त्रम् । अत्र हि राज्ञः पुरुषेऽन्वयः । तस्य च वस्त्रेऽन्वयः । एतत्प्रकारचतुष्टयस्य लक्ष्यानुरोधाद्व्यवस्था बोध्या । प्रकृते तु एकत्र द्वयमिति पक्षं गृहीत्वा जीवत्वेश्वरत्वयोरेकस्मिन्नात्मनि संबन्धो वाच्यः । तौ तु धर्मौ सत्यावेव न तु मिथ्येति अग्रिमश्रुतिविरोधो भवतीति । = व्यावहारिकत्वेनेति । व्यावहारिकसत्ताविशिष्टत्वेनेत्यर्थः । ÷ व्यावहारिकतायां इति । अस्यासंभवादित्यनेनान्वयः ।

तथाः *समानसत्ताकयोः प्रतियोग्यभावयोरेकत्र विरोधेनासंभवात्प्रा+तीतिकत्वापत्त्या तद्बोधने तादृशवाक्यस्याप्रामाण्यापत्तिश्च ।=जीवत्वोपलक्षित ईशत्वोपहिताभेदोऽपि न तद्वाक्यजन्यबोधाविषयः । तादृशबोधस्योक्तरीत्या व्यावहारिकेशत्वविषयकत्वासंभवात्प्रातिभासिकेशत्वविषयकत्वेन तद्बोधकवाक्याप्रामाण्यापत्तेः । सर्वज्ञत्वकिंचिज्ज्ञत्वोपहितयोरभेदस्य बाधितत्वादयोग्यतापाताच्च तदुपलक्षित×चिन्मात्रपरत्वमेव वाक्यस्योपेयम् । न च तत्त्वंपदमुख्यार्थत्वानुपपत्तिश्चन्द्रिकोक्ता सम्यक् । उपक्र-

---

*समानसत्ताकयोरिति । यदि प्रतियोगिनो व्यावहारिकसत्ता क्वचिदधिकरणे स्वी क्रियते तर्हि तदभावस्य तत्रैवाधिकरणे व्यावहारिक्येव सत्ता दुर्वचा । किंतु तद्विपरीता प्रातिभासिकी वक्तुं शक्या । यदि च कस्यचित्क्वचित्प्रातिभासिकी सत्तोच्यते तर्हि तदभावस्य तत्रैव प्रातिभासिकी सत्ता दुर्वचा । एवमेव पारमार्थिकीविषयेऽप्यूह्यम् । एवं च यदि जीवत्वेश्वरत्वाविशिष्टयोर्भेदो नाम, अन्योन्याभावः, स च व्यावहारिकसत्ताविशिष्टस्तर्हि तत्प्रतियोग्यभेदो व्यावहारिकसत्ताविशिष्टोऽसंभवनीयः । किंतु प्रातीतिकः । प्रातिभासिक इति यावत् । तथा सति तत्त्वमसीति वाक्यस्याप्रामाण्यापत्तिश्चेति भावः । + प्रातीतिकत्वेति । आहार्यारोपेण प्रतीतिविषयत्वेत्यर्थः । = ननूक्तरीत्या शाखा इति बहुत्वं वृक्ष इत्येकत्वमिति विशिष्टैक्यपक्षे निराकृतेऽपि शरीरशरीरिभावेन विशिष्टयोरैक्यं स्यादित्याशङ्कचाऽऽह—जीवत्वोपलक्षित इति । जीवत्वोपलक्षिते हि जीव ईशत्वोपहितस्याभेदोऽपि न तत्त्वमसीति वाक्यस्य 'वाच्यार्थ' इत्यर्थः । × चिन्मात्रपरत्वमेवेति । लक्षणावृत्त्या चिन्मात्रपरत्वं तत्त्वमसीति वाक्यस्योपेयमित्यर्थः । तथाहि—वृत्तिर्द्विविधा । शक्तिर्लक्षणा चेति भेदात् । तत्र शक्तिर्नाम पदानामर्थेषु मुख्या वृत्तिः । यथा घटपदस्य पृथुबुध्नोदराकृतिविशिष्टे वस्तुनि वृत्तिः । लक्षणा च द्विविधा । केवललक्षणा लक्षितलक्षणा चेति भेदात् । तत्र शक्यसाक्षात्संबन्धः केवललक्षणा । यथा गङ्गायां घोष इत्यत्र प्रवाहसाक्षात्संबन्धिनि तीरे गङ्गापदस्य । यत्र तु शक्यपरम्परासंबन्धेनार्थान्तरप्रतीतिस्तत्र लक्षितलक्षणा । यथा द्विरेफपदे । अत्र हि कर्मधारयो बहुव्रीहिश्चेति समासद्वयं संभवति । तत्र बहुव्रीह्यपेक्षया कर्मधारये लाघवात्कर्मधारय एवाऽऽश्रीयते । तथा च द्विरेफपदस्य रेफद्वयं शक्योऽर्थः । तस्य च भ्रमरशब्देन संबन्धः । भ्रमरशब्दस्य च मधुकरपदवाच्येन केनचित्प्राणिविशेषेण वाच्यवाचकभावः संबन्धः । एवं च द्विरेफपदात्स्वशक्यघटितपदवाच्यता-

रूपपरम्परासंबन्धेन प्राणिविशेषस्य प्रतीत्या लक्षितलक्षणेत्युच्यते । गौण्यपि लक्षितलक्षणैव । यथा सिंहो माणवक इत्यत्र । अत्र हि सिंहपदवाच्यपशुविशेषसंबन्धिक्रूरत्वादिसंबन्धेन माणवकप्रतीत्या तदुदाहरणत्वम् । पुनश्च लक्षणा त्रिविधा । जहल्लक्षणाऽजहल्लक्षणा जहदजहल्लक्षणा चेति भेदात् । तत्र शक्यमनन्तर्भाव्य यत्रार्थान्तरस्य प्रतीतिस्तत्र जहल्लक्षणा । यथा विषं भुङ्क्ष्वेत्यत्र स्वार्थं विषभोजनं परित्यज्य शत्रुगृहे भोजननिवृत्तिर्लक्ष्यतेऽतोऽत्र जहल्लक्षणा । यत्र शक्यार्थमन्तर्भाव्यैवार्थान्तरप्रतीतिस्तत्राजहल्लक्षणा । यथा शुक्लो घट इत्यत्र । अत्र हि शुक्लशब्दो गुणवाचक एवेति वेदान्तिमीमांसकादीनां मतम् । वैयाकरणास्तु ' गुणवचनेभ्यो मतुपो लुगिष्टः ' इति वार्तिकाच्छुक्लगुणविशिष्टे शुक्लशब्दस्य शक्तिरिति वदन्तीत्यन्यदेतत् । एवं चात्र शुक्लशब्दः स्वार्थं शुक्लगुणमन्तर्भाव्यैव तद्वति द्रव्ये लक्षणया वर्तते । यत्र तु विशिष्टवाचकः शब्द एकदेशं विहायैकदेशे वर्तते तत्र जहदजहल्लक्षणा । यथा सोऽयं देवदत्तः । अत्र हि पदद्वयवाच्ययोर्विशिष्टयोरैक्यानुपपत्त्या पदद्वयस्य विशेष्यमात्रपरत्वं जहदजहल्लक्षणया । एवं च प्रकृते तत्त्वमसीति वाक्येऽपि तत्पदवाच्यस्य सर्वज्ञत्वादिविशिष्टस्य त्वंपदवाच्येन किंचिज्ज्ञत्वादिविशिष्टेनैक्यायोगादैक्यसिद्ध्यर्थं चिन्मात्रे जहदजहल्लक्षणा ग्राह्या । केचित्तु—' सोऽयं देवदत्तः ' ' तत्त्वमसि ' इत्यादौ विशिष्टवाचकपदानामेकदेशपरत्वेऽपि न लक्षणा, शक्त्युपस्थितयोर्विशिष्टयोरभेदान्वयानुपपत्तौ विशेष्ययोः शक्त्युपस्थितयोरेवाभेदाविरोधात् । यथा घटोऽनित्य इत्यत्र घटपदवाच्यैकदेशघटत्वस्यायोग्यत्वेऽपि योग्यघटव्यक्त्या सहानित्यत्वान्वयः स्वी क्रियते । नहि तत्र लक्षणा कस्यचित्संमता । एवं च जहदजहल्लक्षणोदाहरणं तु काकेभ्यो दधि रक्ष्यतामिति ; वेदान्तिमते पदानां जातावेव शक्तेर्निर्णीतत्वेन काकपदस्य काकत्वे शक्तिः । व्यक्तेर्बोधस्तु लक्षणादिना भवति । अनन्यलभ्यः शब्दार्थ इति न्यायात् । एवं च शक्यकाकत्वपरित्यागेनाशक्यदध्युपघातकत्वपुरस्कारेण काकेऽकाकेऽपि शब्दस्य प्रवृत्तेरिति वदन्ति । तन्न युक्तम् । तथाहि—तत्त्वमसीत्यत्र शक्त्या त्वर्थप्रतिपादकत्वस्वीकारे जातिगुणक्रियासंज्ञान्यतमधर्मपुरस्कारेण तत्त्वंपदयोरर्थबोधकत्वात्तादृशधर्मविशिष्टं ब्रह्माऽऽपद्येत निर्धर्मकं त्विष्यतेऽतो लक्षणाऽवश्यमभ्युपेया । ननु शक्त्याऽर्थप्रतिपादने यथा शक्यतावच्छेदकं वक्तव्यं तथा लक्षणयाऽर्थप्रतिपादनेऽपि लक्ष्यतावच्छेदकमवश्यं वक्तव्यमिति निर्धर्मकं ब्रह्म दुर्वचमिति चेत् । अत्रोच्यते—यथा शक्यतावच्छेदकप्रकारक एव बोधो भवतीति नियमस्तथा लक्ष्यतावच्छेदकप्रकारक एव बोध इति न नियमः । किंत्वलक्ष्यतावच्छेदकप्रकारकबोधो लक्षणास्थले न भव-

मोपसंहारैक्यरूप्यादितात्पर्यनिर्णायकैर्लिङ्गैर्जीवब्रह्मैक्य एव तात्पर्यनिर्णयेन तात्पर्यविषयीभूतार्थबोधकत्वरूपमुख्यार्थत्वाबाधात् । न च तत्त्वंपदलक्षितचिन्मात्रे भेदाप्रसक्त्या तदभेदबोधकवाक्यवैयर्थ्याद्विशिष्टाभेदबोधसंभवोक्तिरपि युक्ता । यथा सोऽयं देवदत्त इति वाक्याद्विशिष्टाभेदो न बोधयितुं शक्यः । तथा हि—तत्र तद्देशकालविशिष्ट एतद्देशकालविशिष्टत्वं प्रतिपाद्यते, एतद्देशकालविशिष्टे वा तद्देशकालवैशिष्ट्यम्, तत्त(देत)द्देशकालयोरैक्यं वा, तद्विशिष्टयोरैक्यं वा ।नाऽऽद्यः । प्रत्यक्षादिना यज्ज्ञातं तदुद्देशेनाज्ञातं ज्ञापयितुं सोऽयमित्यादि वाक्यमुच्यते । तद्देशकालविशिष्टं तु न प्रत्यक्षमिति तद्देशकालविशिष्टत्वेन * नोद्देश्यतासंभवः । तद्देशकालवैशिष्ट्यस्येदानीं +सत्त्वापत्तिश्च । न द्वितीयः । एतत्कालादेरन्यदा ×सत्त्वापत्तेः । न तृतीयः । = बाधात् । *अत एव न चतुर्थोऽपि । विशेषणयोर्भिन्नत्वेन विशेषणविशेष्यतत्संबन्धात्मकविशिष्टस्य भिन्नत्वात् । +अतोऽयं स न वाऽयं नैव स

---

तीति नियमः । लक्ष्यतावच्छेदकप्रकारकबोधस्तु भवतु मा वा । एवं च लक्षणाऽवश्यमभ्युपेया । अत एवाऽऽचार्यैर्लक्षणया तत्त्वमसीत्यत्र जीवब्रह्मणोरैक्यं प्रतिपादितमिति बोध्यम् । * नोद्देश्यतासंभव इति । अत्र पक्षे हि तद्देशकालविशिष्टमुद्दिश्यैतद्देशकालविशिष्टत्वं विधीयत इत्युद्देश्यविधेयभावस्य सत्त्वात्सिद्धं धर्मिणमितिन्यायेनोद्देश्यतावच्छेदकधर्मविशिष्टो धर्मी सिद्धो वक्तव्यः । स चेदानीं वक्तुमशक्यः । न हि सोऽयं देवदत्त इति प्रत्यभिज्ञाकाले तद्देशकालविशिष्टोऽयं देवदत्त इति निमित्तसहस्रेणापि वक्तुं शक्यते । एवं च तद्देशकालवैशिष्ट्यस्य वक्तुमशक्यत्वान्न तद्रूपेणोद्देश्यतासंभव इति भावः । +सत्त्वापत्तिश्चेति । तादृशानुभवाभावादयुक्तोऽयमुद्देश्यविधेयभाव इत्याशयः । × अन्यदा सत्त्वेति । द्वितीयपक्षे ह्येतद्देशकालविशिष्टमुद्दिश्य तद्देशकालविशिष्टत्वस्य विधानादुक्तन्यायेनैतद्देशकालविशिष्टत्वस्य तत्काले सत्त्वापत्तेरित्यर्थः । = बाधादिति । तदेतद्देशकालयोरैक्यस्यासंभवादित्यर्थः । * अत एव नेति । तदेतद्देशकालयोरैक्यासंभवात्तद्विशिष्टयोरैक्यस्य सुतरामसंभवादित्यर्थः । + अतोऽयं स न वेति । 'अयं स न वा' इति संशयाकारः, 'अयं नैव सः' इति विपर्ययाकारः, एतादृशं यत्संशयविपर्ययविरोधि ज्ञानं तत्र विषयभूतस्तत्तोपलक्षितः प्रतियोगी यस्य, एतादृशो यो भेदो नामान्योन्याभावस्तद्विरहवत्त्वमिदंत्वोपलक्षितदेवदत्तस्वरूपं तस्यैव बुभुत्सितत्वेनेत्यर्थः ।

इति संशयविपर्ययविरोधिज्ञानविषयतत्तोपलक्षितप्रतियोगिकभेदाविरहवदिदंत्वोपलक्षितदेवदत्तस्वरूपस्यैव बुभुत्सितत्वेन सोऽयमिति वाक्यस्य तदिदंपदलक्षिततादृशदेवदत्तस्वरूप एव तात्पर्यम्। भेदविरहश्च न कश्चिद्धर्मः किंतु स्वरूपं तदेव चैक्यम्। तस्य च प्रत्यक्षसिद्धत्वेऽपि तत्तेदंतोभयोपस्थितिद्वारकतदुभयोपलक्षितस्वरूपैक्यबोधस्यैवोक्तसंशयाविपर्ययनिवर्तकत्वेन तदिदंपदद्वयोपलक्षितस्वरूपे भेदाप्रसक्तावपि तादृशस्वरूपैक्यबोधकस्य तदिदंपदद्वयात्मकवाक्यस्य यथा = न वैयर्थ्यं तथा जीवत्वेश्वरत्वोपलक्षितचिन्मात्रस्वरूपे भेदाप्रसक्तावपि तादृशचिन्मात्रस्य स्वप्रकाशतया तत्त्वंपदार्थशोधकवाक्यैश्च स्फुरणेनाबुभुत्सितत्वेऽपि च जीवत्वोपलक्षित ईशत्वोपलक्षिताद्भेदसंशयाविपर्ययविरोधिज्ञानविषयेशत्वोपलक्षितप्रतियोगिकभेदविरहवज्जीवत्वोपलक्षितस्वरूपैक्ये कोऽसावात्मेति बुभुत्सासंभवेन जीवत्वेश्वरत्वाद्युपस्थितिद्वारकतत्त्वंपदलक्षितचिन्मात्रस्वरूपैक्यबोधस्यैव तादृशसंशयविपर्ययनिवर्तकतया न तादृशबोधजनकस्य तत्त्वमसीति वाक्यस्य वैयर्थ्यम् । न चोपहितभेदसंशयविपर्ययनिवर्तनायोपहितयोरभेदपरत्वं तद्वाक्यस्याऽऽस्तामिति वाच्यम् । भेदस्य व्यावहारिकत्वेन तादृशाभेदस्योक्तरीत्या व्यावहारिकत्वासंभवेन प्रातीतिकत्वापत्त्या तद्बोधकतया तद्वाक्यस्य प्रामाण्यानि-

---

= न वैयर्थ्यमिति । अयं भावः—यदा कंचित्पुरुषं दृष्ट्वा कश्चित्पुरुषः 'अयं स न वा' इति संशयं वा 'अयं नैव सः' इति विपर्ययं प्राप्नोति तदा तस्य तादृशं संशयं वा विपर्ययं निवर्तयितुं तृतीयः पुरुषः 'सोऽयं देवदत्तः' इति वाक्यं प्रयुङ्क्ते। तस्य वाक्यस्य तात्पर्यं तु यो हि संशयज्ञाने वा विपर्ययज्ञाने तच्छब्दव्यवहार्यः स एव तादृशज्ञान इदंशब्दव्यवहार्य इति। संशयादि दूरीकर्तुं प्रवृत्तेन पुरुषेण प्रयुक्तत्वेन तादृशार्थस्यैव बुभुत्सितत्वात् । एवं चैक्यमेव बोधनीयम् । तस्य च प्रत्यक्षसिद्धत्वेऽपि सोऽयमिति वाक्यस्य न वैयर्थ्यम् । कुत इति चेत् । तत्तेदंतोभयोपस्थितिद्वारको यस्तदुभयोपलक्षितस्वरूपैक्यबोधस्तस्यैव पूर्वोक्तसंशयविपर्ययनिवर्तकत्वात् । एवं च जहदजहल्लक्षणया शुद्धस्वरूपे गृह्यमाणे भेदाप्रसक्तावपि पूर्वोक्तभेदविरहरूपैक्यबोधकस्य सोऽयमिति वाक्यस्य यथा न वैयर्थ्यमित्यर्थ इति।

र्बाहात् । उपहितयोर्भेदस्य व्यावहारिकत्वेन ब्रह्मज्ञानमात्रबा-ध्यत्वाच्चोपहिताभेदज्ञानस्य तादृशभेदसंशयादिविरोधित्वाभा-वाच्च । तथा च तत्त्वमस्यादिवाक्यतात्पर्यविषयप्रत्यगभिन्नब्र-ह्मरूपविषयस्यैव जिज्ञासासूत्रे महर्षिणा सूत्रितत्वात्तादृशविष-= योपपादककर्तृत्वादिबन्धमिथ्यात्वाय भाष्ये तदध्यासवर्णन-मिति विवरणाद्युक्तं युक्तमेव । ननु जीवब्रह्मैक्यरूपाविषय एव सूत्रित इत्यत्र किं मानमिति चेत् । उच्यते—जिज्ञासासूत्रे हि ब्रह्मज्ञानं विचारफलत्वेन सूत्रितम् । तस्य च स्वतोऽपुरुषा-र्थतया स्वरूपचितो विचारासाध्यतया वृत्तेरनित्यतया चानि-त्यस्वर्गादिसुखादितोऽपि विरक्तस्यैव ब्रह्मजिज्ञासाधिकाराच्च सुखसाक्षात्कारत्वेन तस्याः स्वतः पुरुषार्थत्वेऽपि न मुमुक्षुजिज्ञास्यतासंभव इति परिशेषाद्ब्रह्मज्ञानस्य जीवगतकर्तृ-ताध्यासरूपबन्धनिवर्तकत्वेनैव काम्यता वाच्या। तथा च भिन्न-विषययोरध्यासतत्त्वज्ञानयोर्निवर्त्यनिवर्तकभावासंभवात्प्रत्यग-भिन्नब्रह्मैव विचार्यमिति सिध्यति ।

यत्तु नारायणप्रसादादेव बन्धनाशरूपो मोक्षो न ज्ञानमात्रात् । 'यस्य प्रसादात्परमार्तिरूपादस्मात्संसारान्मुच्यते नापरेण' इत्या-दिश्रुतेः । ' मत्प्रसादात्तरिष्यसि ' इत्यादिस्मृतेश्च । न च ज्ञानं विनाऽत्यर्थप्रसादः ।

> कर्मणा त्वधमः प्रोक्तः । प्रसादः श्रवणादिभिः ।
> मध्यमो ज्ञानसंपत्त्या प्रसादस्तूत्तमो मतः ॥
> प्रसादात्त्वधमाद्विष्णोः स्वर्गलोकः प्रकीर्तितः ।
> मध्यमाज्जनलोकादिरुत्तमस्त्वेव मुक्तिदः । इति पुराणात् ।

ज्ञानं च श्रवणादिसाध्यम् ।

> श्रवणं मननं चैव ध्यानं भक्तिस्तथैव च ।
> साधनं ज्ञानसंपत्तौ प्रधानं नान्यदिष्यते ॥
> न चैतानि विना कश्चिज्ज्ञानमाप कुतश्चन ॥

इति पुराणाच्छ्रवणादिसाध्यज्ञानस्य प्रसादफलकत्वावग-मात् । श्रवणादिसाध्यज्ञानं प्रसादद्वारैव मोक्षहेतुः । तदुक्तं

= उपपादककर्तृत्वेति । उपपादकं यत्कर्तृत्वादिबन्धमिथ्यात्वं तस्मा इत्यर्थः ।

पुराणे—यथा दृष्टा प्रसन्नः सन्राजा बन्धापनोदकृत् ।
एवं दृष्टः स भगवान्कुर्याद्बन्धविमोचनम् ॥ इति ।

न चैवं सति 'दृष्टैव तं मुच्यते' इति श्रुतावधारणाविरोध इति वाच्यम् । * तस्यायोगव्यवच्छेदार्थकत्वात् । * मोक्षहेतुप्रसादेऽन्ययोगव्यवच्छेदार्थकत्वाद्वा । अत एव—

एवं ज्ञाते तु भगवाननादिः पुरुषोत्तमः ।
प्रसीदत्यच्युतस्तस्मिन्प्रसन्ने क्लेशसंक्षयः ॥

इति विष्णुपुराणमपि संगच्छते । तथा च मोक्षसाधनप्रसादहेतुतयैव

---

* तस्यायोगव्यवच्छेदेति । अयं भावः—एवशब्दस्यार्थोऽवधारणमसंभवश्च । तौ च द्योत्यावर्थौ बोध्यौ । आलंकारिकास्त्वप्यर्थप्राचुर्यार्थावपि स्वीकुर्वन्ति । तच्चावधारणं त्रिविधम्—विशेष्यसंगतैवकारेऽन्ययोगव्यवच्छेदरूपं विशेषणसंगतैवकारेऽयोगव्यवच्छेदरूपं क्रियासंगतैवकारेऽत्यन्तायोगव्यवच्छेदरूपम् । तत्र विशेष्यसंगतोदाहरणं पार्थ एव धनुर्धर इति । अत्र पार्थेतरावृत्ति यद्धनुर्धरत्वं तादृशधनुर्धरत्ववान्पार्थ इति बोधः । एवं चात्रान्यस्मिन्धनुर्धरत्वसंबन्धव्यवच्छेदः प्रतीतो भवति । विशेषणसंगतोदाहरणं शङ्खः पाण्डुर एवेति । अत्रायोगव्यवच्छेदो भवति । योगः संबन्धस्तदभावोऽयोगस्तस्य व्यवच्छेदो निवृत्तिरित्यर्थः । द्वाभ्यां निषेधाभ्यां प्रकृतार्थदार्ढ्यबोधनेनाव्यभिचारितपाण्डुरगुणवाञ्शङ्ख इति बोधात् । न तु नील इति फलितोऽर्थः । क्रियासंगतोदाहरणं नीलं सरोजं भवत्येवेति । अत्रात्यन्तायोगव्यवच्छेदो भवति । अत्यन्तो नामातिशयितोऽयोगः संबन्धाभावस्तस्य व्यवच्छेदोऽभाव इत्यर्थः । तथा च कदाचिन्नीलगुणवदभिन्नं यत्सरोजं तत्कर्तृका सत्तेति बोधः । एवं च कदाचिदन्यादृशगुणसंयुक्तमित्यपि गम्यते । तथा च प्रकृते मोचनक्रियानिष्ठाविशेष्यतानिरूपितप्रकारतापन्नदर्शनक्रियासंगतैवकारेणायोगव्यवच्छेदः क्रियते । एवं मोक्षे ज्ञानरूपं साधनमावश्यकं न तु प्रसादस्य व्यावृत्तिरित्यभिप्रायः ।

* नन्वयोगव्यवच्छेदकत्वेऽपि क्त्वाप्रत्ययेनाऽऽनन्तर्यस्य बोधनाद्दर्शनमोचनयोर्मध्ये प्रसादेन व्यवधानं दुर्वचमित्याशङ्क्याऽऽह—मोक्षहेतुप्रसाद इति । अयं भावः—विशेष्यसंगतैवकारेणान्ययोगव्यवच्छेदो भवतीति प्रसिद्धम् । अत्र च तमित्यनेन दर्शनस्य विशेषणं प्रतिपाद्यते । एवं च दर्शनं विशेष्यं तत्संगतैवकारेण तदितराविषयकं तद्विषयकं यद्दर्शनं तादृशदर्शनजन्यप्रसादे सत्येव मुच्यते नान्यथेत्यर्थ इति ।

विचारफलब्रह्मज्ञानस्य काम्यतेति परेणोक्तम् । तदसत् ।

तत्त्वज्ञानोत्तरं यावता कालेन भुज्यमानकर्मसमाप्तिस्तद-न्यकालविलम्बनिषेधं मोक्षं प्रति कथयन्त्याः 'तस्य ताव-देव चिरं यावन्न विमोक्ष्ये, अथ संपत्स्ये' इति श्रुतेर्विरोधेन मुक्तौ ज्ञानेन प्रसादापेक्षाया वक्तुमशक्यत्वात् । अन्यथा भुज्यमानकर्म-काले प्रसादानुत्पत्तौ तदन्यकालविलम्बावश्यंभावेनोक्तश्रुत्य-र्थबाधापत्तेः । न च 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वाम्' इति श्रुतिरपि ज्ञानस्य प्रसादापेक्षां दर्शयति । तया भक्तिजन्यप्रसादस्य तत्साक्षात्कार एवोपयोगस्य बोधनात् । यं पुरुषमेष परमात्मा वृणुते प्रसादेनानुगृह्णाति तेन लभ्यः साक्षात्क्रियते । ततस्तस्य संबन्धेनैष परमात्मा स्वां तनुं स्वरूपं विवृणुते प्रकटयति, आवरणं विनाश्य तेनैक्यं भवतीति तादृश-श्रुत्यर्थात् । नापि प्रारब्धकर्मक्षये प्रसादविनियोगोक्तिः साधी-यसी । प्रसादनिरपेक्षभोगादेव तत्सिद्धेः । प्रारब्धकर्मणां भोगादेव क्षय इति वचनसिद्धत्वात् । अत एव—

तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा ।
तदप्राप्तिमहादुःखविलीनाशेषपातका ।
निरुच्छ्वासतया मुक्तिं गताऽन्या गोपकन्यका ॥

इति पुराणोक्ताबाह्लाददुःखभोगयोरेव कर्मनाशकत्वमुक्तं न प्रसादस्येति संगच्छते । किं चाधिष्ठानप्रमात्वेन मिथ्यानिवर्त-कत्वस्य लोके क्लृप्तत्वमिव ज्ञानस्य प्रसादहेतुत्वं न क्लृप्तम् । किंतु सेवाया एव प्रसादहेतुत्वं लोके क्लृप्तम् । तदनुरोधेन 'तरति शोकमात्मवित्' इति श्रुत्या 'विद्वान्नामरूपाद्विमुक्तः । ज्ञात्वा देवं मुच्यते सर्वपाशैः' इत्यादिश्रुत्या च ज्ञानस्यैव बन्ध-निवृत्तिरूपमोक्षसाधनत्वबोधाङ्गीकारावश्यकत्वाद्यस्य प्रसादा-दित्यादेरीश्वरसेवाजन्यप्रसादो ज्ञानद्वारेण मोक्षजनक इत्येवार्थः ।

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥

इति श्रुत्या तथैव बोधनाच्च । न चोक्तपुराणवचनविरोधः । ज्ञान-संपत्त्या प्रसादस्तूत्पन्नो मत इत्यत्र, एवं सति [illegible]

राणवाक्ये च ज्ञानं न तत्त्वदर्शनं किंतु सर्वत्र विष्णुरूपत्व दर्शनरूपं समत्वमेव विवक्षितम् ।

यतितव्यं समत्वे च निर्वाणमपि चेच्छता ।
देवा मनुष्याः पशवः पक्षिवृक्षसरीसृपाः ॥
रूपमेतदनन्तस्य विष्णोर्भिन्नमिव स्थितम् ।
एतद्विजानता सर्वं जगत्स्थावरजङ्गमम् ।
द्रष्टव्यमात्मवद्विष्णुर्यतोऽयं विश्वरूपधृक् ॥

इति पूर्ववाक्यात्। अत एव रागद्वेषविषयत्वायोग्यत्वरूपात्मतुल्यत्वस्य ज्ञानं सर्वत्र विष्णुरूपत्वदर्शनात्मकसमत्वस्य फलमित्युक्तम् । अत एव च–सर्वत्र दैत्याः समतामुपेताः समत्वमाराधनमच्युतस्य । तस्मिन्प्रसन्ने किमिहास्त्यलभ्यम् , इत्युक्त्वा । समाश्रिताद्ब्रह्मतरोरनन्तान्निःसंशयं प्राप्स्यथ वै महत्फलम् , इत्यनेन विष्णुपुराण एव समत्वरूपाराधनजन्यप्रसादस्य तर्वाश्रयणदृष्टान्तेन परम्परया मोक्षफलप्रयोजकत्वमुक्तं संगच्छते । नहि सफलतर्वाश्रयणस्याव्यवधानेन फलप्रापकत्वनियमः किंतु लोष्टादिव्यापारव्यवधानेनेति । यथा दृष्ट्वेत्यादेस्तु प्रसन्नो राजा पश्चाद्दृष्टो यथा मोचकस्तथेश इत्यर्थः । नहि राजा बद्धं प्रति दृष्टिमात्रेण प्रसन्नः, प्रत्युत सापराधं बद्धं प्रति भूयो निग्राहकः । तमेवेत्यादिश्रुत्या विद्वान्नामरूपाद्विमुक्त इति श्रुत्या च शुद्धात्मज्ञानस्य सर्वद्वैतनिवर्तकत्वोक्त्या प्रसादहेतुत्वासंभवाच्च । दृष्ट्वैवेत्यादौ प्रसादेऽन्ययोगव्यवच्छेदपरत्वमवधारणस्येत्युक्तिरप्ययुक्तैव । अदृष्ट्वा न मुच्यत इत्यस्यैव ततः प्रतीतेः प्रसादस्याश्रुतत्वाच्च । एवं च जीवगतकर्तृत्वादिरूपबन्धनिवर्तकत्वेनैव + विचार्यप्रत्यगभिन्नब्रह्मज्ञानस्य काम्यत्वाद्बन्धस्य सत्यत्वे तस्य ज्ञानान्निवृत्त्ययोगाद्बन्धनिवृत्तिरूपप्रयोजनार्थमेव भाष्येऽध्यासोक्तिरित्यपि विवरणाद्युक्तं सम्यगेव ।

सेत्वज्ञानाकार्यस्यापि सत्यपापस्य सेतुदर्शनान्निवृत्तेर्न प्रयोजनार्थं तदुक्तिरिति चन्द्रिकोक्तं दूषणं तु न सत् । 'नान्यः पन्था अयनाय विद्यते' इति श्रुतेर्बन्धनिवृत्तिरूपमोक्षस्य ज्ञानैकसाध्य-

+ विचार्यप्रत्यगेति । विचार्यं यत्प्रत्यगभिन्नं ब्रह्म तज्ज्ञानस्येत्यर्थः ।

त्वानुरोधेनाधिष्ठानाज्ञानकार्यस्याधिष्ठानसाक्षात्कारत्वेनाधिष्ठानसाक्षात्कारमात्रनिवर्त्यत्वनियमाक्षतेः । सेतुदर्शनमात्रस्य न दुरितनाशकत्वं दैवात्तत्राऽऽगतस्य म्लेच्छादेरपि सेतुदर्शनाद्दुरितनाशप्रसङ्गात् । ज्ञानविधेर्बहुश आकरेषु निरस्तत्वाच्च । परिषदुपस्थापनपूर्वकच्छत्रपादुकादिवर्जनदोषख्यापनभिक्षाभोजित्वदूरगामित्वादिव्रतकलापविशिष्टत्वेनैव दर्शनविधिः । तथा च विशेषणस्य व्रतकलापस्य कृतिसाध्यत्वाद्विशिष्टदर्शनविधिः सुवच इति तादृशदर्शननिवर्त्यपापस्य त्वधिष्ठानज्ञानमात्रनिवर्त्यत्वाभावात्कारणात्मना निवृत्त्यभावाच्च नाऽऽत्यन्तिकी निवृत्तिः । आत्मज्ञाने तु न किंचिद्विशेषणं कृतिसाध्यम् । कर्मसमुच्चयस्य निरसनीयत्वात् । श्रवणादीनां तत्त्वसाक्षात्कार एवोपक्षीणतयाऽऽत्माज्ञानकृतबन्धस्याऽऽत्मज्ञानमात्रनिवर्त्यताक्षतेर्न किंचिदेतत् ।

यदपि * चन्द्रिकायां व्यासतीर्थेनोक्तं—शुद्धो न भातीति कोऽर्थः । किमात्मस्वरूपे किंचिद्भाति किंचिन्न भाति, किंवाऽऽ=त्मस्वरूपमेव न भाति, यद्वा नाऽऽत्माऽपि भातीति । आद्येऽभासमानोंऽशः शरीरादिभ्यो भेदो वा कर्तृत्वभोक्तृत्वाद्यभावो वा ब्रह्मात्माभेदो वा द्वितीयमात्राभावो वा । +आत्मभिन्नः सत्यश्चेदपसिद्धान्तः । मिथ्या चेन्न तत्त्वावेदकशास्त्रवेद्यः ।

---

* चन्द्रिकायामिति । पूर्वोक्तवाचस्पत्यादिसंमताधिकरणानुवादसमाप्तौ 'तेन वेदान्तवेद्यः शुद्धोऽहंप्रत्यये न भातीति' यदुक्तं तन्न युक्तमित्याशयेन विकल्पपूर्वं निरस्यति—शुद्धो न भातीति कोऽर्थ इत्यादि । = आत्मस्वरूपमेवेति । आत्मस्वरूपं नैव भातीत्यर्थः । आद्यपक्षे पक्षचतुष्टयं यदुक्तं तत्राप्यभासमानोंऽश आत्म भिन्नोऽभिन्नो वा । तत्रत्याद्योऽपि सत्यो मिथ्या वेति विकल्पान्मनासि निधाय दूषयति—+ आत्मभिन्नः सत्यश्चेदिति । ननु आत्मस्वरूपेऽभासमानोंऽशः क इत्याशयेन शङ्काप्रसङ्गे सत्यात्मभिन्नत्वकल्पो न संगच्छत इति चेत् । उच्यते—आत्मभिन्नत्वस्वीकारेऽप्यस्ति दूषणं वाऽभासमानस्य नाऽऽत्मस्वरूपत्वमिति सूचनायेति तद्भावः । पूर्वोक्तरीत्याऽऽत्मभिन्नत्वपक्षं निरस्याभिन्नत्वपक्षं निरस्यति—

आत्म*मात्रत्वे द्वितीयपक्षान्तर्भावः। तथाऽपि कल्पितेन भेदे-नागृहीत इव भातीति चेत्। न। तत्त्वतो गृह्यमाणेऽधिष्ठाने भेदकल्पनाया अगृहीतत्वारोपस्य चायोगात्। न च मिथ्याभू-तेनापि तेनोपलक्षितात्मा शास्त्रवेद्यः, स च सत्य इति वाच्यम्। स्वप्रकाशत्वेन नित्यसिद्धात्मावबोधार्थमुपलक्षणत्वोक्त्ययोगात्। उपलक्षणत्व एव तात्पर्ये चाप्रामाण्यापातात्। अत एव न द्वितीयः। तस्य स्वप्रकाशत्वेनाभानायोगात्। स्वप्रकाशस्याप्य-विद्यावशेनाभानेऽविद्यादुःखादेः प्रकाशो न स्यात्। तस्य चैत-न्यप्रकाशाधीनप्रकाशत्वोपगमात्। युक्तं चापौरुषेयस्याप्याग-मस्य शङ्कितताप्तर्यभ्रमरूपदोषस्य ×यजमानः प्रस्तर इत्या-देरिव प्रत्यक्षविरोधेन प्रतीतार्थच्यावनम्। उक्ता च त्व-याऽपि तत्त्वमसीति वाक्ये प्रत्यक्षाविरोधाय त्वमर्थलक्षणा। तस्मात्परमते स्वरूपमात्रस्य स्वप्रकाशत्वेन नित्यसिद्धत्वाद-न्यस्य चाज्ञानकल्पितत्वेनाज्ञानविषयत्वायोगादज्ञानासंभवाद-ज्ञातो विषयोऽज्ञाननिवृत्तिः फलमज्ञानी चाधिकारी न युक्त इति

---

*आत्ममात्रत्व इति। अभासमानांशस्याऽऽत्माभिन्नत्वे 'आत्मस्वरूपमेव न भाति' इति यो द्वितीयः पक्ष उक्तस्तत्रान्तर्भावात्तत्र यत् 'तस्य स्वप्रकाशत्वे-नाभानायोगात्' इत्युत्तरं दत्तं तदेवात्रापि दूषणमित्याशयेनोच्यते द्वितीयपक्षान्त-र्भाव इतीति भावः। × यजमानः प्रस्तर इति। अत्र किं प्रस्तरशब्दो यजमा-नस्य नामधेयं वा यजमानशब्दः प्रस्तरस्य नामधेयम्, अथवा यजमानकार्ये जपादौ प्रस्तरस्य गुणत्वेन विधानं वा प्रस्तरकार्ये स्रुग्धारणादौ यजमानस्य गुणत्वेन विधा-नम्, आहोस्विद्विधेयस्य प्रस्तरस्य यागसाधनत्वेन युक्तत्वाद्यजमानशब्देन स्तुति-रिति संशयः। तत्र नामधेयत्वं तावन्न संभवति। गोमहिषयोरिवार्थभेदस्यात्यन्त-प्रसिद्धत्वेनायुक्तत्वात्। यजमानकार्ये जपादौ प्रस्तरस्य गुणत्वेनापि विधानं न संभवति। अचेतनस्य प्रस्तरस्य सामर्थ्याभावात्। नापि प्रस्तरकार्ये स्रुग्धा-रणादौ यजमानस्य गुणत्वेन विधानं संभवति। अग्नौ प्रहरणस्यापि प्रस्तरकार्य-त्वेन यजमाने प्रहृते सति कर्मलोपप्रसङ्गात्। तस्मात्—यथा सिंहो माणवक इत्यत्र सिंहगुणेन क्रौर्यादिनोपेतो माणवकः स्तूयते तद्वद्यजमानगुणेन यागसा-धनत्वेनोपेतो विधेयः प्रस्तरः स्तूयत इति सिद्धान्तः। एवं च यजमानः प्रस्तर इत्यत्र यथा प्रतीतार्थच्यावनं तथाऽत्रापीति भावः।

शास्त्रमनारम्भणीयमेवेति भामतिमतं तावदयुक्तमेवेति वाचस्पतिदूषणम् ।

तत्र ब्रूमः—जिज्ञासासूत्र उक्तरीत्या विचारफलत्वेन सूत्रितस्य ब्रह्मज्ञानस्य जीवगताविद्यादिबन्धनिवर्तकत्वेनैव काम्यत्वात् । 'दृश्यते त्वग्र्यया बुद्ध्या' इति श्रुत्या

'तत्त्वमस्यादिवाक्योत्थं ज्ञानं मोक्षस्य साधनम् ।
ज्ञाने त्वनाहते तस्मिन्सर्वं ब्रह्ममयं भवेत्' ॥

इति बृहन्नारदीयवचनेन ज्ञानशब्दोदितसाक्षात्कारत्वेनानाहतशब्दोदितदोषराहित्यादिना च युक्तस्य वेदान्तजन्यशुद्धब्रह्मात्मैक्यज्ञानस्यैव सकलभ्रमनिदानाविद्यानिवर्तकत्वम् । दोषाश्च—इदं वाक्यं प्रत्यगभिन्नब्रह्मपरं न भवतीति प्रमाणासंभावनारूप एकः । विरुद्धतया भासमाने प्रतीचि कथं ब्रह्माभेद इति प्रमेयासंभावनारूपो द्वितीयः । कर्तृताध्यासस्य स्वरसवाहितारूपो विपरीतभावनात्मकस्तृतीयः । ते च क्रमेण श्रवणमनननिदिध्यासनैः प्रत्येकं क्रमेण निरसनीयाः । तथा च निदिध्यासनान्तसाधनैर्निरुक्तदोषापगमे वेदान्तवाक्यजन्यनिर्विकल्पकब्रह्मात्मैक्यसाक्षात्कार एवाविद्यानिवर्तकः । अहंप्रत्ययस्तु न तादृशसाक्षात्कारात्मक इत्येवाहंप्रत्यये शुद्धो न भातीत्यस्य वाचस्पतिवाक्यस्यार्थः । वेदान्तवेद्य इति तद्वाक्येनायमेवार्थः सूचितः । अन्यथा शुद्धोऽहंप्रत्यये न भातीत्येव वक्तव्ये वेदान्तवेद्य इत्यनर्थकमेव स्यात् । तथा च तादृशात्मसाक्षात्काराय वेदान्तविचारात्मकशास्त्रमारम्भणीयमेवेति वाचस्पत्युक्तं सम्यगेव । शुद्धोऽहंप्रत्यये न भातीत्यस्माद्वाक्यात्कथमप्यप्रतीतानां स्वबुद्धिमात्रपरिकल्पितानां केषांचिदर्थानां तथा विकल्पनेऽपि न दोषः । तथाहि—आत्मस्वरूपे किंचिद्बुद्ध्यादिसहितत्वांशो भाति तद्विनिर्मुक्तत्वकर्तृत्वाभावाद्यंशो न भातीति तदर्थः साधुरेव । तस्याऽऽभासमानांशस्याधिकरणात्मकत्वेन तदात्मना सत्यत्वमेव । तदंशत्वेन मिथ्यात्वेऽपि मिथ्यात्वेन तद्बोधकशास्त्रस्य तत्त्वावेदकत्वाबाधात् । तस्य स्वप्रकाशात्मस्वरूपत्वेऽपि कल्पितेन भेदेनागृहीत इव भातीत्यपि सुवचम् । अधिष्ठानसाक्षात्कारात्मकग्रहविशेषस्यैव वक्ष्यमाणरीत्या सकलकल्पनानिदानाविद्यानिवर्तकत्वात् । मिथ्याभूतेनापि तेनोपलक्षि-

तात्मा शास्त्रवेद्यः । स च सत्य इत्यपि युक्ततरम् । आत्मनः स्वप्रकाशत्वेऽप्यकर्तृत्वाद्युपस्थितिमूलकब्रह्मात्मैक्योपस्थितेरेव संशयविपर्ययविशेषाविरोधितया तदुपलक्षितात्मस्वरूपस्यैव बुभुत्सितत्वेन तत्रैव शास्त्रतात्पर्यावधारणात् । तस्यैव शास्त्रवेद्यताया अवश्यं वक्तव्यत्वात् । आत्माऽपि न भातीत्यर्थोऽपि सुवचः । " * यद्यप्यात्मा जन्तुमात्रस्य संदेहविपर्ययापरोक्षपरोक्षप्रमास्थले तदभावदशायां सुषुप्तियोगशास्त्रसिद्धनिरोधाख्यसमाधिकालयोश्चैकरूपेण तत्साक्षितया × निर्णीतः प्रथते । आन्तराश्च ज्ञानादयः सहोत्पत्तिविनाशाभ्यामव्यभिचरितप्रकाशाः । तदेतत्सर्वं स्वसाक्षिणमन्तरोपपादयितुमशक्यम् । सुषुप्त्यादिषु जन्यज्ञानासंभवात् । तार्किकादिमतेऽनुव्यवसायगम्यं ज्ञानम् । न चोत्पन्ने ज्ञाने नियमेन तदनुव्यवसायोऽस्तीति सुवचम् । तथा सत्यान्तरज्ञानधाराणामविच्छेदप्रसङ्गेन बाह्यव्यवहारविलोपप्रसङ्गात् । ज्ञानोत्पत्तिप्रत्यक्षं च दुर्वचम् । प्रत्यक्षे विषयस्य कारणत्वादुत्पत्त्यनन्तरक्षणे तेन भवितव्यम् । तत्र चोत्पत्तेरभावः । तस्याः क्षणिकत्वात् । आत्मनोऽप्यव्यभिचरितप्रकाशत्वं तन्मते न संभवति । स्वगतविशेषगुणानवगाह्यात्मप्रत्यक्षस्य तन्मतेऽनङ्गीकारात् । आत्मनोऽव्यभिचरितप्रकाशत्वायाऽऽन्तरज्ञानधाराभ्युपगमे बाह्यपदार्थविज्ञानविलयप्रसङ्ग इति स्वप्रकाश आत्माऽवश्यमभ्युपगन्तव्यः । तथा च तस्याभानायोगः " = तथाऽप्यस्ति भातीत्येवं रूपाव्यभिचारप्रकाशत्वाय सद्रूपेण भानात्मनाऽभानासंभवेऽपि साक्षिस्वरू-

---

*यद्यप्यात्मेति । यद्यपीत्यस्य दूरस्थेन 'तथाऽप्यस्ति भाति' इत्यत्रत्येन तथाऽपीत्यनेन सहान्वयः । × निर्णीत इति । संशयस्थले विपर्ययस्थले तथा परोक्षापरोक्षप्रमास्थले किंच संशयाद्यभावदशायां सुषुप्त्यवस्थारूपायां तथा योगशास्त्रसिद्धनिरोधाख्यसमाधिकाले च संशयादिसाक्षित्वेनाऽऽत्मा निर्णीत इत्यर्थः । = तथाऽप्यस्ति भातीति । अयं भावः—यद्यपि संशयाद्यवस्थानां साक्षी स्वप्रकाश आत्मा स्वीकार्यः, नैयायिकैरपि स्वप्रकाश आत्माऽभ्युपेय आत्मनोऽव्यभिचरितप्रकाशत्वाय, । तथा चाऽऽत्मनः स्वप्रकाशत्वेन भानाभावो वक्तुमशक्यस्तथाऽपीति ।

पानन्दे भासमानेऽपि स्वरूपप्रकाशेन सहानुवर्तमानानाद्यविद्यया दुःखाद्यपुरुषार्थसंबन्धोऽपि तत्राऽऽरोपितः । तथा तारतम्यापन्नतत्तद्विषयसंपर्कजनितवृत्तितादात्म्याध्यासात्साक्षिण्यपि तारतम्यमध्यस्तम् । ततश्च स्वरूपभूतनिरतिशयानन्देऽनुभूयमानेऽपीतोऽप्यधिक आनन्दोऽस्ति स मम न भाति स मयाऽनवाप्त इत्येवं कल्पिताभानयोग एव न भातीत्यस्यार्थः । एतेन स्वप्रकाशस्याप्यविद्यावशेनाभानेऽविद्यादेः प्रकाशो न स्यात्तस्य चैतन्यप्रकाशाधीनप्रकाशत्वादिति चन्द्रिकोक्तदूषणं निरस्तम् । सदाद्यात्मना प्रकाशमादायैव तत्प्रकाशोपपत्तेः । अत एव स्वप्रकाशत्वात्स्फुरति चैतन्यमविद्यावृतत्वाच्च न स्फुरति । न च विरोधः । स्फुरणस्य तात्त्विकत्वादस्फुरणस्य चातात्त्विकत्वात् । एवं च न कोऽपि दोषः । स्फुरत्वादज्ञानादिसाधकत्वस्यास्फुरत्वाद्विषयत्वस्य च संभवादित्यपि साधु । निरतिशयानन्दांशेऽनाद्यविद्याकृतकल्पितावरणस्यैवास्फुरणपदार्थत्वात्स्वरूपप्रकाशेन सहानुवर्तमानानाद्यविद्यावशेनाध्यस्तस्य तस्य स्वप्रकाशेऽप्यात्मनि संभवात् । 'स्फुरत्यस्फुरणायोगस्योक्तत्वात्' इति चन्द्रिकोक्ततद्दूषणानवकाशः । अथ स्वप्रकाशतया नित्यं भासमान आत्मन्यविद्यायास्तत्कृताध्यासादेश्चासंभवो ज्ञानाज्ञानयोर्विरोधादिति चेत् । अत्र वदन्ति— तथाभूतेऽप्यात्मन्यहमज्ञः, मामहं न जानामीत्यनुभवादनिर्वचनीयभावरूपाज्ञानात्मकाविद्यासंबन्धोपपत्तेः । तदुक्तम्—

> स्वप्रकाशे कुतोऽविद्या तां विना कथमावृतिः ।
> इत्यादितर्कजालानि स्वानुभूतिर्ग्रसत्यसौ ॥ ( प० चि० २८ )
> अज्ञानेनाऽऽवृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ (गी०५।१५)इति च ।

अयमभिप्रायः—अधिष्ठानभानमात्रं नाज्ञानतत्कृतारोपादिविरोधि । तथा सतीदं रजतमित्यादिभ्रमानुदयप्रसङ्गात् । तत्रापीदंताया अधिष्ठानस्वरूपभूताया भानात् । नाप्यधिष्ठानासाधारणस्वरूपज्ञानं तथा, इदंता च न तथेति वक्तुं युक्तम् । शङ्खः श्वेत इत्यधिष्ठानासाधारणस्वरूपज्ञानेऽपि पीतभ्रमोपादानाज्ञा-

नानिवृत्तेः । *नाप्यधिष्ठानासाधारणस्वरूपापरोक्षज्ञानम् । तथा सतीयं शुक्तिरित्याप्तोपदेशादज्ञानाद्यनि+वृत्तिप्रसङ्गः । वृक्षाधोऽग्रत्वादिभ्रमस्य तादृशज्ञानानिवर्त्यत्वाच्च । न च सोपाधिकभ्रमेष्वपरोक्षज्ञानम् । अन्यत्र तु परोक्षमपरोक्षं वा ज्ञानमज्ञाननिवर्तकमिति नियमः । तथा च शुक्तिरजतादिभ्रमाणां = परोक्षापरोक्षज्ञानसाधारणाधिष्ठानासाधारणस्वरूपज्ञानत्वेनैव ज्ञानं निवर्तकं पीतशङ्खादिभ्रमाणां तु तादृशापरोक्षज्ञानमेवेति वाच्यम् । शुक्तिरजतादिभ्रमव्यावृत्तस्य पीतशङ्खभ्रमेषु सोपाधिकभ्रमत्वस्यानुगतस्य वक्तुमशक्यत्वात् । शुक्तिरजतादिभ्रमेषु सादृश्यादिरूपदोषस्योपाधित्वसंभवात् । नहि पित्तादिदोष एवोपाधिर्न सादृश्यादिरित्यत्र किंचिद्गमकमस्ति । तस्मात्प्रमाणानुसारेण यादृशभ्रमे यज्ज्ञानं निवर्तकतया प्राप्नोति तदेव तथेति स्वीक-

---

* नाप्यधिष्ठानेति । शङ्खः श्वेत इति स्मृतिरूपज्ञानस्य विद्यमानत्वेऽप्यपरोक्षज्ञानाभावान्नाज्ञाननिवृत्तिरिति भावः । + ह्यनिवृत्तिप्रसङ्ग इति । अयं भावः—यथा दशमस्त्वमसीत्याप्तोपदेशाद्भ्रमोपादानभूताज्ञाननिवृत्तिर्भवति तथैव 'इयं शुक्तिः' इत्याप्तोपदेशाच्छुक्तिरजतभ्रमोपादानभूताज्ञाननिवृत्तिर्भवति सा न स्यादपरोक्षज्ञानाभावात् । नन्वेतदयुक्तं यथा रज्जौ सर्पभ्रमे जाते केनचिदाप्तेन 'इयं रज्जुः' इत्युपदिष्टेऽपि दूरत्वादिदोषनिवृत्तिपर्यन्तं सर्पो दृश्यत एव, किंतु भ्रमजन्या भीतिर्निवर्तते । यदा तु दूरत्वादिर्दोषो निर्गच्छति तदानीमेव सर्पो न दृश्यते । भ्रमोपादानभूतस्याज्ञानस्य निवृत्तत्वात् । एवं चाऽऽप्तोपदेशात्कथमज्ञाननिवृत्तिरिति चेत् । सत्यम् । भ्रमोपादानभूतस्याज्ञानस्य निवृत्तिस्तु प्रत्यक्षज्ञानादेव भवति, आप्तोपदेशस्तु प्रत्यक्षज्ञानद्वारैवाज्ञाननिवर्तकः । रज्जुसर्पभ्रमस्थले ह्याप्तोपदेशाद्भीतिनिवृत्तौ पुरुषः किं वर्तत इति ज्ञातुं तत्समीपं गच्छति ततो निश्चिनोति रज्जुरियमिति । दशमस्त्वमसीत्यादावपि भ्रमकाले दशमत्वविशिष्टस्याऽऽत्मनः प्रत्यक्षाभावः । आप्तोपदेशे तु सति दशमत्ववैशिष्ट्येनाऽऽत्मनः प्रत्यक्षे भ्रमोपादानभूताज्ञाननिवृत्तिर्भवति । एवं चाधिष्ठानासाधारणस्वरूपापरोक्षज्ञानमेव नाज्ञानतत्कृतारोपादिविरोधि, किंत्वाप्तोपदेशोऽपि तथेति प्राप्तमिति । = परोक्षापरोक्षेति । परोक्षापरोक्षज्ञानसाधारणं यदधिष्ठानासाधारणस्वरूपज्ञानत्वं तेनैव रूपेण ज्ञानमज्ञाननिवर्तकमित्यर्थः ।

तव्यम् । आत्मविषयकाज्ञाननिवर्तकतया च शास्त्रबलाद्वेदान्तवाक्यजन्यमेव ज्ञानमधिष्ठानतत्त्वावगाह्यपरोक्षरूपं निरस्तसमस्तपूर्वोक्तदोषमेवाऽऽस्थेयमिति सर्वमनवद्यम् । एतेन दुःखादेः श्रवणादिसंस्कृतान्तःकरणवृत्तिनाश्यत्वे शुक्तिरूप्यादौ तद्दर्शनात्सत्ये भ्रमरादिध्या*ननिवर्त्ये कीटादौ तद्दर्शनादज्ञानस्य सत्यत्वं च स्यादिति चन्द्रिकोक्तदूषणं निरस्तम् । प्रमाणबलेन शुक्त्यधिष्ठानापरोक्षस्यैव शुक्तिरूप्याज्ञाननिवर्तकत्वात् । विजातीयाविषयकध्येयमात्रविषयकवृत्तिसंतानरूपस्य ध्यानस्येच्छाधीस्य तदनधीनज्ञानतो वैलक्षण्येन तत्त्वज्ञानत्वाभावाच्च न प्रत्युदाहरणत्वसंभवः । अत एवोक्तम्—

+न बुद्धिं मर्दयन्दृष्टो घटतत्त्वस्य वेदिता ।
उपमृद्नाति चेद्बुद्धिं ध्याताऽसौ न तु तत्त्ववित् ॥

इति । ( प० ध्या० ९१ ) ।

यथा षड्जादयो गान्धर्वशास्त्राभ्यासात्प्रागपि स्फुरन्तस्तद्रूपेणानुल्लिखिता न श्रोत्रेण व्यज्यन्ते, व्यज्यन्ते तु शास्त्रवासितेन, एवं वेदान्तवाक्यजन्यब्रह्मात्मैक्याकारवासनावासितान्तःकरणेन तद्भावाभिव्यक्तिर्न प्रागिति भामत्युक्तमपि

---

*ध्याननिवर्त्ये कीटेति । इत्थं हि लौकिकप्रसिद्धिः—कश्चित्कीटः (कुम्भारीण ) कीटान्तरमानीय स्वगृहे स्थापयित्वा तदग्रे तिष्ठति । ततश्च स्थापितः कीटः स्वाग्रे तिष्ठतः कीटस्य निरन्तरध्यानेन तद्रूपो भवति । एवं च यथा लौकिकसत्यस्य कीटस्य कीटान्तरध्यानान्निवृतिस्तद्वदेव परमेश्वरध्यानेन सत्यस्यैव संसारस्य निवृत्तिर्भविष्यतीति तन्मूलभूतस्याज्ञानस्य सत्यत्वं स्यादिति भावः । + न बुद्धिं मर्दयन्निति । इदानींतनः पाठस्तु—उपमृद्नाति चेच्चित्तं ध्याताऽसौ न तु तत्त्ववित् । न बुद्धिमर्दयन्दृष्टो घटतत्त्वस्य वेदिता ॥ इति । अयं भावः—तत्त्वविद्ध्याननिष्ठयोर्भेदव्याख्यानसमये पञ्चदश्यामुक्तं—यो हि ध्याननिष्ठः स लेशतो लौकिकव्यवहारं करोति । तत्त्ववित्तु सम्यगाचरति । तत्त्वविदा हि मनोवाक्कायगृहक्षेत्रादयः पदार्था नोपमृद्यन्तेऽतः सम्यग्व्यवहरति । ननु विषयानुपमर्देनेऽपि तत्त्वविदा चित्तोपमर्दनं कार्यमित्याशङ्क्य पठति—उपमृद्नाति चित्तमिति । चित्तोपमर्दनं चित्तैकाग्र्यम् । यदि चित्तैकाग्र्यं कुर्यात्तर्हि ध्यातैव सः, न तु तत्त्ववित् । तत्र दृष्टान्तः—घटतत्त्वस्य ज्ञाता चित्तैकाग्र्यं कुर्वन्न क्वापि दृष्टः । किंतु विनाऽपि चित्तैकाग्र्यं घटं जानात्येवेति ।

समीचीनमेव । तत्र प्रागस्फुरतः पश्चाच्च स्फुरतः षड्जत्वादिजातिभेदस्येव प्रकृते तदभावादिति चन्द्रिकोक्तदूषणं त्वनाद्यविद्याकल्पितधर्मभेदस्य ब्रह्मणि संभवाद्बहुशो दत्तोत्तरं चर्वितचर्वणमेव । न च क्रियासमभिव्याहारेणेत्यादिकं वाचस्पत्युक्तं त्वतिसम्यगेव । युक्तं चापौरुषेयस्याप्यागमस्य यजमानः प्रस्तर इत्यादेरिव प्रत्यक्षविरोधेन प्रतीतार्थच्यावनम् । उक्ता च त्वयाऽपि तत्त्वमसीति वाक्ये प्रत्यक्षाविरोधाय लक्षणेति चन्द्रिकोक्तदूषणं तु परमाग्रहनिबन्धनम् । अर्थक्रियादिरूपपरीक्षापरीक्षितस्य प्रत्यक्षस्य प्राबल्येन व्यवहारदशायामेव तद्विरुद्धार्थग्राहिणो यजमानः प्रस्तर इत्यादेस्तद्विरोधेनामुख्यार्थकत्वेऽप्यद्वैतागमस्य परीक्षितप्रमाणविरोधाभावेन मुख्यार्थत्वस्यैव स्वीकरणमुचितम्। प्रत्यक्षादेर्हि परीक्षया व्यावहारिकप्रामाण्यमेव सिद्धम् । तच्च नाद्वैतागमेन बाध्यते, बाध्यते तु तात्त्विकं प्रामाण्यम् । तत्तु न परीक्षया सिद्धमिति न विरोधः । किं चाद्वैतागमस्योप=क्रमादिभिस्तात्पर्यनिर्णायकैर्लिङ्गैरद्वैतपरत्वानिर्णयान्मुख्यार्थत्वमेव । यथा चैतत्तथा जन्माधिकरणे वक्ष्यामः । यजमानः प्रस्तर इत्यादौ प्रतीतार्थ उपक्रमाद्यभावाद्युक्तं प्रत्यक्षविरोधेन स्वार्थच्यावनम् । यद्यपि प्रस्तरयजमानादेरभेदस्यापूर्वत्वरूपैकलिङ्गस्य तादृशार्थे तात्पर्यग्राहकत्वसंभवः, एकैकलिङ्गस्य तात्पर्यनिर्णायकत्वे तदन्यलिङ्गानामनुवादकत्वाद्बाहुल्यमप्रयोजकमित्यद्वैतागमसाम्यशङ्का संभवति तथाऽपि यजमानः प्रस्तर इत्यस्य प्रस्तरमुत्तरं बर्हिषः सादयतीति विध्यर्थवादत्वेन स्वापेक्षितस्तुतिपरत्वनिश्चयादन्यपरात्तस्मान्न प्रत्यक्षविरुद्धार्थसिद्धिरिति न तेन प्रत्यक्षस्य व्यवहारकाले बाधः । तत्त्वमस्यादिवाक्येऽपि न प्रत्यक्षानुरोधाय लक्षणा किंतूपक्रमादिभिस्तात्पर्यनिर्णायकैर्लिङ्गैर्निर्णीताद्वैतब्रह्मात्मतात्पर्यनिर्वाहायैव । तदुक्तं सिद्धान्तबिन्दौ मधुसूदनसरस्वतीभिः—इच्छन्ति ह्याकाशपदा-

---

= उपक्रमादिभिः । उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये । इति षड्विधलिङ्गैरित्यर्थः ।

दपि निर्विकल्पकं स्मरणं तात्पर्याधीनत्वाच्छब्दवृत्तेरिति । तस्मादित्यादिनाऽधिकार्याद्यसंभवोक्तिरपि चन्द्रिकोक्ता न विचारसहा । न ह्यविद्याकल्पितेऽविद्याऽस्माभिः स्वी क्रियते, किंतु चैतन्यमात्र एव । तस्मिंस्तु सर्वं जडजातं कल्पितमित्येकाश्रयाश्रितत्वसंबन्धाज्जडावच्छिन्नचैतन्यमावृतमज्ञानीति व्यपदिश्यत इत्यज्ञान्यधिकारीति तु सुष्ठूक्तमेवेति दिक् ।

यत्त्वनिर्वचनीयभावात्मकानाद्यविद्याकृतावरणसंभवे पूर्वोक्तं सर्वं संगच्छते, न तु तत्संभवति । अविद्याया उक्तरूपाया लक्षणतः प्रमाणतश्च निरूपणानर्हत्वादिति परेणोक्तं तल्लक्षणप्रमाणसद्भावान्न साधु । तथाहि—अनादिभावत्वे सति ज्ञाननिवर्त्यत्वं तल्लक्षणं तावत्सुवचम् । न चाऽऽकाशादावतिव्याप्तिः । आत्मन आकाशः संभूत इति श्रुत्याऽऽकाशोत्पत्तिबोधनेन तस्यानादित्वानभ्युपगमात् । महादिक्स्थानीयस्य चाव्याकृताकाशस्य ब्रह्माविद्यातिरिक्तत्वानभ्युपगमात् । ज्ञानप्रागभावेऽतिव्याप्तिवारणाय भावत्वनिवेशः । उत्तरोत्तरमनोवृत्तेः पूर्वपूर्वमनोवृत्तिध्वंसरूपत्वोपगमे तादृशमनोवृत्तिष्वतिव्याप्तिवारणायानादित्वनिवेशः । यद्वा प्रागभावध्वंसः प्रतियोगिजन्य इति मते ज्ञानप्रागभावेऽतिव्याप्तिवारणाय भावत्वनिवेशः । अविद्याध्वंसो ज्ञानानतिरिक्तो ज्ञानजन्य इति मतेऽविद्याध्वंसेऽतिव्याप्तिवारणायानादित्वनिवेशः । चिदविद्यासंबन्धेऽतिव्याप्तिवारणाय ज्ञानजन्यध्वंसप्रतियोगित्वात्मकज्ञाननिवर्त्यत्वशरीरे ज्ञानजन्येति साक्षाज्ज्ञानजन्येत्यर्थकम् । अविद्यासंबन्धध्वंसस्य ज्ञानजन्याविद्याध्वंसजन्यत्वान्न तत्रातिव्याप्तिः । न चानादिभावस्य ज्ञाननिवर्त्यत्वानुपपत्तिः । अभावस्येव भावस्यापि नाशानाशयोर्विरोधिसंनिपाततदभावप्रयुक्तत्वेन विपक्षे बाधकशून्यतयाऽनादिभावत्वस्याविनाशित्वव्याप्यत्वे मानाभावात् । भ्रमोपादानत्वं वा तल्लक्षणम् । यत्तु भ्रमपदेन रजतरूपार्थो विवक्षितो ज्ञानं वा । नाऽऽद्यः । पदार्थस्यासत्त्वेन तदुपादानताया असंभवात् । न द्वितीयः । अन्तःकरणेऽतिव्याप्तेरिति परेणोक्तम् । तदसत्—भ्रमविषयस्यापारमार्थिकत्वेऽप्य-

निर्वच*नीयस्वरूपाभ्युपगमेन तदुपादानतायाः सम्भवात् । नाप्यन्तःकरणेऽतिव्याप्तिः । तस्य भ्रमोपादानत्वेऽपि + भ्रमं प्रत्यतथात्वात् ।

---

* अनिर्वचनीयेति । अयं भावः—मायावादिमते त्रिविधं सत्त्वं पारमार्थिकं व्यावहारिकं प्रातिभासिकं चेति । तत्र ब्रह्मणः पारमार्थिकं सत्त्वं घटादेर्व्यावहारिकं शुक्तिरजतादेस्तु प्रातिभासिकम् । तथा च ब्रह्मभिन्नस्यानिर्वचनीयत्वेन शुक्तिरजतादेरनिर्वचनीयत्वात्तदुपादानताऽविद्यायाः संभवतीति भ्रमोपादानत्वं लक्षणं सम्यगेव । स्यादेतत् । रजतोत्पादकानां रजतावयवानामभावे शुक्तौ कथं रजतमुत्पद्यते । तथा च पदार्थस्यासत्त्वेन तदुपादानताया असंभव एवेति चेत् । अत्रोच्यते—नहि लोकसिद्धसामग्री प्रातिभासिकरजतोत्पादिका, अपि तु तद्विलक्षणैव । तथाहि—काचकामलादिदोषदूषितलोचनस्य पुरोवर्तिद्रव्यसंयोगादिदमाकारा चाकचक्याकारा काचिदन्तःकरणवृत्तिरुदेति । तस्यां च वृत्ताविदमवच्छिन्नं चैतन्यं प्रतिबिम्बते । तत्र वृत्तेर्निर्गमनेनेदमवच्छिन्नचैतन्यं वृत्त्यवच्छिन्नचैतन्यं प्रमातृचैतन्यं चाभिन्नं भवति । ततश्च प्रमातृचैतन्याभिन्नविषयचैतन्यनिष्ठा शुक्तित्वप्रकारिकाऽविद्या चाकचक्यादिसादृश्यसंदर्शनसमुद्बोधितरजतसंस्कारसध्रीचीना काचादिदोषसमवहिता रजतरूपार्थाकारेण रजतज्ञानाकारेण च परिणमते । एवं चाऽऽविद्यकमेव शुक्तिरजतं प्रातिभासिकमित्युच्यते । ननु घटपटादेर्यथाऽऽविद्यकत्वं तथैव शुक्तिरजतादेः, तथा च घटाद्यपेक्षया शुक्तिरजतादेः कुतो वैलक्षण्यमिति चेत् । सत्यम् । परमते मायायाः स्वीकाराभावेऽपि केषांचित्क्षणिकत्वं केषांचित्स्थायित्वमित्यत्र यदेव नियामकं स्वभावविशेषादिकं तदेवास्माकम् । अथवा घटाद्यध्यासेऽविद्यैव दोषत्वेनापि हेतुः । शुक्तिरजताद्यध्यासे तु काचादयो दोषाः । तथा चाऽऽगन्तुकदोषजन्यत्वं प्रातिभासिकत्वे प्रयोजकम् । अत एव स्वप्नोपलब्धरथादीनामागन्तुकनिद्रादिदोषजन्यत्वात्प्रातिभासिकत्वम् । एवं च ब्रह्मभिन्नस्य सर्वस्यानिर्वचनीयत्वेन शुक्तिरजतादेरप्यनिर्वचनीयत्वात्तदुपादानत्वं मायायाः संभवतीति भ्रमोपादानत्वं लक्षणं मायाया युक्ततरमिति । + भ्रमं प्रत्येति । भ्रमव्यतिरिक्तज्ञानस्थलेऽन्तःकरणं विषयाकारेण परिणमते । भ्रमस्थले त्वविद्यैव विषयाकारेण परिणमत इत्यनुपदमेवोक्तत्वाद्भ्रमं प्रत्यन्तःकरणस्योपादानत्वाभावादिति भावः ।

तादृशाज्ञाने प्रत्यक्षानुमानश्रुतयश्च प्रमाणानि । तथाहि- *अहमज्ञ इति प्रत्यक्षं तादृशानिर्वचनीयभावरूपानाद्यज्ञाने प्रमाणम् । न चाहमज्ञ इत्यादिप्रतीतौ ज्ञानाभाव एव विषयोऽस्त्विति वाच्यम् । +धर्मिप्रतियोगिज्ञानसत्त्वेऽपि जायमानस्य तस्य ज्ञानसामान्याभाव विषयकत्वे व्याघातात् । न हि प्रतियोग्यधिकरणे =प्रतियोग्यधिकरणक्षणावच्छेदेन तदत्यन्ताभावस्तवाप्यभिमतः । धर्मिप्रतियोगिनोः ×साक्षिग्राह्यत्वाभ्युपगमेऽपि साक्षिरूपज्ञानेनैव व्याघातो दुर्वारः । किं बहुना, न जानामीत्यभावग्रहेणैव स्वकाले स्वाभावावगाहनाद्व्याघातो दुर्वारः । अज्ञानस्य स्वरूपतः साक्षिगम्यत्वेऽप्युक्तविशेषणविशिष्टस्य प्रमाणगम्यत्वान्न तत्रानुमानोपन्यासासंगतिः । त्वदुक्तमर्थं न जानामीति प्रत्यक्षानुपपत्तिश्च तादृशाज्ञानानभ्युपगमे । ननु किमत्र ÷सर्वानुवादेन व्यवहारः । किंवा सामान्यतः । नाऽऽद्यः । तादृशव्यवहार⊙स्यैवाभावात् ।

---

* अहमज्ञ इति । अयं भावः—यदि केनचित्पुरुषेण कस्मिंश्चित्पुरुषे ‘ त्वदात्मनः स्वरूपं कीदृशं तथा मदात्मनोऽपि स्वरूपं कीदृशम् ’ इति पृष्टे सति पृष्टः पुरुष उत्तरयति—अहमज्ञः, मामन्यं च न जानामीति । अस्माच्च वाक्यादज्ञानाश्रयोऽहमिति प्रतीयत इति । +धर्मिप्रतियोगीति । धर्मोऽस्त्यस्मिन्निति धर्मी । धर्मी च प्रतियोगी चेति द्वंद्वः । तयोर्ज्ञानमिति विग्रहः । धर्मोऽभावः सोऽस्ति यस्मिन्नधिकरणेऽभावाधिकरणमिति यावत् । यस्याभावः स प्रतियोगी । एवं चाभावज्ञानं प्रतियोग्यधिकरणयोर्ज्ञाने सत्येव भवति नान्यथा । अत्र च प्रतियोगी ज्ञानसामान्यं तदन्तर्भूतं च प्रतियोग्यधिकरणयोर्ज्ञानम् । तस्य च सत्त्वाज्ज्ञानसामान्याभावस्य वक्तुमशक्यत्वेन व्याघातो दुर्वार इति भावः । = प्रतियोग्यधिकरणक्षणेति । यस्मिन्नधिकरणे यत्क्षणावच्छेदेन प्रतियोगी वर्तते तत्रैव तत्क्षणावच्छेदेन तदत्यन्ताभावो दुर्वच इति भावः । ×साक्षिग्राह्यत्वाभ्युपगमेऽपीति । अन्तःकरणवृत्तिरूपज्ञानाभावेऽपीति भावः । ÷ सर्वानुवादेनेति । परेणोक्तानां सर्वेषां पदार्थानां तत्तद्रूपेणानुवादपुरःसरम् ‘ त्वदुक्तमर्थं न जानामि ’ इति व्यवहार आहोस्वित्सामान्यरूपेणानुवादपुरःसरमिति प्रश्नाशयः । ⊙स्यैवाभावादिति । सर्वेषां पदार्थानां तत्तद्रूपेणानुवादे सति त्वदुक्तमर्थं न जानामीत्यस्य वदतो मे जिह्वा नास्तीतिवद्व्याघातत्वेनासंभवादिति भावः ।

भावे वा त्वदुक्तं प्रमात्वेन न जानामीत्येवंपरत्वोपपत्तेः। प्रतिवाक्यादधिगतस्यार्थस्यानुवादपुरःसरं प्रमाणाभावेन निरसनदर्शनात्। न च त्वदुक्तेऽर्थे प्रमाणज्ञानं मे नास्तीत्यस्य विशिष्टविषयज्ञानस्य प्रमाणत्वात्तद्विशेषणतयाऽर्थस्याऽपि प्रमाणत्वेनावगमात्स्ववचनव्याघात इति शङ्क्यम्। एतत्प्रमाणज्ञानस्य प्रमाणाभावविषयकत्वेऽपि तदर्थस्यातद्विषयत्वात्। अन्यथा भ्रमो मम नास्तीत्यादिप्रमाणज्ञानस्यापि विशिष्टार्थभ्रमविषयतया भ्रमविषयस्यापि प्रामाणिकत्वापातात्। न द्वितीयः। सामान्यानुवादेन *विशेषव्यवहारोपपत्तेः। विशेषस्याप्यधिगमानधिगमयोर्नैव व्यवहार इति चेन्न। अस्ति कश्चिद्विशेष इति सामान्यतो ज्ञातत्वात्। किं च भावरूपाविद्याभ्युपगमेऽपि पूर्वमर्थो ज्ञातो न वा सर्वथाऽपि +प्रश्नायोगः। अस्मन्मते सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिचैतन्यविषय एवेति प्रमाणज्ञानोदयात्प्रागज्ञातत्वविशेषितोऽर्थः साक्षिसिद्धोऽनुवादगोचरो भवति प्रश्नार्ह इति चेन्न। साक्षिसिद्धतयाऽपि सिद्धेऽर्थे व्यवहारायोगात्। साक्षिणा ज्ञातेऽपि प्रमाणबुभुत्सया व्यवहार इति चेन्न। साक्षिसिद्धत्वे प्रमाणबुभुत्साया निष्फलत्वात्। तथा च त्वयाऽपि सामान्यतः साक्षिसिद्धोऽर्थो विशेषज्ञानाय निरूपणविषय इति वक्तव्यमेवेति चेत्। नैवम्। त्वदुक्तार्थत्वेनानुवादेऽपि =व्याघातस्य दुर्वार-

---

* विशेषव्यवहारोपेति। सामान्यरूपेणानुवादेऽपि विशेषरूपेण ज्ञानाभावात् 'त्वदुक्तमर्थं न जानामि' इति व्यवहारस्योपपत्तेरित्यर्थः। + प्रश्नायोग इति। अविद्याभ्युपगमेऽपि सामान्यतो ज्ञातेऽपि विशेषरूपेण ज्ञानाभावस्वीकारात् 'पूर्वमर्थो ज्ञातो न वा' इत्याकारकप्रश्नस्य सर्वथाऽयोग इत्यर्थः। =व्याघातस्येति। व्याघातमेवोपपादयति—त्वदुक्तार्थमित्यादिना। अयं भावः—त्वदुक्तमर्थं न जानामीत्यनेन हि ज्ञानस्याभावः प्रतिपाद्यते। एवं च प्रतियोगि ज्ञानं, तत्र प्रतियोगिता तदवच्छेदकं ज्ञानत्वं, न तु विशेषज्ञानत्वम्। प्रतियोग्यंशे सामान्यधर्मस्यैव विशेषणत्वात्। तथा च त्वदुक्तार्थविषयकज्ञानसामान्याभावप्रतीतिर्भवति। त्वदुक्तार्थत्वेनानुवादात्तु त्वदुक्तार्थविषयकज्ञानं जातमिति सिद्धम्। एवं च त्वदुक्तार्थविषयकज्ञाने सति त्वदुक्तार्थविषयकज्ञानसामान्याभावो वदतो मे मिथ्या नास्तीतिवद्व्याहत इति।

त्वात् । त्वदुक्तार्थं न जानामीत्यत्र हि त्वदुक्तार्थविषयकज्ञान-सामान्याभावः प्रत्येतव्यः । प्रतियोग्यंशे सामान्यधर्मस्यैव विशेषणत्वात् । प्रतियोगिविशेषणतानापन्नस्यापि धर्मस्याभा-वप्रतीतौ प्रतियोगितावच्छेदकसंसर्गत्वेन घटकतया भानोपगमे घटवत्यपि भूतले घटो नास्तीति *प्रतीतिप्रसङ्गात् । अत एव तादृशप्रतीतेः प्रमाणाभावविषयकत्वं नाभ्युपगन्तुं युक्तम् । किं च त्वदुक्तार्थविषयकप्रमाणज्ञानं नास्तीति ज्ञानस्यापि प्रमाण-ज्ञानतया त्वदुक्तार्थविषयकप्रमाणज्ञानसामान्याभावविषयकत्वे व्याघातो दुर्वारः । यत्त्वेतत्प्रमाणज्ञानस्य प्रमाणाभावविषय-कत्वेऽपि तद्विषयस्यैतद्विषयता नास्तीति । तन्न । प्रतियोगिताव-च्छेदकविशिष्टप्रतियोग्यनवगाहिनोऽभावप्रत्यक्षस्या×प्रामाणिक-त्वात् । न च त्वदुक्तत्वावान्तरधर्मप्रकारकज्ञानसामान्याभावो विषयः, नात =उक्तदोष इति वाच्यम् । त्वदुक्तार्थत्वव्याप्यध-

---

* प्रतीतिप्रसङ्गादिति । अयमाशयः—अभावश्चतुर्विधः प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावश्चेति सर्वसंमतम् । सौन्दडोपाध्यायास्तु व्यधिकरणधर्मावच्छिन्नाभावमपि स्वी कुर्वन्ति । पटत्वेन पटसत्त्वेऽपि घटत्वेन पटो नास्तीति प्रतीतेः । तच्च नेतरे सहन्ते । तथाहि—घटत्वेन पटो नास्ती-त्यस्य पटे घटत्वाभाव इति तात्पर्याद्व्यधिकरणधर्मावच्छिन्नाभावो नातिरिक्तः । एवं च यदि सौन्दडमतं गृहीत्वा प्रकृतेऽभावप्रतीतौ प्रतियोगिविशेषणतानाप-न्नस्यापि धर्मस्य घटकतया भानोपगमस्तर्हि घटवत्यपि भूतले पटत्वेन सम-वायसंबन्धेन वा घटो नास्तीति प्रतीतिप्रसङ्गः । तथा च सौन्दडमतं न सिद्धातसंमतमिति । × अप्रामाणिकत्वादिति । त्वदुक्तार्थविषयकप्रमाणज्ञानं नास्तीत्यस्मात्प्रमाणज्ञानाभावः प्रतीयते । तस्य प्रतियोगि प्रमाणज्ञानम् । तत्र प्रतियोगिता । तदवच्छेदकं प्रमाणज्ञानत्वम् । तथा च प्रमाणज्ञानत्वावच्छिन्नप्र-माणज्ञानरूपप्रतियोग्यवगाहिनोऽभावप्रत्यक्षस्यैवौचित्यम् । निष्प्रतियोगिकाभा-वमात्रग्रहणस्यासंभवात् । एवं चाभावप्रत्यक्षस्थले प्रतियोगिनो घटादेर्यत्प्रत्यक्षं तद्विशेषणविशेष्यभावसंनिकर्षेण संबन्धेन भवति । स्वातन्त्र्येण घटादेः प्रत्यक्षं तु संयोगादिसंनिकर्षेण भवतीति फलितमिति भावः । = नात उक्तदोष इति । त्वदुक्तमर्थं न जानामीति ज्ञानस्य सामान्यत्वेन तद्विषयभूताभावप्रतियो-गिज्ञानस्य त्वदुक्तार्थत्वावान्तरधर्मत्वेन भेदान्न व्याघात इत्यर्थः ।

मेवाजीति सामान्यतो विशेषधर्मज्ञानवतामपि तादृशव्यवहारद-
र्शनात् । न च त्वदुक्तार्थत्वव्याप्यधर्मनिष्ठ*निरवच्छिन्नप्रकारता-
शालिज्ञानाभावस्तद्विषय इति युक्तम् । तथा सति परोपन्यस्त-
मर्थं कम्बुग्रीवादिमत्त्वाद्युपाधिपुरस्कारेण जानतामपि तादृशव्य-
वहारापत्तेः । न च त्वदुक्तार्थत्व×व्याप्यत्वानवच्छिन्नत्वदुक्तार्थ-
त्वावान्तरधर्मनिष्ठविषयताशालिज्ञानसामान्याभावस्तद्विषय इति
युक्तम् । त्वदुक्तार्थं =उभयावृत्तिधर्मवाजीति प्रत्ययवतामपि तादृ-
शव्यवहारदर्शनात् । भावरूपाज्ञानस्वीकारे तु ज्ञानविशेषस्यैवो-
क्तरीत्या तादृशाज्ञानविरोधित्वस्य मन्मते स्वीकारान्न दोषः ।
किंचेत्यादिकमपि न युक्तम् । अज्ञातत्वेन साक्षिसिद्धेऽपि
वस्तुन्यज्ञाननिवर्तकं ज्ञानं संपाद्य बुभुत्सादर्शनात्सफलत्वा-
च्चेति दिक् ।

देवदत्तप्रमा तत्स्थप्रागभावातिरेकिणोऽनादेर्ध्वंसिका प्रमा-
त्वात्, अविगीतप्रमा यथेति तत्त्वप्रदीपोक्तं देवदत्तप्रमा देवदत्त-
निष्ठप्रमाप्रागभावातिरिक्तस्यानादेर्ध्वंसिका प्रमात्वाच्चैत्रीयप्रमाव-
दित्यनुमानमपि तादृशाज्ञाने प्रमाणम् । अत्र साध्ये प्रमापदं
चोपरञ्जकं न तु तन्निवेशः । तथा चाभावे प्रागिति विशेषणा-
नुपादाने भावरूपस्याज्ञानस्यापि स्वाभावाभावत्वेन प्रमायां
देवदत्तगताभावातिरिक्तनिवर्तकत्वाभावाद्बाध इति तन्निवेशः ।
देवदत्तनिष्ठेति प्रागभावविशेषणं नानादेः । तेन चैत्रीयप्रमाया
देवदत्तनिष्ठानादेर्निवर्तकत्वाभावेऽपि न दृष्टान्तासिद्धिः ।

यत्तु परेणास्मिन्ननुमाने घटोऽयमेतत्प्रागभावातिरिक्तानादे-
र्निवर्तको घटत्वाद्घटान्तरवदित्याभाससाम्यमुक्तम् । तदसत् ।

---

* निरवच्छिन्नेति । सामान्यरूपेण विशेषधर्मं जानानोऽपि पुरुषो त्वदुक्त-
मर्थं न जानामीति यद्ब्रवीति तदभिप्रायस्तु विशेषधर्मनिष्ठप्रकारता किंधर्माव-
च्छिन्नेति न जानामीति भावः । × व्याप्यत्वानवच्छिन्नेति । त्वदुक्तार्थत्वा-
वान्तरधर्मविशिष्टत्वदुक्तार्थज्ञाने सत्यपि सोऽवान्तरधर्मो त्वदुक्तत्वस्य व्याप्यो
नास्तीति ज्ञानस्याभावस्तद्विषयः । व्याप्यो हि धर्मस्तन्मात्रवृत्तिर्भवति । अवा-
न्तरधर्मस्तु तद्व्यतिरिक्तवृत्तिरपि स्यादिति भावः । = उभयावृत्तीति । त्वदु-
क्तार्थमात्रवृत्तिधर्मेत्यर्थः ।

रूप्यादेः शुक्त्यादिनिष्ठतया प्रतीयमानस्य शुक्त्यादिनिष्ठाज्ञानोपादानकत्वस्यावश्यंभावात्तस्य चोपादानस्य लाघवेनानादितया ज्ञानेनाज्ञानं तत्कार्यं च नष्टमित्यनुभवादज्ञानानुभवस्य च ज्ञानाभावविषयत्वासंभवस्योक्तत्वादुपादाननाशं विनोपादेयनाशासंभवादज्ञानस्य ज्ञाननिवर्त्यत्वावश्यकत्वमिति प्रमापक्षकोक्तानुमानेऽनुकूलतर्कस्यैव त्वदुक्तानुमाने साध्यं विनाऽपि हेतुसंभवेनानुकूलतर्काभावात् । प्रमापक्षकोक्तानुमाने चैत्रासमवेतत्वचैत्रान्यसमवेतत्वमुपाधिरित्यपि नाऽऽशङ्का युक्ता । स्वप्रागभावनिवर्तके सुखादौ साध्याव्यापकत्वात् । एतेन विगीतो भ्रम एतज्जनकाबाध्यातिरिक्तोपादानको विभ्रमत्वात्संप्रतिपन्नवदित्यनुमानमपि व्याख्यातम् । तत्र संप्रतिपन्नवदित्यस्य पुरुषान्तरभ्रमवदित्यर्थः । पुरुषान्तरीयभ्रमेऽबाध्यपुरुषान्तरोपादानकत्वस्यैव परेण स्वीकारादबाध्यातिरिक्तोपादानकत्वरूपसाध्यस्य दृष्टान्तेऽसिद्धिरिति जनकान्तोपादानम् । विगीतो भ्रम एतद्भ्रमजनकबाध्यान्योपादानको विभ्रमत्वात्संमतवदिति सत्प्रतिपक्षानुमानं तु नाऽऽशङ्कनीयम् । एतद्भ्रमजनकबाध्यस्य परमतेऽप्रसिद्ध्या तद्घटितसाध्याप्रसिद्धेः । एतद्भ्रमजनकं यद्बाध्यान्यत्तदुपादानकत्वस्य साध्यतायां तु तादृशब्रह्माविद्योभयोपादानकत्वपर्यवसानमादायाविरोधः । अबाध्यमात्रोपादानकत्वस्य साध्यत्वे भ्रमस्याबाध्योपादानकत्वे बाध्यान्यानुपपत्तिश्च प्रतिकूलस्तर्क इति ।

एवं * विमतं प्रमाणज्ञानं स्वप्रागभावातिरिक्तस्वनिवर्त्यस्व-

---

* विमतं प्रमाणेति । विमतं नाम साध्यवत्त्वेन वादग्रस्तमित्यर्थः । प्रमाणज्ञानमिति पक्षनिर्देशोऽयम् । तत्र ज्ञानमित्येतावदुक्तौ ब्रह्मस्वरूपज्ञानस्य वस्त्वन्तरपूर्वकत्वाभावात्तत्रातिव्याप्तिस्तद्व्यावृत्त्यर्थं प्रमाणेति । स्वप्रागभावेत्यादिः साध्यनिर्देशः । स्वप्रागभावव्यतिरिक्तं स्वनिवर्त्यं स्वविषयावरणं स्वदेशगतं च यद्वस्त्वन्तरं तत्पूर्वकमिति तस्यार्थः । स्वविषयावरणभूतमित्यस्य स्वस्य प्रमाणज्ञानस्य विषयभूतं यद्ब्रह्मादि तत्स्वरूपतिरस्कारकमित्यर्थः । स्वदेशगतं नाम स्वस्य प्रमाणज्ञानस्य यो देश आश्रय आत्मा तन्निष्ठमित्यर्थः । प्रमाणज्ञानप्रागभावव्यावृत्त्यर्थं स्वप्रागभावव्यतिरिक्तेति । धर्माधर्मव्यावृत्त्यर्थं स्वनिवर्त्येति ।

विषयावरणस्वदेशगतवस्त्वन्तरपूर्वकमप्रकाशितार्थप्रकाशकत्वा-दन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति विवरणोक्तमनुमानमपि तादृशाज्ञाने प्रमाणम् । नन्वेतदनुपपन्नं जडेऽज्ञानानुपगमाद्धेतु-मतामन्तःकरणवृत्तिलक्षणजडविषयकप्रमाणज्ञानानां तथाविध-वस्तुपूर्वकत्वाभावेनोक्तहेतोरनैकान्तिकत्वादिति चेत् । न । जड-स्य प्रकाशप्रसक्त्यभावेनाऽऽवरणकृत्यशून्यतया तदावरणानुप-गमेऽपि तदवच्छिन्नचितः प्रकाशप्रसक्त्या तस्या अज्ञानविषय-त्वानपायात् । स्वविषयावरणेत्यनेन स्वविषयावच्छिन्नावर-णस्य विवक्षितत्वात् । प्रमामात्रस्य च

'सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थिते'।

इतिरीत्याऽधिष्ठानसद्रूपब्रह्मविषयकत्वनियमात् । घटाद्यवच्छि-न्नचैतन्ये घटाद्याकारान्तःकरणवृत्तिलक्षणप्रमाणज्ञानविषयत्वा-नपायाच्च ।

यत्तु साध्ये स्वप्रागभावातिरिक्तेति विशेषणं व्यर्थं स्वनिवर्त्य-स्वविशेषणेनैव तद्व्यावृत्तेः । नहि भावः प्रागभावस्य निवर्तकः, अपि तु भावोत्पत्तिरेव । भावाभावयोः सहावस्थानविरोधादिति परेणोक्तम् । तदसत् । प्रागभावध्वंसस्य प्रतियोग्यात्मनस्तदज-न्यत्वेऽपि प्रतियोगिध्वंसात्मनस्तस्य तज्जन्यतयोक्तविशेषणेन तदव्यावृत्तेः । प्रतियोगिवत्तद्ध्वंसस्यापि प्रागभावध्वंसत्वं वक्तव्यम् । अन्यथा प्रतियोगिध्वंसदशायामतीतः प्रागभाव

---

भयादिव्यावृत्त्यर्थं स्वविषयावरणेति । यद्वा—उत्तरज्ञाननिवर्त्यं प्रथमज्ञानं निवर्तयितुं स्वविषयावरणेति । वेद्यगतो यो ज्ञानाभिव्यक्तिप्रागभावस्तद्व्यावृत्त्यर्थं स्वदेश-गतेति । एतादृशं च भावरूपमज्ञानमेवेति तत्सिद्धिः । अप्रकाशितेति तु हेतु-निर्देशः । तत्र प्रकाशकत्वादित्येतावन्मात्रोक्तौ धारावाहिकज्ञानस्थल उत्तरोत्तर-ज्ञानानां प्रकाशकत्वेऽपि साध्यधर्माभावाद्व्यभिचारः स्यादतोऽप्रकाशितार्थेति । द्वितीयक्षणोत्पन्नायाः प्रदीपप्रभाया अप्रकाशितार्थप्रकाशकत्वाभावात्प्रथमोत्पन्ने-त्युक्तम् । प्रथमोत्पन्नाया अपि दीपप्रभाया दिवाऽप्रकाशितार्थप्रकाशकत्वाभावा-दन्धकार इत्युक्तम् । अन्धकार एव च तथाविधं वस्त्वन्तरमिति न दृष्टान्ते साध्यविकलतेत्याशयः ।

इति व्यवहारानुपपत्तेः । अतीतत्वं हि वर्तमानध्वंसप्रतियोगि-त्वम् । उक्तश्चायमर्थः प्रमाणतत्त्वविद्भिस्तार्किकैरपि । प्रतियो-ग्येव प्रागभावध्वंस इति मतेऽपि तुल्यन्यायेन ज्ञानमेवाज्ञानध्वंस इति वक्तव्यतया तार्किकादीन्प्रत्येतदनुमानप्रवृत्तेर्विवक्षितसा-ध्यसिद्धये स्वनिवर्त्यत्वमित्यनेन स्वोत्पत्त्यधिकरणक्षणोत्पत्ति-कध्वंसप्रतियोगित्वस्यैव विवक्षणीयतया तस्य प्रागभावेऽपि सत्त्वात्तद्व्यावृत्तेः प्रागभावातिरिक्तेत्यस्य सार्थकत्वात् । उक्तन्यायस्य तेजस्तिमिरयोरपि सत्त्वान्न दृष्टान्तस्य साध्य-विकलता ।

यत्तु ज्ञानप्रतिबन्धकस्य दुरितस्य सिद्धतया सिद्धसाधन-मिति परोक्तं दूषणम् । तदसत् । तस्य ज्ञानानिवर्त्यत्वात् । नहि कार्योत्पत्त्यव्यवहितक्षणे प्रतिबन्धकसत्ता युज्यते । न वा तदव्यवहितप्राक्क्षणे तत्क्षणे चासतस्तन्नाश्यत्वं तदुत्पत्त्यधिकर-णक्षणोत्पत्तिकध्वंसप्रतियोगित्वादिरूपं पूर्वोक्तं युज्यते ।

यदपि प्रागभावस्य स्वविषयावरणत्वाभावेनैव व्युदासात्त-द्वारकविशेषणान्तरोपादानं व्यर्थमिति परेण दूषणमुक्तम् । तदपि न सत् । स्वजातीयनिरूपिताधिकरणताविशिष्टाधिकरण-तानिरूपकान्यत्वरूपस्य विवक्षणीयस्वविषयावरणत्वस्य प्राग-भावसाधारण्यात् । साजात्यं च स्वान्यूनविषयकग्रहत्वप्रमात्वा-न्यतररूपेण । अधिकरणतावैशिष्ट्यं च स्वावच्छेदकावच्छिन्न-त्वविशिष्टसामानाधिकरण्यसंबन्धेन । अस्ति चैतादृशं स्वविष-यावरणत्वमाद्यघटज्ञानप्रागभावे । तथाहि—स्वम् 'अयं घटः' इत्यादिप्रत्ययः, तत्सजातीयं च तादृशप्रत्ययान्तरं तस्य याऽधिकरणता सा नैतज्ज्ञानप्रागभावाधिकरणतायामुक्तसंबन्धे-नास्ति, एतज्ज्ञानप्रागभावस्य तादृशज्ञानान्तरयौगपद्याभावात् । न चाऽऽद्यघटज्ञानप्रागभावमादाय न सिद्धसाधनता नाप्यर्था-न्तरता संभवत्यवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यतायामंशतः सिद्धसाधनस्यादोषत्वादिति वाच्यम् । प्रकृतानुमाने पक्षता-वच्छेदकसामानाधिकरण्येन साध्यसिद्धेरेवोद्देश्यत्वात् । इदं च घटत्वप्रकारकप्रमात्वादिकं पक्षतावच्छेदकमिति पक्षे । प्रकृतक-

थाप्रयोजिकां विमतिं तद्व्यक्तित्वेनोपादाय तस्याः पक्षता-वच्छेदकत्वानुसरणे तु पक्षतावच्छेदकावच्छेदेन साध्य-सिद्धेरुद्देश्यत्वेऽपि न क्षतिः । परंतु तदा स्वविषयावरणत्वं न निवेश्यमेवेति ध्येयम् । प्रमाजनकादृष्टमादायार्थान्तरवारणाय स्वविषयावरणत्वनिवेशः । जनकादृष्टस्य च चरमफलनिवर्त-नीयतया नोक्तविधं स्वविषयावरणत्वम् । तदधिकरणताया-मुक्तसंबन्धेनोक्तसजातीयाधिकरणतावैशिष्ट्यसत्त्वात् । न च तादृशादृष्टस्य चरमफलनिवर्त्यत्वं स्वोत्पत्त्यधिकरणक्षणोत्प-त्तिकध्वंसप्रतियोगित्वरूपं स्वनिवर्त्यत्वमिति पक्षे न संभ-वतीति वाच्यम् । तादृशादृष्टस्यापि चरमफलसामग्रीनाश्यत्वो-पगमात् । अन्यथाऽदृष्टसत्त्वे तदधीनफलान्तरापत्तेर्वारणाय प्रकारान्तरानुसरणे गौरवापत्तेः । स्वसमानविषयकज्ञाना-न्तराजनकादृष्टजन्यज्ञानं तु न प्रामाणिकमिति ध्येयम् । प्रमाप्रति-बन्धकादृष्टमादायार्थान्तरवारणाय स्वनिवर्त्यत्वनिवेशः । विषय-गतज्ञातत्वात्यन्ताभावमादायार्थान्तरवारणाय स्वदेशगतत्वनि-वेशः । न च तस्य स्वनिवर्त्यत्वाभावादेव वारणं शङ्क्यम् । उत्पादविनाशशालिसामयिकात्यन्ताभावस्य विषयनिष्ठस्य ज्ञान-नाश्यत्वानपायात् । वस्तुतस्तु स्वव्याधिकरणस्वाधिकरणक्षणो-त्पत्तिकप्रमाप्रागभावमादायार्थान्तरवारणाय तत् । यथाश्रुतजन्य-तानिवेशपक्षे स्वव्यधिकरणप्रागभावस्य स्वनिवर्त्यत्वाभावेनैव वारणे नेदं विशेषणमर्थवदिति नाऽऽशङ्कनीयम् । ध्वंसस्यापि कालोपाधिविधया स्वजन्यत्वानपायात् । स्वप्रतिबन्धकादृष्टस्य स्वोत्पत्तेः प्रागेव ध्वस्ततया तद्ध्वंसे स्वोत्तरोत्पत्तिनियतस्वज-न्यत्वाभावात् । न च प्रागभावातिरिक्तत्वनिवेशेनैव प्रागभा-वमादायार्थान्तरवारणसंभवात्प्रागभावे स्वीयत्वनिवेशो व्यर्थ इति नेदमप्यर्थान्तरमिति शङ्क्यम् । एवमपि स्वव्यधिकरणस्वा-धिकरणक्षणोत्पत्तिकचरमफलजनकादृष्टमादायार्थान्तरवारणाय तदावश्यकत्वात् । न चैवमपि स्वाधिकरणक्षणोत्पत्तिकध्वंसप्रतियो-गित्वरूपस्वनिवर्त्यत्वनिवेशपक्षे तादृशविशेषणाक्रान्तस्वत्वसमाना-धिकरणस्वपूर्ववृत्तिज्ञानेच्छादिकमादायार्थान्तरमिति वाच्यम् । वस्तुतस्त्वन्तरपदेन स्वसमानाधिकरणजन्यज्ञानानाधिकरणकाल-

वृत्तित्वस्य तादृशमनःपरिणामानधिकरणकालवृत्तित्वस्य वा विवक्षणीयत्वात् । न चैवमपि चाक्षुषस्पार्शनदर्शनादिरूपाविजातीयज्ञानेच्छादियौगपद्यस्य सिद्धान्ते कादाचित्कस्येष्टतया स्वजनकादृष्टचरमफलभूतज्ञानेच्छासमानकालीनोत्पत्तिक आद्यघटज्ञाने तादृशज्ञानजनकादृष्टपूर्वकत्वमादायार्थान्तरं दुर्वारमिति वाच्यम् । स्वसमानकालोत्पत्तिकत्वसंबन्धेन स्वसमानाधिकरणविशेषगुणविशिष्टान्यत्वस्यापि पक्षविशेषणताया विवक्षितत्वात् । संयोगद्वित्वादिकमादायार्थान्तरं च स्वदेशान्यदेशासंबन्धित्वरूपस्वदेशगतत्वाविवक्षया निरसनीयम् । स्वव्याप्यतमोनिवर्तकप्रभाया दृष्टान्तत्वसंभवाच्च न दृष्टान्तस्य साध्यविकलता । यद्यपि भूतलादिगतस्य तमसः प्रभासंबन्धशून्यतत्क्षणविशेषविशिष्टतद्भूतलादिसंबद्धतया न कस्यापि तमसः प्रभाव्याप्यतासंभवस्तथाऽपि स्वाधिकरणतादात्म्यवदन्यावृत्तित्वरूपव्याप्यत्वाविवक्षया न दोषः । विशिष्टस्यातिरिक्ततामते—आद्यघटज्ञानप्राग्वर्तितत्तत्क्षणादिविशिष्टान्तःकरणादिकमादायार्थान्तरं तु विशिष्टान्यत्वनिवेशेनैव निरसनीयम् । न च विशिष्टत्वमनुगतमनतिप्रसक्तं दुर्वचमिति वाच्यम् । स्वाश्रयसमानाधिकरणाभावप्रतियोगित्वस्वाश्रयत्वैतदुभयसंबन्धेन सादिधर्मविशिष्टत्वस्यैव प्रकृते विशिष्टशब्देन विवक्षितत्वात् । अप्रकाशितार्थप्रकाशकत्वं च स्वसमानाधिकरणस्वान्यूनविषयकसंशयान्यसविषयकाव्यवहितोत्तरत्वशून्यप्रमातत्प्रभान्यतरत्वम् । अन्यतरत्वं चाखण्डातिरिक्तैकभेदविशिष्टापरभेदात्यन्ताभावरूपम् । तेन तादृशप्रमात्वतत्प्रभात्वादीनामुक्तसाध्यव्याप्यतावच्छेदकत्वविशिष्टानां तादृशान्यतरत्वघटकत्वेऽपि धूमप्रागभावत्वस्येव न व्यर्थविशेषणघटितत्वं हेतुतावच्छेदकस्य तादृशात्यन्ताभावत्वरूपहेतुतावच्छेदकसमानाधिकरणत्वाभावात् । स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तरघटितत्वस्यैव व्यर्थविशेषणतारूपत्वात् ।

तथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि चरन्तो न विदुरेवमेवेमाः प्रजा अहरहर्गच्छन्त्य एनं ब्रह्मलोकं न विदन्त्यनृतेन

हि प्रत्यूढा इति च्छान्दोग्याष्टमाध्यायस्थश्रुतिरपि ब्रह्मज्ञानप्रति-
बन्धकत्वेनानृतं ब्रुवती तादृशाज्ञाने प्रमाणम् । न च ऋतं पिब-
न्तावित्यत्र ऋतशब्दस्य सत्कर्मणि प्रयोगदर्शनात्, ऋतं सत्यं
तथा धर्मः, इति स्मृतेश्च ऋतशब्दस्य सत्कर्मवाचितयैतच्छ्रुति-
स्थानृतशब्दस्य न ऋतमनृतमितिव्युत्पत्त्या दुष्कर्मपरत्वमेव
नाज्ञानपरत्वमिति परोक्तं सम्यक् । य आत्माऽपहतपाप्मेत्युत्तर-
वाक्येऽपहतपाप्मेत्यनेनाऽऽत्मनः पापशून्यस्वभावत्वोक्त्या तादृ-
शात्मनः दुष्कर्मप्रत्यूढत्वोक्तिविरोधात् । न च मिथ्याभूतस्य
व्यावहारिकपापस्य स्वाभाविकपापशून्यस्वभावाविरोधित्वात्ता-
दृशपापमेव ब्रह्मज्ञानप्रतिबन्धकं तदानीमास्तामिति वाच्यम् ।
अनिर्वचनीयाज्ञानं विना तत्परिणामभूतस्य पापस्याऽऽविघ्नकत्व-
रूपामिथ्यात्वासंभवात् । अस्ति भातीत्यादिव्यवहारप्रतिबन्धका-
नाद्यावरणरूपत्वस्य कर्मणोऽनुपपत्तेश्च । न च पापानामपि प्रवाह-
रूपेणानादित्वादुक्तरूपमावरणत्वं तेषामपि संभवतीति शङ्क्यम् ।
तथा सति तत्कालीनस्यानेकस्य पापस्य पुण्यस्य वा मिथ्या-
ज्ञानजन्यसंस्कारस्य वा तथाभूतस्य प्रतिबन्धकत्वमित्यत्र विनि-
गमकाभावाल्लाघवाच्च पापादिभिन्नैकानाद्यज्ञानस्यैव प्रतिबन्धक-
त्वकल्पनौचित्यात् । न चानृतशब्दस्य पापे मुख्यवृत्त्यनुसरण-
मेव तस्योक्तरूपावरणत्वकल्पकमिति शक्यते वक्तुम् । सत्य-
वाचकस्य ऋतशब्दस्य सत्यब्रह्मप्रमापकत्वेन पुण्ये गौणत्वस्येव
सत्यब्रह्मप्राप्तिविरोधित्वेन पापेऽप्यनृतशब्दस्य गौणत्वेन मुख्य-
त्वाभावात् । न चोक्तावरणत्वरूपयुक्त्याऽज्ञानकल्पनापेक्षया
पापादीनां श्रुत्यैव प्रतिबन्धकत्वकल्पनमुचितमिति वाच्यम् ।
पापादीनां श्रुत्यैव मिथ्यात्वोक्तेस्तन्निर्वाहायानाद्यज्ञानकल्पन
स्याऽऽवश्यकत्वात् । सुषुप्तौ कार्यमात्रलयेन दुष्कर्मणोऽप्यभा-
वेन पापस्य निरुक्तावरणत्वकल्पनानुपपत्तेश्च । कारणगतसंस्का-
ररूपेण तदानीं तदवस्थानोपगमे त्वज्ञानसिद्धेरप्रत्यूहत्वाच्च ।
'अज्ञानेनाऽऽवृतं ज्ञानं तेन मुह्यन्ति जन्तवः' (गी०५।१५)
इति श्रु(स्मृ)त्युक्तावरकत्वगुणयोगादनृतशब्देनाज्ञानमेवोच्यते ।

न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव ।
नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ।
सुषुप्तिकाले सकले विलीने तमोभिभूतः सुखरूपमेति ॥

इत्यादिश्रुतिगतनीहारतमःशब्दावप्यनृतशब्दस्याज्ञानपरत्वे आवरकत्वगुणयोगाद्युज्येते। न तं विदाथेति वाक्यस्यायमर्थः—हे नरास्तं न जानीथ य इमाः प्रजा जजान जनितवान्। तत्र हेतुर्युष्माकमन्यदेवान्तरं व्यवधानं बभूव । तदुच्यते-नीहारसदृशेनाज्ञानेन प्रावृता यूयं जल्प्या अहं मनुष्य इत्यादि-जल्पनशीला असून्प्राणांस्तर्पयन्ति । उक्थं स्तोत्रविशेषादिकं शंसन्ति चरन्तीति उक्थशास ऐहिकामुष्मिकभोगमात्रसाधन-कर्मपराश्चरन्ति तानि कर्माणि कुर्वन्ति । तमोभिभूतेत्यस्य तमः-सदृशाज्ञानेनाऽऽवृत इत्यर्थः । एवमावरकस्य 'अनीशया शोचति मुह्यमानः' ( मु० ३।१।२ )। इति श्रुत्युक्तजीवेश्वरभेदकत्वम् ।

'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' (श्वे०४।१०)। इति श्रुत्युक्तं सकलकार्योपादानत्वं चानृतशब्दस्याज्ञानपरत्वे संगच्छते। अनीशयेतिश्रुतेरयमर्थः—मोहोऽज्ञानं तत्प्रयुक्तानीशये-श्वरत्वविरोधिनेशभेदेन शोचति संसरति संसारफलं सुखदुःखा-दिकमनुभवति । अनृतशब्दार्थकर्मण आवरकत्वे तस्यैव मोहत्वा-ज्जीवेशभेदकत्वं कार्यमात्रोपादानत्वं च वाच्यम् । न च सादे-स्तस्यानादिजीवेशभेदकत्वं सकलकार्योपादानत्वं वा संभवति ।

विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥

भेदश्च तस्याज्ञानकृतः, इत्यादिविष्णुपुराणवाक्यैर्जीवब्रह्मणो-र्भेदकत्वस्याज्ञान एव स्पष्टमभिधानात् । 'देवादिभेदमध्वस्ते नास्त्येवाऽऽवरणेन सः। इति च विष्णुपुराणवाक्येन भेदना-स्तित्वे तस्याऽऽवरकप्रयुक्तत्वस्यैव हेतूकृतत्वादज्ञानस्यैव तत्प्रा-माणिकं न पापस्य । तस्य

'नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति' इति श्रुत्या नीहाररूपावरणप्रयुक्तत्वस्यैवोक्तत्वेनाऽऽवरकस्वरूपत्वा-सिद्धेः ।

तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः । ( श्वे० १।१० ) । 'तरति शोकमात्मवित्' (छा० ७।१।३ ) ।

'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः' ( गी० ५।१६ )। इत्यादिश्रुतिस्मृतिवाक्यैरस्ति भातीत्यादिव्यवहारप्रतिबन्धकस्व-रूपावरकाज्ञानसामान्यस्य विश्वमायाशब्दितस्य ज्ञाननिवर्त्यत्व-

रूपमिथ्यात्वोक्तेस्तस्य च तव मते सत्यत्वेनाभिमते पापादाव-भावान्नानृतपदाभिधेयत्वं संभवति । 'एवमेवैषा माया स्वाव्यतिरिक्तानि परिपूर्णानि क्षेत्राणि दर्शयित्वा जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति' ( नृसिं० उ०९ ) इति श्रुत्या मायाविद्ययोरभेदप्रतिपादनात् ।

> ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चाऽऽत्मनि ।
> तद्विद्यादात्मनो मायां यथा भासो यथा तमः ॥

इति भागवते मृषात्वविशिष्टस्य मायापदशक्यत्वबोधनान्मिथ्याज्ञानमेवोक्तश्रुतौ रूढ्या मायाशब्दार्थः । अर्थस्य प्रतीयमानस्याभावेऽपि यत्प्रतीयते स्वाधिकरणे वर्तमानाभावप्रतियोगीति यावत्, तन्मायापदार्थ इति विद्याज्जानीयात् । तस्य चाऽऽत्मैवावच्छिन्नानवच्छिन्नरूपेणाधिष्ठानमन्यस्य सर्वस्य कल्पितत्वादित्याशयेनाऽऽत्मन इत्युक्तम् । ननु स्वप्रकाशस्याऽऽत्मनः सदा भानात्कथं तत्राऽऽरोप इति शङ्कयाऽऽह—न प्रतीयेत चाऽऽत्मनीति । पूर्णानन्दस्वप्रकाशरूपात्मनि न प्रतीयत इति यत्तदपि मायेत्यर्थः । तथा च स्वप्रकाशेऽप्यप्रकाशस्य कल्पितत्वात्तन्मूलकोऽन्यस्य सर्वस्याऽऽरोपः स्वरूपाप्रकाश एव । जगदुपादानमज्ञानं मायेति भावः । अर्थाभावेऽपि प्रतीयमानत्वे दृष्टान्तमाह—यथा भास इति । यथा शुक्त्यादौ रूप्याद्याभास इत्यर्थः । प्रकाशस्वरूपे तदभावत्वेन कल्प्यमानत्वे दृष्टान्तमाह—यथा तम इति । यथा मध्याह्नसूर्यालोके तदभावत्वेनोलूकैः कल्प्यमानं तम इत्यर्थः ।

> मयश्च शम्बरश्चैव महामायाविनावुभौ ।
> पर्जन्यवारुणी माये व्यधत्ताम् ॥

इत्यादिना हरिवंशे पर्जन्यवारुणास्त्राभ्यां मन्त्रविशेषविशिष्टाभ्यां जनिते मिथ्याभूतेऽर्थे, तथा 'मायामृगं दयितयोज्झितम्' इत्यादिना मिथ्यामारीचमृगे मायाशब्दप्रयोगः । तथा मायाछवेति कश्चिद्ग्रन्थकृतो व्याख्यानं मिथ्यात्वेन संमतिपन्न ऐन्द्रजालिकादावियं मायेति लौकिकी प्रसिद्धिश्च तत्र तत्र मायामत-

दुर्घटकारित्वरूपविचित्रशक्तिगुणयोगान्निरूढलक्षणयैव । तिल-रसे मुख्यार्थस्य तैलशब्दस्य सार्षपादिरसे भूरिप्रयोगान्निरूढ-लक्षणाया एव स्वीकारात् । अथवा ऽन्यथाभावेन भासमानाया एव क्रियायाश्छद्मत्वाच्छद्मादिकमपि मिथ्याभूतं रूढ्यैव मायापदार्थो-ऽस्तु । न च शुक्तिरूप्यादौ मिथ्याभूते मायाशब्दप्रयोगान्न मायाशब्दो मृषार्थक इति वाच्यम् । व्यञ्जकाभावदशायां वज्रादौ पृथिवीति व्यवहाराभावेऽपि पृथिवीत्ववच्छुक्तिरूप्यादौ मृषात्वोप-पत्तेः । व्यञ्जकदशायां वज्रादौ पृथिवीत्वव्यवहारवच्छुक्तिरू-प्यादौ मायात्वं व्यवह्रियत एव । अत एव 'यत्तु दृष्टिपथं प्राप्तं तन्मायेव सतुच्छकम्' इति सांख्यव्याख्याने दृश्यमात्रे मायात्वं व्यवहृतम् । किं च कष्टं कर्मेत्यनुभवे क्रियामात्रस्य दुःखजनकत्वेऽ-पादानीं मम दुःखमिति सर्वदा न व्यवहारः । प्रकृष्टदुःखकाल एव तद्व्यवहारात् । तथा चमत्कारविशेषाधायकत्वेन प्रकृष्ट-मायायामेव मायापदप्रयोगः । अत एव—

> माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद ।
> सर्वभूतगुणैर्युक्तं नैवं मां द्रष्टुमर्हसि ॥

इति नारदं प्रति भगवद्वाक्ये दृश्यमानस्य प्रतिपन्नोपाधौ नि-षेध्यत्वरूपमिथ्यात्वे मायात्वमेव हेतूकृतम् ।

यत्तु मायाशब्दार्थो नाज्ञानं तथा सति मायिनं तु महेश्वरमि-त्यादिश्रुतिप्रतिपाद्यस्य मायिन ईश्वरस्याप्यज्ञानित्वप्रसङ्गेन तस्य सर्वज्ञत्वानिरवद्यत्वादेः श्रुत्यक्तस्यानुपपत्तेर्जीवेश्वरयोरवि-शेषापत्तेश्चेति दूषणम् । तदसत् । *बिम्बभूत ईश्वरः प्रतिबिम्बो जीव इतिपक्ष उपाधेः प्रतिबिम्बं प्रत्येवाऽऽवरकत्वरूपप्रातिबिम्ब-पक्षपातित्वस्वीकारेणेश्वरे सार्वज्ञ्याद्ययोगस्याऽऽपादनासंभवात् ।

---

* बिम्बभूत ईश्वर इति । अयं भावः—एकमेव चैतन्यं बिम्बत्वाक्रा-न्तमीश्वरचैतन्यं प्रतिबिम्बत्वाक्रान्तं जीवचैतन्यं भवति । बिम्बप्रतिबिम्बकल्पनो-पाधिश्चैकजीववादेऽविद्याऽनेकजीववादे तु त्वन्तःकरणान्येव । एवं चाविद्यान्तःक-रणरूपोपाधिप्रयुक्तो जीवेश्वरयोर्भेदः । उपाधिकृतदोषाश्च प्रतिबिम्बे जीव एव वर्तन्ते न तु बिम्बे परमेश्वरे । उपाधेः प्रतिबिम्बपक्षपातित्वात् । तथा चैतन्मते गगनसूर्यस्य जलादौ भासमानप्रतिबिम्बसूर्यस्येव जीवेश्वरयोर्भेद इति ।

ईश्वरे सार्वज्ञ्यैश्वर्यादेर्मायोपाधिनिमित्तत्वाच्च । जीवेश्वरयोर्द्वयोः *प्रतिबिम्बत्वपक्षे उपाधिगतनैर्मल्यतदभावाभ्यां दर्पणादिप्रतिबिम्बितमुखयोरिव मलिनसत्त्वशुद्धसत्त्वाभ्यामुपाधिगताभ्यां वशीकृतोपाधित्वतदभावाभ्यां वा जीवेशयोरज्ञत्वसार्वज्ञ्यत्वरूपविशेषसंभवाच्च। अज्ञानातिरिक्तस्याऽऽवरकस्य ज्ञाननिवर्त्यत्वानुपपत्त्या सादेरनेकस्य पापस्याऽऽवरकत्वानुपपत्तावप्यनाद्येकं प्रधानमेवाऽऽवरकमनृतपदाभिधेयमास्त्विति शङ्काऽपि तन्मते कर्मवत्प्रधानस्यापि ज्ञाननिवर्त्यत्वानुपपत्तेर्निरस्ता । नासदासीन्नो सदासीदित्यादिश्रुत्युक्तमावरकतमसः सदसद्विलक्षणत्वरूपानिर्वचनीयत्वमपि न परमते सत्यत्वेन स्वीकृतस्य पापादेः संभवतीति नानिर्वचनीयाज्ञानभिन्नस्य पापादेरावरकानृतशब्दार्थता।

नासदासीन्नो सदासीत्तदानीं नाऽऽसीद्रजो नो व्योमा परो यत्।
किमावरीवः कुहकस्य शर्मन्नम्भः किमासीद्गहनं गभीरम् ।
न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः।
आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किंचनाऽऽस।
तम आसीत्तमसा गूळ्हमग्रेऽप्रकेतं सलिलं सर्वमा इदम्।
तुच्छ्येनाऽऽभ्वपिहितं यदासीत्तपसस्तन्महिना जायतैकम्।
कामस्तदग्रेसमवर्तताधिमनसो रेतः प्रथमं यदासीत् ॥

(ऋ० सं० अ० ८ अ० ७ व० १७) इति वाक्येऽयमर्थः—

प्रलये स्थितं कारणस्वरूपमाह—नासदासीदिति । तदानीं प्रलयेऽसन्निरुपाख्यं नाऽऽसीत्तादृशस्य कारणत्वासंभवात् ।

---

* प्रतिबिम्बत्वपक्ष इति । अयमाशयः—जीवपरमेश्वरसाधारणचैतन्यमात्रं बिम्बम् । तस्यैव बिम्बस्याविद्यात्मिकायां मायायां प्रतिबिम्बभूतमीश्वरचैतन्यम् । अन्तःकरणेषु तु प्रतिबिम्बितं जीवचैतन्यम् । कार्योपाधिरयं जीवः कारणोपाधिरीश्वर इति श्रुतेः । तथा चैतन्मते जलाशये शरावेषु स्थितेषु सत्सु जलाशयगतशरावगतसूर्यप्रतिबिम्बयोरिव जीवपरमेश्वरयोर्भेदः । अविद्यात्मकोपाधेर्व्यापकतया तदुपाधिकेश्वरस्यापि व्यापकत्वम् । अन्तःकरणस्य परिच्छिन्नतया तदुपाधिकजीवस्यापि परिच्छिन्नत्वम् । एतन्मते चाविद्याकृतदोषा जीव इव परमेश्वरेऽपि स्युः । उपाधेः प्रतिबिम्बपक्षपातित्वात् । एतद्दोषपरिहारस्तु मूलोक्तरीत्या बोध्यः ।

नापि सत्त्वेन निर्वाच्यमासीत् । सद्रूपस्य तद्विलक्षणजगत्परि-णामित्वासंभवात् । तथा चानिर्वचनीयमासीदित्यर्थः । नाऽऽसी-द्रज इति । रजांसि लोक इति यास्कः । एकवचनं सामान्या-पेक्षम् । व्योमादेर्वक्ष्यमाणत्वात् । तदन्यलोकस्तदानीं नाऽऽसीदि-त्यर्थः । तथा व्योमान्तरिक्षलोकः परः परस्तादुपरि द्युलोका-दिसत्यलोकान्तं च तदा नाऽऽसीत् । एवं चतुर्दशभुवनगर्भं ब्रह्माण्डं निषिध्य तदावरकत्वेन पुराणप्रसिद्धानि भूतानि निषेधति । आङ्पूर्वकवृणोतेर्यङ्लुगन्ताच्छन्दसि लङि तिपि आवरीव इति रूपम् । किमावरणीयं कर्मजातमावृणोतु आवरणी-याभावात् । आवरकभूतान्यपि तदानीं नाऽऽसन्नित्यर्थः । कुह कुत्र देशे स्थित्वा भूतमावृणुयात्तादृशदेशोऽपि तदा नेत्यर्थः । कस्य शर्मञ्शर्मणे कस्य भोगायाऽऽवृणुयात् । भोक्तारोऽप्युपा-धिमतो लयात्तदा नाऽऽसन्नित्यर्थः । आपो वा इदमग्रे सलिलमा-सीदिति श्रुत्याऽम्भःसत्त्वभ्रमं निरस्यति—अम्भः किमासी-दिति । प्रलये संहर्ता मृत्युः स्यात्तत्राऽऽह—न मृत्युरास्ति । तर्ह्यमृतं जीवनं स्यात्तत्राऽऽह—अमृतमिति । तथा रात्र्या अह्नश्च प्रकेतो ज्ञानं नाऽऽसीच्चन्द्रसूर्याभावात् । आनीदिति । तत्सर्ववेदान्तप्रसिद्धं ब्रह्माऽऽनीज्जीवितवत् । ननु कथं ब्रह्मणो जीवनं प्राणसंबन्धाभावात्तत्राऽऽह—अवातमिति । आसीदि-त्यर्थकमानीदित्युक्तमिति भावः । स्वधया मायया सहितम् । स्वस्मिन्धार्यत इति स्वधा । स्वधयेत्यनेन सहार्थकतृतीयया च मायाया ईश्वरानाश्रितत्वमीश्वरेक्षणानपेक्षकत्वं च सांख्योक्तं वार्यते । एकमद्वितीयं सर्वदा द्वितीयशून्यम् । एवं च स्वधया साहित्यं व्यवहारतो, न परमार्थत इति बोध्यम् ।

ननु स्वधया सहितं ब्रह्म यदि तदानीमस्ति तर्हि न रज इत्या-द्यसंगतम् । नहि मायातोऽन्यद्रजआदिकं तत्राऽऽह—तस्माद्धान्य-दित्यादि । तस्मात्स्वधया युक्तब्रह्मणोऽन्यद्रजआदि परः सृष्टिकाले जायमानं नाऽऽस तदानीं बभूव । हशब्देनोक्तब्रह्मान्यस्यानिर्वा-

च्यस्य जगतः प्रसिद्धिं द्योतयति ।

ननु यदि जगत्तदानीं नाऽऽसीत्कथं तर्हि जनिक्रियाकर्तृत्वम् । कारकविशेषस्य कर्तृत्वान्निमित्तस्यैव कारकत्वात्पूर्ववर्तिन एव निमित्तत्वात्तत्राऽऽह—तम आसीत्तमसा गूह्ळमग्र इति । तमसाऽन्धकारवद्भावरूपेणाऽऽत्मसंबन्धिस्वरूपावरकेणाज्ञानेन गूह्ळं संस्काररूपापत्त्या स्ववशीकृतं तमोऽज्ञानाभिन्नं जगत्तदानीमप्यासीदित्यर्थः । तथा चाऽऽविर्भावः स्थूलतापत्तिरूपः, उत्पत्तिः । संस्कारावस्थैव नाश इति भावः । एतेनासत्कार्यवादिनः परास्ताः ।

ननु तमसा गूढं तमो विरुद्धं तत्राऽऽह—अप्रकेतम् । अप्रज्ञायमानं कार्यकारणयोरत्यन्ताभेदाभावात्तमसोऽत्यन्तभेदभानशून्यमित्यर्थः । अत एव सलिलं कारणीभूततमसि संगतं तत्तादात्म्यापन्नमिति यावत् । षल गतावित्यस्माद्धातोरौणादिक इलप्रत्ययः । सर्वं जगत्, आ इदम्, आसीत् । यद्वा सलिलमिति लुप्तोपमा । यथा नीरं क्षीरयुक्तमेकतापन्नं तथा कारणगतं जगदित्यर्थः । तुच्छयेन सद्विलक्षणेनापिहितं निगूढम् । एकं संस्काररूपैकावस्थापन्नम् । आभु, आसमन्ताद्भवनयुक्तं यज्जगदासीत्तत्तपस ईश्वरालोचनस्य महिम्ना स्थूलविचित्ररूपेणाजायताऽऽविर्बभूव । अथवाऽपिहितमावृतम्, एकमद्वितीयम् । आभु भ्वादिसंस्कारतापन्नं जगदनुस्यूतं यद्ब्रह्माऽऽसीदित्यर्थः ।

यत्तु सदसन्निषेधकालीनतमःसत्त्वमनिर्वचनीयोक्ताज्ञानं विनाऽनुपपन्नमित्यर्थापत्तिबलाद्यद्यनिर्वाच्याज्ञानसिद्धिस्तदा परमार्थतयाऽङ्गीकृतस्य ब्रह्मणोऽप्यनिर्वचनीयतापत्तिः । तस्याप्यानीदवातमिति वाक्येन प्रलयकाले परिशिष्टत्वबोधनात् । सदसन्निषेधकालीनब्रह्मसत्त्वं तस्यानिर्वचनीयत्वं विनाऽनुपपन्नमित्यर्थापत्तिसंभवादिति दूषणं परेणोक्तं तदविचाररमणीयम् । सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम् (छा० ६।२।१) । सत्यं ज्ञानमनन्तं ब्रह्म(तै०२।१।१) इति श्रुत्यन्तरेण ब्रह्मणः पारमार्थिकत्वबोधनात्तद्विरोधेन ब्रह्मांश उक्तार्थापत्त्यसंभवात् । न चैवं

सति नो सदासीदित्यभिधानविरोधो ब्रह्मणस्तदानीं सत्त्वादिति वाच्यम् । आनीदवातमिति श्रुत्यैकवाक्यत्वाय ब्रह्मान्यसत एव नो सदासीदित्यनेन निषेधात् । न च ब्रह्मान्यसतः सिद्धौ तन्निषेधायोगः, असिद्धौ निषेधवैयर्थ्यमिति सिद्ध्यसिद्धिभ्यां व्याघातः शङ्क्यः । ब्रह्मान्यत्वे सतीत्यंशपूरणेन नो सदासीदित्यंशस्य व्याख्यानेन सति ब्रह्मान्यत्वनिषेधपर्यवसानेन तदानीमद्वितीयब्रह्मसत्तेति विवक्षितार्थसिद्धेः । न चैवमपि नासदासीदित्यंशविरोधः, उक्तनिषेधप्रतियोगित्वरूपमिथ्यात्वस्य तमःसाधारण्यादिति वाच्यम् । असत्पदस्यात्र सत्तादात्म्यशून्यपरत्वात् । न चोक्तासन्निषेधेऽसत्प्रतिषेधापत्तिः । सतो निषेधे सद्भिन्नत्वेन सर्वदेशकालनिष्ठाभावप्रतियोगित्वरूपासत्त्वस्याऽऽपातत आनुमानिकप्रसिद्धिसंभवात् । अद्वैतब्रह्मबोधनाय प्रवृत्तोक्तवाक्यस्योक्तनिषेधे तात्पर्याभावात् । भुवि सुवर्णं निधायाग्निचयनं कर्तव्यमित्येतदर्थतात्पर्यके नान्तरिक्षेऽग्निश्चेतव्य इत्यादाविवोक्तनिषेधांशे नित्यानुवादत्वादप्रसक्तप्रतिषेधेऽपि बाधकाभावात् । निषेधांशे वाक्यतात्पर्य एव प्रतियोगिप्रसक्तेरपेक्षितत्वात् । न चैवं सति तमोन्यत्वे सतीत्यंशपूरणेन तमोन्यत्वेन सदभावोऽपि नो सदासीदित्यस्यार्थः स्यादिति शङ्कनीयम् । ब्रह्मण इव तमसः पारमार्थिकत्वग्राहकप्रमाणाभावेन तथाऽध्याहारे प्रमाणाभावात् ।

यत्तु—मूर्तं सदिति संप्रोक्तममूर्तमसदुच्यते ।
मूर्तामूर्तेतरद्ब्रह्म न सत्तन्नासदुच्यते ॥

इति पैङ्गिश्रुतौ सदसच्छब्दयोर्मूर्तामूर्तवाचकताया उक्तत्वेन ब्रह्मान्यत्वे नेत्यध्याहारस्यासत्पदस्य सत्तादात्म्यशून्यत्वे लक्षणायाश्च कल्पनामपेक्ष्य नासदासीन्नो सदासीदिति भागद्वयस्य मूर्तामूर्तनिषेधपरत्वमेव युक्तमिति परेणोक्तम् । तन्न सम्यक् । सदसच्छब्दयोः पारमार्थिकापारमार्थिकपरतया लौकिकवैदिकप्रयोगप्राचुर्येण श्रुतिमात्रसिद्धमूर्तामूर्तपरत्वकल्पनाया अयुक्तत्वात् । अध्याहारतो लक्षणाया अजहन्निरूढलक्षणातो जहन्निरूढलक्षणाया जघन्यत्वात् । उक्तश्रुतेर्यथाकथंचिद्बोधकत्वमात्रेणोपपत्तौ मूर्तामूर्तवाचकत्वकल्पने प्रमाणाभावाच्च ।

यदप्युक्तव्याख्याने तदानीमित्यस्य वैयर्थ्यं रजआदेरपि सन्निषेधेनैव निषेधलाभात्पृथक् तद्ग्रहणानौचित्यं च। तस्य पारमार्थिकत्वासंप्रतिपत्तावप्यसन्निषेधेनैव तन्निषेधलाभादिति दूषणं परोक्तम्। तदप्यसत्। वायौ रूपं नास्तीति वायौ रूपनिषेधेऽपि तस्य पृथिव्यादौ सत्त्वमिव कालान्तरे सदसन्निषेधे कालान्तरे तमःसत्त्वप्रसक्त्या तादृशनिषेधस्य तमसोऽनिर्वचनीयत्वासाधकतया विवक्षितासिद्ध्या तन्निषेधाधिकरणकाले तत्सत्त्वाभिधायकस्य तदानीमित्यस्याऽऽवश्यकत्वात्। तथा सति तमसः प्रतिपन्नोपाधावुक्तनिषेधप्रतियोगित्वरूपमिथ्यात्वलाभाद्विवक्षितसिद्धेः। सत्त्वं परमार्थसत्त्वैव, असत्त्वं सत्तादात्म्यशून्यत्वमिति पारमार्थिकतुच्छयोरेव प्रकृतनिषेधविषयत्वेन रजआदीनामुक्तमिथ्यात्वलाभाय रजआदिनिषेधस्याऽऽवश्यकत्वाच्च। तदानीमित्यस्य रजआदिनिषेध एवान्वय इत्यद्वैतसिद्धावुक्तम्। तत्प्रकारश्च तत्र तदीयटीकायां च स्पष्टः। विस्तरभयान्नेह लिख्यते।

नासदासीदित्यस्यासदन्यदासीत्, नो सदासीत्यस्य च सदन्यदासीदित्यर्थः। न च नञर्थस्य नोद्देश्यतावच्छेदकत्वसंभवस्तथा सति जलं न द्रव्यं गन्धवदित्यादितो जलभिन्नं द्रव्यं गन्धवदिति प्रत्ययप्रसङ्ग इति वाच्यम्। न असन्नासादिति समास इहाप्राण इत्यादिवन्नञर्थस्योद्देश्यतावच्छेदकत्वाविरोधात्। उक्तप्रसिद्ध्यतिक्रममपेक्ष्य वैरूप्यस्यापि युक्तत्वाच्च। न च सदसतोः रूत्त्वमात्रेणोक्तनिषेधद्वयोपपत्तावनिर्वचनीयत्वासिद्धिरिति वाच्यम्। सदन्यस्य कालसंबन्धाभिधानेनैव तत्सिद्धेः। न चासदन्यस्य सत्त्वाभिधानमसंगतं निरर्थकत्वादिति वाच्यम्। सदन्यस्य कथं कालसंबन्ध इति शङ्कानिरासार्थत्वेन तदभिधानसार्थक्यादिति वा तादृशवाक्यार्थ इति ध्येयम्। एवं लक्षणतः प्रत्यक्षानुमानश्रुतिप्रमाणेभ्यो भावरूपानिर्वचनीयानाद्यज्ञानसिद्धौ परेणाऽऽश्रयासिद्ध्यादिदूषणेनाद्वैतिमतसिद्धाज्ञानखण्डनं यत्स्वकीयग्रन्थे कृतं तत्तु न विचारसहम्। शुद्धचित एव

कल्पिततादृशाज्ञानाश्रयत्वोपपत्तेः । तदुक्तम्—

आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला । इति ।

यत्तु—अज्ञत्वसर्वज्ञत्वयोरेकाश्रयाश्रितत्वानुपपत्तिरिति परेण दूषणमुक्तम् । तदसत् । तदीयज्ञानविरोधिनस्तत्काले तदाश्रितत्वायोगेऽप्यन्यदीयज्ञानविरोधिनस्तदाश्रितत्वे बाधकाभावात् । न चैवमज्ञं ब्रह्म ब्रह्मण्यज्ञानमिति व्यवहारापत्तिः । अयमज्ञ इत्यत्र पार्थ एव धनुर्धर इत्यत्र च विशेष्यस्यापि पार्थस्य भेदे विशेषणत्वेनान्वयात्पार्थान्यवृत्त्यभावप्रतियोगिधनुर्धरत्ववान्पार्थ इति बोधस्येव व्युत्पत्तिवैचित्र्येण ज्ञानविरोधिरूपाज्ञानपदार्थैकदेशे ज्ञानविशेषे विशेष्यस्यायंपदार्थस्य विशेषणत्वेनान्वयेनैतद्वृत्तिवृत्त्यात्मकज्ञानविशेषविरोध्याश्रयोऽयमिति बोधस्वीकारेणोक्तव्यवहारप्रसङ्गाभावात् । ब्रह्माश्रितं च ज्ञानं परमत इव मन्मतेऽपि स्वरूपभूतमेव । तच्च नाज्ञानविरोधि । यं प्रत्यावरकत्वमज्ञानस्य तदाश्रितज्ञानविशेषेणैव तस्य विरोधात् । ब्रह्माश्रितज्ञानविरोध्यज्ञानाश्रयो ब्रह्मेति वाक्यार्थस्य तादृशव्यवहारविषयस्याप्रसिद्धेः । एवमज्ञानान्वितसप्तम्यर्थविशेषणीभूतप्रकृत्यर्थस्य तस्मिन्नज्ञानमित्यादावज्ञानपदार्थैकदेशे ज्ञाने धर्मिपारतन्त्र्येणान्वयोपगमेन न ब्रह्मण्यज्ञानमिति व्यवहारप्रसङ्गः । ब्रह्मवृत्तिज्ञानविरोधिब्रह्मवृत्त्यज्ञानरूपस्य तादृशव्यवहारविषयस्याप्रसिद्धेः ।

नन्विदमयुक्तं जीवब्रह्मणोरभेदस्य त्वयाऽङ्गीकारादिति चेत् । न । स्वरूपैक्येऽप्यज्ञानकल्पितौपाधिकभेदाभ्युपगमात् । जीवोपाधिस्तु सुषुप्तिप्रलयानुवृत्तसंस्कारसाधारणं मनस्त्वाश्रयमात्रं मनस्त्वविशिष्टतत्संस्कारान्यतरपर्यवसितम् । अविद्याप्रतिबिम्बो जीव इति पक्षे शुद्धचिदाश्रिताज्ञानप्रयुक्त एव जीवेश्वरभेदः, मुखमात्रसंबन्धिदर्पणाद्युपाधिकृतमुखप्रतिमुखादिभेदवदिति तादृशप्रतिबिम्बभूतजीवनिरूप्यत्वमेवाज्ञानस्य । जीववदीशोऽप्यविद्याप्रतिबिम्ब एव । उपाधिगतनैर्मल्यतदभावाभ्यामवशीकृतोपाधित्वतदभावाभ्यां च जीवेशयोर्विशेषः । सर्वज्ञता चेशनिष्ठा, न शुद्धचिन्निष्ठा । एवं च शुद्धचितोऽज्ञानाश्रयत्वेऽपि न क्षतिः । तस्याः सर्वविषयकचिद्रूपत्वेऽपि

तदाधारत्वानुपगमादिति केचित् । वाचस्पतिमिश्रास्तु जीवाश्रितामेवाविद्यां मन्यन्ते । ननु तन्मते जीवोपाधिरविद्यातिरिक्तः सत्यश्चेदद्वैतहानिः । अनित्यश्चेदविद्याधीनो वाच्यः । सा चोपाध्यन्तराधीना स चाविद्याधीन इत्यनवस्था । यदि चैकमेवाज्ञानमुपाधिश्चैक एवेत्युच्यते तदाऽन्योन्याश्रयः, उपाधिनिर्वाह्यभेदोपपाद्याधिकरणकमज्ञानं तन्निर्वाह्यश्चोपाधिरिति । एकस्या अविद्याया एव स्वस्योपाधित्व आत्माश्रय इति चेत् । मैवम् । अविद्यातदुपहिततद्भेदानामविद्योपहितचिद्रूपायास्तद्धियोऽप्यनादित्वेनोत्पत्तौ ज्ञप्तौ वाऽऽत्माश्रयाभावात् । न चाविद्यातिरिक्तानादिदृश्यस्याविद्याजन्यत्वाभावेन सत्यत्वापत्त्याऽद्वैतहानिरिति वाच्यम् । तस्य तदजन्यत्वेऽपि तत्प्रयुक्तत्वेन सत्यत्वासंप्रतिपत्तेः । अविद्याकृतोपकाराभावे तत्प्रयुक्तत्वमयुक्तमिति चेत् । न । अविद्यानाशाधीननाशप्रतियोगित्वेन तदधीनस्थितिकस्याविद्यातिरिक्तानादिदृश्यस्य प्रतिबन्धकाधीनकार्यप्रागभावस्येव तत्त्वत उपकारशून्यत्वासिद्धेः ।

यत्तूपाधिर्विद्यमानस्य भेदस्य ज्ञापक एव दृष्टपूर्वः, न तु कारकः । महापटादिरञ्जनाद्युपाधौ विद्यमानपटावयवभेदव्यञ्जकताया एव दृष्टत्वात् । न चायं पटस्यैव भेदकृत् । द्वौ पटाविस्यप्रतीतेः । न च दण्डकुण्डलोपाधिभ्यामेकदेवदत्तो भिद्यत इति वाच्यम् । देवदत्तभेदप्रतीतेर्दण्डकुण्डलसंबन्धादिविशिष्टद्वयस्यैवोत्पत्तेः । न चैवमेवास्तु प्रकृत इति वाच्यम् । उपाध्यपगमे जीवस्य नाश एव ब्रह्मैक्यमित्यापत्तेः । विशेषणविशिष्टजीवे नष्टे स्वरूपमात्रावशेष एव तत्रोच्यत इति चेत्तर्हि ब्रह्मण्येव बन्धमोक्षौ स्यातामिति दोषापत्तिरिति परेणोक्तम् । तदसत् । धर्माधर्माधीनभोगाश्रयत्वलक्षणस्य बन्धस्य ब्रह्मण्यात्यन्तिकलयरूपमोक्षस्य च विशिष्टगतत्वेन शुद्धस्वरूपे तत्प्रसङ्गाभावात् । जीवस्यैवौपाधिकस्वरूपेण मुक्त्यनन्वयेऽप्यनौपाधिकशुद्धस्वरूपेण तदन्वयस्य निष्प्रत्यूहत्वात् । महापटरञ्जनादेः

स्वोपहितभेदभेदकत्वाभावेऽत्र पटो रक्तो नात्रेति प्रतीतेरनिर्वाहप्रसङ्गात्। न च तत्र पटाद्यवयवविशेषस्य रक्तत्वाद्यधिकरणता प्रतीयते न तु पटादेरिति वाच्यम्। अत्र पटो रक्त इति पटे रक्तत्वानुभवविरोधात् । न च तत्रावयवविशेषावच्छेदेन पटे रक्तता प्रतीयत इति त्वया वक्तुं शक्यम् । तथा सत्यवयवविशेषावच्छेदेन पटे रक्तत्वाभावस्यापि तुल्यन्यायेन स्वीकारापत्त्या प्रतियोग्यभावयोर्विरोधस्योच्छेदापत्तेः । न च प्रतियोग्यभावयोरवच्छेदकभेदान्नायं दोषः । एकावच्छेदेनैकत्राविद्यमानत्वस्यैव विरोधरूपत्वादिति नैयायिकमतवत्त्वया वक्तुं शक्यते । कार्यकारणविलक्षणावंशांशिनावित्युपपादनपरत्वदीयग्रन्थविरोधात् । तत्र हि किंचाऽऽकाशस्यापि तावदंशाः सन्तीत्यङ्गीकार्यम् । अन्यथाऽऽकाशे विहङ्गशरीरभावाभावौ न स्याताम् । संयोगः स्वात्यन्ताभावसमानाधिकरण इति चेत् । न । विरोधात् । अन्यथा सर्वत्र भावाभावयोरविरोधप्रसङ्गात् । न चोपाधिकृतांशसद्भावादविरोधः । उपाधेरपि विहङ्गशरीरसमानयोगक्षेमत्वात् । न चाऽऽकाशस्योपादानकारणमस्ति । तस्मात्कार्यकारणातिरिक्तावंशांशिनौ स्वीकार्यावित्यभिधानात् ।

नन्वज्ञानं भावो वाऽभावो वा। नाऽऽद्यः । तथात्वेऽनादेर्भावस्य निवृत्त्ययोगादनिर्मोक्षप्रसङ्गात् । न द्वितीयः । जगदुपादानत्वानुपपत्तेरिति चेत् । न। अज्ञानस्य भावत्वेऽपि यथा नोक्तदोषस्तथाऽज्ञानलक्षण एवोपपादितत्वात् । अथवाऽज्ञाने भावत्वाभावत्वयोर्घटनानुपपत्तिः । तस्य सदसद्विलक्षणत्वरूपानिर्वाच्यत्ववादे भूषणमेव न हि मायाया दुर्घटत्वं दूषणं भवति क्वापि । लौकिकमायायामपि तद्दर्शनात् । तस्माद्भावाभावविलक्षणैवाविद्या ।

यत्तु—दुर्घटत्वं भूषणं चेत्स्यादविद्यात्वमात्मनः ।
अन्धं तमोऽप्यलंकारो नित्यं दुःखशिरोमणेः ॥

इति परेण दूषणमुक्तं तत्स्वकर्मपरिपाकसंजाताद्वैतवादविद्वेषमात्रनिबन्धनम् । न ह्युक्तानुपपत्तिमात्रं भूषणमित्यद्वैतिसंमतम् ।

येन त्वदुक्तप्रलापप्रसक्तिः स्यात् । किंतु भेदे भावत्वानुपपत्त्याऽभावत्ववत्, घटादेरभावत्वानुपपत्तौ भावत्ववत्, उभयानुपपत्तौ प्रमाणसिद्धार्थस्य प्रतिक्षेपायोगादुभयविलक्षणतायां बाधकाभावमात्रम् । तथा च पूर्वोक्तप्रत्यक्षानुमानश्रुतिप्रमाणसिद्धायामविद्यायां भावत्वमभावत्वं वाऽवश्यमुपपादनीयमित्यत्र कुलधर्माद्यभावादुभयविलक्षणत्वेऽपि न बाधकम् । अत एव नास्ति न भवतीत्यादिप्रत्यक्षप्रमाणसिद्धस्याभावत्वस्यान्योन्याश्रयादिदोषादिना भावत्वाभावत्वादिना निरूपणानर्हस्याखण्डोपाधित्वं भावाभावविलक्षणत्वापरपर्यायं तार्किका वदन्ति । ज्ञानस्वरूपस्याऽऽत्मनोऽविद्यात्वे सर्वदाऽऽवृतत्वप्रसङ्गेन प्रकाशकाभावाज्जगदान्ध्यप्रसङ्गः । अविद्यानिवृत्तावात्मनो विनाशापत्त्या ज्ञाननिवर्त्यविलक्षणसत्यस्वरूपत्वबोधकबलवच्छ्रुतिप्रमाणविरोधस्यैव बाधकत्वान्नाऽऽत्मनोऽविद्यात्वं भूषणम् । न चैवं ब्रह्मणि सर्वज्ञताग्राहकबलवत्प्रमाणविरोधादज्ञानाश्रयत्वानुपपत्तिः शङ्क्या । तदाश्रयत्वेऽपि सर्वज्ञतायाः पूर्वमेवोपपादितत्वेन विरोधाभावात् ।

नन्वज्ञानं तत्प्रयुक्तं न वा । नाऽऽद्यः । आत्माश्रयात् । न द्वितीयः । ज्ञानान्निवृत्त्ययोगात् । मैवम् । अनादावप्यज्ञाने स्वस्मिन्स्वप्रयुक्तत्वोपगमे बाधकाभावस्य पूर्वमेवोक्तत्वात् । यथा ह्यभावाधिकरणकाभावस्याधिकरणस्वरूपतावादिनैयायिकमते दण्डाभावस्य स्वात्मकघटाभावप्रयोजकत्वम् । तत्र घटाभावत्वेन प्रयोज्यत्वं दण्डाभावत्वेन प्रयोजकत्वमित्येवंरूपभेदेन तदभ्युपगम इति चेदिहापि पूर्वक्षणसंबन्धित्वेन प्रयोजकत्वमुत्तरक्षणसंबन्धित्वेन प्रयोज्यत्वमित्येवंरूपभेदस्याविद्यायां सत्त्वेन तत्संभवात् । वस्तुतस्तु ज्ञाननाश्यत्वेऽज्ञानत्वमेव प्रयोजकम्, अज्ञाननाश्यत्वे तत्प्रयुक्तत्वमेव प्रयोजकमित्यज्ञानस्य तदप्रयुक्तत्वेऽपि न दोषः ।

नन्वज्ञानस्य तदप्रयुक्तत्वेऽनिर्वचनीयत्वमेव न स्यादिति चेत् । न । किमनिर्वचनीयत्वं तत्प्रयुक्तत्वव्याप्यं येन तदभावादभाव आपाद्यते । तदेव न । किंतु सदसत्त्वादिग्राह-

कप्रमाणराहित्यमेव । तच्चाज्ञानेऽप्यस्तीति न तस्यानिर्वचनीयत्वानुपपत्तिः । अनादिभावत्वे सति ज्ञाननिवर्त्यत्वमिति पूर्वोक्ताज्ञानलक्षणेऽर्थक्रियाकारित्वरूपमेव भावत्वं विवक्षितं ततो भावत्वस्य दुर्निरूपत्वात् । न चैवं शुद्धब्रह्मणो जगदुपादानत्वं तत्कर्तृत्वं च नास्तीति मते तस्य भावत्वानुपपत्तिरिति वाच्यम् । स्वाश्रयत्वस्वाश्रयनिरूपितानवच्छिन्नतादात्म्यप्रतियोगित्वान्यतरसंबन्धेनार्थक्रियाकारित्ववत्ताया एव तन्मते भावत्वरूपत्वोपगमात् ।

श्रीमद्गुरुपदाम्भोजस्मरणप्लवसंश्रयात् ।
अज्ञानसाधनाब्धिर्मे संतारसुखदोऽभवत् ॥

एवंचोक्तरीत्याऽनिर्वचनीयभावरूपानाद्यज्ञानसिद्ध्या तत्कृतावरणेन विषयप्रयोजनाधिकार्यादिसिद्धौ विवरणवाचस्पत्यादिनिबन्धोक्तरीत्या शास्त्रानारम्भारम्भरूपपूर्वपक्षसिद्धान्तग्रन्थनरूपैतदधिकरणयोजनाऽतितरां रम्यैवेति दिक् ।

आनन्दतीर्थीयास्तु वेदान्तमीमांसाशास्त्रं नाऽऽरम्भणीयम् । तदकर्तव्यत्वात् । तदकर्तव्यत्वं च निर्विषयत्वादिहेतुभ्यः । तत्र तावद्विषयत्वेनाभिमतं ब्रह्म न जीवचैतन्याद्भिन्नम् । तत्र मानाभावात् । कर्मकाण्डस्य कर्मपरत्वात् । वेदान्तैश्चोपक्रमादिभिरखण्डप्रत्यगात्ममात्रप्रत्यायनात् । तस्य चाहमिति स्वप्रकाशतया भासमानत्वादिति चन्द्रिकायां निर्विशेषे च तत्र निरूपणीयधर्माणामभावादित्यधिकम् । अन्यत्समानमिति पूर्वपक्षे—भवेदेवं निर्विषयत्वं यदि विचार्यत्वाभिमतं ब्रह्म जीवरूपत्वेन संशयविपर्ययानास्पदं स्यात् । न त्वेवम् । तद्विजिज्ञासस्व तद्ब्रह्मेति विचारविषये धर्मिणि श्रुतेन ब्रह्मशब्देनैव गुणपूर्तिवाचिनाऽल्पगुणाज्जीवनिकायाद्विलक्षणत्वसिद्धेः । तस्य गुणपूर्तिवाचिता च कस्मादुच्यते । ब्रह्मेति बृहन्तो ह्यस्मिन्गुणा इति श्रवणात् । स्वरूपतो गुणतश्चापरिच्छिन्नत्वविषयावयवशक्त्या चेति सिद्धान्त इति रीत्यैतदधिकरणरचनामाहुः ।

तत्र पूर्वपक्षस्तावदयुक्त एव । अहंप्रत्यये प्रत्यगात्मनो भानेऽपि तेन स्थूलोऽहं दुःखी कर्ता भोक्तेत्येवंरूपेणैव तद्ग्रहणात्तद्विपरीतवेदान्तवेद्यशुद्धात्मनः संदिग्धतया शास्त्रस्य सविषयत्वासिद्धेर्निष्प्रत्यूहत्वात् । यथा चैतत्तथा व्याख्यातं शुद्धोऽहंप्रत्यये न भातीति वाचस्पतिवाक्यविवरणे विस्तरेण शुद्धोऽहंप्रत्यये न भातीति कोऽर्थ इत्यादिचन्द्रिकोक्तविकल्पखण्डनावसरे। सिद्धान्तोऽप्ययुक्त एव। आनन्दवल्ल्यां वक्ष्यमाणसर्वगतसर्वात्मस्वरूपपरब्रह्मविज्ञानात्परब्रह्मभावरूपपरब्रह्मप्राप्तिमभिधाय तादृशब्रह्मविज्ञानसाधननिरूपणपरभृगुवल्ल्यां ब्रह्मविज्ञानसाधनब्रह्मविचारविधिपरे तद्विजिज्ञासस्व तद्ब्रह्मेति वाक्ये ब्रह्मशब्दस्य जिज्ञासासूत्रे प्रत्यगभिन्नब्रह्मण एव विषयत्वप्रतिपादकोक्तयुक्त्या प्रत्यगभिन्नब्रह्मपरत्वेनाल्पगुणजीवभिन्नबृहद्गुणकब्रह्मपरत्वायोगात् । तथात्वे तद्विज्ञानात्तदन्यस्य जीवस्य ब्रह्मविदाप्नोति परमित्युक्तायास्तत्प्राप्तेरयोगात् । नह्यन्यस्य विज्ञानादन्यस्य प्राप्तिरस्ति दृष्टा वा । ब्रह्मशब्दस्य प्रत्यगभिन्नब्रह्मपरत्वे तु यथा दशमस्याव्यवहितस्य स्वस्वरूपतया प्राप्तस्यापि सतो बाह्यसंख्येयासक्ततया नवैव वर्तामह इति विपर्यासं प्राप्तवतः स्वरूपादर्शनेन दशमोऽप्राप्त इति मन्वानस्य दशमस्त्वमसीति केनचित्स्मारितस्य स्वरूपाज्ञाननिवृत्त्या दशमप्राप्तिवत्सर्वगतसर्वात्मभूतब्रह्मरूपस्य जीवस्यान्यस्यान्येन परिच्छिन्नस्य परिच्छिन्नेनैव मुख्यायाः परब्रह्मप्राप्तेरसंभवेऽप्यनाद्यविद्यया भूतांशकृतबाह्यान्नमयाद्यानन्दमयान्ताननात्मन आत्मत्वेन पश्यतस्तेभ्यो नान्योऽहमिति मन्वानस्याविद्ययाऽनाप्तब्रह्मस्वरूपस्य श्रुत्युपदिष्टसर्वात्मब्रह्मण आत्मत्वज्ञानेनानाप्तत्वभ्रान्तिनिवृत्त्यात्मकतदाप्तिरौपचारिक्युपपद्यते । अवश्यं च ब्रह्मविदाप्नोति परमिति फलवाक्यस्याविद्यानिवृत्त्यौपचारिकब्रह्मप्राप्तिपरत्वं वक्तव्यं नाप्राप्तप्राप्तिपरत्वमसंभवात् । ब्रह्मप्राप्तिसाधनत्वेन ब्रह्मविद्यामात्रोपदेशाद्विज्ञानस्याविद्यानिवृत्त्यैकफलत्वस्य दृष्टत्वात् । न च तदात्मत्वे तज्ज्ञानमात्रसाधनोपदेशो न हेतुः, ग्रामं गन्तुः खल्वो प्राप्तत्वभ्रमेऽपि मार्गज्ञानोपदेशदर्शनात्, तथा च जीवस्य स्वतो

ब्रह्मत्वाभावेऽपि ब्रह्मविद्योपदेशः प्रसादादिद्वारा पराभिमतब्रह्मप्राप्तिहेतुर्भविष्यतीति शङ्क्यम् । दृष्टान्ते ग्रामविषयं विज्ञानं ग्रामं गन्तुर्नोपदिश्यते, किंतु तत्प्राप्तिसाधनमार्गविषयाविज्ञानमेव । प्रकृते तु तत्त्वमसि ( छा० ६।८।७ ) । यो यो देवानां प्रत्यबुध्यत स एव तदभवदथर्षीणाम् ( बृ० १ । ४ १० ) । ब्रह्म वेद ब्रह्मैव भवति ( मु० ३ । २ । ९ ) । तदात्मानमेवावेदहं ब्रह्मास्मि । (बृ० १ । ४ । १० ) ।

> तत्त्वमस्यादिवाक्योत्थं यज्जीवपरमात्मनोः ।
> अभेदविषयं ज्ञानं तदिदं मुक्तिसाधनम् ॥

इत्यादिश्रुतिस्मृतिसंमतं जीवाभिन्नब्रह्मविषयविज्ञानमेव परब्रह्मप्राप्तिसाधनत्वेनोपदिश्यत इति दृष्टान्तवैधर्म्येण यत्र स्वात्मविषयविज्ञानमेव स्वप्राप्तिसाधनत्वेनोपदिश्यते तत्र दशमदृष्टान्तेनाविद्यानिवृत्त्यात्मकौपचारिकस्वप्राप्तेरेव विद्याफलत्वस्यावश्यं वक्तव्यत्वाद्ब्रह्मविज्ञानस्य प्रसादादिद्वारा ब्रह्मप्राप्तिरूपमोक्षसाधनतायाः पूर्वमेव निराकृतत्वाच्च । तत्सृष्ट्वा । तदेवानुप्राविशत् (तै० २।६।२) इति ब्रह्मणः सृष्ट्युत्तरं कार्यप्रवेशश्रुतेश्च न जीवभिन्नं ब्रह्म ब्रह्मशब्दार्थः । तत्र हि क्त्वाप्रत्ययेन सृष्टिप्रवेशक्रिययोरेककर्तृकत्वबोधनात्स्रष्टुरेव प्रवेशो बोध्यते स च सृष्टिसमय एव कार्ये ब्रह्मणः कारणरूपेण स्थितत्वान्मुख्यो न संभवति । अप्रविष्ट एव मठादौ देवदत्तस्य प्रवेशव्यवहारदर्शनात् । अतो 'यो वेद निहितं गुहायाम्' (तै० २।१।१) इति प्रकृतमेव ब्रह्माकाशादिकारणं कार्यं सृष्ट्वा तदनुप्रविष्टमिवान्तर्गुहायां बुद्धौ द्रष्टृ श्रोतृ मन्त्रित्येवं विशेषवदुपलभ्यते । अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य (छा० ६।३।२) इति श्रुत्यन्तरात् । परमार्थतस्तु नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञाता (बृ० ३।७।२३) इति श्रुत्यन्तराच्च स एव तस्य प्रवेश इत्यस्यैव वक्तव्यत्वात् । 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति । यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति' (तै०२।७।२) इत्यनेनादृश्यत्वादिविशेषणके जिज्ञास्यत्वेनोक्ते ब्रह्मण्यात्मभावं जानतो

विदुषोऽभयप्रतिष्ठोक्तेर्भेददर्शिनश्च भयोक्तेरपि वेदितुरात्मैव ब्रह्मशब्दार्थः। न ततो भिन्नं ब्रह्म। यदि हि विद्वान्स्वात्मनोऽन्यं न पश्यति तदाऽभयं प्रतिष्ठां विदन्त इति स्यात्। भयहेतोरन्यस्याभावात्। स्वव्यतिरिक्तेश्वरदर्शिनश्च भयहेतुसद्भावादभयप्रतिष्ठानुपपत्तेः। द्वितीयाद्धि भयं भवतीति श्रुतेः। अदृश्येऽविकारे, अनात्म्येऽशरीरे, अनिरुक्ते निरुक्तिप्रयोजकगुणक्रियाजात्यादिविशेषरहिते, अनिलयनेऽनाधारे, अभयमिति क्रियाविशेषणम्। लिङ्गविपरिणामेनाभयां प्रतिष्ठामिति विशेषणविशेष्यभावो वा। उत—अपि, अरम्—अल्पम्। उपास्योपासकभावादिलक्षणमपि, अन्तरं भेदं कुरुते पश्यति, अथ तस्य भयं भवतीति तदर्थः। जिज्ञास्ये ब्रह्मणि श्रुतम्—तदप्येष श्लोको भवति। यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह (तै० २।४।१) इति वाङ्मनःप्रवृत्त्यविषयत्वं ब्रह्मशब्दस्य बृहद्गुणकजीवभिन्नस्वरूपविषयार्थकत्वेऽनुपपन्नम्। प्रवृत्तिनिमित्तगुणसत्त्वे तथात्वायोगात्। निवर्तन्त इति न सर्वथा शब्दागोचरत्वं विवक्षितं किंतु साकल्येन शब्दागोचरत्वमिति त्वानन्दमयाधिकरणे निराकरिष्यत इति दिक्।

केचित्तु—आनन्दतीर्थीयानां निर्विशेषजीवरूपस्य ब्रह्मणो वेदान्तनिरूप्यत्वमङ्गीकृत्य शास्त्रनिरूप्यत्वासंभवपूर्वपक्षो गुरूणां प्रणतिपरम्पराविषये महापुरुषे तच्छिष्योदितस्वप्रणामानर्हत्ववादमनुकरोति। प्रमाणशिखामणयो हि वेदान्ता नितान्तमनधिगतार्थमन्विष्यन्ति। पौरुषाणि तु शास्त्राण्युपायान्तरेणावगन्तुं शक्येष्वर्थेषु श्रोतृबुद्धिसौकर्यार्थं प्रवृत्तानि स्वोक्तमप्यर्थमविस्मरणायाऽऽम्रेडयन्ति न तथाऽनधिगतार्थव्यसनितामनुभवन्ति। ततश्च वेदान्ता अपि स्वप्रकाशस्वरूपे कर्तृत्वभोक्तृत्वादिरहिततयाऽकर्मशेषतां प्रतिपाद्यमाने स्वातन्त्र्येण पर्यवस्यन्ति। तदा शास्त्रपर्यवसाने काऽनुपपत्तिः। पूर्वपक्षिणाऽपि वेदान्तानां प्रामाण्यसंरक्षणाय स्वप्रकाशात्मकजीवस्वरूपमात्रपरत्वेऽप्यनधिगतार्थकत्वं कथंचिदुपपादनीयमेव। तेनैव शास्त्रस्यापि सविषयत्वोपपत्तिरित्याहुः।

यत्तु पूर्वपक्षिणा वेदान्तानां प्रामाण्यं न संरक्षणीयं तेषामुपक्रमादिन्यायैः स्वप्रकाशतया सिद्धजीवस्वरूपपरत्वेन यदि

प्रामाण्यं न निर्वहेत्तर्हि मा भूत्, न्यायलब्धेऽर्थे किं कुर्मः । अत एवोक्तं चन्द्रिकायां निरुक्तपूर्वपक्ष एव—सिद्धचैतन्यबोधने श्रुतेरनुवादकत्वं वायुक्षेपिष्ठादिवाक्यवत्सह्यम् । वेदान्ताध्ययनं तु जपार्थमेवास्तु । यथा ह्यर्थवादाधिकरणेऽपौरुषेयत्वेऽप्यर्थवादादीनामक्रियार्थत्वेन विध्येकवाक्यत्वाभावादानर्थक्यमिति भट्टमतेन पूर्वपक्षः । प्राभाकरमते चार्थवादानां विध्येकवाक्यत्वेऽपि * हेतुसमर्पकत्वाद्धेतुसापेक्षचोदनानामप्रामाण्यमिति पूर्वपक्षः । यथा वा परमते शास्त्रयोनित्वाधिकरण ईक्षत्यधिकरणे च कारणवाक्य=मनुमानसांख्यस्मृतिप्राप्तकारणानुवादीति पूर्वपक्षौ

---

* हेतुसमर्पकत्वादिति । अयं भावः—'वायव्यं श्वेतमालभेत भूतिकामः' इति विधिः । 'वायुर्वै क्षेपिष्ठा देवता, वायुमेव स्वेन भागधेयेनोपधावति, स एवैनं भूतिं गमयति' इत्यर्थवादः । तत्र विधिवाक्यगता वायव्यादिशब्दा अर्थवादशब्दनैरपेक्ष्येणैव विशिष्टमर्थं विदधति । अर्थवादशब्दाश्चेतरनैरपेक्ष्येणैव भूतार्थमन्वाचक्षते । तत्र पूर्वोक्तार्थवादवाक्येन 'क्षिप्रगामी वायुः स्वोचितेन भागेन तोषितो भागप्रदायैश्वर्यं प्रयच्छति' इत्युक्ते रामायणभारतादाविव वृत्तान्तः कश्चित्प्रतीयते । न त्वनुष्ठेयं किंचित् । तथा चैकवाक्यत्वाभावान्नास्त्यर्थवादस्य धर्मे प्रामाण्यमिति प्राप्ते समाधीयते—मा भूत्पदैकवाक्यता, वाक्यैकवाक्यता तु स्यादेव । तथाहि—विधिवाक्यं तावत्पुरुषं प्रेरयितुं विधेयार्थस्य प्राशस्त्यमपेक्षते । अर्थवादवाक्यं च फलवदर्थावबोधपर्यवसिताध्ययनविधिपरिगृहीतत्वेन पुरुषार्थमपेक्षते । तत्र पुरुषार्थपर्यवसितविध्यपेक्षितं प्राशस्त्यं लक्षणावृत्त्या प्रतिपादयदर्थवादवाक्यं विधिवाक्येन सहैकवाक्यतामापद्यते । तथा च यतः क्षिप्रगामिस्वभावतया शीघ्रफलप्रदो वायुरस्य पशोर्देवता ततः प्रशस्तमिमं वायव्यं पशुमालभेतेति वाक्यद्वयस्यान्वयः । तस्मादर्थवादानां धर्मे प्रामाण्यं सिद्धम् । एवं च वायुः क्षिप्रमेव फलप्रदोऽतो वायव्यमालभेतेत्येवमर्थवादोक्तं हेतुमपेक्ष्य यतो विधिः पुरुषं नियुङ्क्ते ततः सापेक्षत्वादप्रामाण्यमिति ।

= अनुमानसांख्येति । अनुमानेन सांख्यस्मृत्या च प्राप्तं यज्जगत्कारणं तदनुवादीत्यर्थः । अयं भावः—सदेव सौम्येदमग्र आसीत् (छा० ६।२।१) यतो वा इमानि (तै० ३।१।१) इत्यादिवाक्येभ्यः प्रतीतं जगत्कारणं किं ब्रह्माऽऽहोस्वित्प्रधानमिति संदेहे 'बहु स्यां प्रजायेय' (तै० २।६।२) इति बहुभावश्रवणात्प्रधानमेव । तथा चानुमानसांख्यस्मृतिसिद्धजगत्कारणानुवादीनि कारणवाक्यानीति पूर्वपक्षो यथा तद्वत्प्रकृतेऽपीति ।

तथेहापि स्वतःसिद्धप्रत्यगात्मानुवादका वेदान्ता इति पूर्वपक्ष इति । तन्न । तत्पूर्वपक्षिणा वेदान्तानां निर्विशेषचिन्मात्ररूपजीवविषयत्वेऽप्यनधिगतविषयत्वमद्वैतिरीत्या समर्थनीयमेव । उपक्रमादिस्वारस्यावगताखण्डजीवस्वरूपचिन्मात्रपरत्वं परित्यज्य तद्विलक्षणसगुणविषयत्वं वा समर्थनीयम् । अन्यथा तेषां त्वन्मतरीत्या ब्रह्मतर्कसिद्धप्रामाण्यव्याघातो दुर्वारः । इत्थं हि त्वन्मतम्—अस्ति ब्रह्मतर्काभिधानं शास्त्रं विष्णुना नारायणरूपेणातिविस्तरेण कृतम् । पुनर्व्यासरूपेण तेनैव संक्षिप्तम् । तदेव च चतुर्दशविद्यास्थानान्तर्गतं तर्कशास्त्रं न तु गौतमादिप्रणीतम् । तच्चास्य ब्रह्ममीमांसाशास्त्रस्याङ्गम् । ब्रह्ममीमांसाशास्त्रं हि सर्वेषां कर्मब्रह्मकाण्डरूपाणां वेदानां सकलगुणपूर्णो भगवान्विष्णुरेव मुख्योऽर्थ इति निर्णयाय प्रवृत्तम् । ब्रह्मतर्काभिधानं तु ब्रह्ममीमांसानिर्णेयार्थानां वेदानां तदर्थनिर्णायकानां प्रत्यक्षादीनामुपक्रमादीनां श्रुतिलिङ्गादीनां च स्वरूपाणां प्रामाण्य तद्बलाबलनिर्णायकत्वेन ब्रह्ममीमांसयाऽपेक्षितमतस्तदङ्गम् । तदुक्तमनुव्याख्याने—

> प्रमाणन्यायमीमांसा क्रियते तर्कशास्त्रतः ।
> मानन्यायैस्तु तत्सिद्धैर्मीमांसामेयशोधनम् ॥
> ब्रह्मतर्कं च भगवान्स एव कृतवान्प्रभुः ।
> पञ्चाशत्कोटिविस्तारान्नारायणतनौ कृतात् ॥
> उद्धृत्य पञ्चसाहस्रं कृतवान्बादरायणः, ॥ इति ।

तथा च त्वत्पूर्वपक्षिणा त्वन्मतरीत्या ब्रह्मतर्कसिद्धप्रामाण्यानां वेदान्तानामप्रामाण्यमसिद्धप्रामाण्याक्रियार्थवादवाक्याप्रामाण्यपूर्वपक्षोदाहरणेन पूर्वपक्षितुमशक्यमेव । नह्यवगतक्रियार्थत्वेन सिद्धप्रामाण्यानां वेदवाक्यानामप्रामाण्यमाशङ्कितं जैमिनिना पूर्वतन्त्रे । सिद्धप्रामाण्येषु त्रेधा तण्डुलान्विभजेत्, स्रुष्टीरुपदधाति, कपालेषु श्रपयति, इत्यादिवेदवाक्येष्वन्यतः प्राप्तिमतोऽर्थान्परित्यज्य लक्षणादिनाऽनधिगतार्थपर्यवसानस्य तेनाङ्गीकृतत्वात् । शास्त्रयोनित्वाधिकरण ईक्षत्यधिकरणे च कारणवाक्यमनुमानादिप्राप्तकारणानुवादीति पूर्वपक्षौ नास्मत्संमतौ । शास्त्रयोनित्वाधिकरण उपादानत्वकर्तृत्वादिरूपप्रभिन्ननिमित्तोपादानत्वप्रतिपादितं

ब्रह्मणो लक्षणं न संभवति । तद्घटककर्तृत्वोपयोगिसर्वज्ञत्वस्य ब्रह्मण्यसंभवात् । यद्वा जगदन्तःपातिवेदस्य नित्यत्वाद्यावज्जगत्कर्तृत्वं ब्रह्मणो लक्षणं न संभवतीति पूर्वपक्षः । ईक्षत्यधिकरणे जगत्कारणत्वेन सद्विद्यातात्पर्यविषयत्वं प्रधानस्यैव न ब्रह्मण इति पूर्वपक्षः । एतच्च तादृशाधिकरणयोर्निपुणतरं प्रतिपादयिष्याम इति चन्द्रिकोक्तमनुक्तोदाहरणमेव ।

यत्तु—अद्वैतिमतसिद्धोपक्रमादिजालमालम्ब्यैवायं पूर्वपक्षः । तदुक्तं चन्द्रिकायाम्—यद्वा प्रमाणभूतवेदान्तगतिर्न पूर्वपक्षिणा वाच्या, किंतु प्रमेयस्य ब्रह्मणोऽद्वितीयब्रह्मवाद्यद्वैतिरीत्या स्वप्रकाशजीवचैतन्याभेदान्न विचार्यतेति प्रमेयाश्रयेणैवेति । तदप्यसत् । तव मते जीवगतसुखादीन्यनिशमनुभवन् साक्षी नित्यत्वेनाप्रामाण्यादिहेतुदोषाद्यभावात्सर्वप्रमाणाधिकः । तस्य सर्वप्रमाणाधिकत्वं प्रमाणमीमांसारूपब्रह्मतर्कसिद्धम् । अतः साक्षिविरुद्धेऽर्थे श्रुतिरपि न प्रमाणम् । सर्वेषामपि प्रमाणानामुपक्रमादुपसंहारो बलीयानित्यादिरूपो मतान्तराद्विलक्षणो बलाबलविभागोऽपि ब्रह्मतर्क एव सिद्धः ।

उपक्रमादिलिङ्गानां बलीयो ह्युत्तरोत्तरम् ।
श्रुत्यादौ पूर्वपूर्वं तु ब्रह्मतर्कविनिर्णयात् ॥

इत्यनुव्याख्यानोक्तेः । त्वदभिमतोपक्रमादिबलाबलानुसारी वेदानामर्थश्च त्वन्मते विचारात्प्रागेव गुरुमुखादवगन्तव्यः । यावच्छक्तिसकलवेदाध्ययनपूर्वकं प्रतिवाक्यमस्य वाक्यस्यायमर्थ इति सर्वेषां वेदवाक्यानां गुरुमुखादर्थग्रहणं श्रवणम् । तच्च यावदज्ञाननिवृत्तेरेकस्माद्गुरोस्तच्चदुत्तमगुरुलाभे बहुभ्यो वा सम्यगावर्तनीयम् । एवं श्रवणावृत्तिलब्धस्य वाक्यार्थग्रहणस्य स्थिरीकरणाय न्यायविचारात्मकयुक्त्यनुसंधानं मननम् । न तु तदेव श्रवणम् । ततश्च विचारविधिशास्त्रं मननविधिमूलं न श्रवणविधिमूलमिति तव मर्यादा । तथा च साक्षी सर्वप्रमाणाधिक इतिजानन्निर्विशेषनिष्प्रपञ्चजीवाभेदवाक्यानामपि सगुणसप्रपञ्चजीवभिन्नत्वाभिमतब्रह्मपरत्वेन बोधयतां स्वाप्तगुरूणां सकाशाद्बहुधावर्तितश्रवणलब्धसकलवाक्यार्थावधारणस्तद्गुणममा-

णस्वरूपबलाबलव्यवस्थापकब्रह्मतर्काभ्यासेन लब्धश्रवणसंवादस्तदनन्तरं निरुक्तमननात्मके विचारे प्रवर्तमानः शिष्यः सर्वप्रमाणाधिकसाक्षिप्रत्यक्षादेस्तर्कशास्त्रप्रसिद्धप्रमाणस्वरूपतद्बलाबलानुगुणमनेकाप्तोपदिष्टमर्थं परित्यज्य सर्ववेदान्तानां निर्विशेषजीवचिन्मात्रमेवार्थ इति प्रत्यक्षादिविरुद्धमर्थं कथमाशङ्केत। तदाशङ्काभावे च कथं पूर्वपक्षोदयः। योग्याशङ्कैव हि वादकथारूपे शास्त्रे पूर्वपक्षो नाम, इति त्वन्मतेनैवं पूर्वपक्षसंभवः। किंच त्वत्पूर्वपक्षिमते वेदान्तानां प्रबलन्यायैर्निर्विशेषजीवचैतन्यपरत्वं प्रतिपादयच्छास्त्रमस्ति न वा। न चेत्प्रत्यक्षादिविरुद्धं सविषयानेकावान्तरवाक्यकृतान्तःकलहप्रातिरुद्धं वेदान्तानां निर्विशेषचिन्मात्रपरत्वं पूर्वपक्षिणा कस्माद्गृहीतं यदवलम्ब्य पूर्वपक्षः समर्थनीयः। अस्ति चेत्तदारम्भमपेक्ष्य विषयाभावेन तदनारम्भः समर्थ्यत इति कथं न व्याघातः। वाचस्पतिविवरणयोर्मते तु प्रत्यगात्मन एव ब्रह्मतया विषयत्वं प्रत्यग्ब्रह्मणोरैक्यस्य वा विषयत्वं सिद्धान्त्यभिमतमेवानूद्य तयोरेकस्य सिद्धत्वेनान्यस्यासिद्धत्वेन विषयत्वासंभव इति पूर्वपक्षौ प्रवृत्तौ। ततः प्रत्यगात्मैव ब्रह्मेति कुतः, कुतः प्रत्यग्ब्रह्मणोरैक्यमिति वा पूर्वपक्षिणं प्रति सिद्धान्तिनो हेत्वाकाङ्क्षाया अनुदयेन विषयोपपादकशास्त्रारम्भमनपेक्ष्य तदनारम्भपूर्वपक्षप्रवृत्तेर्न व्याघातः। त्वन्मते तु निर्विशेषचिन्मात्रजीवस्वरूपं ब्रह्मेति सिद्धान्त्यनभिमत एवार्थे विषयत्वमापाद्य पूर्वपक्षप्रवृत्तिः। तस्मिन्नर्थे सिद्धान्तिनो कुत एतदित्याकाङ्क्षोदयात्तदुपपादकशास्त्रारम्भस्य त्वत्पूर्वपक्षिणोपेक्षितत्वाद्भवत्येव व्याघातः पूर्वोक्तः। अथोच्येत स्वप्रकाशचिन्मात्रपरत्वं प्रबलन्यायैः प्रतिपादयच्छास्त्रमस्त्येव। इदमपि तथा भूतं चेत्तेन गतार्थम्। सगुणब्रह्मप्रतिपादकमिदं चेत्तेन बाधितम्। इत्युभयथाऽप्यपहृतविषयत्वादनारभ्यं शास्त्रमिति पूर्वपक्षशरीरकरणान्न व्याघात इति चेत्तर्हि जीवस्य स्वप्रकाशत्वेन संदिग्धतोक्तिः पूर्वपक्षेऽनुपयुक्तैव। कणभुगादिशास्त्रेणाप्यपहृतविषयतयाऽनारम्भ आक्षेप्तुं शक्ये निर्विशेषशास्त्र एव ते पक्षपातो न युक्तः। समन्वयपादे तत्सर्वं निराकर्तव्यमस्ति चेदिदमपि स्वदनभिमतं तत्रैव निराकर्तुं योग्यमिति दिक्।

सर्वेषां वेदान्तानामद्वैतरीत्योपक्रमादिभिरखण्डप्रत्यगात्मब्रह्मणि तात्पर्यमाश्रित्य कृतोक्तपूर्वपक्षे तद्विजिज्ञासस्व तद्ब्रह्मेतिविचारविधिगतब्रह्मशब्दस्य बृहन्तो ह्यस्मिन्गुणा इति व्युत्पत्त्याश्रयणेनाल्पगुणजीवसमुदायाद्भिन्नब्रह्मपरत्वप्रतिपादनेन सिद्धान्तोऽपि सर्ववेदान्तानां जीवाद्भिन्नगुणपूर्तिमद्ब्रह्मणि तात्पर्यप्रसाधनमन्तरा केवलं ब्रह्मशब्दस्य शक्तिप्रदर्शनमात्रेणायुक्त एव । उक्तव्युत्पत्त्या ब्रह्मशब्दस्य गुणपूर्तिनिमित्तत्वेऽपि तादृशार्थे तात्पर्यप्रसाधनमन्तराऽद्वैतिदर्शितप्रबलोपक्रमादिभिस्तात्पर्यनिर्णायकैर्लिङ्गैरद्वैते ब्रह्मणि निर्णीततात्पर्यकसर्ववेदान्तविरोध्यर्थकत्वासंभवात् । प्रत्युत भूयोनुग्रहस्य न्याय्यत्वेन सर्ववेदान्तगुणीभूतत्वात्तदनुगुणाद्वैतवाद्यभिमतत्रिविधपारिच्छेदराहित्यमेव बोधयेन्न गुणपूर्तिम् । भूयोनुग्रहन्यायश्चाऽऽनन्दतीर्थैरपि न स्थानतोऽपि' ( ब्र० सू० ३ । २ । ११) इत्यधिकरणे दर्शितः । तत्र हि—

कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ ।
प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिध्यतः ॥

इत्यादिश्रुतेर्विश्वतैजसप्राज्ञादिरूपस्य भगवतोऽपि बद्धत्वरूपदोषमाशङ्क्योक्तमनुव्याख्याने—

सर्वत्राशेषदोषोज्झत्पूर्णकल्याणचिद्गुणः ।
तद्विरुद्धं तु यत्तत्र मानं नैव भवेत्क्वचित् ॥
महातात्पर्यरोधेन कथं तन्मानमत्र तु ॥ इत्यादि ।

न्यायसुधायां चोक्तम्—सकलश्रुतिस्मृतिपुराणानां परमेश्वरस्याशेषदोषविधुरत्वे समस्तगुणपरिपूर्णत्वे च यन्महातात्पर्यं तद्विरोधेन तद्वाक्यमात्रं भगवतो दोषित्वादौ कथं मानं भवेदित्यादि ।

यत्तु जीवातिरिक्तब्रह्मणि प्रमाणं नास्तीति प्रत्यवतिष्ठमानं पूर्वपक्षिणं प्रति तत्प्रमाणतयोपन्यस्तं ब्रह्मपदं तच्चाज्ञातज्ञापकत्वेनास्पष्टस्थानीयमिति तदप्रतिपादितगुणपूर्त्यादि उत्पत्ति-

शिष्टम् । तेन जीवादिभिन्नब्रह्मणि सिद्ध * उत्पत्तिशिष्टाव-

---

* उत्पत्तिशिष्टेति । अयमाशयः—विधिमन्त्रनामधेयनिषेधार्थवादात्मक-
त्वेन पञ्चविधो वेदः । तत्र नामधेयत्वं च मत्वर्थलक्षणाभयाद्वाक्यभेदभयात्तत्प्र-
ख्यशास्त्रात्तद्व्यपदेशाच्चेति निमित्तचतुष्टयात्सिध्यति । केचित्तु नामधेयत्व उत्प-
त्तिशिष्टगुणबलीयस्त्वमपि पञ्चमं निमित्तमाहुः । तत्र मत्वर्थलक्षणाभयात्कर्म-
नामधेयत्वम् ‘ उद्भिदा यजेत पशुकामः ’ इत्यत्रोद्भिच्छब्दस्य । ‘ चित्रया
यजेत पशुकामः’ इत्यत्र चित्राशब्दस्य वाक्यभेदभयात्कर्मनामधेयत्वम् । ‘अग्नि-
होत्रं जुहोति’ इत्यत्राग्निहोत्रशब्दस्य कर्मनामधेयत्वं तत्प्रख्यशास्त्रात् । ‘श्येनेनाभि-
चरन्यजेत’ इत्यत्र श्येनशब्दस्य कर्मनामधेयत्वं तद्व्यपदेशात् । ‘ वैश्वदेवेन यजेत ’
इत्यत्र तु मत्वर्थलक्षणादिप्रकारचतुष्टयस्यासंभवेनोत्पत्तिशिष्टगुणबलीयस्त्वादेव
वैश्वदेवशब्दस्य कर्मनामधेयत्वम् । तथा हि——चातुर्मास्ययागस्य चत्वारि
पर्वाणि—वैश्वदेवः, वरुणप्रघासः साकमेधः शुनासीरीयश्चेति । तेषु प्रथमे
पर्वण्यष्टौ यागा विहिताः । ते च यथा—आग्नेयमष्टाकपालं निर्वपति, सौम्यं
चरुम्, सावित्रं द्वादशकपालम्, सारस्वतं चरुम्, पौष्णं चरुम्, मारुतं सप्त-
कपालम्, वैश्वदेवीमामिक्षाम्, द्यावापृथिव्यमेककपालम्, इति । एतेषामष्टानां
यागानां संनिधौ ‘वैश्वदेवेन यजेत ’ इत्याम्नायते । तत्र न तावन्मत्वर्थलक्षणाभया-
द्वैश्वदेवशब्दः कर्मनामधेयमिति वक्तुं शक्यते । विश्वे देवा देवता अस्येत्यर्थे
‘ साऽस्य देवता ’ ( पा० सू० ४।२।२४ ) इत्यनेन विश्वदेवशब्दाद्विहिते-
नाण्प्रत्ययेनैव मत्वर्थस्य यागस्योक्तत्वात् । नापि वाक्यभेदभयाद्वैश्वदेवशब्दः
कर्मनामधेयम् । विश्वदेवरूपैकदेवताविधानात् । नापि तत्प्रख्यशास्त्रान्नामत्वम् ।
यत्र हि विधित्सितो गुणोऽन्यतः प्राप्तस्तत्र तत्प्रख्यशास्त्रान्नामधेयत्वम् । अत्र
चाऽऽग्नेयादयोऽष्टौ यागाः प्रकृताः । तत्राऽऽमिक्षायागे यद्यपि विश्वे देवाः प्राप्ता
वैश्वदेवीमामिक्षेति तथाऽपि सप्तसु तेषामप्राप्तत्वात्तत्र तद्विधाने न तत्प्रख्यशास्त्र-
मन्यथेन तद्वशान्नामत्वं स्यात् । नापि तद्व्यपदेशान्नामत्वम् । तादृशस्य व्यप-
देशस्यानुपलम्भात् । तस्माद्वैश्वदेवशब्दस्य नामधेयत्व उक्तप्रकारचतुष्टयस्या-
निमित्तत्वादुत्पत्तिशिष्टगुणबलीयस्त्वमेव निमित्तम् । तथा हि—वैश्वदेवेन यजेते-
त्यत्र न तावदप्रकृतकर्मानुवादेन देवताविधानं संभवति । तेषामत्रानुपस्थितेः ।
नापि देवताविशिष्टकर्मान्तरविधानं संभवति । गौरवापत्तेः । अतोऽनेन प्रकृत-
कर्मानुवादेन देवता विधीयन्त इति वक्तव्यम् । तत्राऽऽमिक्षायागे विश्वदेवप्राप्तेः
सप्तसु यागेष्वनेन वाक्येन विश्वे देवा विधीयन्त इति प्राप्तम् । परं तु नैतत्सं-

त्वन्यायाच्च सर्वैरपि वेदान्तैस्तत्रैव भवितव्यमिति । तदसत् । 'तद्विजिज्ञासस्व तद्ब्रह्म' ( तै० ३।१।१ ) इत्यत्र ब्रह्मशब्दस्य 'यतो वा इमानि' ( तै० ३ । १ । १ ) इति यदुपबन्धबलेन जगत्कारणतया सह प्राप्तस्य धर्मिणोऽनुवादकत्वावगमेनाज्ञातज्ञापकत्वाभावात् । 'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्' ( छा० ६ । २ । १ ) । 'आत्मा वा इदमेक एवाग्र आसीत्' ( ऐ० १ । १ ) इत्यादिकारणवाक्यमेव तत्प्रापकम् । तत्र च स्वरसतः *सजातीयविजातीयस्वगतभेदनिषेध एव प्रतीयते ।

---

भवति । तेषामुत्पत्तिशिष्टाग्न्याद्यवरोधात् । आकाङ्क्षया हि संबन्धो भवति । आग्नेयादियागानां देवताकाङ्क्षा तूत्पत्तिशिष्टैरग्न्यादिभिरेव निवृत्तेति न तत्र विश्वदेवविधानं युक्तम् । तस्मादुत्पत्तिशिष्टगुणबलीयस्त्वाद्वैश्वदेवशब्दस्य कर्मनामधेयत्वं सिद्धम् । अयमेवोत्पत्तिशिष्टप्राबल्यन्याय इत्युच्यत इति ।

* सजातीयेति । एतदेवाभिप्रेत्याद्वैतामोदे श्रीमद्गुरुचरणैरुक्तम्—

अद्वितीयश्रुतिर्नैव सहते सद्वितीयताम् ।
येन केनापि धर्मेण सन्मात्रे परमात्मनि ॥
( अद्वै० पृ० १२० । श्लो० १७ ) इति ।

अयमाशयः—श्रुतिः 'येनाश्रुतं श्रुतम्' ( छा० ६ । १ । ३ ) इत्यनेन प्रतिज्ञातमर्थं मृदादिदृष्टान्तैः संभवदुक्तिकत्वेन प्रदर्श्य 'सदेव सौम्येदमग्र आसीत्, एकमेवाद्वितीयम्' ( छा० ६ । २ । १ ) इत्यनेन तदुपपत्तिमाह । अस्यां च श्रुतौ जगतः प्रागवस्था प्रतिपाद्यते । यद्धि प्रागवस्थापन्नं तदेवोपादानकारणमित्युच्यते । तदेवावस्थान्तरं प्राप्तं कार्यमिति व्यवह्रियते। उपादानकारणज्ञानेन च कार्यगतसत्यांशस्य ज्ञानं सुलभं भवतीति पूर्वोक्ता प्रतिज्ञा समुपद्यते। अयं चास्याः श्रुतेरर्थः—प्रतिज्ञाघटकेन येनेति यच्छब्देन यदुक्तं वस्तु तदेवात्र पूर्वप्रक्रान्तार्थानुरोधात्सच्छब्देनोच्यते । तथा 'अश्रुतम्' इत्यादिना यत्परिगृहीतं सर्वं तदत्रेदंपदेनोच्यते । तच्च स्थूलं सूक्ष्मं संनिकृष्टं विप्रकृष्टं प्रत्यक्षादियोग्यं तदयोग्यं च सर्वमेव ग्राह्यम्। विना प्रमाणं संकोचे मानाभावात् । अन्यथाऽगृहीतस्यात्र सत्कार्यत्वानुक्त्या ब्रह्मज्ञानेन तद्ज्ञानासंभवात्प्रतिज्ञा विहन्येत । इदंशब्दश्चात्रोद्देश्यसमर्पकः । सच्छब्दस्त्वेवकारयुक्तत्वाद्विधेयबोधकः । 'तच्छब्द एवकारश्च स्यादुपादेयलक्षणम्' इत्यभियुक्तोक्त्या तथात्वस्य

स एवोत्पत्तिशिष्टगुणो न गुणपूर्तिरिति विपरीतमेव × बलाबलम् । अस्तु वा ब्रह्मपदमेवाज्ञातज्ञापकं तथाऽपि नात्रोत्पत्तिशिष्टन्यायावतारः । उत्पत्तिशिष्टस्यापि भूरिबाधासमर्थत्वात् । अत एव पशुमालभेतेत्यादावुत्पत्तिवाक्ये देवतासंबन्धेनावगतमपि पशोर्हविष्ट्वं 'पशुं विशास्ति हृदयस्याग्रेऽवद्यति, अथ जिह्वाया अथ वक्षसः' इत्यादिहृदयादिहविष्ट्वावगमकानेकवाक्यविरोधात्त्यक्तम् । ब्रह्मपदे बृहन्तो ह्यस्मिन्गुणा इतिश्रुतिसाहाय्यवत्तत्रापि जुष्टं देवानामिदमस्तु हव्यमिति तदुपाकरणमन्त्रसाहाय्याविशेषात् । तत्र बहुवदानवाक्यविरोधात्त्यक्तमिति चेत् । अत्राप्यनेकाद्वैतागमविरोधाद्ब्रह्मशब्दस्य जीवभिन्नबृहद्गुणविशिष्टब्रह्मपरत्वस्य त्यक्तुं शक्यत्वात्कुतो न त्यागः । बृहन्तो ह्यस्मिन्गुणा इति श्रुतेः सगुणोपास्यब्रह्मप्रकरणस्थाया व्यावहारिकानेकगुणविशिष्टतया स्तुतिपरत्वेनाप्युपपत्तौ गुणनिष्ठबृहत्वस्य गुणिनि शब्दप्रवृत्तौ निमित्तत्वतात्पर्यकत्वकल्पनाया अयुक्तत्वात् । अन्यथा रूपत्वरसत्वादीनि निमित्तीकृत्य घटेऽपि रूपादिशब्दप्रयोगप्रसङ्गो दुर्वारः ।

किंचेश्वरः स्वयमेकः सन्नपि तस्मिन्नानन्दमयाधिकरणोक्तरीत्याऽन्नमयप्राणमयादिरूपेण नानात्वस्याऽऽनन्दमयोऽवयवी

---

निर्णयात् । एकमद्वितीयं चेति पदद्वयमपि विधेयसमर्पकमेव । अत्राप्युद्देश्यमिदंशब्दवाच्यमेव न तु सच्छब्दवाच्यम् । ननु सदेव सौम्येत्यनेनेदंशब्दार्थस्य सच्छब्दार्थेन सहाभेदबोधनादिदंशब्दार्थस्यात्रोद्देश्यत्वेऽपि सच्छब्दार्थ एवोद्देश्यमिति पर्यवसन्नमिति चेत् । सत्यम् । त्वदुक्तरीत्या सच्छब्दार्थस्य यद्यप्यार्थिकमुद्देश्यत्वं पर्यवस्यति तथाऽपि वाच्यवृत्त्या तन्नास्तीति तात्पर्यं बोध्यम् । अग्र इति च त्रिष्वपि विधेयेषु संबध्यते । तथा च वाक्यार्थः—हे सौम्य, इदं जगदुत्पत्तेः प्राक्सद्रूपमेवाऽऽसीत् । तथा जगदुत्पत्तेः प्रागेकमेवाऽऽसीत् । तथेदं जगदुत्पत्तेः प्रागद्वितीयमेवाऽऽसीदिति । अत्र प्रथमवाक्ये शून्यवादनिरासद्वारा सत्कारणवादः प्रस्थापितो भवति । द्वितीये चानेककारणवादनिरासद्वारैककारणवादः प्रस्थापितः । तृतीये तु सविशेषकारणवादनिरासद्वारा निर्विशेषकारणवादः प्रस्थापितः । एवं च कारणस्य भेदत्रयशून्यत्वं सिद्धं भवतीति बोध्यम् ।

× बलाबलेति । अयं च बलाबलविचारोऽग्रे टिप्पण्यां स्पष्टी करिष्यते ।

सन्नपि तस्मिंस्तदीयशिरःपक्षमध्यपुच्छावयवत्वस्य, गुहाधिकरणोक्तरीत्या कर्मफलभोक्तृरूपेणान्तरात्मरूपेण च नानात्वस्य, न संख्योपसंग्रहादित्यधिकरणोक्तरीत्या पञ्चजनरूपेण, न स्थानतोऽपीत्यधिकरणोक्तरीत्या विश्वतैजसप्राज्ञरूपेण च नानात्वस्येव चैकत्वादिविरुद्धस्य

> अङ्गाङ्गित्वेन भगवान्क्रीडते परमेश्वरः ।
> ऐश्वर्यान्न विरोधश्च चिन्त्यस्तस्मिञ्जनार्दने ॥

इत्यादिवचनेनाचिन्त्याद्भुतशक्तेः परमेश्वरस्यैश्वर्यवशात्संक्रमं बहुमानस्य तव मते सकलगुणपूर्णस्य ब्रह्मणोऽल्पगुणजीवभावोऽपि तदीयैश्वर्यवशादेव संभवतीति सुवचतया न जीववैलक्षण्यं तस्य ब्रह्मशब्देन सिध्यति । किंच 'नेह नानाऽस्ति किंचन' ( बृ० ४ । ४ । १९ ) इति स्वगतावतार्यवतारादिभेदनिषेधकश्रुतिबलात्तस्मिन्नेकत्वानेकत्वादिविरुद्धधर्मव्यवहारादिसमावेशाय भेदाभावेऽपि भेदाधीनो व्यवहारो यत्र दृश्यते यथा लोके नीलं सुगन्धि महदुत्पलमिति, वेदे 'सत्यं ज्ञानमनन्तम्' (तै०२।१।१)'आनन्दो ब्रह्म'(तै०३।६।१) इत्यादौ नीलगन्धादीनां ज्ञानानन्दादीनां च धर्मिणः परस्परस्माद्भेदाभावेऽप्यपर्यायशब्दैरुक्तिस्तन्निर्वाहाय वा विशेषमङ्गीकृत्य स्वयमेकोऽपि परमेश्वरो विशेषबलादनेक इत्यनेकविरुद्धव्यवहारविषय इति यथा त्वन्मते स्वी क्रियते तथा जीवब्रह्मभेदनिषेधकश्रुतिबलादेव तयोर्विरुद्धधर्मसमावेशाय विरुद्धानेकव्यवहाराय वा भेदस्थाने विशेषमद्वैतिरीत्या तत्कल्पकानाद्यज्ञानं वा स्वीकृत्य परमेश्वर एव विशेषबलाज्जीवभावेन संसरति जीवभावेन व्यवहारविषयो भवतीति कल्पयितुं सुशकमेव । नहीश्वरे स्वगतभेदनिषेधकश्रुतितो जीवेश्वरभेदनिषेधकश्रुतेः कश्चिद्विशेष उपपादयितुं शक्य इति न ब्रह्मशब्दमात्रेण जिज्ञास्यस्य जीववैलक्षण्यं निर्णेतुं शक्यम् ।

यत्तु नात्र ब्रह्मशब्देनैव जिज्ञास्यस्य जीवाद्भेदं प्रसाध्य सिद्धान्तोऽस्मत्संमतः, किंतु सर्वासां श्रुतीनां निखिलगुणाकरे विश्वाभिप्रायिनि भगवति जीवभेद एवैकमत्येन स्वारस्यं तात्प-

र्यैलिङ्गैः प्रसाध्याद्वैते तासामत्यन्तं वैरस्यं तत्तन्न्यायैरुपपाद्य ब्रह्मशब्दश्चाभ्युच्चयमात्रमिति समाधानं तत्पूर्वापरस्वसिद्धान्तग्रन्थविरुद्धम् । त्वन्मते ह्यद्वैतश्रुतीनां विरोधं परिहृत्य प्राधान्येन जीवब्रह्मभेदसाधनं पृथगुपदेशादित्यधिकरणे कृतम् । तथा हि तत्र त्वदीयं भाष्यम्—तत्त्वमसि, अहं ब्रह्मेत्यादिषु जीवस्य परेणाभेदः प्रतीयते, नित्यो नित्यानां चेतनश्चेतनानाम् । ( श्वे० ६।१३) । द्वा सुपर्णा ( मु० ३।१।१ ) इत्यादिषु भेदः,। अत उच्यते— पृथगुपदेशात् (ब्र० सू० २ । ३ । २८)।

भिन्नोऽचिन्त्यः परमो जीवसंघात्पूर्णः परो जीवसंघो ह्यपूर्णः । अतस्त्वसौ नित्यमुक्तो ह्ययं च बद्धो मोक्षं तत एवाभिवाञ्छेत् ॥ इति सोपपत्तिककौशिकश्रुतेर्भिन्न एव जीवः । तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् (ब्र० सू० २।३।२९) । ज्ञानानन्दादिब्रह्मगुणा एवास्य सारः स्वरूपमतोऽभेदव्यपदेशः। यथा सर्वगुणात्मकत्वाद्ब्रह्मण उच्यते सर्वं खल्विदं ब्रह्मेति । भविष्यत्पुराणे च—

> भिन्ना जीवाः परो भिन्नस्तथाऽपि ज्ञानरूपतः ।
> प्रोच्यते ब्रह्मरूपेण वेदवादेषु सर्वशः ॥ इति।

तत्रत्यतत्त्वप्रकाशिकायामपि—जगत्कारणे ब्रह्मणि श्रुतीनां समन्वयो निरूपितः । स चाद्वैतश्रुत्या भेदश्रुतेर्विरोधेऽनुपपन्नः स्यादित्यवश्यमसौ निरसनीय इत्युक्त्वा जीवविषये श्रुतिविवादं तस्य ब्रह्मभिन्नत्वाभिन्नत्वे संशयबीजं प्रदर्श्य तत्त्वमसीति प्रतीकं धृत्वा परमात्माभिन्न एव जीव इति पूर्वपक्षः, तत्त्वमसीत्यादिश्रुतेः । न च विपर्ययेऽप्यस्ति श्रुतिरिति वाच्यम् । अद्वैतश्रुतेः षड्विधतात्पर्यलिङ्गयुक्ताया बलवत्त्वादेकमेवाद्वितीयमित्युपक्रमात्तत्त्वमसीत्युपसंहारादित्यादिना षड्विधतात्पर्यलिङ्गानि प्रदर्श्य, इति प्राप्ते सिद्धान्त इत्येतत्सूत्रमवतार्य व्याचष्टे—अत इति । पृथगेव जीवः परमात्मनः, भिन्नोऽचिन्त्य इति श्रुतेः। न चास्ति विपर्ययेऽपि श्रुतिरिति वाच्यम् । विरुद्धधर्माधिकरणयुक्तियुक्तत्वेन भेदश्रुतेः प्राबल्यादिति भावः । नन्वेवमद्वैतश्रुतेर्निर्विषयत्वेनाप्रामाण्यं प्रसक्तमित्याशङ्कां परिहरन्सूत्रमुत्तरस्य व्याचष्टे—

तदिति । नाद्वैतश्रुतेरप्रामाण्यापत्तिः । परमात्मगुणसदृशानन्दादि-स्वरूपत्वेन जीवस्य गौण्या वृत्त्याऽभेदव्यपदेशोपपत्तेः । यथा खलु सकलजगद्गुणसदृशगुणात्मकत्वेन परमात्मनि जगदिति व्यपदेशः 'सर्वं खल्विदं ब्रह्म' ( छा० ३ । १४ । १ ) इत्यादौ तथैवेति भाव इति ।

अप्राधान्येन जीवब्रह्मभेदसाधनं च किंचित्किंचिद्भेदवाक्यमा-लम्ब्य तत्र तत्राधिकरणे । तथा च यद्यत्र सकलद्वैताद्वैतश्रुतिप्रा-बल्यदौर्बल्यचिन्तया सर्वप्रकारेण तत्साधनमस्मिन्नाधिकरण एव क्रियेत तदा तत्तदधिकरणं तत्र तत्र तत्साधनं च निष्फलमेव स्यादित्यस्मिन्नधिकरणे ब्रह्मशब्देनैव सिद्धान्तस्त्वन्मत इति त्वयाऽङ्गीकर्तव्यम् । तदिदमानन्दमयाधिकरणे 'भेदव्यपदेशाच्च' ( ब्र० सू० १।१।१७ ) इति सूत्रस्य पौनरुक्त्यपरिहारार्थके

न जीवभेदसूत्राणां शङ्क्याऽत्र पुनरुक्तता ।
वाक्यान्तरद्योतकत्वात्पृथगित्यत्र पूर्णता ॥

इत्यनुव्याख्यानश्लोके स्पष्टं तच्छ्लोकं व्याचक्षाणेन न्यायसु-धाकृताऽपि तथैव व्याख्यातम् । तथा हि तत्र सुधाग्रन्थः—अत्र शास्त्रे तत्र तत्र प्रकरणे ह्यैक्यविवक्षायां चोदितायां तत्तद्ग-तभेदवाक्यद्योतनेन सूत्रेषु भेदसमर्थनं क्रियते । अतस्तात्पर्य-भेदान्न पुनरुक्तिः शङ्क्या । तथा हि—जिज्ञासावाक्येष्वभेद-शङ्कायां तद्गतब्रह्मशब्देन भेदसमर्थनम् । जिज्ञास्यस्य ब्रह्मणो जीवत्वे शङ्किते तत्पूर्वोक्तवाक्योक्तलक्षणेन भेदसाधनम् । एव-मेव 'भेदव्यपदेशाच्चान्यः' ( ब्र० सू० १।१।२१ ) इत्यादावपि पुनरुक्ततादोषः परिहरणीयः । इयांस्तु विशेषः—अन्नमयादि-शब्दा विकारार्थमयट्प्रत्ययानुरोधाज्जीववाचिनः । तेषु ब्रह्म-शब्दप्रयोगस्तु ब्रह्माभेदविवक्षयेति शङ्किते तत्प्रकरणगतेन 'स यश्चायं पुरुषे' ( तै० २।८।५ ) इति भेदव्यपदेशेन प्रत्यव-स्थानमिति ।

अपि चात्र आनन्दतीर्थीयमते निरूपणीयं न्यायजातमपि न जीवेशयोर्भेदं व्यवस्थापयितुं प्रभवति । तथा हि तत्र तत्र न्यायाः प्रत्यक्षं तावज्जीवेशयोर्भेदे प्रमाणम् । यद्यप्यनवगतेश्वरस्य पुंसः स्वात्मनि तद्भेदो न प्रत्यक्षस्तथाऽपि शास्त्रावगतसर्वज्ञत्वसर्व-

शक्तिकत्वादिमदीश्वरस्य स्वात्मानं च तद्विरुद्धाल्पज्ञत्वाल्पशक्तिकत्वादिधर्मकं साक्षिणाऽनुभवतः स प्रत्यक्ष एव। यो हि यमर्थमधिगम्य तद्विरुद्धधर्माणं यमर्थं पश्यति स तस्माद्भेदं प्रत्यक्षयतीति व्याप्तेः शास्त्रीयलक्षणज्ञानसाचिव्येन रत्नतत्त्वसाक्षात्कार इव शास्त्रीयज्ञानसाचिव्येन स्वात्मनि तद्भेदसाक्षात्कारो नानुपपन्नः। एवं प्रत्यक्षागमावगतविरुद्धधर्मवत्त्वेन दहनतुहिनवत्तयोर्भेदोऽनुमातुं सुशक एवेत्यनुमानमपि द्वितीयं तत्र प्रमाणम्। विरुद्धधर्माधिकरणत्वोपपत्तिसहिता भिन्नोऽचिन्त्य इत्यादिश्रुतिरपि तत्र तृतीयं प्रमाणम्। न चाद्वैतश्रुतिविरोधादुक्तश्रुतेरन्यथानयनं शङ्क्यम्। भिन्नोऽचिन्त्य इत्यादिसोपपत्तिकश्रुतिविरोधादुपजीव्यप्रत्यक्षविरोधाच्च दुर्बलाद्वैतश्रुतीनां गौणाभेदपरत्वात्। न चोपक्रमादिभिरद्वैत एव तासां श्रुतीनां तात्पर्यावधारणाद्भेदश्रुतिर्व्यावहारिकभेदपरेति वाच्यम्। उपजीव्यप्रत्यक्षादिविरुद्धे तात्पर्यकल्पनाया एवानुन्मेषाद्गृह्यमाणज्ञानस्य स्वतःप्रामाण्याभ्युपगमेन प्रमाणत्वेनैव ग्रहात्प्रथमोपस्थितप्रत्यक्षप्रामाण्यस्वारस्येनाऽऽगमस्वारस्यं बाधित्वा गौणार्थताया एवाद्वैतश्रुतेर्युक्तत्वाच्च। अत एव तत्त्वप्रकाशिकायां तद्गुणसारत्वादित्यधिकरणे तत्त्वमस्यादिवाक्यानां गौणाभेदपरत्वं व्याख्याय गौणी वृत्तिरमुख्येति चेत्। सत्यम्। मुख्यार्थासंभवादाश्रीयत इत्याद्युक्त्वोपजीव्यप्रमाणाविरुद्धं चाद्वैतबोधनमित्युक्तम्। तत्रेदमुच्यते—

> उपलभ्याप्सु चेद्गन्धं केचिद्ब्रूयुरनैपुणाः।
> पृथिव्यामेव तं विद्यादपो वायुं च संश्रितम्॥

इति वचनविरुद्धस्य सुरभि जलं सुरभिः पवन इत्यादिप्रत्यक्षस्य पार्थिवावयवसंसर्गेणेव कृशोऽहं स्थूलोऽहं मनुष्योऽहं कुणिरहमिति बहुषु दृष्टाप्रामाण्यकप्रत्यक्षसजातीयस्याहमल्पज्ञोऽल्पशक्तिमानहं कर्ता भोक्ता सुखी दुःखीत्यादिप्रत्यक्षस्यान्तःकरणतादात्म्येन तदुपाधिकधर्मावगाहिनया भ्रमत्वोपपत्तौ तदनुरोधेन निरस्तसमस्तदोषाशङ्कानामुपक्रमोपसंहारैकरूप्यादिभिस्तात्पर्यनिर्णायकैर्लिङ्गैर्द्वैत एव गृहीततात्पर्याणां तत्त्वम-

त्यादिवाक्यानाम्, तथा बुद्ध्यादयोऽन्तःकरणधर्मा एव तदुपाधिकजीव एव तद्व्यवहारो जीवस्त्वसङ्ग एवेत्येवं बोधयताम् 'असङ्गो ह्ययं पुरुषः (बृ० ४।३।१५), असङ्गो न हि सज्यते (बृ० ३।९।२६), कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव (बृ० १।५।३), स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीव' (बृ० ४।३।७)।

निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः ।
दुःखाज्ञानमला धर्माः प्रकृतेस्ते न चाऽऽत्मनः ॥

इत्यादिश्रुतिस्मृतिवाक्यानां च गौणार्थत्वस्यान्यार्थत्वस्य चायुक्तत्वात् ।

प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम् ।

इति स्मृतेश्च प्रत्यक्षस्यैवाऽऽगमापेक्षया दुर्बलत्वाच्च न प्रत्यक्षानुरोधेनाऽऽगमान्यथानयनं युक्तम् । उपजीव्यप्राबल्यन्यायेनाऽऽगमस्य गौणार्थकत्वकल्पनं तु न युक्तम् । तादृशसामान्यन्यायस्य 'उपजीव्योपजीवकयोरनुपदेशोपदेशत्वे विपरीतं बलाबलम्' इति विशेषन्यायेन बाधात् । न चाप्रयोजकत्वं शङ्क्यम् । अनुपदेशस्य दुष्टत्वसंभवात् । दोषश्च—अप्रामाण्यशङ्काकलङ्कितत्वं क्वचिद्विलम्बितप्रवृत्त्यादिकम् । तद्यथा—*कुण्डपायिनामयने श्रुतस्य यो होता सोऽध्वर्युरिति वाक्यस्य विरु-

---

* कुण्डपायिनामयने श्रुतस्येति । अयमाशयः—अग्नीषोमीयपशौ 'परिवीरसि' इत्यनेन करणमन्त्रेणाध्वर्युर्यूपस्य रशनया परिव्याणं (वेष्टनं) करोति तदानीं क्रियमाणं तत्परिव्याणं होता 'युवा सुवासाः' इत्यनेन मन्त्रेणानुवदति । तदेतदुभयं प्रकृतिवद्विकृतिर्भवतीति चोदकपरम्परया कुण्डपायिनामयने प्राप्तम् । तत्राध्वर्योर्होतुश्च समास (ऐक्यम्) आम्नातः 'यो होता सोऽध्वर्युः' इति । तत्र चासंजातविरोधन्यायेन न होतृशब्दो लाक्षणिकः किंत्वध्वर्युशब्द एव तत्कार्ये लाक्षणिकः । एवं च होतारमनूद्याध्वर्युत्वविधानादध्वर्युकार्यं होत्राऽनुष्ठेयम् । ततः 'परिवीरसि' इत्यनेन करणमन्त्रेण होता यूपपरिव्याणं कुर्वीत । तदानीं स्वस्य चोदकतः प्राप्तं हौत्रमपि होता न त्यजेत् । नहि त्यागहेतुं कंचिन्निषेधं पश्यामः । तस्मात्क्रियमाणं तत्परिव्याणम् 'युवा

द्वार्थकयोर्हौत्राध्वर्युशब्दयोः सामानाधिकरण्यनिर्वाहार्थं प्रथमश्रुतहोतृशब्दानुसारेणाध्वर्युशब्देन लक्षणयोपस्थितेऽध्वर्युकार्ये होतृविधायकत्वे स्थिते यूपपरिव्याणे करणस्य परिवीरसीति मन्त्रस्यान्यत्राध्वर्युप्रयोज्यस्याप्यत्र वचनेन होत्रा प्रयोगः प्राप्नोति। अतिदेशानुसारेण च होतृकार्यान्तर्गते युवा सुवासा इति वर्तमानतानुवादिमन्त्रे होता प्राप्नोति। न चोभावपि मन्त्रौ होत्रा प्रयोक्तुं शक्यौ। परिव्याणसंकल्पमारभ्य तत्समाप्तिपर्यन्तः कृत्स्नोऽपि वर्तमानः काल इति तावन्तं कालं वर्तमानतानुवादिमन्त्रः प्रयोक्तव्यः। परिव्याणाव्यवहितपूर्वकाले च करणमन्त्रः समापनीय इत्येककालसमावेशात्तत्रान्यतरबाधेऽवश्यं कर्तव्ये वर्तमानतानुवादिमन्त्रबाध एवाऽऽश्रितः पूर्वतन्त्रे। *तत्र होतुरतिदेशस्तत्कार्यस्य प्रत्यक्षेण यो होता सोऽध्वर्युरित्य-

---

सुवासाः' इत्यनेन मन्त्रेण होताऽनुवदेदिति प्राप्ते समाधीयते—द्वयोरध्वर्युहोत्रोरुचितं कर्मद्वयमेको होता युगपत्कर्तुं न शक्नोति। परिव्याणसंकल्पमारभ्य तत्समाप्तिपर्यन्तम् 'युवा सुवासाः' इति मन्त्रस्य प्रयोक्तव्यत्वात्परिव्याणाव्यवहितपूर्वकाले 'परिवीरसि' इति मन्त्रस्य समापनीयत्वाच्च युगपद्द्वयोरसंभवात्। तस्मादन्यतरस्यावश्यंभाविनि त्यागे सति चोदकतः प्राप्तं हौत्रमेव त्यजेत्। आध्वर्यवं तु 'यो होता सोऽध्वर्युः' इत्यनेन प्रापितत्वादनुष्ठेयमिति। तथा चोक्तम्—

> यो होताऽध्वर्युरेष स्यादित्याध्वर्यवमाचरन्।
> हौत्रं कुर्यान्न वा त्यागहेत्वभावात्करोति तत्॥
> होतैको युगपत्कर्मद्वयं कर्तुं नहि प्रभुः।
> त्यजेच्चोदकतः प्राप्तं हौत्रं वाचनिकार्थकृत्॥ इति।

* तत्र होतुरतिदेश इति। प्रत्यक्षेण 'यो होता सोऽध्वर्युः' इत्यनेन तत्कार्यस्य होतुरतिदेश उपजीव्य इत्यन्वयः। अयमर्थः—अध्वर्युकार्ये होतृसंबन्धविधायकं यत् 'यो होता सोऽध्वर्युः' इति प्रत्यक्षं वचनं तदनुरोधेन विकृतौ 'प्रकृतिवद्विकृतिः' इति यो होतुरतिदेशः सोऽध्वर्युकार्यस्योपजीव्यः। यदा ह्यतिदेशेन विकृतौ होतुः प्राप्तिस्तदैवाध्वर्युकार्ये होतृसंबन्धविधानं संभवति नान्यथा। विकृतौ होतृप्राप्त्यर्थं च प्रकृतौ क्रियमाणं होतृकार्यमुपजीव्यम्।

नेनोपजीव्यः। प्राप्तोभयानुवादेन संबन्धमात्रविधात्। होतृप्राप्त्यर्थं होतृकार्यमुपजीव्यम् । पदार्थानां कार्यमुखेनैव विकृतिषु प्राप्ति-स्वीकारात् । न चात्र सावकाशनिरवकाशयोर्निरवकाशं बलीय इति न्यायस्य प्रवृत्तिः । वचनस्य परिवीरसीति मन्त्रातिरिक्त आध्वर्यवे सावकाशत्वात् । अत उपजीव्यस्यापि विलम्बितप्रवृ-त्तिकत्वेन शीघ्रप्रवृत्तिकेनोपदेशेन बाध इत्येव स्वीकृतम् । एवं प्रकृतेऽपि संभावितप्रामाण्यकस्य प्रत्यक्षस्योपदेशेन तद्विरुद्धेन बाध एव स्वीकार्यः ।

यदपि प्रत्यक्षज्ञानप्रामाण्यस्य प्राथम्यं तत्प्राबल्ये प्रयोजकत्वेनाभिहितम् । तदपि न सत् । तत्रैव प्रथमस्य प्राबल्यं यत्रोत्तरेण तदपेक्ष्यते । यथा—*प्रजापतिर्वरुणायाश्वमनयत्, स

---

स्वकार्यद्वारैव विकृतौ होत्रादिपदार्थानां प्राप्तिस्वीकारात् । एवं च होतुरतिदेशो विलम्बितप्रवृत्तिकः, अध्वर्युकार्ये होतृसंबन्धविधायकं च प्रत्यक्षत्वाच्छीघ्रोप-स्थितिकम् । तथा चोपजीव्यस्याप्यतिदेशस्य विलम्बितप्रवृत्तिकत्वाच्छीघ्रोप-स्थितिकेन संबन्धविधायकेन बाधस्तद्वत्प्रकृतेऽपीति ।

* प्रजापतिर्वरुणायेति । तन्निरवपदित्यस्याग्रे 'ततो वै स वरुणपाशाद-मुच्यत' इति चरमवाक्यं बोध्यम् । अयमर्थः—यज्ञसमये प्रजापतिर्वरुणायाश्व-रूपां दक्षिणामनयन्नाम दत्तवान् । स च दाता प्रजापतिः स्वकीयां वरुणदेवतां जलोदररोगप्रदां प्राप्तवान् । तेन च रोगेण ग्रस्तः प्रजापतिर्विदीर्णो भूत्वा रोग-परिहारायेष्टिं कृत्वा रोगादमुच्यतेति । अस्माच्चोपक्रमवाक्याद्योऽश्वस्य दाता तत्कर्तृकेष्टिरिति प्रतीयते । 'यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपाला-न्निर्वपेत्' इत्युपसंहारवाक्यात्तु प्रतिग्रहीतृकर्तृकेष्टिरिति प्रतीयते । तत्र किं दात्रेष्टिः कर्तव्याऽऽहोस्वित्प्रतिग्रहीत्रेति संशये दात्रैवेष्टिः कार्येति सिद्धान्तः । तथा हि पूर्वोक्तोपक्रमवाक्येऽसंजातविरोधन्यायेन दातुरिष्टिरिति निश्चये तदैक्यानुरोधादुप-संहारवाक्ये प्रतिग्रहशब्दो णिजर्थान्तर्भावेण दानपरः । एवमेव 'वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति' इत्यत्रापि प्रतिग्रहशब्दो दानपरो बोध्यः । एवं च प्रजापतिर्वरुणायेत्युपक्रमवाक्यमपेक्ष्यैव यावतोऽश्वानित्युपसंहारवाक्यस्य श्रवणादुपक्रमवाक्यस्यैव प्राबल्यमिति भावः । तथा चोक्तं माधवीये—

यावतः प्रतिगृह्णीयादश्वांस्तावत्य इष्टयः ।
प्रतिग्रहीतुर्दातुर्वा स्यादाद्योऽस्तु यथाविधि ॥
असंजातविरोधित्वर्थवादाद्दातुः प्रजापतेः ।
इष्टिः श्रुता ततो दातुर्णिजर्थेऽपि विधिं नयेत् ॥ इति ।

स्वां देवतामाच्छंत्, स पर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत्, तन्निरवपत् । इत्युपक्रमेणासंजातविरोधिना दातुरिष्टिरिति बोधे सत्येकवाक्यतापन्नानां संभूयैकार्थप्रतिपादकत्वामिति व्युत्पत्त्या तमपेक्ष्यमाणस्य यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेदिति तदुपसंहारस्य तद्विरोधेन प्रतिगृहीतुरिष्टिरित्येवंरूपार्थबोधकत्वानुपपत्त्या णिजन्तार्थान्तर्भावेण दातुरिष्टिरित्येवंरूपार्थबोधकत्वमुपेयते । अनपेक्ष्यत्वे तु स्वप्रमाणानुसारेण लब्धात्मकस्योत्तरज्ञानस्यैव प्राबल्यम् । यथा—

*बहिष्पवमानार्थं बहिर्निर्गच्छतामाम्नातान्वारम्भाणां कृताश्चन्नि-

---

+ बहिष्पवमानार्थमिति । ज्योतिष्टोमे श्रूयते—' यद्युद्गाताऽपच्छिद्येतादक्षिणो यज्ञः संस्थाप्यः । अथान्य आहृत्यस्तत्र तद्दद्याद्यत्पूर्वस्मिन्दास्यं स्यात् । यदि प्रतिहर्ताऽपच्छिद्येत सर्वस्वं दद्यात् ' इति । अयमर्थः—प्रातःसवने बहिष्पवमानेन स्तोष्यमाणा ऋत्विजः शालाया बहिः प्रसर्पन्ति । तदानीमेकस्य पृष्ठतोऽन्य इत्येवं पिपीलिकावत्पङ्क्त्याकारेण गन्तव्यम् । तत्र पुरतो गन्तुः कच्छं गृहीत्वैव पृष्ठतोऽन्यो गच्छेत् । एवं सति यदि प्रमादादुद्गाता गृहीतं कच्छं मुञ्चेत्तदा दक्षिणामदत्त्वा प्रक्रान्तो यज्ञः समापनीयः । तं समाप्य पुनरपि स यज्ञः प्रयोक्तव्यः । तस्मिन्प्रयोगे पूर्वं यद्दित्सितं द्रव्यं तद्दद्यात् । यदि प्रतिहर्ता मुञ्चेत्तदा तस्मिन्नेव प्रयोगे सर्वस्वं दद्यादिति । ननु यद्युद्गातृप्रतिहर्तारौ युगपन्मुञ्चेतां तदानीमुक्तं प्रायश्चित्तनिमित्तं विहन्येत । एकैककर्तृको ह्यपच्छेदो निमित्तत्वेन श्रुतः । अयं तूभयकर्तृकत्वान्नैकेन व्यपदेष्टुं शक्यते । तथा च श्रूयमाणस्य निमित्तस्य विहतत्वान्नास्ति प्रायश्चित्तमिति चेत् । अत्रोच्यते— द्वौ ह्यत्रापच्छेदौ । तयोरेकैकस्यैकैक एव कर्ता । एवं च निमित्तस्य नास्ति विघातः । कालमात्रैक्यात्त्वेकापच्छेदभ्रान्तिः । तस्मान्निमित्तविघाताभावादस्ति प्रायश्चित्तमिति सिद्धान्तः । नन्वस्तूक्तरीत्या निमित्तसत्त्वात्प्रायश्चित्तंतथाऽप्यदक्षिणत्वसर्वस्वदानयोरन्योन्यविरोधान्निमित्तद्वयसंनिपाते प्रायश्चित्तद्वयसमुच्चयस्याऽऽवश्यकत्वाच्च प्रयोगभेदेन व्यवस्था कर्तव्या । तथा चापच्छेदयुक्ते प्रथमप्रयोगे दक्षिणा न दातव्या । उत्तरप्रयोगे तु सर्वस्वं दातव्यम् । सत्यपि प्रयोगभेदे कर्मण एकत्वात्समुच्चयो युक्त इति चेत् । न । उत्तरप्रयोगेऽपच्छेदाभावादसति निमित्ते प्रायश्चित्तस्यायुक्तत्वात्प्रथमप्रयोग एव निमित्तद्वयसत्त्वात्प्रायश्चित्तद्वयं प्राप्तम् । तच्चान्योन्यविरुद्धत्वाद्विकल्प्यते ।

मित्याद्विच्छेदे प्रायश्चित्तमाम्नायते—यद्युद्गाताऽपच्छिद्येतादक्षिणं तं यज्ञं परिसमाप्य पुनर्यजेत, तत्र तद्दद्याद्यत्पूर्वस्मिन्दास्यं स्यात्। यदि प्रतिहर्ता सर्ववेदसं दद्यादिति । तत्र विरुद्धयोः क्रमेणापच्छेदे कर्तव्यतया प्राप्तयोः समुच्चयासंभवादन्यतरबाधेऽवश्यं स्वीकर्तव्ये पूर्वनैमित्तिकज्ञानानपेक्षेण स्वप्रमाणप्राप्तेनोत्तरनैमित्तिककर्तव्यताज्ञानेन पूर्वनैमित्तिककर्तव्यताया एव बाध आश्रितः। लोकेऽपि नेदं रजतमिति ज्ञानेन पूर्वस्येदं रजतमिति ज्ञानस्य बाधदर्शनाच्चोत्तरात्मज्ञानेन प्रत्यक्षप्रामाण्यज्ञानस्य बाध एव। सिद्धे बाधे व्यावहारिकप्रामाण्यमुपजीव्यम् । तच्च न बाध्यते । आगमेन बाध्यते च तात्त्विकं प्रामाण्यम् । तच्च नोपजीव्यमिति वक्तुं शक्यत्वाच्च नोपजीव्याविरोधः । अधिकमद्वैतासिद्धितदीयटीकादौ प्रत्यक्षबाधोद्धारे द्रष्टव्यम् ।

यत्तु मम देह इति भेदग्रहे सत्यहं मनुष्य इत्याद्यभेदग्रह एव न संभवतीति तद्दृष्टान्तेनाहं कर्तेत्यादिप्रत्ययानामप्रमाण्यशङ्काकलङ्कितया श्रुतिदौर्बल्योक्तिरयुक्तैव । न च मनुष्योऽहमित्यभेदभ्रमाभावे कथं सामानाधिकरण्यव्यवहारः। शब्दाभिलापरूपो मनुष्योऽहमिति व्यवहर्तव्यज्ञानाभावे व्यवहारानुपपत्तेरिति वाच्यम् । नायं व्यवहारः सामानाधिकरण्यावगाही किंतु शरीरसंबन्धावगाही । अर्शआद्यच्संभवात् । अत्रश्च 'तदस्यास्त्यस्मिन्निति मतुप्' ( पा०सू०५ । २ । ९४ ) इति विहि-

---

ननूद्गातृप्रतिहर्तृकर्तृकयोरपच्छेदयोर्यौगपद्ये समानबलत्वादस्तु प्रायश्चित्तयोर्विकल्पः। यदा तु क्रमेणापच्छेदौ स्यातां तदानीमसंजातविरोधित्वेन प्रबलत्वाच्छ्रुतिलिङ्गादाविवोत्तरस्य प्रवृत्तिर्निरुध्यते । एवं च प्रथमापच्छेदनिमित्तकमेव प्रायश्चित्तमनुष्ठेयं न तु द्वितीयापच्छेदनिमित्तकमिति चेत् । शृणु । श्रुतिलिङ्गादावुत्तरस्य पूर्वसापेक्षत्वात्पूर्वेण विरोधे सत्युत्तरस्योत्पत्तिरेव नास्ति । इह तु ज्ञानद्वयमन्योन्यनिरपेक्षं वाक्यद्वयादुत्पद्यत इति नास्त्युत्पत्तिप्रतिबन्धः । उत्पद्यमानं चोत्तरज्ञानं स्वविरुद्धस्य पूर्वज्ञानस्य बाधेनैवोत्पद्यते । ननु निरपेक्षत्वस्य समानत्वात्पूर्वज्ञानमेवोत्तरस्य बाधकमस्त्विति चेत् । न । पूर्वज्ञानोत्पत्तिदशायामविद्यमानस्योत्तरज्ञानस्य बाध्यत्वायोगात् । उत्तरकाले तु स्वयंबाधितं पूर्वज्ञानं कथमुत्तरस्य बाधकं स्यात् । न वाऽन्यत्किंचिदुत्तरस्य बाधकं पश्यामः । तस्मादुत्तरकालीनापच्छेदनिमित्तकमेव प्रायश्चित्तमनुष्ठेयमित्याशयः ।

त्ममत्वर्थीयतया संबन्धवाचकत्वमुपपन्नमेवेति । तन्न सम्यक् । मम शरीरमिति भिन्नरूपेण भेदग्रहस्य मनुष्योऽहमिति भिन्नरूपेणाभेदग्रहविरोधित्वाभावस्य पूर्वमेवोक्तत्वात् । मनुष्योऽहमित्यादावर्श आद्यच्प्रत्ययसंभवेऽपि, अहं गच्छामि, अहं कुणिरित्यादौ तदसंभवेन तत्र भ्रमत्वावश्यकत्वे तद्दृष्टान्तेनाहं कर्तेत्यादिप्रत्ययानामप्रामाण्यशङ्काकलङ्कितत्वोपपत्तेः । मनुष्योऽहमित्यादावप्यर्शआद्यच्प्रत्यये ÷ यलोपापत्तेश्च । अधिकमन्यत्रानुसंधेयमिति न प्रत्यक्षेण जीवब्रह्मणोर्भेदसिद्धिः ।

नापि कर्तृत्वाकर्तृत्वाल्पज्ञत्वसर्वज्ञत्वादिविरुद्धधर्माधिकरणत्वादिलिङ्गकानुमानेन तत्सिद्धिः । जीवेश्वरयोः पक्षयोर्हेत्वसिद्धेः । कामः संकल्प इत्यादिसर्वं मन एवेत्यन्तश्रुत्या मम मनः कामयत इच्छतीत्यादिप्रत्यक्षेण चानुभवेन कामादीनामन्तःकरणधर्मत्वसिद्धौ यत्किंचिद्विषयाकारेण परिणममानपरिच्छिन्नाल्पान्तःकरणोपाधिकत्वेन जीवेऽल्पज्ञत्वकर्तृत्वादिव्यवहारस्येन्द्रो मायाभिः पुरुरूप ईयत इत्यादिश्रुत्येश्वरस्यापि मायावशादेव पुरुरूपत्वोक्त्या सर्वविषयाकारेण परिणममानापरिच्छिन्नमायोपाधिकत्वेनैवेश्वरे सर्वज्ञत्वादिव्यवहारस्य संभवात् । एकत्रैव चैतन्येऽन्तःकरणमायाद्युपाधिभेदाद्यवच्छेदेन वा सर्वज्ञत्वाल्पज्ञत्वादिधर्मस्वीकारसंभवेन तेषां विरोधाभावाच्च । न चैवं सति वृक्षे संयोगतदभावयोर्द्वयोरिव जीवे सर्वज्ञत्वाद्यनुभवोऽपि स्यादिति चेन्न जीवे सतामाधिकानन्दादीनां जीवाश्रितावरणेन तदननुभवस्याल्पानन्दाद्यनुभवस्य च त्वया पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगादित्यधिकरणे सिद्धान्तितत्वेन तन्न्यायेनानाद्यनिर्वचनीयाविद्यया स्वरूपावरकया जीवे सतामेव सर्वज्ञत्वादीनामननुभवस्याल्पज्ञत्वानुभवस्य चोपपादयितुं शक्यत्वात् । तव मते हि तत्त्वप्रकाशिकायामीश्वरे श्रुतिसमन्वयासिद्ध्यर्थं न जीवो ज्ञानानन्दादिरूपः, अनानन्दादिरूपत्वश्रुतेस्तद्रूपेणाननुभवाच्चेति पूर्वपक्षयित्वा सिद्धान्तितम् । भवन्त्येवाऽऽ-

÷ यलोपापत्तेश्चेति । आपत्यस्य च तद्धितेऽनाति ( पा० सू० ६ । ४ । १५१ ) इत्यनेनेति भावः ।

नन्दादिरूपो जीवः । न चोक्तश्रुतियुक्तिविरोधः । यथा पुरुषयो- पिदादीनामपत्योत्पत्तिशक्तिस्वरूपयोग्यत्वेऽपि कालतस्तदभि- व्यक्तेर्नायं पूर्वं पुमानिदानीं तु पुमानित्यादि युज्यत एवं जीव- स्वरूपत्वेन मुक्तेः पूर्वमपि सतो ज्ञानानन्दादेरीश्वरप्रसादेनाभि- व्यक्तिनिमित्तेनाऽऽनन्दी भवतीत्यादिव्यपदेशोपपत्तेः प्रागनभि- व्यक्तत्वेनानुभवाभावसंभवात्तदभिव्यक्त्यर्थं च मुमुक्षूणां प्रयत्नो- पपत्तेः । न चाऽऽवरणानुपपत्तिः । ज्ञानाभावातिरिक्ततन्निमित्ता- विद्याभ्युपगमादिति । सर्वमिदमस्मत्संमतभावरूपानाद्यज्ञानवृत्ता- वनुवाद एव । तदनिर्वाच्यत्वादिकं परं त्वया नेष्यते तच्च सा- धितं प्राक्प्रमाणप्रदर्शनेन । 'तत्त्वमसि' । (छा० ६।८।७ ) 'अहं ब्रह्मास्मि ' ( बृ० १।४।१० ) इत्याद्यनेकाद्वैतश्रुतिबाधितत्वाच्च नोक्तानुमानेन जीवब्रह्मणोर्भेदसिद्धिः ।

यच्च विरुद्धधर्माधिकरणत्वयुक्तियुक्तत्वेन भिन्नोऽचिन्त्य इति प्रबलश्रुतेरभेदश्रुतीनां गौणार्थत्वकल्पनम् । तदपि मन्दम् । जीवे- श्वरयोर्विरुद्धधर्माधिकरणत्वाभावस्योक्तत्वात् । जीवो ब्रह्माभि- न्नस्तज्ज्ञाननिवर्त्यतदज्ञानप्रयुक्तकर्तृत्वाद्यध्यासाश्रयत्वादित्यादियु- क्तिसाहित्यस्याद्वैतश्रुतीनां रूत्वाद्भेदश्रुतेर्बलवत्त्वासिद्धेः । व्याव- हारिकभेदपरत्वेन भेदश्रुतेः सावकाशाया निरवकाशाद्द्वैतश्रुतितो दुर्बलत्वाच्च । किं च विरुद्धधर्माधिकरणत्वेन जीवेश्वरयोर्भेदसाधनं न त्वया कर्तुं शक्यम् । परस्परानभिमतखाण्डवदाहप्रशमनाभ्यामा- राध्यत्वाराधकत्वाभ्यां च विरुद्धगुणाभ्यां युक्तयोराखण्डलार्जु- नयोरंशांशिनोर्निर्भेदत्वस्य 'एक आत्मनः शरीरे भावात्' (ब्र० सू० ३।३।५३) इत्यधिकरणे त्वन्मते व्यवस्थापनात् । तत्र चेत्थं त्वदीयं भाष्यम्—अंशांशिनोरेकत्वमेव । अंशिकर्मनिर्मितशरीरे एवांशस्य भावात् । व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् । ज्ञानादिभेदे विद्यमानेऽपि नांशांशिनोः पृथग्भाव एव । तदुपास- नादिभोगादंशस्य । परमसंहितायां च—

अंशिनस्तु पृथग्जाता अंशास्तस्यैव कर्मणा ।
पुनरैक्यं प्रपद्यन्ते नात्र कार्या विचारणा ॥ इति ।

एतेन जीवब्रह्मणोर्भेदाभावे ब्रह्मगतभोगानां जीवेऽप्यनुसंधानं

स्यादिति परोक्तं दूषणं निरस्तम्। त्वन्मते भेदाभावेऽप्यर्जुनगते-न्द्रभोगाननुसंधानवज्जीवगतब्रह्मभोगाननुसंधानोपपत्तेः। अथे-न्द्रार्जुनादीनां भेदाभावेऽपि भूम्याद्यपकृष्टदेशावस्थानगर्भमवेशमा-नुषान्नभोगादिकं निमित्तीकृत्याचिन्त्याद्भुतशक्तिकेन परमेश्वरे-णार्जुनादिगतेन्द्रभोगाननुसंधानं क्रियत इति चेत्। अन्तःकरणदे-हविशेषोपाधिं निमित्तीकृत्याचिन्त्याद्भुतानिर्वचनीयेशशक्त्याऽ-विद्यामायाभिधया जीवगतब्रह्मभोगाननुसंधानं क्रियत इत्यपि किं न सुवचम्।

यत्तु मा भूद्विरुद्धगुणाक्रान्तिर्जीवब्रह्मणोर्भेदसाधको न्यायः, तयोरन्यत्वव्यपदेश एव तत्र न्यायः सुवचः। दृश्यते हि—'द्वा सुपर्णा' इत्यादि—तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' (मु० ३।१।१)। 'भिन्नोऽचिन्त्यः परमो जीवसंघात्पूर्णः परो जीवसंघो ह्यपूर्णः'। 'अन्यश्च परमो राजन्तथाऽन्यः पञ्चविं-शकः'। 'भेदव्यपदेशाच्चान्यः' (ब्र० सू० १।१।२१) इत्यादिषु श्रुतिस्मृतिसूत्रेषु तयोर्भेदव्यपदेश इति। तदसत्। 'द्वा सुपर्णा' (मु० ३।१।१) इत्यादौ पूर्वार्धे न तावद्भेदः प्रमेयः। अपदार्थ-त्वादवाक्यार्थत्वाच्च। श्रुतद्वित्वार्थापत्तिसमधिगम्यस्य भेदस्यापि श्रौतत्वमेवेति स्वीकारेऽपि द्वौ चन्द्रमसावित्यादाविव काल्पि-(ल्पनि)कभेदानुवादेनाप्युपपत्तेरद्वैतश्रुतिविरोधेन पारमार्थिकभेद-परत्वाभावात्। अत एवोत्तरार्धस्यापि न तात्त्विकभेदपरत्वम्। वस्तुतस्तु तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वम्। अनश्नन्नन्यो अभिचाकशीतीत्यनश्नन्नन्यो पश्यति ज्ञः। तावेतौ सत्त्वक्षेत्रज्ञाविति पैङ्गिरहस्यब्राह्मणेऽस्य मन्त्रस्य सत्त्वक्षेत्रज्ञपरतया व्याख्यानान्नास्य मन्त्रस्य जीवेशभेदपरत्वम्। सत्त्वक्षेत्रज्ञौ बुद्धिविशुद्धसा-क्षिणौ। अथ—'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्य-मानः। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' (मु० ३।१।२) इत्युत्तरमन्त्रे जीवेशयोः प्रतिपाद्यमानतया तदै-करूप्यायास्यापि जीवेश्वरपरतैवोचिता।

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः॥ (गी० १८।४०)

इत्यत्र देवेष्विति पदसमभिव्याहारे सत्त्वपदस्य जीवपरतायाः 'यस्त्वात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते' इत्यादौ क्षेत्रज्ञपदस्य परमात्मपरतायाश्च प्रसिद्धत्वादिति चेत् । न । तावेतौ सत्त्वक्षेत्रज्ञावित्युक्त्वा 'तदेतत्सत्त्वं येन स्वप्नं पश्यत्यथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञस्तावेतौ सत्त्वक्षेत्रज्ञौ' (पै० ब्रा० ) इति सत्त्वक्षेत्रज्ञपदयोः श्रुत्यैव बुद्धिजीवपरतया व्याख्यातत्वेन तयोर्जीवेशपरत्वकल्पनासंभवात् । मनसस्तु परा बुद्धिरिति स्थाने मनसः सत्त्वमुत्तमम् ( का० ३ । १० ) इत्यन्यत्र दर्शनाद्बुद्धावपि सत्त्वशब्दः प्रसिद्धः । 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' ( श्वे० ६ । १६ ) इत्यादिषु क्षेत्रज्ञपदं जीवेऽपि प्रसिद्धमिति नाप्रसिद्धार्थकल्पनम् । न च 'येन स्वप्नं पश्यति तत्सत्त्वम् ( पै० ब्रा० ) इत्यत्र येनेतीत्थंभावे तृतीया । तथा च यदुपहितपरमात्मा स्वप्नं पश्यतीत्यर्थे जीवोपहितपरमात्मनः स्वप्नदर्शनोपाधिभूतो जीव एव सत्त्वशब्देनोच्यते । 'अथ योऽयम्' ( पै० ब्रा० ) इत्यत्रापि शारीरपदेन परमात्मैवोच्यत इति वाच्यम्' । येनेत्यस्य करणार्थत्वेन कारकविभक्तित्वसंभव इत्थंभावार्थकोपपदविभक्तित्वस्यान्याय्यत्वात् । *उपपदवि-

---

* उपपदविभक्तेरिति । अयमाशयः—पदयोगनिमित्तकविभक्तित्वमुपपदविभक्तित्वम् । कारकविभक्तित्वं च क्रियाजनकत्वसमानाधिकरणकर्त्रादिषट्कान्यतमार्थत्वम् । आद्योदाहरणम्—उभयतः कृष्णं गोपा इति । अत्र हि 'उभसर्वतसोः कार्या०' इत्यनेन कृष्णशब्दाद्द्वितीया भवति । द्वितीयोदाहरणं तु—हरिं भजतीति । नमस्करोति देवान्नमस्यति देवानित्यादौ तु 'नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च' ( पा० सू० २।३।१६ ) इत्यनेन देवशब्दाच्चतुर्थी प्राप्ता । किं च 'कर्मणि द्वितीया' ( पा० सू० २।३।२ ) इत्यनेन द्वितीया प्राप्ता । देवशब्दार्थस्य 'कर्तुरीप्सिततमं कर्म' ( पा० सू० १।४।४९ ) इत्यनेन कर्मसंज्ञायाः सत्त्वात् । कर्मणि द्वितीयेत्यस्य चारितार्थ्यं हरिं भजतीत्यत्र । नमःस्वस्तीत्यस्य चारितार्थ्यं तु हरये नम इत्यत्र । द्वयोश्चारितार्थ्यात् 'विप्रतिषेधे परं कार्यम्' ( पा० सू० १।४।२ ) इत्यनेन परत्वाच्चतुर्थी प्राप्ता । इष्यते तु द्वितीया । सा च 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इत्यनया परिभाषया कारकविभक्तेः प्राबल्यबोधनात्सिध्यति ।

भक्तेः कारकविभक्तिर्बलीयसीति नियमात् । यः स्वप्नं पश्यतीति ऋजुनिर्देशेनैव जीवलाभे येनेति निर्देशस्य निरर्थकाक्लिष्टकल्पनापत्तेश्च । शारीरपदस्य च ‘ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ’ ( ब्र० सू० १।२।२० ) ‘ अनुपपत्तेस्तु न शारीरः ’ ( ब्र० सू० १।२।३ ) इति सूत्रयोर्जीव एव सुप्रसिद्धेरसति प्रमाणान्तरे कथंचित्परमात्मपरत्वस्य कल्पयितुमशक्यत्वात् । न च ‘ समाने वृक्षे पुरुषो निमग्नः ’ ( मु० ३ । १ । २ ) इत्युत्तरमन्त्रे ‘ जुष्टं यदा पश्यत्यन्यमीशम् ’ ( मु० ३ । १ । २ ) इति जीवान्येशज्ञानस्य मोक्षहेतुत्वोक्त्या जीवेशपरत्वावगमात्तदैकरूप्याय तथा कल्पनमित्यपि भ्रमितव्यम् । ‘ जुष्टं यदा पश्यत्यन्यमीशम् ’ ( मु० ३ । १ । २ ) इति वाक्ये कस्मादन्यमित्याकाङ्क्षायां शरीरादन्यं स्वात्मानं पश्यतीत्यर्थ एव प्रकृतोपयुक्तो विवक्षितः । न स्वस्मादन्यमीशं पश्यतीत्यर्थः । कुत इति चेत् । समाने वृक्षे पुरुषो निमग्न इति पूर्वार्धे निमग्नपदेन शोकहेतुतया शरीरतादात्म्यस्योक्तत्वेनेह वीतशोकताहेतुतया प्रतिपाद्यमानस्य दर्शनस्य शोकहेतुदर्शनविरोधिन एव वक्तव्यत्वात् । देहतादात्म्यभ्रमे च देहान्यताज्ञानमेव विरोधि । यदि तु अन्यमीशमित्यत्र स्वस्मादन्यं परमेश्वरं पश्यतीत्यर्थो विवक्षितः स्यात्तदा पूर्वार्धे देहनिमग्नत्वादिप्रतिपादनं व्यर्थमेव स्यात् । उत्तरवाक्यस्यानुपयोगश्च स्यात् । नहि स्वभिन्नेश्वरज्ञानं विशोकताहेतुरित्यत्र देहतादात्म्यभ्रमः शोक-

एकस्या एवोपपदविभक्तित्वे कारकविभक्तित्वे चेयं परिभाषा प्रवर्तत इति न भ्रमितव्यम् । नमस्यति देवानित्यत्रैतत्परिभाषोपन्यासपरभाष्यविरोधात् । प्रकृते तु येन स्वप्नं पश्यतीत्यत्रैकस्या एवतदस्तीत्यन्यदेतत् । अत्र हि ‘इत्थंभूतलक्षणे ’ (पा० सू० २ । ३ । २१ ) इत्यनेन तृतीया कृताऽऽहोस्वित् ‘ कर्तृकरणयोस्तृतीया ’ ( पा० सू० २ । ३ । १८ ) इत्यनेन सा कृतेति संशयः । तत्र ‘ इत्थंभूत० ’ इत्यस्य संभवस्तु यथा—कंचित्प्रकारं प्राप्तस्य लक्षणे तृतीया स्यादिति तदर्थाद्यथा जटाभिः तापस इत्यत्र जटाशब्दात्तृतीया तथा येनेत्यस्य जीवरूपोपाधिवाचकत्वात्तृतीयेति । दृशधात्वर्थनिरूपितकरणवाचकत्वसंभवाच्च करणतृतीयायाः संभवः । एवं च निरुक्तपरिभाषया करणतृतीयैवोचितेति ।

हेतुरिति प्रतिपादनमुपयोगीति समञ्जसं केनापि वक्तुम् । देहभिन्नात्मज्ञानं विशोकहेतुरित्यभ्युपगमे तूपपत्तितया पूर्वार्धं उपयुज्यते । यतो देहात्मत्वभ्रमः शोकहेतुरतो तद्विरोधि देहादिविक्तात्मज्ञानं विशोकहेतुरिति ।

केचित्तु—अद्वैतश्रुतिविरोधेन 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' (मु० ३ । १ । १) इत्यादिश्रुतीनामत्तृत्वादिना लोकभ्रमसिद्धेश्वरभिन्नजीवानुवादेनात्तृत्वाभाववद्ब्रह्मरूपताविधायकत्वेन न भेदपरत्वम् । दृश्यते हि वस्तुतो मेरुं प्रदक्षिणी कुर्वन्नपि सूर्यः समुद्रतीरवासिनां समुद्रादुदेतीति प्रत्ययात्तादृशलोकसिद्धभ्रमानुवादकत्वम्—

य उदगान्महतोऽर्णवाद्विभ्राजमानः सलिलस्य मध्यात् ।
स मा वृषभो लोहिताक्षः सूर्यो विपश्चिन्मनसा पुनातु ॥
नेक्षेदुद्यन्तमादित्यं नास्तं यान्तं कदाचन ।
नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् ॥

इत्यादिश्रुतिस्मृतीनाम् । न च भेदश्रुतिविरोधादद्वैतश्रुतिरेवान्यपरा परोपदर्शितगौणाभेदपरा किं न स्यादिति वाच्यम् । भेदश्रुतेः प्रत्यक्षसिद्धभेदानुवादकत्वेन हीनबलत्वात्प्रबलानुरोधेनैव दुर्बलस्य नेयत्वात् । न चेशानुयोगिकजीवभेदस्य प्रत्यक्षेणाप्राप्त्या नानुवादकत्वमिति शङ्क्यम् । जीव ईशभेदस्य प्रत्यक्षसिद्धतया तदन्यथानुपपत्तिसिद्धेशानुयोगिकजीवभेदस्यापि प्रत्यक्षसिद्धतुल्यकक्षतया ज्ञातज्ञापकत्वलक्षणानुवादत्वोपपत्तेः । तेन प्रत्यक्षस्याप्रामाण्यान्न तत्सिद्धभेदानुवादकत्वं श्रुतेरिति निरस्तम् । अनुवादकत्वाभावेऽपि वा व्यावहारिकभेदपरत्वेन श्रुतेर्नाभेदविरोधित्वम् । प्रतीयमानार्थे चाभेदश्रुतिविरोधेन भेदश्रुतेरप्रामाण्यस्यार्थवादवाक्यवदिष्टत्वादिति वदन्ति ।

किंचान्यत्वव्यपदेशोऽभेदविरोधीति त्वया न वक्तुं शक्यम् । प्राणमयादिषु 'अन्योऽन्तर आत्मा' (तै० २ । २ । १) इत्याद्यन्यत्वव्यपदेशेऽपि प्राणमयादीनां ब्रह्माभेदस्यान्नमयादीनां पञ्चानामपि ब्रह्मत्वमिति वदता त्वयेष्टप्रमाणत्वात् ।

अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान् ।
प्रोच्यते भगवान्विष्णुरैश्वर्यात्पुरुषोत्तमः ॥

इति वचनेन तन्निर्वाहस्य त्वया कृतत्वाच्च । तन्न्यायेन 'जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति' ( नृ० उत्तर० ४ । ९ ) इति श्रुत्यनुसारेण मायाविद्याकृतजीवेशयोर्भेदमादाय जीवे ब्रह्मान्यत्वव्यपदेशेऽपि तयोः स्वरूपाभेदे बाधकाभावात् । नहि ब्रह्मणि ब्रह्मान्यत्वव्यपदेशाज्जीवे ब्रह्मान्यत्वव्यपदेशे विशेषः कश्चित्सुवचः । येन स एवाभेदविरोधी स नेति वक्तुं शक्येत । उपपत्तेर्निरूपितत्वाच्चेति दिक् ।

व्याचिख्यासितस्य वेदान्तमीमांसाशास्त्रस्येदमादिमं सूत्रम्—

'अथातो ब्रह्मजिज्ञासा' इति ।

तत्राथशब्दो वेदान्तमीमांसाशास्त्रं नाऽऽरम्भणीयं पूर्वोक्तरीत्या विषयप्रयोजनयोः संभवेऽपि प्रमाणाभावेनाधिकार्यभावादिति शङ्कानिराकरणाय । नित्यानित्यवस्तुविवेकभोगमात्रारागशमदमोपरमातितिक्षासमाधानानन्तर्यं तदर्थः । तथा च—'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते' ( छा० ८।१।६ ) 'ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन' ( मु० १।२।१२ ) 'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्यति' ( बृ० ४ । ४ । २३ ) 'तरति शोकमात्मवित्' ( छा० ७।१।३ ) इत्यादिश्रुतिप्रमाणको विवेकादिमानधिकार्यानन्तर्यप्रतियोगितया विवेकादिप्रतिपादकाथशब्देन सूचित इति नोक्तशङ्कावसरः । यद्यपि 'तद्विजिज्ञासस्व' ( तै० ३।१।१ ) इत्यादिविचारविधायकविधिसमभिव्याहृतोक्तवाक्यैरेव तादृशाधिकारिविषयप्रयोजनादीनां ज्ञातुं शक्यत्वाद्व्यर्थमिदं सूत्रमिति शङ्का संभवति तथाऽपि तादृशाधिकार्यादिश्रुतीनां स्वार्थनिर्णायकसूत्राभावे किं विवेकादिमानधिकार्युतान्यः, वेदान्ताः किं पूर्वतन्त्रेण गतार्था उतागतार्थाः, मुक्तिः किं स्वर्गादिलोकप्राप्तिरुताद्वैतानन्दात्मस्वरूपस्थितिरितिवादिविप्रतिपत्तिसमुद्भूतसन्देहे......नापाततस्तादृशश्रुत्यर्थज्ञानेनानि-

वृत्तेस्तन्निर्णायकन्यायप्रदर्शनात्मकैतत्सूत्रारम्भ आवश्यकः । एतेन 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इति बहुष्वर्थेष्व-नुशिष्टस्याथशब्दस्याऽऽनन्तर्यार्थकत्वमेव कुत इति शङ्कानवकाशः । अर्थान्तराणां च प्रकृतेऽनुपयुक्तत्वं श्रीमद्भाष्यकारचरणैर्दर्शितम् । तदिह परोक्तदोषोद्धारायानूद्यते—तत्राथशब्द आनन्तर्यार्थः परिगृह्यते, नाधिकारार्थः । ब्रह्मजिज्ञासाया अनधिकार्यत्वादिति भाष्यम् । यद्यपि जिज्ञासाशब्दावयवार्थज्ञानेच्छाया आद्यकृतिविषयत्वरूपारभ्यत्वासंभवेऽपि विवरणरीत्या जिज्ञासाशब्दस्य विचारलक्षणकत्वेन तल्लक्षितविचारस्याऽऽरभ्यत्वं संभवत्येव । शास्त्रे स्वरूपप्रमाणसाधनफलान्यतममुखेन विचारस्याग्रे प्रत्यधिकरणं क्रियमाणत्वात् । न चाऽऽरम्भाप्रतिपादनेऽप्यारम्भादेव तज्ज्ञानसंभवात्तदर्थकपदानर्थक्यं शङ्क्यम् । *'त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति ' ( का० प्र० उ० ४ । पृ० ८५ श्लो० २४)। ' अहं ते संप्रवक्ष्यामि ' इत्यादावहमस्मि वच्मीत्यादेरानर्थक्यपरिहारायाऽऽप्तोपदेशरूपतया परिणमदुच्यमानार्थस्यावश्यं कर्तव्यत्वव्यञ्जकतया तत्प्रयोगोऽर्थवानित्यालंका-

---

*त्वामस्मि वच्मीति। अस्योत्तरार्धं तु—'आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत् ' इति । विद्वत्सभां गच्छन्तमाप्तं प्रति कस्यचिदुक्तिरियम् । अत्र यत इत्यध्याहार्यम् । अस्मीति चाहमर्थेऽव्ययं बोध्यम् । तथा चार्थः—यतोऽत्र विदुषामसाधारणज्ञानवतां समवाय एकवाक्यतापन्नः समुदायस्तिष्ठति तस्मादात्मीयामप्रतार्यां मतिमवलम्ब्यात्र स्थितिं सावधानास्थितिं विधेहीति त्वामुपदेशार्हमहमाप्तो वच्म्युपदिशामीति । अयं भावः—अत्र वच्मीत्यनुपयुक्तार्थम् । अनुपादानेऽपि वचनक्रियायाः प्रतीतेः । एवं चात्रोपदेशत्वं लक्ष्यम् । अतस्तत्र वाच्यार्थः संक्रमितः । एवं त्वामस्मीति पदे अप्यनुपयुक्तार्थे । संबोध्यतयैव युष्मदर्थस्य वचनकर्मतापत्तेः । वच्मीत्युत्तमपुरुषेणैव चास्मदर्थस्य तत्कर्तृत्वप्रत्ययात् । अतस्ताभ्यामुपदेश्यत्वाप्तत्वे लक्ष्ये । तत्र च तद्वाच्यौ संक्रमितौ । तथाऽऽत्मीयाया एव मतेः सर्वैरास्थानादनुपयुक्तत्वादात्मीयशब्देन प्रमाणपरिगृहीतत्वं लक्ष्यम् । तत्र च तद्वाच्यं संक्रमितम् । 'अस्मद्युत्तमः' (पा० सू० १। ४।१०७) इत्यस्मिन्सूत्रेऽस्मदित्यनेनार्थग्रहणादस्मियोगे वच्मीति उत्तमपुरुषः साधुरेवेति ।

रिक्तोक्तरीत्या प्रारम्भप्रतिपादनं प्रारम्भोपरक्ताधिकार्यादिकथ- भिन्यनक्तीत्यर्थवदेव तदिति शङ्का संभवति । तथाऽप्युक्तरी- त्याऽऽनन्तर्यार्थकत्वेऽधिकारिविशेषलाभसंभवेऽधिकारिसामान्य- बोधनेऽस्वारस्यात् । तथा च विचारस्य प्रयोजनाधिकारिवि- शेषानवगतावनधिकार्यत्वात्प्रेक्षावदनुपादेयत्वादितीत्युक्तभाष्या- र्थः । एवं चाऽऽरभ्यत्वेन तदभिधानेऽपि विचारप्रयोजनाधि कारिविशेषादेरन्यस्मात्सौत्रपदादलाभेन तेषां चावश्यं वक्तव्य- त्वेनाथशब्दस्याधिकारिविशेषप्रतिपत्त्युपयोग्यानन्तर्यार्थकत्वमेव युक्तमिति भाष्यतात्पर्यम् ।

यत्तु चन्द्रिकायाम्—उक्तविवरणरीत्याऽधिकारिविशेषतद्वि- शेषणप्रयोजनलाभायाथशब्दस्याऽऽनन्तर्यार्थकतामनूद्य न ताव- द्विचारविधौ त्वत्पक्षे मुमुक्षुरधिकारी मोक्षश्च फलमिति युक्तम् । विचारो मोक्षसाधनतया न प्राप्त इति तद्विधेरपूर्वविधित्वापातात् । मुमुक्षोरपि ज्ञानकामनां विना विचारेऽप्रवृत्तेः । त्वन्मते च वक्ष्यमाणरीत्या ज्ञानकामनानुपपत्तेश्च । नापि विचारविधौ ज्ञानकामोऽधिकारी ज्ञानं च फलमिति युक्तम् । अध्ययनविधे- र्ज्ञानकामनाधिकारं निषेधता त्वयाऽज्ञाते ज्ञाने कामनाया अयोगात् । ज्ञातज्ञाने च तदवच्छेदकविषयस्यापि ज्ञातत्वेन पुनस्तज्ज्ञानकामनाया अयोगादिति युक्त्या ज्ञानकामनानिषेधा- दिति दूषणमुक्तम् । तदेतत्पूर्वापरविवरणग्रन्थमनालोचयतां प्रतारणामात्रं तद्ग्रन्थतात्पर्यानवबोधनिबन्धनं वेति न विद्मः । तथाहि पूर्वापरविवरणग्रन्थोऽथशब्दार्थविचारे—

अथशब्दस्याऽऽरम्भार्थकत्वे श्रौतसाधनसंपन्नोऽधिकारी न लभ्यते तत्समर्पकाभावादित्यभिधाय वेदाध्ययनविधौ योऽधि- कारी स एव विधिना स्वफलार्थबोधायाऽऽक्षिप्ते विचारेऽपि भविष्यतीत्याशङ्क्यार्थबोधो यद्यध्ययनविधिभाव्यो भवेत्त- दैव विचारस्याध्ययनविधिप्रयुक्तत्वं भवेदित्यध्ययनविधौ योऽ- धिकारी स एव विचारेऽपि स्यात् । तदेव न । अर्थावबोधस्या- ध्ययनविधिभाव्यत्वेऽजन्यत्वादित्याद्यभिधायाध्ययने दृष्टफला- र्थावबोधकाम एवाधिकारीतिशङ्कानिराकरणायार्थज्ञानाभावे

तद्धर्मिकेष्टसाधनताज्ञानाभावेनेच्छाया अनुदयेन तदिच्छाया उद्देश्यविशेषणत्वासंभवमुक्त्वोक्तम्—उपदेशादेवाग्निहोत्रादिवाक्यार्थविशेषाः प्रतिपत्तव्या इति चेत्तर्हि वाक्यार्थविशेषज्ञानानां सिद्धत्वान्न तत्र कामना संभवेत् । अथौपदेशिकज्ञानस्याप्रमाणत्वात्तत्प्रमाणत्वज्ञानं काम्यत इति चेदप्रामाण्ये निश्चिते तत्र तन्निर्णयकामनायोगात् । अर्थस्य विभ्रममात्रत्वात् । औपदेशिकस्य संदिग्धे प्रामाण्ये तत्प्रामाण्यविचारस्यैवावसरो नाध्ययनस्येति विवरणग्रन्थः ।

तत्र हि—अर्थज्ञानमुद्दिश्याध्ययनं न विधातुं शक्यम् । अग्निहोत्रादिविशेषार्थनिर्णयं विना तत्कामनायोगात् । तन्निर्णयस्य वृत्तत्वे च न तस्योद्देश्यता । सिद्धत्वात् । जातेऽपि निर्णये तत्प्रामाण्यसंदेहात्तद्व्युदासायाध्ययनविधिरित्यपि वक्तुमशक्यम् । विचारैकसाध्यायाः प्रामाण्यसंशयनिवृत्तेरप्रामाण्यज्ञानानास्कन्दितनिर्णयस्य वाऽध्ययनमात्रासाध्यतया तदुद्देशेन तद्विधानायोगादितिरीत्या ज्ञानकामनाधिकारित्वमध्ययनविधेर्निराकृतमिति गम्यते । न चैतावता परोक्षज्ञानकामनामात्रं निषिद्धम् । विचारसाध्याप्रामाण्यशङ्काद्यभावविशिष्टत्वेन तत्कामनाया बालेनापि सूपपादत्वात् । विवरण एव जिज्ञासापदार्थविचारे—ततश्च प्रतिपन्ने वस्तुनि ज्ञानमिष्यमाणं संदिग्धे निश्चयफलं वा परोक्षेऽपरोक्षफलं वेष्यते । तच्चोभयं प्रमाणादिविचारप्रयत्नसाध्यमित्यादिना परोक्षज्ञानेऽपि कामनायाः स्पष्टमभिधानाद्युक्तमेव विचारविधेर्मुमुक्ष्वधिकारिकत्वं विवरणमते ।

यदपि चन्द्रिकायां परोक्षज्ञाने कामनाया अयोगेऽपि परोक्षेण प्रतिबद्धापरोक्षेण वा ज्ञानेन ज्ञातब्रह्मावच्छिन्नेऽपरोक्षज्ञाने प्रतिबद्धापरोक्षज्ञाने वा कामनाविचारविध्यधिकारिविशेषणमस्त्वित्याशङ्क्येच्छाया अपरोक्षत्वात्तदवच्छेदकज्ञानावच्छेदकविषयस्यापरोक्षत्वादिच्छासमकालवर्त्यपरोक्षज्ञानस्य विचारसाध्यत्वानुपपत्तिरिति दूषणमुक्तम् ।

तदपि न सम्यक् । अपरोक्षेच्छावच्छेदकज्ञानावच्छेदकाविषयस्यापरोक्षत्वेऽपरोक्षेच्छावच्छेदकज्ञानावच्छेदकतया धर्मादि-

नामप्यपरोक्षत्वापत्तेस्तथा नियमाभावात् । अविद्यानिवर्तकतावच्छेदकशक्तिविशेषविशिष्टत्वेन तादृशशक्तेरसिद्धतया तद्विशिष्टज्ञानस्य प्रागसिद्धतया च तज्ज्ञाने कामनायां बाधकाभावाच्च । एतेन श्रवणसाध्यस्य परोक्षज्ञानस्य प्रतिबद्धापरोक्षज्ञानस्य वा श्रवणात्प्रागसिद्धत्वेन तदधीनाया अपरोक्षज्ञानादौ कामनायाः श्रवणविध्यधिकारिविशेषणत्वायोगः । न च कामनाहेतुपरोक्षज्ञानादिकं श्रवणात्प्रागापातप्रतीतिदशायामेव सिद्धमिति वाच्यम् । तस्यां दशायां निश्चयरूपस्य तस्यासंभवात् । न हि वेदान्तवेद्यं सर्वे परोक्षज्ञानादिनाऽनिश्चित्यापरोक्षज्ञानार्थं प्रवर्तन्ते । संदेहरूपस्य च तस्य तस्यां दशायां सत्त्वेऽपि संदेहेन ज्ञातब्रह्मावच्छिन्नपरोक्षनिश्चय एव कामनोपपत्तिः । निश्चिते निश्चयकामनाया अदर्शनेन तस्यां निश्चेयविषयकसंदेहस्यैव तत्र हेतुत्वादिति चन्द्रिकोक्तं दूषणं परास्तम् । निश्चितेऽपि निरुक्तशक्त्यादिविशिष्टत्वेन निश्चयकामनायां बाधकाभावात् । परोक्षनिश्चयसामान्यकामनाऽपि नास्मन्मते प्रतिषिद्धेत्युक्तं प्राक् । श्रवणप्रयोजककामनायां श्रवणसाध्यस्य विषयत्वेऽपि हेतुत्वाभावेन तत्सत्तायाः प्रागनपेक्षणात्तादृशज्ञातज्ञानस्यापेक्षितत्वेऽपि 'तमेव विदित्वाऽति मृत्युमेति' ( श्वे० ३।८ ) 'तरति शोकमात्मवित्' ( छा० ७।१।३) 'ब्रह्मविदाप्नोति परम्' ( तै० २।१।१) इत्यादिवाक्यैर्ब्रह्मज्ञानस्य मोक्षकारणत्वप्रतिपादकैस्तत्प्रतिपत्तिरुपपद्यत एवेति न किंचिदपि दूषणम् ।

यदपि चन्द्रिकायाम्—किं च संदिग्धस्थाण्वादिविशेषापरोक्षज्ञानकामना तद्विशेषधीपूर्विका स्यादिति दूषणमुक्तम् । तदसदेव । यादृशविषयविशेषितज्ञाने कामना तादृशविषयज्ञानस्य प्रागपेक्षितत्वोपगमात् । स्थाणुविषयकप्रत्यक्षं मे भूयादितीच्छायां च स्थाणुत्वप्रकारकज्ञानापेक्षाऽस्त्येव । स्थाणुत्वविशिष्टेदमर्थविषयकप्रत्यक्षं मे भूयादितीच्छायामपि तज्ज्ञानं संशयसाधारणमपेक्षितमेव । अथैवमग्निहोत्रादिविषयकसंशयबलात्तन्निश्चयकामनोपपत्तौ तन्निराकरणं विवरणकर्तुरसंगतं स्यादिति चेत् । न । औपदेशिकज्ञानं शाब्दत्वान्न संशयरूपम् । एवं विशेषण-

तावच्छेदककोटयंशे संशयात्मकज्ञानमनुभवविरुद्धमिति मत इद-मर्थे स्थाणुत्वसंशयदशायां स्थाणुत्वेन रूपेणेदमर्थस्य ज्ञाने विशे-षणत्वं न संभवति । तद्धेतोर्विशेषणतावच्छेदकप्रकारकविशेषण-वत्तानिश्चयस्याभावादिति तादृशकामनानिर्वाहाय तादृशं निश्चया-त्मकं ज्ञानमेवावश्यमभ्युपेयम् । तादृशनिश्चयाभावे तादृशकामनाऽ-पि नास्तीति मतविशेषाभिप्रायेणैवाग्निहोत्रादिज्ञानकामनानिराक-रणात् ।

यदपि चन्द्रिकायां परोक्षज्ञाने कामनानङ्गीकारे धर्मविचारे प्रवृत्तिर्न स्यादिति दूषणमुक्तं तदप्युक्तप्रकारेण निश्चय-कामनया संशयनिवृत्तिकामनया संजातनिश्चयज्ञानेऽप्रामाण्य-शङ्कानिवृत्तिकामनया वा धर्मविचारे प्रवृत्तिसंभवान्निरस्तमेवेति विचारविधेर्ज्ञानकामनाधिकारिकत्वमुपपन्नतरमेवेति संक्षेपः ।

यदपि चन्द्रिकायां विचारविधौ त्वत्पक्षे मुमुक्षुरधिकारी मोक्षश्च फलमिति न युक्तम् । विचारस्य मोक्षहेतुतयाऽप्राप्तत्वेन तदुद्देशेन श्रवणविध्यभ्युपगमेऽपूर्वविधित्वापातादिति दूषणमुक्तं तदपि विवरणाभिप्रायानवबोधनिबन्धनम् । विचारविधेर्मोक्ष-फलकत्वं तद्विधेर्नियमविधित्वं च वर्णयतो विवरणकारस्य ब्रह्म-साक्षात्कारद्वारैव मोक्षस्य श्रवणरूपविचारफलकत्वस्याभिप्रेत-त्वात् । ब्रह्मसाक्षात्कारे श्रवणस्य हेतुत्वं च श्रोतव्यार्थसाक्षा-त्कारे शास्त्रविचारात्मकश्रवणस्य हेतुतायाः षड्जादिसाक्षात्का-रहेतुगान्धर्वशास्त्रश्रवणादौ सिद्धत्वादेव सिद्धमिति नापूर्वविधि-त्वप्रसङ्गः । न च श्रोतव्यार्थसाक्षात्कारे श्रवणस्य हेतुत्वमिति न नियमः संभवति । धर्मशास्त्रश्रवणे व्यभिचारादिति वाच्यम् । विचार्यमाणापरोक्षयोग्यार्थसाक्षात्कारे तादृशार्थकशास्त्रविचारा-त्मकश्रवणत्वेन हेतुत्वमिति नियमस्याबाधितत्वात् । कार्यदिशि विचार्यमाणेतिविशेषणाद्विचारं विनाऽपि योगाञ्जनादिनोत्पन्न-स्वर्गनिध्यादिसाक्षात्कारे न व्यभिचारः । अथैवमपूर्वविधित्वा-भावेऽपि नियमविधित्वमनुपपन्नमेव । पाक्षिकाप्राप्तावप्राप्तांशपूर-णफलकविधेरेव नियमविधित्वात् । पाक्षिकाप्राप्तिश्च साधनान्त-रप्राप्तावेव । ब्रह्मात्मज्ञाने साधनान्तरमस्ति शुचयो (?) यमादि

हिते निर्विशेषे चाऽऽत्मनि प्रत्यक्षानुमानादेः प्रमाणान्तरस्याप्राप्तेरिति चेत् ।

अत्र केचित्——यथाऽपूर्वीयव्रीहिविशेषेषु नखविदलनादेरप्राप्तावपि व्रीहिसामान्ये तत्प्राप्त्या यथा व्रीहीनवहन्तीति * नियमविधिस्तथा निर्विशेषात्मज्ञाने साध-

---

*नियमविधिरिति । अत्रेदं बोध्यम्——विधिस्त्रिविधोऽपूर्वविधिर्नियमविधिः परिसंख्याविधिश्चेति भेदात् । तत्र यस्य यदर्थत्वं प्रमाणान्तरेणाप्राप्तं तस्य तदर्थत्वेन यो विधिः सोऽपूर्वविधिः । यथा 'यजेत स्वर्गकामः' इत्यादिः । यागस्य हि न प्रमाणान्तरेण स्वर्गार्थत्वं प्राप्तम् । किंत्वनेनैव विधिनेति भवत्ययमपूर्वविधिः । साधनद्वयस्य पक्षप्राप्तावन्यतरस्य साधनस्याप्राप्ततादशायां यो विधिः स नियमविधिः । यथा 'व्रीहीनवहन्ति' इति । अनेन हि विधिना व्रीहीनुद्दिश्यावघातो विहितः । स च न वैतुष्यार्थः । अन्वयव्यतिरेकाभ्यां तत्सिद्धेः । किंतु नियमार्थः । नियमश्चाप्राप्तांशपूरणरूपः । वैतुष्यस्य हि नखविदलनादिनोपायसाध्यत्वाद्यस्यां दशायामवघातं परिहृत्योपायान्तरं ग्रहीतुमारभते तस्यां दशायामवघातस्याप्राप्तत्वेन तद्विधानात्मकमप्राप्तांशपूरणमनेन विधिना क्रियते । उभयस्य युगपत्प्राप्तौ सत्यामितरव्यावृत्तिपरो विधिः परिसंख्याविधिः । यथा 'पञ्च पञ्चनखा भक्ष्याः' इति । 'शशकः शल्लकः खड्गी गोधा कूर्मोऽथ पञ्चमः' इति ये पञ्चनखाः पञ्च ते भक्ष्या इति पञ्च पञ्चनखा भक्ष्या इत्यस्माद्वाक्यात्सामान्यतः प्रतीयते । परंतु न तद्वाक्यं पञ्चनखभक्षणविधिपरम् । भक्षणस्य रागतः प्राप्तत्वात् । नापि नियमपरम् । पञ्चनखापञ्चनखभक्षणस्य युगपत्प्राप्तिसंभवेन पक्षेऽप्राप्त्यभावात् । तस्मादपञ्चनखभक्षणनिवृत्तिपरमेवैतद्वचनं बोध्यम् । इयं च परिसंख्या दोषत्रयग्रस्ता । दोषत्रयं च श्रुतहानिरश्रुतकल्पना प्राप्तबाधश्चेति पञ्च पञ्चनखेत्यत्र श्रुतस्य पञ्चनखभक्षणस्य हानम्, अश्रुतापञ्चनखभक्षणनिवृत्तेः कल्पनं चेति दोषद्वयं शब्दनिष्ठं बोध्यम् । लोकानां च या रागतोऽपञ्चनखभक्षणे प्रवृत्तिर्भवति सा निरुक्तवाक्यार्थज्ञानात्प्रतिबध्यत इत्ययं दोषोऽर्थनिष्ठः । ननु नियमपरिसंख्ययोः को विशेषः । नियमे गृहीते फलतो नखविदलनादेर्व्यावृत्तिर्भवति । परिसंख्यायां गृहीतायामप्यपञ्चनखभक्षणादेर्व्यावृत्तिरेव भवति । न च पक्षेऽप्राप्तिसत्त्वे नियमेनाप्राप्तांशपूरणं क्रियते परिसंख्यया चोभयोर्युगपत्प्राप्तौ सत्यामन्यतरस्य निवृत्तिः क्रियत इति विशेष इति वाच्यम् । निमित्तद्वयसत्त्वाच्छब्दतोऽर्थस्य

नान्तराप्राप्तावपि सविशेषे प्रवृत्तप्रमाणस्य शुद्धमपि विषय इति सविशेषनिर्विशेषानुस्यूत आत्मनि सामान्यतस्तत्प्राप्त्या नियमविधिः सुवच एव । न च व्रीहीनवहन्तीत्यत्र व्रीहिपदमपूर्वीयद्रव्यपरं न तु व्रीहिमात्रपरम् । तथा सति यवेष्ववघात औपदेशिको न स्यात् । अतिदेशेन नीवारेष्ववघातसिद्धिश्च न स्यात् । सा हि येन येन दर्शाद्यपूर्वसाधनद्रव्यमुपकृतं तेन तेन विकृत्यपूर्वसाधनमुपकुर्यादित्यतिदेशेन वक्तव्या । व्रीहित्वेन द्रव्ये विशेषिते सा न स्यादिति नवमे सिद्धान्तितम् । तथा चापूर्वीयद्रव्य एव विदलनादिप्राप्तेर्वक्तव्यत्वाद्व्रीहिसामान्ये तत्प्राप्त्या नियमविधिरिति न युक्तमिति वाच्यम् । नियम्यमानावघातस्यापूर्वीयद्रव्यमात्रविषयत्वेऽपि सामान्यविषयकप्राप्त्यैव नियमोपपत्तौ विशेषप्राप्तेरनपेक्षणात् । सजातीये प्राप्त्याऽपि यदा सजातीयान्तरे नियमस्तदा किमु वक्तव्यमेकस्मिन्नेवाऽऽत्मन्यवस्थाविशेषेण मानान्तरप्राप्त्या विशेषान्तरे नियमविधिरित्यधिकमद्वैतसिद्ध्यादौ द्रष्टव्यमित्याहुः ।

परे तु यथा मन्त्रार्थज्ञानस्य कल्पसूत्रात्मीयसंग्रहवाक्यादिनाऽपि प्राप्तत्वेन पक्षेऽप्राप्तमन्त्रजन्यत्वं नियम्यते मन्त्रैरेव मन्त्रार्थस्मृतिरिति तद्वन्मोक्षहेतुतयाऽभिमतब्रह्मसाक्षात्कारस्य वेदान्तमूलकस्त्रीशूद्रादिसाधारणस्मृतिपुराणादिना प्राकृतभाषादिनिर्मितग्रन्थादिना च प्राप्त्या पक्षेऽप्राप्तवेदान्तश्रवणं नियम्यते वेदान्तश्रवणेनैवाऽऽत्मज्ञानं संपादयेदिति । तस्माद्ब्राह्मणो नावेदिकमधीयत ( मैत्र्यु० ७ । १० ) इति श्रुतेः । श्रोतव्यः श्रुतिवाक्येभ्य इति स्मृतेश्च । अथैवम् ‘ इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ’ इति स्मृतिविरोधः । अविचारितेनैतिहासादिना तदुपबृंहणायोगादिति चेत् । न । आपातप्रतीतिविरोधेन वेदान्त-

---

विशेषसत्त्वेऽपि तात्पर्यतो निवृत्तावेव पर्यवसानादुक्तविशेषस्यानौचित्यादिति चेत् । अत्रोच्यते—यस्मिन्कर्मणि योऽर्थो नियमविधिना बोध्यते स तत्रावश्यं कर्तव्यो भवति न तु कदाचित्तत्र तस्योपेक्षा । परिसंख्यया च योऽर्थः प्रतिपाद्यते स तु कर्तव्य एवेति न नियमः । किंतु यदि कर्तव्यस्तर्हि स एव कर्तव्यो नान्य इति विशेषो बोध्य इति ।

वाक्यानां तात्पर्यसंशये तात्पर्यनिर्णयायेतिहासादिविचारस्यापेक्षायामपि ब्रह्मज्ञाने तदपेक्षाविरहात् । अत एव वेदं समुपबृंहयेदित्येवोक्तं न तु वेदार्थं जानीयादिति वदन्ति ।

एतेन भामतीरीत्या जिज्ञासाशब्दास्येच्छवाचकत्वेऽप्यार्थिकार्थेन विचारेणाध्याहृतस्य कर्तव्यपदस्येव श्रुतस्याधिकारार्थकाथशब्दस्याप्यन्वयोऽस्तु । यथोक्तं कल्पतरौ—आर्थिके चास्मिन्नर्थे कर्तव्यपदाध्याहार इति । न चाऽऽर्थिकेनाध्याहृतस्यैवान्वयो न तु श्रुतस्येत्यत्र किंचिन्नियामकमस्ति । 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इत्यादौ द्रव्यदेवतासंबन्धेनाऽऽक्षिप्तेन यागेन यदाग्नेयोऽष्टाकपालो भवतीत्यादौ भवनाक्षिप्तभावनया च विधिप्रत्ययान्वयदर्शनादिति चन्द्रिकोक्तं दूषणं परास्तम् । तथा सत्यधिकारिविशेषाद्यप्रतीतेः ।

नापि मङ्गलार्थः । मङ्गलस्य वाक्यार्थे समन्वयाभावादिति भाष्यम् । तत्र पदार्थ एव वाक्यार्थे समन्वीयते । न चेह मङ्गलमथशब्दस्य शक्यं लक्ष्यं वा । किंतु मृदङ्गध्वनिवदथशब्दकार्यमिति निबन्धग्रन्थः ।

यत्तु चन्द्रिकायां मङ्गलस्याथशब्दार्थत्वाभावे तस्य वाक्यार्थे समन्वयाभावस्य हेतूकृतत्वात्तत्राथशब्दार्थत्वाभावस्य हेतुत्वोक्तौ=त्वन्योन्याश्रय इति निबन्धरीत्या व्याख्याने दूषणमुक्तम् । तदसत् । प्राथमिकस्याथशब्दार्थत्वाभावस्य तत्तात्पर्यगोचरत्वा-

---

= अन्योन्याश्रय इति । अयं भावः—शांकरभाष्ये हि 'मङ्गलस्य च वाक्यार्थे समन्वयाभावात्' इत्युक्तम् । अत्रैव भामत्याम्—'पदार्थ एव हि वाक्यार्थे समन्वीयते । स च लक्ष्यो वाच्यो वा । न चेह मङ्गलमथशब्दस्य वाच्यं लक्ष्यं वा' इत्युक्तम् । तत्र मङ्गलं पक्षीकृत्यापदार्थत्वं साध्यते वाक्यार्थे समन्वयाभावादित्यनुमानं भाष्यात्प्रतीयते । तद्विवरणभूतभामत्याः सकाशात्तु मङ्गलं पक्षीकृत्य वाक्यार्थे समन्वयाभावः साध्यतेऽपदार्थत्वाद्धेतोरित्यनुमानं प्रतीयते । एवं च हेतुसिद्धौ सत्यां साध्यसिद्धिः स्यात्साध्यसिद्धौ सत्यां हेतुसिद्धिः स्यादित्यन्योन्याश्रय इति ।

भावरूपतया*ऽन्योन्याश्रयताविरहात् । अन्यथा प्रकृताथश-ब्दस्याऽऽरम्भपरत्वाभावेऽपि तद्वाचकताया दुरुपह्नवतया नाधि-कारार्थ इत्यादेरप्युभयसंमतस्यासंगतत्वापातात् । वाक्यार्थे सम-न्वयाभावादित्यस्याऽऽधुनिकलक्षणाग्रहाद्यजन्याथशब्दघटितवा-क्यजन्यबोधविषयत्वाभावादित्यर्थ इति न शङ्कान्तरावकाशः । इदं च मङ्गलानन्तरेत्यादिकोशस्य मङ्गलार्थकत्वांशे न प्रामाण्यं मूलाभावात् । तस्मान्माङ्गलिकावुभावित्यत्र मङ्गलप्रयोजनक-ताया एवोक्तत्वादित्यभ्युपेत्य । उक्तं च परेणापि—अस्माभिर-प्यानन्तर्याभिधेयोऽथशब्दः श्रुत्या मङ्गलप्रयोजन इत्यङ्गीकारा-दिति । अथेत्यनेन मङ्गलस्याप्रतीतेरिति च । विवरणे तु कोशस्य समूलत्वेऽपि न क्षतिः । वाक्यार्थे समन्वयस्तु कर्त्रादिभावेन वैयधिकरण्येन जिज्ञासान्वयस्य बाधितत्वात्, ब्रह्मजिज्ञासा मङ्गलमिति सामानाधिकरण्येन तदन्वये निरर्थकस्तुत्यनुवादत्वा-पत्तेश्च नोपपद्यत इत्युक्तम् ।

यत्तु चन्द्रिकायां सधूमो गिरिः साग्निक इतिवत् 'ईक्षतेर्ना-शब्दम्' (ब्र०सू०१।१।५) इत्यत्र त्वत्पक्षे=ऽशब्दमितिवच्च मङ्गल-त्वात्कर्तव्येति हेतुत्वेना×न्वयोपपत्तेरिति ब्रह्मजिज्ञासा मङ्गल-

---

* अन्योन्याश्रयताविरहादिति । यत्त्वित्यादिना योऽत्र चन्द्रिकोक्तानु-वादः कृतस्तत्र प्राथमिको योऽथशब्दार्थत्वाभावस्तस्याथशब्दतात्पर्यगोचरत्वाभा-वरूपत्वाद्द्वयोरथशब्दार्थत्वाभावयोर्भिन्नरूपत्वेनान्योन्याश्रयत्वाभावादित्यर्थः । अयमाशयः । मङ्गलमत्राथशब्दतात्पर्यगोचरं नेति हृदि निधाय तत्र हेतुरुक्तः 'मङ्गलस्य च वाक्यार्थे समन्वयाभावात्' इति । अथशब्दघटितवाक्यजन्य-बोधविषयत्वाभावान्न मङ्गलमत्राथशब्दतात्पर्यविषयभूतमित्यर्थः । वाक्यजन्य-बोधविषयः कः स्यादित्याशङ्क्य भामत्यामुक्तम् 'पदार्थ एव हि' इत्यादि । एवं च पदार्थत्वाभावाद्वाक्यजन्यबोधविषयत्वाभावः । अथशब्दघटितवाक्यजन्य-बोधविषयत्वाच्च तात्पर्याविषयत्वाभाव इति फलितम् । =अशब्दमितिवच्चेति । 'न सांख्यपरिकल्पितमचेतनं प्रधानं जगतः कारणं शक्यं वेदान्तेष्वाश्रयितुम् । अशब्दं हि तत्' इति भाष्यम् । तस्य कारणवाक्याप्रतिपाद्यत्वादित्यर्थादिति भावः । ×अन्वयोपपत्तेरिति । जिज्ञासाकर्तव्यत्वे हेतुसमर्पकत्वेन मङ्गलस्यान्वय-संभवादथशब्दार्थत्वं मङ्गलस्य स्यादेवेति 'वाक्यार्थे समन्वयाभावात्' इति भाष्योक्तो हेतुरसिद्ध इत्याशयः । एतदेवाभिप्रेत्य भामत्याम् 'मङ्ग-लहेतुत्वात्प्रत्यूह ब्रह्मजिज्ञासा कर्तव्येति सूत्रार्थः संपद्यते' इत्युक्तमिति भावः ।

मिति सामानाधिकरण्येनान्वयेन निरर्थकानुवादत्वमिति दूषण- मुक्तम् । तदप्यसत् । श्रेयःसाधनतामात्ररूपस्यान्यस्य वा पदा- र्थान्तरसाधारणस्य मङ्गलत्वस्य हेतुत्वेन सर्वतो विरक्तमुमुक्षु- कर्तव्यतारूपप्रकृतसाध्यान्वयानुपपत्तेः । नहि वह्निमत्त्वात्पर्वतो धूमवानिति वाक्यं प्रमाणम् । एतत्तत्वं हेतुतत्त्वविवेचकानां स्पष्टमेव । श्रेयोविशेषसाधनत्वं तु न मङ्गलत्वम् । सर्वमङ्गलसाधा- रण्याभावात् । ज्ञानादिरूपश्रेयोविशेषसाधने कर्तव्यत्वान्वयबा- धाच्च । एवं कस्यचित्प्रष्टुरप्रस्तुतत्वाद्ब्रह्मजिज्ञासा कुत्रेति प्रति- पादनस्यानुपयुक्तत्वात् । तथा सत्यवश्यापेक्षिताधिकारिविशेषा- द्यप्रतीतेश्च न प्रश्नकात्स्न्र्ययोरथशब्दार्थत्वम् ।

पूर्वप्रकृतापेक्षायाश्च फलत आनन्तर्याव्यतिरेकादिति भाष्यम् । तदित्थमवतार्यम्—नन्वथैष ज्योतिरेतेन सहस्रदक्षिणेन यजेते- त्यत्र प्रकृतज्योतिष्टोमानुवादेन सहस्रदक्षिणारूपगुण एव विधी- यते न तु कर्मान्तरविधानमिति पूर्वपक्षोपपादकत्वेन पूर्वप्रकृता- पेक्षत्वमथशब्दस्य वार्तिककृतोक्तं तद्वत्प्रकृतेऽपि किं न स्यादत आहुः—पूर्वप्रकृतापेक्षायाश्चेति । उक्तपूर्वपक्ष आनन्तर्यार्थकत्वमे- वाथशब्दस्याभिप्रेतम् । आनन्तर्यं हि पूर्वप्रकृतापेक्षम् । गुणविधिप- रत्वे चाऽऽश्रयदानार्थमस्ति ज्योतिष्टोमापेक्षा न कर्मान्तरत्वे । नहि क्रतुः क्रत्वन्तरमपेक्षत इति वार्तिककारीयपूर्वप्रकृतापेक्षोक्तेरानन्तर्य एव पर्यवसानादिति तदर्थः । यद्वा 'तत्राथशब्द आनन्तर्यपूर्वप्रकृ- तापेक्षाधिकाराणामेकं सर्वान्वा विवक्षित्वा प्रयुज्यते । प्रागुक्त- भेदलक्षणानन्तरोक्तत्वात् । प्रकृतमपेक्ष्य शेषलक्षणमारभ्यते । कुत इत्यपेक्षायामत इति हेत्वपदेशः । 'यस्माद्भेदमविज्ञाय न शक्यं शेषलक्षणं विज्ञातुम्' इति वार्तिकेऽथशब्दस्य पूर्वप्रकृतापेक्षार्थत्व- स्याप्युक्तत्वात्तद्वत्प्रकृतेऽपि किं न स्यादत आह—पूर्वप्रकृतापेक्षा- याश्च फलत आनन्तर्याव्यतिरेकादिति । 'अथातो धर्मजिज्ञासा' (ज०सू०१।१।१) इति सूत्रमारभ्य 'अनावृत्तिः शब्दात्' (ब्र० सू०४।४।२२)इत्यन्तं सहैव संकर्षणकाण्डेन विंशतिलक्षणमेकमेव शास्त्रमिति पूर्वोत्तरमीमांसयोरेकपुरुषाध्येयताप्रयोजकैकग्रन्थत्वा- त्तयोरध्ययनस्यैकपुरुषकर्तृकत्वे सिद्धे युगपदध्ययनासंभवात्क्र- मापेक्षायां यथा यवागूपाकं विना यवागूभक्षणस्यानिष्पत्तौ

होमस्यैवासिद्धेर्यथाऽग्निहोत्रयवागूपाकयो*रर्थात्क्रम आश्रीयते

+ अर्थात्क्रम इति। अयं भावः—विधिश्चतुर्विधः। उत्पत्तिविधिर्विनियोगविधिः प्रयोगविधिरधिकारविधिश्चेति भेदात्। तत्र कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः। अङ्गप्रधानसंबन्धबोधको विधिर्विनियोगविधिः। प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिः। फलस्वाम्यबोधको विधिरधिकारविधिः। तत्र प्रयोगविधिः साङ्गं प्रधानमनुष्ठापयन्नविलम्बापरपर्यायं प्रयोगप्राशुभावं विधत्ते। विलम्बे प्रमाणाभावात्। स चाविलम्बो नियते क्रम आश्रीयमाणे सत्येव भवति नान्यथा। अतः स्वविधेयप्रयोगप्राशुभावसिद्ध्यर्थं नियतं क्रममपि पदार्थविशेषणतया विधत्ते। क्रमो नाम विततिविशेषः पौर्वापर्यरूपो वा। क्रमे च श्रुत्यर्थपठनस्थानमुख्यप्रवृत्त्याख्यानि षट् प्रमाणान्यपेक्ष्यन्ते। तत्र क्रमबोधकं वचनं श्रुतिः। यथा वेदं कृत्वा वेदिं करोतीति। यत्र तु प्रयोजनवशेन क्रमनिर्णयः स आर्थः क्रमः। यथाऽग्निहोत्रयवागूपाकयोः। पदार्थबोधकवाक्यानां यः क्रमः स पाठक्रमः। यथाऽऽग्नेयाग्नीषोमीययोस्तत्तद्याज्यानुवाक्यामन्त्रपाठात्क्रम आश्रीयते। प्रकृतौ नानादेशस्थानां पदार्थानां विकृतौ वचनादेकस्मिन्देशेऽनुष्ठाने कर्तव्ये यस्य देशेऽनुष्ठीयन्ते तस्य प्रथममनुष्ठानमितरयोश्च पश्चादयं यः क्रमः स स्थानक्रमः। स्थानं नाम—उपस्थितिः। यस्य हि देशेऽनुष्ठीयते तत्पूर्वतने पदार्थे कृते स एव प्रथममुपस्थितो भवतीति तस्यैव प्रथममनुष्ठानं युक्तम्। यथा साद्यस्केऽग्नीषोमीयसवनीयानूबन्ध्यानां सवनीयदेशेऽनुष्ठाने कर्तव्ये सवनीयपशोरेवाऽऽदावनुष्ठानम्। तस्मिन्देश आश्विनग्रहणानन्तरं सवनीयस्यैव प्रथममुपस्थितेः। इतरयोश्च पश्चात्। प्रधानक्रमेण योऽङ्गानां क्रम आश्रीयते स मुख्यक्रमः। यथा प्रयाजशेषेणाऽऽग्नेयैन्द्रहविरभिघारणविषये। अत्र ह्याग्नेययागैन्द्रयागयोः पौर्वापर्यात्तत्क्रमेण प्रथममाग्नेयहविषः प्रयाजशेषेणाभिघारणं तत ऐन्द्रहविरभिघारणं तत आग्नेययागस्तत ऐन्द्रयाग इति स्वस्वप्रधानेन तुल्यमेकान्तरितव्यवधानं भवति। सह प्रयुज्यमानेषु प्रधानेषु संनिपातिनामङ्गानामावृत्त्याऽनुष्ठाने कर्तव्ये द्वितीयादिपदार्थानां प्रथमानुष्ठितपदार्थक्रमाद्यः क्रमः स प्रवृत्तिक्रमः। यथा प्राजापत्याङ्गेषु। तत्र हि वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्तीति वाक्येन तृतीयानिर्देशात्सेतिकर्तव्यताकाः प्राजापत्या एककालत्वेन विहिता इति तेषां तदङ्गानां च साहित्यं संपादनीयम्। तत्र प्रधानानां साहित्यमेकदेवताकत्वेनैकस्मिन्कालेऽनुष्ठानात्संपादयितुं शक्यते। उपाकरणादीनां तदङ्गानां स्वप्रधानेनानुष्ठानादेव संभवति नान्यथा। अतः कंचित्पशुमारभ्य क्रमेण सर्वत्रोपाकरणं कृत्वा तमेव पशुमारभ्य क्रमेण

तद्वत्पूर्वमीमांसागतश्रुत्यादिविषयकप्रमाणविचारस्य सर्वत्र वेदान्तविचारेऽपेक्षिततया विद्याभेदविचारे शब्दान्तरादिभिः कृतधर्मभेदविचारस्य = श्रुतिलिङ्गादिगतप्राबल्यदौर्बल्यविचारस्य च

---

नियोजनं सर्वत्र क्रियते। एवं च प्रकृतेऽग्निहोत्रानन्तरं यवागूपाकस्य निष्फलत्वाद्यवागूं पक्त्वाऽग्निहोत्रं जुहोतीत्यार्थक्रमेण प्रयोगविधिः प्रयोगप्राशुभावं यथा विधत्ते तद्वद्बोध्यमिति।

= श्रुतिलिङ्गादीति। 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' (जै० सू० ३।३।१४)। अस्यार्थः— निरपेक्षो रवः श्रुतिः। सामर्थ्यं लिङ्गम्। समभिव्याहारो वाक्यम्। उभयाकाङ्क्षा प्रकरणम्। देशसामान्यं स्थानम्। यौगिकः शब्दः समाख्या। एतेषां विनियोजकानां षण्णां प्रमाणानां मध्ये द्वयोर्विरुद्धयोः समवाय एकत्र संनिपाते पारदौर्बल्यमुत्तरोत्तरं पूर्वपूर्वाद्दुर्बलम्। पूर्वेणोत्तरस्य बाध इति यावत्। अर्थविप्रकर्षात् उत्तरप्रमाणस्य पूर्वप्रमाणकल्पकत्वादर्थस्य विनियोगस्य विप्रकर्षाद्विलम्बादिति। तत्र श्रुत्यादीनां क्रमेणोदाहरणान्युक्त्वा पारदौर्बल्योदाहरणानि वक्ष्यन्ते। तथाहि—श्रुतेरुदाहरणं 'व्रीहिभिर्यजेत' इति। लिङ्गोदाहरणं 'बर्हिर्देवसदनं दामि' इति। वाक्योदाहरणं 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इति। प्रकरणोदाहरणं 'समिधो यजति' इति। स्थानोदाहरणम् 'इन्द्राग्नी रोचना दिवः' इत्यादीनां याज्यानुवाक्यामन्त्राणाम् 'ऐन्द्राग्नमेकादशकपालं निर्वपेत' 'वैश्वानरं द्वादशकपालं निर्वपेत्' इत्येवं क्रमविहितेष्टिषु यथासंख्यं प्रथमस्य प्रथमं द्वितीयस्य द्वितीयं विनियोगो भवतीति। समाख्योदाहरणं तु होतृचमस इति। लिङ्गापेक्षया श्रुतेः प्राबल्यस्योदाहरणम् 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति। लिङ्गादिषु हि प्रत्यक्षविनियोजकशब्दाभावात्तादृशः शब्दः कल्पनीयो भवति। यावच्च लिङ्गादिभिर्विनियोजकः शब्दः कल्प्यते तावत्प्रत्यक्षया श्रुत्या विनियोगस्य कृतत्वात्तेषां कल्पकत्वशक्तिर्विहन्यत इति श्रुतेः सर्वापेक्षया प्राबल्यम्। 'कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे' इत्यैन्द्या ऋच इन्द्रप्रकाशनसामर्थ्याद्यावत्तल्लिङ्गात् 'ऐन्द्र्येन्द्रमुपतिष्ठते' इति श्रुतिः कल्प्यते तावत्प्रत्यक्षया 'ऐन्द्या गार्हपत्यमुपतिष्ठते' इति श्रुत्या गार्हपत्योपस्थानाङ्गत्वं सिध्यतीति लिङ्गस्य दौर्बल्यम्। वाक्यापेक्षया लिङ्गस्य प्राबल्योदाहरणं तु 'स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं

तद्भूतस्य तत्रापेक्षितत्वाच्चोत्तरमीमांसयाऽपेक्ष्यमाणपूर्वमीमांसैव पूर्वमध्येयत्वेन प्राप्नोति। तथा पूर्वपूर्वाध्यापकपरम्पराप्राप्तपाठक्रमानुसारेणापि कर्मकाण्डज्ञानकाण्डयोर्विचारस्योक्तक्रम एव प्राप्नोतीत्येकदेशिमते ब्रह्मविचारात्पूर्वं कर्मविचारस्य प्रकृतत्वात्तदपेक्षार्थत्वमेवाथशब्दस्येत्येकदेशिमतानुसारेण तदाशङ्कासंगतिः । कर्मविचारापेक्षानपेक्षयोर्विप्रतिपत्तावप्यानन्तर्यार्थत्वे विप्रतिपत्त्यभावादुक्तविप्रतिपत्तेश्चाग्रे निरसनीयत्वादानन्तर्यार्थ-

---

कल्पयामि । तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः ’ इति । अत्र हि समभिव्याहाररूपवाक्यात्पूर्वोत्तरार्धयोरेकवाक्यत्वे सति सदनकरणस्थापनयोरुभयत्राप्ययं कृत्स्नो मन्त्रो विनियोक्तव्य इति प्राप्तम् । तत्रापि शक्तिमकल्पयित्वा वाक्येन विनियोगासंभवाद्यावद्वाक्यं लिङ्गं कल्पयित्वा श्रुतिं कल्पयति तावल्लिङ्गं श्रुतिं कल्पयित्वा विनियोजकं भवतीति वाक्यस्य शक्तिकल्पनव्यवधानेन विप्रकर्षात्संनिकृष्टेन लिङ्गेन सदनस्थापनयोः पूर्वोत्तरार्धयोर्विभज्यैव विनियोगो भवतीति वाक्याल्लिङ्गस्य प्राबल्यं सिद्धम् । प्रकरणाद्वाक्यस्य प्राबल्योदाहरणं तु ‘ अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम् ’ इति । अत्र ह्यग्नीषोमावित्यस्य लिङ्गात्पौर्णमास्यङ्गत्वे सिद्धे ‘ इदं हविः ’ इत्यादेरपि तदङ्गत्वम् । न तु दर्शपूर्णमाससाधारणात्प्रकरणाद्दर्शाङ्गत्वमपि । एवमिन्द्राग्नी इदमित्यत्रापि बोध्यम् । एवं च प्रकरणाद्वाक्यस्य प्राबल्यं सिद्धम् । स्थानात्प्रकरणस्य प्राबल्योदाहरणं ‘ अक्षैर्दीव्यति, राजन्यं जिनाति, शौनःशेपमाख्यापयति ’ इति । इमानि हि वाक्यानि राजसूयान्तर्गताभिषेचनीयाख्यसोमयागसंनिधौ पठितानि । तेषां च संनिधिपाठाख्यस्थानादभिषेचनीयाङ्गत्वे प्राप्ते प्रकरणाद्राजसूयाङ्गत्वम् । स्थानस्य प्रकरणकल्पनाधिक्येन विनियोजकत्वे प्रकरणापेक्षया विप्रकर्षात् । अतो राजसूयान्तर्गतसर्वयागाङ्गत्वं विदेवनादीनां सिध्यतीति स्थानात्प्रकरणस्य प्राबल्यं सिद्धम् । समाख्यापेक्षया स्थानस्य प्राबल्योदाहरणं तु ‘ शुन्धध्वं दैव्याय कर्मणे ’ इति । अयं हि मन्त्रः पौरोडाशिकमिति समाख्यया पुरोडाशकाण्डोक्तानामुलूखलादीनां शोधने न विनियुज्यते । किंतु स्थानात्सांनाय्यपात्रशोधन एव विनियुज्यते । पूर्वोक्तरीत्या समाख्यापेक्षया स्थानस्य संनिकृष्टत्वात् । अयं च श्रुत्यादीनां प्राबल्यदौर्बल्यविचारो बहूपकारकत्वात्प्रसङ्गतः प्रतिपादितः । एतत्सहकृतेन पूर्वोक्तानां विनियोगविधिनाङ्गत्वं बोध्यते ।

त्वविचारे न तद्दूषणाग्रहः कर्तव्य इति तदर्थः । न च तर्हि तदर्थकत्वमेव कुतो नोक्तमिति वाच्यम् । सिद्धान्ते कर्मविचारस्य ब्रह्मविचारापेक्षणीयत्वानुपगमेन तदनुक्तेः । एतेनास्यैवाऽऽदिसूत्रत्वेन पूर्वप्रकृतार्थत्वशङ्कानुदयादिति चन्द्रिकोक्तं दूषणं परास्तम् । एकदेशिमतानुसारेण तादृशशङ्कायां बाधकाभावात् । विंशतिलक्षण्या एकशास्त्रत्वोपपत्तिप्रकारश्चाऽऽकरेषु स्पष्टो दिङ्मात्रमत्राभिधीयते—' अथातो धर्मजिज्ञासा ' ( जै० सू० १ । १ । १ ) इति सूत्रेऽथशब्देन कृत्स्नवेदाध्ययनानन्तर्यमुच्यते । अतःशब्दस्य कृत्स्नवेदस्य विवक्षितार्थत्वमुच्यते । तदनुसारेण धर्मशब्दः कृत्स्नवेदार्थपर एव । ततश्च वेदविवक्षितार्थत्वाद्विचारणीयत्व उपनिषदर्थस्यापि विचारणीयता प्राप्तैव । अथवा धर्मशब्दोऽलौकिकश्रेयःसाधनतां प्रवृत्तिनिमित्तीकृत्य ज्योतिष्टोमादिवद्ब्रह्मणोऽपि शक्त्यैवाभिधायकः । 'एष ह्येव साधु कर्म कारयति तमेभ्यो लोकेभ्य उन्निनीषते' (कौ० ३।८) इति श्रुत्या ब्रह्मणोऽपि श्रेयःसाधनत्वबोधनात् । ननु श्रेयःसाधनतामात्रस्य धर्मपदप्रवृत्तिनिमित्तत्वे श्येनादीनामपि धर्मता स्यादिति बलवदनिष्टाननुबन्धित्वमपि तत्कोटौ निवेशनीयम् । तच्च न ब्रह्मसाधारणम् । 'एष उ एवासाधु कर्म कारयति तं यमधो निनीषते' ( कौ० ३ । ८ ) इति श्रुत्या तस्य बलवदनिष्टानुबन्धित्वबोधनादिति चेत् । न । बलवदनिष्टाननुबन्धित्वं न बलवदनिष्टाजनकत्वादिरूपम् । किंतु बलवदनिष्टप्रयोजकश्रेयोगतोद्देश्यताप्रतियोग्यनुष्ठानानिष्पन्नत्वम् । तद्विशिष्टश्रेयःसाधनत्वं धर्मपदप्रवृत्तिनिमित्तम् । तच्च ब्रह्मसाधारणं तस्य नित्यतयाऽनुष्ठाननिष्पन्नत्वाभावात् । एवं चैकप्रतिज्ञाविषयत्वात् । ' अथातो धर्मजिज्ञासा ' ( जै० सू० १ । १ । १ ) इत्यारभ्य 'अनावृत्तिः शब्दात्' ( ब्र० सू० ४।४ । २२ ) इत्यन्तमेकमेव शास्त्रम् । ननु संकर्षणेन सह षोडशलक्षणी कर्ममीमांसा जैमिनिना कृता । चतुर्लक्षणी ब्रह्ममीमांसा बादरायणकृता । जैमिनिबादरायणयोश्च परस्परविरुद्धमताभिनिवेशश्च स्पष्ट एवेति कथं तदुभयकर्तृकविंशतिलक्षण्या एकग्रन्थत्वम् । किंच ग्रन्थतोऽप्यस्ति

विरोधः । तथा हि–'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते ' ( जै० सू० १ । २ । १ ) इति सूत्रेणाक्रियार्थानामप्रामाण्यमाशङ्क्य ' विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः' (जै० सू० १।२।७) इति सूत्रेण तेषामेव विधिस्तावकत्वेन प्रामाण्यं व्यवस्थापितं जैमिनिना । इदं च वेदान्तसाधारणम् । आम्नायपदस्य वेदमात्रपरत्वात् । बादरायणेन तु ' शास्त्रयोनित्वात् ' ब्र० सू० १ । १ । ३ ) इति सूत्रेण वेदान्तानां प्रामाण्यं प्रतिपाद्यार्थवादाधिकरणोक्तं वेदान्तानां क्रियाशेषत्वं पूर्वपक्षीकृत्य ' तत्तु समन्वयात् ' ( ब्र० सू० १।१।४ ) इति सूत्रेण वेदान्तानां स्वातन्त्र्येण ब्रह्मणि प्रामाण्यं समर्थितम् । एवमादिबहुविरोध इति न विंशतिलक्षण्या एकशास्त्रत्वं संभवदुक्तिकमिति चेत् । न । न तावद्विरुद्धमताभिनिविष्टकविकर्तृकत्वमेकग्रन्थत्वविरोधि । तादृशयोरपि द्वयोः किंचिदर्थमुद्दिश्य समयबन्धपूर्वकैकग्रन्थनिर्मातृत्वोपपत्तेः । दृश्यते हि परस्परविरुद्धमताभिनिविष्टयोर्जयादित्यवामनयोः काशिकाख्यैकग्रन्थनिर्मातृत्वम् । ग्रन्थतस्तु विरोध एवं परिहार्यः—अथातो धर्मजिज्ञासेति हि द्वे प्रतिज्ञे । एका विंशतिलक्षणसाधारणी । तस्यां धर्मशब्दः कर्मब्रह्मसाधारणः । द्वितीया तु कर्मकाण्डमात्रविषया । तस्यां च धर्मशब्दः कर्ममात्रपरः । एकेनापि सूत्रेण प्रतिज्ञाद्वयमावृत्त्या सूपपादम् । सूत्राणामावृत्त्याऽनेकार्थत्वस्यालंकारत्वात् । नन्वेवं कुत्रापि न दृष्टमिति चेत् । ' अथातः शेषलक्षणम् ' ( जै० सू० ३ । १ । १ ) इति सूत्रे तथा दृष्टत्वात् । इदं हि सूत्रं द्विलक्षण्याः परं शिष्टं यावत्किंचनलक्षणं तत्सर्वं वक्तुमारब्धम् । अथातः शेषलक्षणमित्यनेनावशिष्टदशाध्यायीपरत्वेन व्याख्याय तृतीयाध्यायपरत्वेनापि व्याख्यातं वार्तिककृता । तत्र ' शेषः परार्थत्वात ' ( जै० सू० ३ । ।२) इति सूत्रं यथा द्वितीयप्रतिज्ञायां लक्षण[illegible]पादकतया संगतं तद्वत् ' चोदनालक्षणोऽर्थो धर्मः ' ( जै० सू० १ । १ । २ ) इत्यपि सूत्रं द्वितीयप्रतिज्ञायां तल्लक्षण[illegible] संगतम् । तथा च तेन कर्मणि चोदनायाः प्रामाण्ये द्वितीयप्रतिज्ञया प्रतिज्ञाते

क्रियासमभिव्याहृतानामेव सिद्धार्थपरत्वेन प्रतीयमानानामप्रा- माण्यमाशङ्क्य विधिस्तावकत्वेन प्रामाण्यं व्यवस्थापितं पूर्वमी- मांसायाम्। तदसमभिव्याहृतानां सिद्धार्थपराणां प्रामाण्यं व्यव- स्थापितमुत्तरमीमांसायामिति न ग्रन्थतो विरोध इति।

यद्वा—ननु पूर्वप्रकृतापेक्षां प्रयोगोपाधिं कृत्वा यथाऽऽत्मा नि- त्योऽथानित्य इत्यादावनित्यशब्देन विशेष्यतयाऽन्वयार्थमपेक्ष- माणपूर्वप्रकृतात्मवाचित्वमप्यथशब्दस्य दृष्टं तद्वत्प्रकृतेऽपि किं न स्यात्। सूत्रे कल्पान्तरानुपन्यासेऽपि सौत्राथशब्दार्थस्यापेक्षित- पूर्वस्य जिज्ञासायामानन्तर्यात्मकभेदसंबन्धेनान्वयः। अथानित्य इत्यादौ तदर्थस्यैव धर्मितया तत्राभेदसंबन्धेनानित्यपदार्थेऽन्वय इत्येतावद्विशेषसत्त्वेऽपि तस्य कल्पान्तरोपन्यास एवाथशब्द- स्यापेक्षितपूर्ववाचित्वं नान्यत्रेति नियमासाधकत्वात्। ब्रह्म- विचारात्पूर्वं कर्मविचारस्य प्रकृतत्वं पूर्वमुपपादितमेवैकदेशिम- तेन। यद्यपि सामानाधिकरण्यार्थमनुषक्तस्य धर्मिणोऽथानित्य इत्यादावपेक्षायामपि न सोऽथशब्दार्थः। एकस्मिन्वाक्य आत्मनो द्विरुपादानवैयर्थ्यादिति शङ्का संभवति तथाऽपि सा भ्रममूलैव। नह्यात्मा नित्योऽथानित्य इति दृष्टान्ते वाक्यैक्यं दर्शितम्। अपि तु द्वे एते वाक्ये। आत्मा नित्य इत्ये- केनोक्तेऽपरेणाथानित्य इति, उतानित्य इत्यादिकं प्रयुज्यते। अत एव विप्रतिपत्तिरूपत्वमप्येतस्योपपद्यते। विरुद्धार्थकनाना- वाक्यत्वरूपस्यैव तस्य तन्त्रान्तर उक्तत्वात्। एतेन सूत्रे कल्पा- न्तरानुपन्यासेन पूर्वप्रकृतापेक्षार्थत्वमथशब्दस्याशक्यशङ्कमिति। कल्पान्तरोपन्यासेऽपि सामानाधिकरण्यार्थमनुषक्तस्य धर्मिणोऽ- नित्य इत्यादावपेक्षायामपि न सोऽथशब्दार्थः। अन्यथा 'उता- नित्यः' इत्यादावप्युतादेरपि पूर्वप्रकृतापेक्षार्थत्वं स्यादिति चन्द्रिकोक्तं परास्तमित्यत आह—पूर्वप्रकृतापेक्षायाश्चेति। अपे- क्षितपूर्ववाचिताया इत्यर्थः।

आनन्तर्याव्यतिरेकादिति। ब्रह्मजिज्ञासया स्वहेतुतयाऽपे- क्षितपूर्वविवेकादेरथशब्दार्थत्वेऽप्यानन्तर्यसंबन्धेन तस्य जिज्ञा- सायामन्वयस्य वाच्यतया तस्य संसर्गत्वे प्रकारत्वे वाऽ-

र्थतो विशेषाभावादानन्तर्यार्थत्वपक्षे योऽर्थस्तस्यैव पूर्वप्रकृतापेक्षार्थत्वेऽपि सिद्धेरित्यर्थः । नन्वेवं सत्यथशब्द आनन्तर्यार्थ एव परिगृह्यत इत्यानन्तर्यावधारणं कुत इत्यत आह—फलत इति । उत्पत्तिघटितेत्यर्थः । अयं भावः—अपेक्षितपूर्वस्य विवेकादेरुदासीनसाधारणतदव्यवहितोत्तरक्षणवृत्तित्वात्मकानन्तर्यसंबन्धेन जिज्ञासान्वये विवेकादेर्हेतुत्वासिध्द्याऽव्यवहितोत्तरक्षणोत्पत्तिकत्वात्मकानन्तर्यसंबन्धेनैव जिज्ञासायामन्वयस्य वाच्यतयाऽऽद्यक्षणसंबन्धरूपाया उत्पत्तेर्गुरुशरीरतया तद्घटितपरम्परासंबन्धस्य संबन्धत्वे विवादात्परिशेषादानन्तर्यार्थत्वमेवाथशब्दस्येति । विवरणे तु प्रकृतादर्थादर्थान्तरत्वशङ्कया प्रकृतापेक्षायाश्चेति भाष्यमवतार्यार्थान्तरत्वं हि यतः कुतश्चेद्व्यर्थम् । अवश्यं हि पुरुषः किंचित्कृत्वा किंचित्करोति । पुष्कलकारणाचेदानन्तर्याभिधानं विना कारणत्वासिद्धिः । आनन्तर्याभिधाने च प्रकृतादर्थादर्थान्तरत्वस्यान्तर्णीततया सिद्धिरिति तदभिप्रायो वर्णितः ।

यत्त्वानन्तर्यानभिधानेऽपि वैयर्थ्यपरिहारार्थमेव प्रकृतस्य हेतुत्वसिद्धेः प्रकृतादर्थादर्थान्तरत्वपरित्यागे नोक्तबीजसंभवः । अन्यथाऽऽनन्तर्यार्थकत्वेऽपि तत्प्रतियोगिनो हेतुत्वासिद्धेरिति चन्द्रिकायां दूषणमुक्तं तद्विवरणभावानवबोधनिबन्धनम् । आनन्तर्यं हि न तदव्यवहितोत्तरक्षणवृत्तित्वमात्रं ज्येष्ठभ्राता कनिष्ठस्यानन्तर इति व्यवहारापत्तेः । किंतु तदव्यवहितक्षणोत्पत्तिकत्वमेव । तदेव च मुख्यमन्यद्गौणम् । भवति हि तत्प्रयोज्यात्तत्प्रयोज्यं मुख्यमिति । एवं च धनं लभतेऽथ सुखी भवति, क्षिप्रा नदी पूर्णजला यदाऽथ तनोति राजोपवनानि तीरेऽशोकपुंनागरसालसालकपित्थजम्बूपनसादिवृक्षैरित्यादावसति बाधक आनन्तर्यघटकोत्पत्तावानन्तर्यप्रतियोगितावच्छेदकावच्छिन्नप्रयोज्यत्वप्रतीतेरथशब्दसमभिव्याहारव्युत्पत्तिलभ्यतयाऽथशब्दस्याऽऽनन्तर्यार्थकत्वे विचारप्रवृत्त्युत्पत्तिप्रयोजकतावच्छेदकत्वस्य साधनचतुष्टयत्वे सुग्रहतया तादृशधर्मवत्त्वरूपं तदीयपुष्कलकारणत्वं साधनचतुष्टये सुग्रहम् । प्रकृतादर्थादर्थान्तरत्वे

च न व्युत्पत्तिबलादुक्तार्थलाभ इति विवरणाभिप्रायः। यादृशसमुदायत्वावच्छिन्नात्कार्योत्पत्तिर्व्यवहिता व्यभिचरिता च तादृशसमुदायत्वस्य कार्योत्पत्तिप्रयोजकतानवच्छेदकत्वनियमाभिप्रायेण कारणादानन्तर्यमप्यव्यवधेरव्यभिचाराच्चेति विवरणेन बाधकासत्त्वप्रदर्शनाय कारणस्याऽव्यवधिरव्यभिचारश्चोक्त इति न चन्द्रिकोक्तदूषणान्तरावकाशः। तत्सिद्धमवश्यापेक्षिताधिकारिविशेषप्रतिपत्त्युपयोग्यानन्तर्यार्थकत्वमेवाथशब्दस्येति।

अथैवमपि कथमविकार्यादिप्रतिपत्तिरिति चेत्। इत्थम्—अथशब्देनाऽऽनन्तर्याभिधाने योग्यतदवधित्वाकाङ्क्षायां श्रवणविधिं सूत्रयतस्तत्प्रकरणस्थवाक्यैर्विवेकादीनां बुद्धिस्थत्वेन तेषां तदवधित्वसिद्धौ विवेकादिसाधनसंपत्तेः श्रवणविध्यधिकारनिमित्तत्वावगमाद्विचारे विवेकादिमानधिकारी ज्ञानद्वारा मोक्षश्च विचारप्रयोजनमिति भवति तत्प्रतिपत्तिरिति। विवेकादिसाधनसंपत्तिश्च ' यदानन्तर्यमथशब्देनोच्यते तद्वक्तव्यमित्याक्षिप्य, उच्यते—नित्यानित्यवस्तुविवेकः, इहामुत्रार्थभोगविरागः, शमदमादिसाधनसंपत्, मुमुक्षुत्वं च ' इत्यादिभाष्येण दर्शिता ग्राह्या। तत्र शमदमादीत्यादिपदेनोपरतितितिक्षाश्रद्धा ग्राह्याः। अथ शमदमादीत्यादिपदेनोपरत्यादेरिव विवेकादीनामपि ग्रहणसंभवात्पृथक्तदुपादानं भाष्यकृतः किमभिप्रायमिति चेत्। सर्वशाखाप्रत्ययन्यायेन यथाऽग्निहोत्रादिविधीनां सर्वशाखास्वैक्यं तथा 'सोऽन्वेष्टव्यस्तद्विजिज्ञासस्व श्रोतव्यः' इत्यादौ सर्वत्र श्रवणविधेरेकत्वमेव। तथा च सोऽन्वेष्टव्य इत्यत्र 'तद्यथेह कर्मचितो लोकः क्षीयते' (छा० ८। १।६) इत्यादि ' नास्त्यकृतः कृतेन ' ( मु० १। २। १२ ) इत्यन्तेन ज्ञानफलमोक्षस्य नित्यत्वं कर्मफलस्वर्गादेरनित्यत्वमिति नित्यानित्यविवेकाः श्रुताः। विचारसाध्यज्ञानप्रकरणे 'परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायात् ' ( मु० १।२। १२ ) इति वैराग्यं श्रुतम्। अन्यत्र ' शान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वा ' ( बृ० ४। ४। २३ ) इति शान्त्यादि श्रुतम्। 'ब्रह्म वेद

ब्रह्मैव भवति ' ( मु० ३ । २ । ९ ) इति फलश्रुतिषु मुमुक्षा गम्या । एवं विशकलितानामप्यधिकारिविशेषणानां पूर्वोक्त-न्यायेनैकश्रवणविध्यधिकारनिमित्तत्वं निराबाधमेव । तदु-क्तम्—

तत्र तत्र विवेकादि श्रुतमेकत्र नीयते ।
सर्वशाखाप्रत्ययेन विधेरेकत्वनिश्चयात् ॥ इति ।

यद्यपि मुमुक्षायामधिकारिविशेषणत्वेन संगृहीतायां ततः प्राचीनान्यर्थाल्लभ्यन्तेऽधिकार्यपेक्षाऽपि शाम्यतीति तदानन्त-र्यमेव वक्तव्यम्, अन्यथा विवेकादिहेत्वानन्तर्यस्यापि वक्त-व्यता स्यात् । तथाऽपि शास्त्रेण सर्वेषां संकीर्तितत्वात्तद्वैयर्थ्यान्य-थानुपपत्त्या श्रुतानामेव सर्वेषां समुच्चितानां परस्परकार्यकारण-भावेन परस्परोपयुक्तानां वाऽधिकारिविशेषणत्वरूपनिमित्तत्व-मित्यभिप्रायेणैव विवेकादीनां पृथक् श्रुतानां पृथक्कथनम् । शान्तो दान्त इत्यत्र श्रुतानां शमदमादीत्यादिना पृथगादिपदेन ग्रहणमित्यभिप्रायात् । किंच मुमुक्षा हि निर्दुःखसुखाभिलाष एव । स च सर्वसाधारण इति नाधिकारिविशेषणं भवितुमर्हति । किंतूत्कट एवेति वक्तव्यम् । तदुत्कटत्वं चा-धिकारिणाऽवश्यं निर्णेतव्यम् । अन्यथा संन्यासपूर्वकं श्रवणा-रम्भ उत्कटमुमुक्षाया अभावे च फलपर्यवसायिश्रवणासंभवा-द्व्यर्थः प्रयासः स्यादिति शङ्काकुलस्य श्रवणे प्रवृत्तिर्न स्यात् । उत्कटमुमुक्षा च सैवोच्यते—या विवेकादिपरम्परया प्राप्ता विवे-कादिसहिता वा । अतस्तदुत्कटत्वाभिव्यञ्जकतया विवेकाद्युप-न्यासेन तदादिमुमुक्षानन्तर्यमेवाभिहितम् । विवेकादिहेतूनामधि-कारिविशेषणतया श्रवणविधिसमभिव्याहारे श्रुत्यनुक्ततया तदुत्कटत्वानभिव्यञ्जकतया च न तदानन्तर्यवक्तव्यताप्रसङ्गः । एतेन किंच भामतिरीत्या साधनचतुष्टये पूर्वपूर्वस्योत्तरोत्तर-हेतुत्वेन मुमुक्षैवाधिकारिविशेषणमन्यत्तद्धेतुभूतं किंवा विवर-णैकदेशोक्तरीत्या मुमुक्षावद्विवेकादिरप्यधिकारिविशेषणम् । आद्ये मुमुक्षानन्तर्यमेवाथशब्दार्थः स्यान्न साधनचतुष्टयानन्त-र्यम् । अन्यथा विवेकहेत्वानन्तर्यमपि तदर्थः स्यादिति विरा-

गशमदमादिमुमुक्षासु सतीषु विवेकाभावेन फलपर्यन्तविचाराभावस्यादर्शनादित्यादिचन्द्रिकोक्तदूषणं भाष्यनिबन्धादेरुक्ततात्पर्यानवबोधनिबन्धनमेव । तथा शमदमादीत्यत्राऽऽदिपदं न युक्तम् । तेन तितिक्षादेरेव ग्रहणं न विवेकादेरिति तितिक्षाद्यनुगतविवेकादिव्यावृत्तस्योपसंग्राहकस्य धर्मस्याभावादिति च चन्द्रिकोक्तदूषणमुक्तभाष्यादिग्रन्थाभिप्रायाज्ञानमूलमेव । शान्तो दान्त इति श्रुत्युपात्तकर्तृविशेषणत्वरूपानुगतानतिप्रसक्तधर्मसौलभ्यस्यातिस्पष्टत्वाच्च । तद्भाष्येऽथशब्दस्याधिकारानन्तर्यार्थकत्वस्यैवोक्तत्वेनाधिकारस्य च विष्णुपादैकसंश्रयत्वशमदमादिमुमुक्षारूपतया स्वेन व्याख्याततया तत्राप्युक्तशङ्कया दूषणभूषणयोः समानयोगक्षेमत्वेनास्मदीयभाष्यकारोक्तेऽथशब्दस्याऽऽनन्तर्यार्थकत्व एव दूषणोद्भावनं मन्दमतिप्रतारणमात्रमेव । अयं परो विशेषः—अस्मद्भाष्यकारोक्ताधिकारिविशेषणानि सर्वाणि श्रोतव्यविधिसमभिव्याहृतवाक्यबोधितानि । विष्णुपादैकसंश्रयत्वरूपाधिकारस्तु न श्रवणविधिसमभिव्याहृतवाक्यबोधित इति तत्प्रतिपादने श्रुत्यनभिप्रेतार्थकत्वमेव सूत्रस्याऽऽपतेदिति ।

अथ कोऽयं नित्यानित्यविवेक इति चेत् । अत्र केचित्—आत्मा नित्योऽनित्यमन्यत्, आत्मा सत्योऽसत्यमन्यादिति वा विवेक एव स इत्याहुः । ज्ञानफलं नित्यं कर्मफलमनित्यमिति विवेक एव सः । अनित्यत्वं चात्र ध्वंसप्रतियोगित्वम् । तद्भिन्नत्वं च नित्यत्वमित्यपरे । अथ केषांचिन्मते शास्त्रेण ज्ञातव्यस्याऽऽत्मनित्यत्वादेः शास्त्रविचारात्प्रागेव ज्ञातत्वाद्विचारविधायकशास्त्रवैयर्थ्यमिति चेत् । मैवम् । जातोऽपि निरुक्तविवेकोऽधीतसाङ्गस्वाध्यायस्य गृहीतपदपदार्थसंबन्धस्य कस्यचित् ‘ अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति विश्वं सत्यम् ’ इत्येवमादि वाक्यं पश्यतः परस्परविरुद्धार्थकसगुणनिर्गुणबोधकवाक्यानि तथा ‘ द्वा सुपर्णा ’ ( श्वे० ४ । ६ )‘तत्त्वमसि ’ ( छा० ६ । ८ । ७ ) इत्यादिभेदाभेदबोधकवाक्यानि तथाऽऽत्मानेकत्वैकत्वादिबोधकवाक्यानि च पश्यतः शङ्काकलङ्कित एव भवति ।

तादृशशङ्कानिवृत्तिश्च कस्यचित्परमेश्वरानुग्रहाद्विरुद्धवाक्यान्यन्यथा व्याख्येयानीति दृढनिश्चयात्स्वत एव संभवति । कस्यचित्प्रथमसूत्रविचारेण सा शङ्काऽपोदिता भवतीत्याप्तोपदेशं लब्ध्वा तदध्ययनेनावशिष्टाः सर्वाः शङ्का उत्तरत्र निराकरिष्यत इत्यध्यापकवचने विश्वासपूर्वकतत्तदधिकरणविचारेण वा निवर्तत इति शङ्काकलङ्कितत्वाभावरूपविवेकदार्ढ्याय शास्त्रसार्थक्यात् । एतेन–आत्मा नित्योऽनित्यमन्यदिति केषांचिन्मतसिद्धविवेकमाक्षिप्य ज्ञातव्यस्य प्रागेव ज्ञातत्वाद्विचारवैयर्थ्यात् । न च सगुणनिर्गुणविवेकाखण्डसमन्वयाद्यर्थं शास्त्रमिति युक्तम् । भामत्यां नित्यानित्यशब्दयोः सत्यानृतपरत्वेनोक्ततया ब्रह्मैव सत्यमसत्यमन्यादिति विवेकस्य प्रागेव सिद्धौ तदर्थस्य सगुणनिर्गुणविवेकादेरप्यनपेक्षत्वात् । नहि श्रुतितात्पर्यधीः स्वरूपेणापेक्षिता । किंतु ज्ञेयविश्वायकतया । न चोक्तादन्यन्मुमुक्षुज्ञेयमस्ति । जीवब्रह्मभेदस्यापि ब्रह्मातिरिक्ततया तन्मिथ्यात्वस्य तदभेदस्यापि ब्रह्ममात्रस्वरूपतया तत्सत्यत्वस्यापि तेनैव निश्चितत्वाच्चेति चन्द्रिकोक्तं दूषणं निरस्तम् । तन्मतेऽपि 'नारायणोऽसौ परमो विचिन्त्यो मुमुक्षुभिः कर्मपाशादमुष्मात्' इत्यादिप्रथमसूत्रनिर्णयार्थज्ञानफलस्य विष्णुपादैकसंश्रयत्वरूपाधिकारस्य पूर्वमेव सिद्धौ शास्त्रवैयर्थ्यपरिहारस्य मदुक्तरीत्यतिरिक्तप्रकारान्तरासाध्यत्वाच्च मदीयोक्तौ दूषणोद्भावनं मन्दप्रतारणमात्रे पर्यवसन्नमेव ।

यदपि चन्द्रिकायाम्—" न च विवरणरीत्या नित्यानित्यशब्दौ ध्वंसाप्रतियोगिप्रतियोगिपरावित्यादिना ब्रह्मज्ञानफलं नित्यं कर्मफलमनित्यमित्यपर *इत्यादिनोक्तं नित्यानित्यविवेकमाक्षिप्य तन्न युक्तं प्रतिपन्नोपाधावत्यन्ताभावप्रतियोगित्वरूपबाध्यत्ववतोऽनात्मनो +ध्वंसप्रतियोगित्वायोगात् । पारमार्थिक-

---

* अपर इत्यादीति । पूर्वस्मिन्पृष्ठेऽस्माभिः 'अपरे' इत्यन्तग्रन्थेनानूदितमित्यर्थः ।

+ प्रतियोगित्वायोगादिति । विवरणे हि प्रतिपन्नोपाधिगताभावप्रतियोगित्वं मिथ्यात्वमित्युक्तमुक्तम् । तादृशमिथ्यात्वलक्षणस्वीकारे यथा शशशृङ्गा-

त्वाकारेणात्यन्ताभावः स्वरूपेण तु ध्वंस इति चेन्न । पारमार्थिकत्वस्याबाध्यत्वरूपत्वेनान्योऽन्याश्रयात् * । × तथाऽत्यन्ताभावप्रतियोगित्वस्य निराकारे ब्रह्मण्यपि संभवाच्च । अतात्त्विके रूप्यादावनित्यत्वाव्यवहाराच्च । गौरनाद्यन्तवती, एषोऽश्वत्थः सनातन इति श्रुत्यनुसाराय मोक्षेऽप्यतात्त्विक्यनुवृत्तिर्निवृत्तिस्तु तात्त्विकी । मुक्तेर्बन्धाद्वैषम्यं तु तात्त्विकनिवृत्तिसत्तामात्रेणेत्यापाताच्च । तस्मात्परमते नित्यानित्यविवेको न युक्तः " इति दूषणमुक्तम् ।

तत्रेदं विचार्यते—प्रतिपन्नोपाधिगतात्यन्ताभावप्रतियोगिनो ध्वंसप्रतियोगिता कुतो न युज्यते, किमत्यन्ताभावाधिकरणे ध्वंसायोगादुतोक्तप्रतियोगिनोऽत्यन्तासत्त्वरूपतयाऽत्यन्तासतश्च शशविषाणादेर्नाशादर्शनात् । नाऽऽद्यः । ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वे प्रमाणाभावात्तदधिकरणेऽप्यत्यन्ताभाववृत्तौ बाधकाभावात् । स्पष्टं चेदं नव्यतार्किकमताभिज्ञानाम् । न द्वितीयः । सद्विशेषस्याऽऽत्मनो नाशादर्शनवदसद्विशेषे तददर्शनस्याकिंचित्करत्वात् । प्रतिपन्नोपाधिगतात्यन्ताभावप्रतियोगिनोऽपि वियदादेः शुक्तिरूप्यादेश्चार्थक्रियाकारितया 'इदं सर्वमसृजत । सत्यं चानृतं च सत्यमभवत्' इति श्रुतिसिद्धोत्पत्तिमत्तया चात्यन्तासद्वैलक्षण्येनानात्ममात्रस्यात्यन्तासत्त्वायोगाच्च । शुक्तिरूप्यादेरपि प्रवृत्तिजनकधीविषयत्वादर्थक्रियाकारित्वमक्षतमेव । पारमार्थिकत्वस्याबाध्यत्वरूपत्वेनान्योन्याश्रयतोक्तिरपि न साधीयसी । अबाध्यं सर्वं प्रमेयमित्याकारकवाक्यतात्पर्य-

---

देरभावप्रतियोगिनोऽसत्त्वाद्ध्वंसायोगस्तथा सर्वस्याप्यनात्मनो वस्तुनोऽसत्त्वापत्त्या ध्वंसप्रतियोगित्वायोगादित्यर्थः ।

* अन्योन्याश्रयादिति । अबाध्यत्वं हि बाध्यत्वाभावो बाध्यत्वं चाबाध्यत्वाभाव इत्यन्योन्याश्रयादित्यर्थः ।

× तथाऽत्यन्ताभावेति । पारमार्थिकस्वरूपेण ब्रह्मणः सत्त्वेऽपि व्यावहारिकस्वरूपेण तदत्यन्ताभावो वर्तत एवेति पारमार्थिकत्वाकारेण ब्रह्मणोऽप्यत्यन्ताभावप्रतियोगित्वसंभवादिति भावः ।

विषयधीव्यक्तेस्तद्विषयतया वा पारमार्थिकत्वशब्देन विवक्षितायास्तद्व्यक्तित्वेनाभावप्रतियोगितावच्छेदकतया मिथ्यात्वलक्षणे निवेश्यत्वेनान्योन्याश्रयताविरहात् । निरुक्तधीव्यक्तिरुभाभ्यामप्यवश्यमुपेयैव । इयानेव विशेषो मन्मते ज्ञानानिवर्त्यत्वरूपमबाध्यत्वं तत्र विषयस्त्वन्मते चात्यन्ताभावाप्रतियोगित्वमन्यद्वा तद्विषय इति । ब्रह्मण्यपि तादृशधीविषयत्वमस्त्येवेति न निराकारे ब्रह्मण्यपीत्याद्युक्तातिप्रसङ्गः । शुक्तिरूप्यादावपि निरुक्तरीत्याऽर्थक्रियाकारित्वादत्यन्तासत्त्वासंभवादनित्यत्वव्यवहारस्योभाभ्यामपि कथमपि वारयितुमशक्यतया स इष्ट एव । गौरनाद्यन्तवतीति श्रुतिश्च नास्मत्प्रतिकूला । अनादिश्चासावन्तवती चेति तदर्थात् । अन्यथाऽनाद्यन्तेति वक्तुमुचिततया मतुप्प्रत्ययनैरर्थक्यापत्तेः । एषोऽश्वत्थः सनातन इत्यत्र मुक्तिकालातिरिक्तसकलकालसंबन्ध एवोच्यते । 'अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्त्वा' (गी० १५ । ३)। 'ततः पदं तत्परिमार्गितव्यम्' (गी० १५ । ४) । इति बलवद्भगवदुक्तिसंवादादिति न मोक्षेऽपीत्यादिदूषणावकाशः ।

यदपि चन्द्रिकायाम्—किं च निरुक्तविवेको भेदस्य तद्व्याप्तस्य वा ज्ञानम् । तस्य भ्रमत्वे ब्रह्मविचारो न नित्यफलकः स्यात् । प्रमात्वे भेदः सत्यः स्यादिति दूषणमुक्तम् । तदपि न विचारसहम् । निरुक्तज्ञानस्य परमार्थसन्मात्रविषयकत्वलक्षणप्रामाण्याभावेऽपि घटादिज्ञानप्रामाण्यसमकक्षस्य व्यवहारकालाबाध्यविषयकत्वलक्षणप्रामाण्यस्याभ्युपगमेन भेदस्य व्यावहारिकसत्यत्वमेवाऽऽपद्येत । तच्चास्माकमिष्टमेव । तदादायैव विचारप्रवृत्त्युपपत्तेः । पारमार्थिकसत्यत्वं तु न तस्य व्यावहारिकप्रामाण्यादापाद्यम् । किंच नित्यत्वादेर्भ्रमविषयत्वरूपबाधितत्वं यदि तदधिकरणस्यानित्यतां विना नोपपद्येत तदेव त्वदुक्तदोषः संभवति । तदेव तु न । नित्यत्वात्यन्ताभावात् । अतिरिक्तस्यैव तद्व्यापकस्योक्तध्वंसप्रतियोगित्वरूपानित्यत्वस्य यथाप्रमाणमस्माभिरभ्युपगमान्नाकाचिदेतत् ।

अथैवं सति नित्यानित्यशब्दयोर्निरुक्तयथाश्रुतार्थं परित्यज्य वाचस्पतिकल्पतर्वोः सत्यासत्यपरतया तद्व्याख्यानं निरभिप्रायमेव। ब्रह्मानन्द एक एव नित्य इतरत्सर्वं कर्मफलादिकमनित्यमिति शास्त्रारम्भात्प्रागेव ज्ञाते सति 'असंभवस्तु सतोऽनुपपत्तेः' (ब्र० सू० २। ३। ९) इत्यादितन्नित्यत्वानित्यत्वव्यवस्थापकसूत्रवैयर्थ्यशङ्कायां श्रुत्यन्तरविरोधशङ्कापरिहाराय तत्सार्थक्यमिति समाधानवत्प्रागेव संसारबन्धानृतत्वनिश्चये तद्व्यवस्थापक—'तद्गुणसारत्वात्' (ब्र० सू० २। ३ २९) इत्यादिसूत्रवैयर्थ्यशङ्कायां श्रुत्यन्तरविरोधपरिहाराय तत्सार्थक्यसमाधानस्य समानत्वादिति चेत्। अभिप्रायभेदात्तदर्थकरणात्। इत्थं हि वाचस्पतिकल्पतर्वोरभिप्रायः——नित्यानित्यवस्तुविवेकादिक्रमेण साधनचतुष्टयं ब्रह्मजिज्ञासाहेतुत्वेन वर्णयता श्रीमद्भाष्यकारेण नित्यानित्यविवेकानन्तरं सांसारिकफलं सर्वमनित्यमिति तद्वियोगावश्यंभावेनावश्यमेवास्माच्छोकाख्यं दुःखं भविष्यतीति ज्ञानवतः कस्यचिन्नित्यफलप्रेप्सामनपेक्ष्य तद्विवेकमात्रेण कर्मफलविराग उक्तः। नित्यफलप्रेप्सया तत्प्राप्त्युपायान्वेषणं च पश्चादुक्तम्। अयं क्रमो नित्यत्वं सत्यत्वमनित्यत्वमसत्यत्वमित्यादिव्याख्यान एव युज्यते, नतु नित्यत्वं स्थायित्वमनित्यत्वमस्थायित्वमित्यादिव्याख्याने। अस्थायिनं भोगं भुञ्जानस्तत्परित्यागे स्थायिभोगमालक्ष्यैव तत्प्राप्त्युपायमन्विष्यंस्ततो विरज्यते नान्यथा। अनृतासक्तस्तु कश्चित्तदनृतत्वमालोच्य तथाविधसत्यवस्तुलाभमननुसंधायापि ततो विरज्यत इति नित्यानित्यवस्तुविवेकासिद्धिशङ्कापरिहाराय कर्मफलनित्यत्वप्रतिपादकवाक्येभ्यस्तदनित्यत्वप्रतिपादकवाक्यानां प्राबल्यस्यैवोपपत्तिमत्तयाऽतःशब्दस्य व्याख्येयतया प्रसिद्धनित्यानित्यविवेक एवात्र विवक्षितः, नतु सत्यासत्यविवेकः। तथा सति बन्धसत्यत्वप्रतिपादकवाक्येभ्यस्तन्मिथ्यात्वप्रतिपादकवाक्यस्य प्राबल्यपरतयैव तद्व्याख्यानकरणौचित्यादिति विवरणाभिप्रायः। अथ सत्त्वासत्त्वविवेकस्य न वैराग्यहेतुत्वं संभवति। अनृततया स्वाभिमतपदार्थानव-

गच्छतोऽपि कामुकस्य तेषां सुखसाधनतामवगत्य तदुपयोगिम न्त्रौषधिसेवादौ प्रवृत्तिदर्शनादिति नैतन्मते विवेकादिक्रम उपपद्यत इति चेत्। कस्यचिन्निर्लज्जकामुकस्य तथा प्रवृत्तिदर्शनेऽपि

बुद्ध्वाऽप्यत्यन्तवैरस्यं यः पदार्थेषु दुर्मतिः।
बध्नाति वासनां भूयो नरो नासौ स गर्दभः॥

इत्यभियुक्तवचनमनुसंधानस्येश्वरानुग्रहेण लब्धसत्त्वशुद्धेरात्मातिरिक्तस्यासत्यतामनुसंदधतः पुरुषधौरेयस्य तेषु विरागो भवत्येवेति तादृशपुरुषविशेषाभिप्रायेण विवेकादिक्रमकथनस्यैतन्मतेऽप्यविरोधात्। अधिकमाकरेषु द्रष्टव्यम्।

यत्तु तस्मात्परमते नित्यानित्यविवेको न युक्त इत्युक्त्वा नापीहामुत्रार्थफलभोगविरागः संभवति। विवरणे विषयैरपि नित्यात्मस्वरूपमेव सुखमभिव्यज्यते नतु जन्यं सुखमस्तीत्युक्तत्वेन वैषयिकसुखेऽपि विरागायोगान्मोक्षे रागवतस्तत्त्वतो भेदशून्ये भोगे विरागायोगाच्चेति चन्द्रिकायां दूषणमुक्तम्। तदसत्। वैषयिकसुखस्य ब्रह्मानन्दरूपतोपगमेऽपि तस्यानभिव्यक्तस्यापुरुषार्थतया काम्यमानायाश्च विषयसंबन्धाधीनतदभिव्यक्तेरनित्यतया ततो विरागे बाधकाभावात्। कर्माधीना सुखाभिव्यक्तिः स्वोत्तरावरणनियता शास्त्राधीनब्रह्मानन्दाभिव्यक्तिश्च न तथेति विवेकस्य तादृशवैराग्यहेतुत्वसंभवाच्च न शङ्कान्तरावकाशः। अतिरिक्ते वैषयिकसुखे ब्रह्मानन्दप्रतियोगिकतात्त्विकभेदशून्यत्वेऽप्यनित्यत्वस्य दुरपह्नवतया तत्र वैराग्ये बाधकाभावाच्च।

ततो व्याख्यातशमादिसंपत्। ततो मोक्षेच्छा। मोक्षश्चाऽऽत्यन्तिक्यविद्यानिवृत्तिः। तदुक्तम्—

अविद्यानिवृत्तिर्मोक्षः सा च बन्ध उदाहृतः। इति।

तस्याश्चाधिकरणीभूतनित्यब्रह्मानन्दरूपत्वात्पुरुषार्थत्वमविरुद्धम्। अथैवं मोक्षस्य नित्यसिद्धात्मरूपस्य काम्यत्वानुपपत्तिः। तद्धि केवलनित्यानन्दरूपेणाऽऽहोस्विज्ज्ञानविषयत्वेनोताविद्यात्मकबन्धाभावविशिष्टत्वेन। नाऽऽद्यः। तस्य नित्यसिद्धत्वात्। न द्वितीयः। तस्य स्वप्रकाशतया भानाविषयत्वात्। न तृतीयः। आवरणस्य तत्र कल्पितत्वेन तदभावस्याऽऽवरणकालेऽपि सत्त्वादिति चेत्। न।

निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः ।

इत्युत्तरार्धेन चरमवृत्त्युपलक्षितनित्यसिद्धात्मन एवाविद्या-निवृत्तिरूपमोक्षस्वरूपत्वाभिधानेन तस्य नित्यसिद्धपूर्णानन्दस्य स्वरूपतो नित्यत्वावगमेऽपि दुःखनियततदावरणविद्वेषात्तदाव-रणविरोधवृत्त्युपलक्षितत्वेन तादृशवृत्तिविशिष्टत्वेन वा काम्य-तोपपत्तेः । वृत्तिरूपोपलक्षणस्य विशेषणस्य वा साध्यतयैव मोक्षस्य विचारसाध्यता । न चोपलक्षणादिनिवृत्त्या मुक्तेरपि निवृत्त्यापत्तिः शङ्क्या । पाके निवृत्तेऽपि पाचकनिवृत्तेरदर्श-नात् । तदुक्तम्—

उपलक्षणनाशेऽपि मुक्तिः स्यात्पाचकादिवत् । इति ।

एतेन मुमुक्षा च परमते न युक्ता मोक्षस्य नित्यसिद्धात्म-मात्रत्वेन* तत्रेच्छायोगादिति चन्द्रिकोक्तं निरस्तम् ।

यदपि चन्द्रिकायां = वृत्त्युपलक्षितस्य पश्चादिव पूर्वमपि सत्त्वाचेत्युक्तं तदभिप्रायस्तु निरुक्तात्मनो मोहकालेऽपि सत्त्वेन तदानीमपि तद्धान्यापत्तिरिति । तदपि मन्दम् । पूर्वमसिद्धस्यो-पलक्षणत्वायोगात् । नहि पाकसंबन्धात्पूर्वं पाचको भवति तथा व्यवह्रियते वा । अपि तु पाकानन्तरमेवेति तादृशवृत्तेरनित्य-त्वेऽपि तदभिव्यक्तानन्दस्य नित्यतया न विचारस्य नित्य-फलकत्वानुपपत्तिः । आनन्दाभिव्यक्तिरपि स्वरूपभूता न जन्यसाक्षात्कारः । अथ तादृशानन्दाभिव्यक्तेः पुमर्थताऽसंभ-वदुक्तिकैव । नहि सुखात्मता पुमर्थः । सुखी स्यामितीच्छाव-त्सुखं स्यामितीच्छाया अदर्शनात् । पुमर्थताया इच्छानियम्य-त्वात् । अन्यथा बौद्धमतसिद्धनित्यात्मनाशादेरपि पुमर्थता स्यात् । अत एव परकीयसुखं न पुमर्थः, तथेच्छाविरहात् । मैवम् । सुखादौ पुमर्थत्वं हि न स्वकीयत्वादिप्रयुक्तम् । गौरवात् ।

---

* इच्छायोगादिति । इच्छाया अयोगादित्यर्थः ।

= चन्द्रिकायामिति । ननु नाऽऽत्ममात्रं मोक्षः, येनोक्तदोषः स्यात् । किंत्वखण्डाकारवेदान्तजन्यचरमवृत्त्युपलक्षित एव । स च पूर्वं न सिद्ध इती-च्छा युक्तेत्याशङ्क्याऽऽह—वृत्त्युपलक्षितस्येति । तथा च नेच्छोपपत्तिरि-त्याशयः ।

किंतु साक्षात्क्रियमाणतया । तथा चान्येच्छानधीनेच्छाविषयस्यैव तादृशेच्छाविषयकसाक्षात्कारविषयस्यापि पुमर्थत्वान्मुक्तेः पुमर्थत्वाक्षतेः । न च साक्षात्क्रियमाणतया सुखस्य पुरुषार्थत्वेऽस्मदादिसुखमीश्वरस्यापि पुमर्थः स्यादिति वाच्यम् । हेयतयाऽज्ञातत्वस्यापि तत्र ॥ प्रयोजकत्वात् । स्वसंबन्धित्वेन सुखादेः पुरुषार्थत्ववादिनाऽपि निषिद्धसुखे पुरुषार्थत्ववारणाय तत्र तस्य प्रयोजकत्वस्यावश्यं वाच्यत्वेनास्मन्मते गौरवविरहात् ।

अथैवमपि कस्यायं मोक्षः पुमर्थः, किमहमर्थस्याऽऽहोस्विच्चिन्मात्रस्य । नाऽऽद्यः । अहमर्थस्य मुक्त्यनन्वयात् । नान्त्यः । अहं मुक्तः स्यामितिवच्चिन्मात्रं मुक्तं स्यादिति कस्यापीच्छाया अननुभवात् । मैवम् । अहमर्थगतचिदंशमहं मुक्तः स्यामितीच्छोपलक्षितमुक्तिकालान्वयिनं प्रति मोक्षस्य पुमर्थत्वाविरोधात् । स्वाभाविककर्तृत्वाश्रयीभूतस्याचिदंशस्यैवाहंप्रत्यये भासमानस्यानात्मत्वोपगमात् । विशिष्टधर्माणामपि केषांचिदसति बाधके प्रमाणानुसारेण विशेष्यगतत्वोपगमाच्च । एतेन 'किमहं मुक्तः स्यामितीच्छा मुमुक्षा चिन्मात्रं मुक्तं स्यादितीच्छा वा । नाऽऽद्यः । त्वन्मतेऽहमर्थस्य मुक्त्यनन्वयात् । नान्त्यः' इत्यादि चन्द्रिकोक्तमपास्तम् । यादृशविशेषणवता कामितं तादृशविशेषणवति जीवन्मुक्ते मुक्त्यन्वयोऽस्त्येव मन्मते । तव मते तु लोकान्तरप्राप्तेरेव मोक्षतया कामयितृशरीराद्यविशेषित एव तदन्वयस्य वाच्यतया तव मत एवानुपपत्तेश्च ।

ननूक्तविवेकादिसाधनचतुष्टयमसिद्धम् । 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति । अपाम सोममृता अभूम । स्वर्गे लोके न भयं किंचनास्ति । न तत्र त्वं जरया बिभेषि । उभे तीर्त्वाऽशनायापिपासे शोकातिगो मोदते स्वर्गलोके' इति वाक्यैः कर्मफलानामपि नित्यत्वशोकादिरहितत्वप्रतिपादनात् । न चैतानि वाक्यानि यत्कृतकं तदनित्यमिति न्यायानुसारेण कर्मफलानां चिरकालावस्थायित्वबोधकानीति शङ्-

॥ प्रयोजकत्वादिति । अस्मदीयं सुखं तु हेयमिति जानात्येवेश्वर इति हेयत्वेनाज्ञातत्वाभावान्नास्मदीयं सुखमीश्वरस्य पुरुषार्थ इति भावः ।

भयम् । वचनविरोधे न्यायस्याऽऽभासत्वादिति शङ्कायां सूत्रेऽतःशब्दः । नन्वतःशब्देनाथशब्दलभ्यविवेकादेर्यदि ग्रहणं तदाऽथशब्देनोक्तस्यैव पुनरतःशब्देन परामर्शं कृत्वा तस्य जिज्ञासां प्रति हेतुत्वं प्रतिपाद्यत इति वक्तव्यम् । तच्चा-युक्तम् । आनन्तर्याभिधायकाथशब्देन तल्लाभादिति चेत् । न । अथशब्देनोक्तस्यैव मुख्यया वृत्त्याऽतःशब्देन परामर्शेऽपि तद्धेतुत्वापवादशङ्कायां व्यर्थं सज्ज्ञापयतीति न्यायेन लक्षणया लब्धात्मत्वेन परामृश्यते । तेन चालब्धात्मत्वशङ्कोपोद्बलकतया 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इति वाक्यं सूच्यते । लक्षितेन च तदुपपत्तितया 'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते' (छा० ८ । १ । ६) इति वाक्यं सूच्यते । एतेनाथशब्दोक्ताधिकानभिधायिनाऽपवादशङ्कानिरासेऽथशब्देनैव तन्निरासप्रसङ्गादिति चन्द्रिकोक्तं विवरणदूषणं परास्तम् । तथा च न केवलमुक्तन्यायेनोक्तश्रुतीनामन्यथानयनं किंतु न्यायोपोद्बलितश्रुत्या । तद्यथेहेत्यादिश्रुतिर्हि यत्कृतकं तदनित्यमिति न्यायमनूद्य कर्मफलानित्यत्वं प्रतिपादयति । अतः सा श्रुतिरुपपत्तिरूपतात्पर्यलिङ्गसहिता तद्रहिताक्षय्यमित्यादिश्रुतितो बलवती । एवम् । 'आत्तो वै सशरीरः प्रियाप्रियाभ्याम्' (छा० ८।१२।१) इति वचनं, तथा 'न ह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति' (छा० ८ । १२ । १) इति वचनं चोपपत्तिरूपतात्पर्यलिङ्गसहितम् 'स्वर्गे लोके न भयम्' इत्यादिवाक्याद्बलवत् । अपि च विशिष्य हिरण्यगर्भस्यैव भयमाम्नायते— 'सोऽबिभेत्स वै न रेमे' इति । का कथेतरेषाम् । तस्मादक्षय्यमित्यादिवाक्यमापेक्षिकामृतत्वाभिप्रायम् । तथा ह्युपबृंहितम्— 'आभूतसंप्लवं स्थानममृतत्वेन भाष्यते' इति न विवेकाद्यसिद्धिः । अत इति ल्यब्लोपे × पञ्चमी । तथा चेमां मुमुक्षामवाप्येत्यर्थ

× ल्यब्लोप इति । ल्यप्प्रकृतिभूतधातूपस्थाप्यक्रियानिरूपितानभिहितकर्माधिकरणैतदन्यतरार्थप्रातिपादकं यत्प्रातिपदिकं तस्मात्पञ्चमी भवतीत्यर्थकेन 'ल्यब्लोपे कर्मण्यधिकरणे च' इति वार्तिकेनेति भावः ।

इति केचित् । अस्मिन्नर्थे न परोक्तदूषणावकाशोऽपि । 'तरति शोकमात्मवित्' ( छा० ७ । १ । ३ ) 'विद्वान्नामरूपाद्विमुक्तः' ( मु० ३ । २ । ८ ) 'ब्रह्म वेद ब्रह्मैव भवति' ( मु०३।२।९ ) ' तमेव विदित्वाऽति मृत्युमेति ' ( श्वे० ३ । ८ ) ।

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति ॥
तत्त्वमस्यादिवाक्योत्थं ज्ञानं मोक्षस्य साधनम् ।
ज्ञाने त्वनाहृते तस्मिन्सर्वं ब्रह्ममयं भवेत् ॥
तत्त्वमस्यादिवाक्योत्थं यज्जीवपरमात्मनोः ।
अभेदविषयं ज्ञानं तदिदं मोक्षसाधनम् ।

इत्यादिश्रुतिस्मृतिवाक्यैर्निर्विकल्पकसाक्षात्कारात्मकाखण्डब्रह्मज्ञानस्य मोक्षसाधनत्वमवगम्यते । तच्च ज्ञानं मुमुक्षान्तसाधनसंपत्त्यनन्तरं शुभतमकर्मभिराराधितेश्वरप्रसादजनितासंभावनादिसकलचित्तदोषनिवृत्तेः शुद्धचित्तस्य कस्यचित्साक्षिमात्रभास्यप्रमात्वकरूपस्वतःप्रामाण्यकवेदान्तवाक्येभ्य एव संभवतीति तं प्रति विचारशास्त्रस्य वैयर्थ्येऽप्यापातनो विरुद्धार्थकतया प्रतीयमानानि वाक्यान्तराण्यालोचयतोऽसंजातचित्तदोषनिवृत्तेः संजाततात्पर्यसंशयस्य मन्दाधिकारिण उत्सर्गसिद्धनिरुक्तस्वतःप्रमात्वकवेदान्तेभ्यो जातज्ञानस्यापि स्वतःप्रमात्वापवादकतात्पर्यभ्रमसंशयादिना निश्चिताप्रामाण्यकत्वस्य संदिग्धप्रामाण्यकत्वस्य च वा दुर्वारतया नाविद्यानिवर्तकत्वमिति तात्पर्यभ्रमसंशयादिनिरासाय विचारशास्त्रमावश्यकमित्यभिप्रायेण ब्रह्मजिज्ञासोपदिष्टा भगवता सूत्रकारेण । तदुक्तं श्रीमता भाष्यकारेण ब्रह्मजिज्ञासापदस्यावयवार्थकथनावसरे— ज्ञातुमिच्छा जिज्ञासा । अवगतिपर्यन्तं ज्ञानं सन्वाच्याया इच्छायाः कर्म । फलविषयत्वादिच्छायाः । ज्ञानेन हि प्रमाणेनावगन्तुमिष्टं ब्रह्म । ब्रह्मावगतिर्हि पुरुषार्थः । निःशेषसंसारबीजाविद्यानिबर्हणादिति । तत्रायमर्थः—नन्वनवगते वस्तुनीच्छाया अदर्शनात्तस्या मूलभूतं विषयज्ञानं वक्तव्यम् । ब्रह्मज्ञानं तु जिज्ञासायाः फलम् । तदेव कथं मूलमित्याशङ्क्याऽऽह—अवगतीति ।

आवरणनिवृत्तिरूपाभिव्यक्तिमच्चैतन्यमवगतिः । तत्पर्यन्तोऽवधिर्यस्याऽऽत्मसाक्षात्काररूपवृत्तिज्ञानस्य तदेव जिज्ञासायाः कर्म। तदेव फलम्। मूलं त्वापातज्ञानमिति फलमूलज्ञानयोर्भेदान्न जिज्ञासानुपपत्तिः। ननु गमनस्य ग्रामः कर्म। तत्प्राप्तिः फलमिति भेदात्कर्मैव फलमित्ययुक्तमित्याशङ्क्याऽऽह—फलेति। क्रियान्तरे तद्भेदेऽपि सविषयेच्छादिरूपायाः क्रियायाः फलविषयत्वात्कर्मैव फलमित्यर्थः। ननु ज्ञानावगत्योरैक्याद्भेदोक्तिरयुक्तेत्यत आह—ज्ञानेनेति। ज्ञानं वृत्तिरवगतिस्तत्फलमिति भेद इति भावः। अवगन्तुमभिव्यञ्जयितुम्। अवगतेः फलत्वं स्फुटयति—ब्रह्मेति। हिशब्दोक्तं हेतुमाह—निःशेषेति। बीजमविद्याऽऽदिर्यस्यानर्थस्य तन्नाशकत्वादित्यर्थः। ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा। ब्रह्म च 'जन्माद्यस्य यतः'( ब्र० सू० १।१।२ ) इति वक्ष्यमाणलक्षणं न ब्राह्मणत्वादिजातिवेदकमलासनादिः। तथा सति जगत्कारणत्वलक्षणप्रतिपादकसूत्रासांगत्यप्रसङ्गात्। ब्रह्मण इति * कर्मणि षष्ठी न शेषे। जिज्ञासेत्यत्र

* कर्मणि षष्ठीति। कृत्प्रकृतिभूतधातूपस्थाप्यक्रियानिरूपितानाभिहितकर्तृकर्मैतदन्यतरार्थप्रतिपादकं यत्प्रातिपदिकं तस्मात्षष्ठी भवतीत्यर्थकेन 'कर्तृकर्मणोः कृति' (पा० सू० २।३।६९) इत्यनेन सूत्रेण कर्मत्ववाचिका षष्ठीत्यर्थः। जिज्ञासेत्यत्र हि 'अ प्रत्ययात्' (पा० सू० ३।३।१०२) इत्यनेनाप्रयस्य कृतत्वात्कृद्योगो बोध्यः। ननु कर्मणि षष्ठीति पक्षे 'कर्मणि च' (पा० सू० २।२।१४) इत्यनेन षष्ठीसमासनिषेधाद्ब्रह्मजिज्ञासेत्यनुपपन्नमिति चेत्। उच्यते—कर्मणि चेत्यत्र 'षष्ठी' (पा० सू० २।२।८) इत्यस्यानुवृत्तिः। सा च यदि येन केनापि सूत्रेण कर्मणि विहिता गृह्यते तर्हि 'तृजकाभ्यां कर्तरि' (पा० सू० २।२।१५) इति सूत्रं व्यर्थं स्यात्। तेन हि कर्त्रर्थतृजकाभ्यां कर्मणि षष्ठी न समस्यत इत्युक्तम्। एवं च 'अपां स्रष्टा' इत्यादौ पूर्वोक्तरीत्या कर्मणि चेत्यनेनैव निषेधस्य सिद्धत्वाद्व्यर्थं तत्सूत्रम्। तत्सामर्थ्यात्कर्मणि चेत्यत्र चकार इत्यर्थकः। तथा च कर्मणीति शब्दमुच्चार्य या षष्ठी विहिता सा न समस्यत इत्यर्थः। तादृशषष्ठी च 'उभयप्राप्तौ कर्मणि' (पा० सू० २।३।६६) इत्यनेन विहिता गृह्यते। अपां स्रष्टेत्यादौ तु तादृशषष्ठ्या असंभवात्तृजकाभ्यामित्यस्य चारितार्थ्यं बो-

सन्प्रत्ययवाच्याया इच्छाया ज्ञानं कर्म । तस्य ज्ञानस्य ब्रह्म कर्म । तत्र सकर्मकक्रियायाः कर्मज्ञानं विना ज्ञातुमशक्यत्वादिच्छाया विषयज्ञानजन्यत्वाच्च प्रथमापेक्षितं कर्मैव षष्ठ्या वाच्यमिति युक्तम् । न च ब्रह्मविषयकप्रमाणादिकमन्यदेव शेषषष्ठीपक्षे तत्कर्मास्तु । ब्रह्म तु शेषितया तत्र संबन्ध्यतामिति वाच्यम् । तथा सति श्रुतं कर्म त्यक्त्वाऽन्यदश्रुतं कर्म कल्पयतः पिण्डमुत्सृज्य करं लेढीति न्यायेन प्रयासवैफल्यात् । न च शेषषष्ठीपक्षे ब्रह्मसंबन्धिजिज्ञासाप्रतिज्ञालाभेन ब्रह्माश्रितलक्षणप्रमाणयुक्तिज्ञानसाधनफलानामपि विचारप्रतिज्ञालाभो भवति । तज्जिज्ञासाया अपि ब्रह्मज्ञानार्थत्वेन ब्रह्मसंबन्धित्वात् । कर्मषष्ठ्यां तु ब्रह्मकर्मकविचारः प्रतिज्ञातो भवतीति न प्रयासवैफल्यमिति वाच्यम् । सूत्रेण मुखतः प्रधानस्य ब्रह्मणो विचारे प्रतिज्ञाते यैर्विचारितैर्विना ब्रह्म विचारितं न भवति तेषामुपकरणानां विचारस्याऽऽर्थिकप्रतिज्ञासिद्धेः । 'तद्विजिज्ञासस्व' ( तै० ३ । १ । १ ) इति जिज्ञासामूलभूतश्रुतौ द्वितीयया मुखत एव ब्रह्मणः कर्मत्वोक्तेः श्रुतिसूत्रयोरैकार्थ्याय कर्मणि षष्ठ्या एवोचितत्वात् । स्पष्टं चेदं भाष्यादौ । विवर-

---

च्यम् । तस्मादुभयप्राप्तौ कर्मणीति या षष्ठी विहिता सा न समस्यत इति कर्मणि च इत्यस्यार्थः । ननु कर्तृकर्मणोः कृतीत्यनेन षष्ठ्याः सिद्धत्वादुभयप्राप्तौ कर्मणीति सूत्रं कर्तृवाचकात्षष्ठीव्यावृत्त्यर्थमेवेति नानेन सूत्रेण षष्ठी विधीयत इति चेत् । शृणु । त्वदुक्तरीत्या 'उभयप्राप्तौ कर्मणि' इत्यस्य वैयर्थ्यान्नियमार्थत्वं युक्तम् । नियमस्य तु विधिमुखेन प्रवृत्तिर्भवति । तत्र यदा विधिमुखेन प्रवृत्तिस्तदाऽनेन सूत्रेण षष्ठी भवतीति सम्यगेव । निषेधमुखेन प्रवृत्तौ सत्यां यद्यपि षष्ठीविधानं न संगच्छते तथाऽप्यनेन सूत्रेण निषेधः प्राप्तः । पूर्वसूत्रेण षष्ठी प्राप्ता । तत्रोभयोरप्येककर्तृकत्वात्प्रामाण्येन विकल्पो दुर्वारः । अत उत्तरसूत्रार्थानुरोधेन पूर्वसूत्रे संकोचः कार्यः । तथा च पूर्वसूत्रस्योभयप्राप्त्यनिमित्तककृति प्रत्यये सति तत्प्रकृतिभूतधातूपस्थाप्यक्रियानिरूपितानभिहितकर्तृकर्मवाचकात्षष्ठी भवतीत्यर्थेनोभयप्राप्तौ सत्यां षष्ठीविधानार्थम् 'उभयप्राप्तौ कर्मणि' इति विध्यर्थमेवेति सिद्धान्तः । एवं चोभयप्राप्तावित्यनेन विहिता या षष्ठी सा न समस्यत इति कर्मणि चेत्यनेन प्रतिपादनाद्ब्रह्मजिज्ञासेत्यत्र तन्निषेधस्याप्राप्त्या समासानुपपत्त्यभावात्कर्तृकर्मणोः कृतीत्यनेन कर्मणि षष्ठीति सम्यगेवेति भावः ।

णमते जिज्ञासाशब्दो ज्ञातुमिच्छा जिज्ञासेति योगेन ज्ञानेच्छायां * यौगिकः। ज्ञाधातोर्ज्ञानार्थकत्वात्सन्प्रत्ययस्येच्छार्थकत्वात्। इष्यमाणफलीभूतज्ञानानुकूलेच्छासाध्ये विचारे × निरूढलाक्षणिकः। अथातःशब्दौ पूर्वोक्तार्थकावेव। कर्तव्यपदं चाध्याहार्यम्। तथा च विवरणमते—अथ नित्यानित्यवस्तुविवेकादिसाधनसंपत्त्यनन्तरम्, अत उक्तश्रुतीनां सत्त्वात्, मुमुक्षुणेष्यमाणफलीभूतब्रह्मज्ञानाय वेदान्तवाक्यैस्तादृशज्ञानानुकूलविचारः कर्तव्य इति सूत्राक्षरार्थः।

यत्तु—

जिज्ञासाशब्दतो हीच्छामज्ञात्वैव विजानते।
विचारं लौकिकास्तेन तत्रायं = रूढ इष्यते॥
अन्यथा मण्डपादीनां ग्रहादौ स्यान्न रूढता।
गङ्गाशब्दात्तु तीरादि तत्र पूर्वं प्रकाशते॥

तथा हि—जिज्ञासाशब्दान्मीमांसाशब्दादिवेच्छाप्रतीत्यभावेऽपि विचारः प्रतीयते। अन्यथा बुभुत्सापदादपि विलम्बेन तत्प्रतीतिसंभवान्नियमेन जिज्ञासापदं न प्रयुज्येत। स्वीकृतश्च त्वयाऽपि 'विचारसाध्यज्ञानेच्छा जिज्ञासापदात्प्रतीयते नोपदेशमात्रसाध्यज्ञानविषयेच्छा' इति वदता विचारप्रतीतेरिच्छाप्रतीतिपूर्वकत्वाभावः। एवं च तद्विजिज्ञासस्वेत्यादावस्मिंश्च सूत्रे न विधौ लक्षणा।

---

* यौगिक इति। यौगिकत्वं नाम समुदायशक्त्यसहकृतावयवशक्त्याऽर्थप्रतिपादकत्वम्। यथा पाचक इत्यादौ।

× निरूढलाक्षणिक इति। अत्रेदं बोध्यम्—लक्षणा द्विविधा। प्रयोजनवती निरूढा चेति भेदात्। आद्योदाहरणं गङ्गायां घोषः। अत्र हि तीरे घोष इत्युक्त्याऽपि व्यवहारसिद्धौ यतो गङ्गायां घोष इत्युच्यते ततः प्रयोजनं किंचिदस्तीत्यनुमीयते। तच्च गङ्गागतं यथा शैत्यपावनत्वादि तथैवास्मिन्घोषे वर्तत इति बोधनरूपम्। नहि तीरे घोष इत्युच्यमाने तादृशं शैत्यपावनत्वादि प्रतीयते। निरूढलक्षणा नाम—असति प्रयोजने शक्यसंबन्धः। उदाहरणं तु त्वचा ज्ञातमित्यादौ त्वक्छब्दस्य त्वगिन्द्रिये प्रयोगः। न ह्यत्र किंचित्प्रयोजनं दृश्यते।

= रूढ इति। रूढत्वं नाम—अवयवशक्तिनिरपेक्षसमुदायशक्त्याऽर्थप्रतिपादकत्वम्। यथा रथंतरम्। अत्र ह्यवयवार्थो रथेन तरतीति। समुदायार्थस्तु साम।

अन्यथा लोके मण्डपशब्दस्य मण्डपानकर्तृरूपयौगिकार्थसंबन्धाद्ग्रहविशेषे प्रवीणकुशलादिशब्दानां च प्रकृष्टवीणावादकादिगतप्रागल्भ्यगुणयोगादेव निपुणे वाजिशब्दस्य वाजशब्दवाच्यान्नवत्संबन्धादेवाश्वजातौ प्रयोगसंभवाद्रूढिर्न स्यात् । वेदे चापरिमितं देयमित्याधानप्रकरणे श्रुतस्यापरिमित*शब्दस्य परिमितान्यरूपमुख्यार्थनिष्ठानेकत्वरूपगुणयोगादेव बहुत्ववति प्रयोगसंभवाद्रूढिर्न स्यात् । उक्ता च रूढिः षष्ठे + । न च प्रवीणादिशब्द इष्टापत्तिः । यौगिकार्थप्रतीत्यभावेऽपि नैपुण्यप्रतीतेः । न चैवं वैश्वदेवेन यजेतेत्यादौ वैश्वदेवीमामिक्षामिति वाक्यविहितयागे यौगिकस्य वैश्वदेवशब्दस्य ⁂ वैश्वदेवावैश्वदेवसमुदाये गङ्गादिपदः-

---

* अपरिमितशब्दस्येति । अयं भावः—' एका देया, षड् देयाः, द्वादश देयाः, चतुर्विंशतिर्देयाः, शतं देयम्, सहस्रं देयम्, अपरिमितं देयम् ' इत्याधानप्रकरणे श्रूयते । अनेन हि प्रदेयानां गवां संख्या विधीयते । तत्रापरिमितशब्दघटकेन नञा परिमाणं निषिध्यत इति वक्तव्यमेव । नञो हि स्वसंबन्धिप्रतिपक्षबोधकत्वस्वभावात् । नास्तीत्युक्तौ ह्यस्तीति सत्त्वशब्देन संबध्यमानो नञ् सत्त्वप्रतिपक्षभूतमसत्त्वं गमयति तद्वत् । एवं च प्रकृते परिमितशब्देन संबध्यमानो नञ् प्रदेयद्रव्यस्य परिमाणशून्यतां गमयेत् । तथा च पूर्ववाक्योक्ता गवामेकत्वादिसंख्या निवार्येतेति चेत् । अत्रोच्यते—अपरिमितशब्दो हि यौगिकः संभवति रूढोऽपि च । तत्र यौगिकत्वं गृहीत्वा त्वदुक्तो दोषः संप्राप्नोति । परं त्वत्र रूढत्वमेव परिगृह्णीमः । योगाद्रूढेर्बलीयस्त्वात् । तथा च नैकत्वादिसंख्या निवार्यन्ते किंतु संख्यान्तरमेव बहुत्वं विधीयते । नन्वपरिमितशब्देन विधीयमानं यद्बहुत्वं तस्य षडादिष्वपि पदार्थेषु सत्त्वान्नापूर्वसंख्यान्तरविधानं भवतीति चेत् । मैवम् । एकादिपक्षेपूत्तरोत्तराभिवृद्धिदर्शनेन सहस्रपक्षमुपन्यस्य पश्चादाभिधीयमानं बहुत्वं सहस्रादूर्ध्वं पर्यवस्यतीति ।

\+ रूढिः षष्ठ इति । जैमिनीयन्यायमालायां षष्ठाध्यायस्य सप्तमे पादे ' अपरिमिते शिष्टस्य संख्याप्रतिषेधस्तच्छ्रुतित्वात् ' ( जै०सू०२१।अ० ६ । पा० ७ । अधि० १० ) इत्यस्मिन्सूत्र इत्यर्थः ।

⁂ वैश्वदेवावैश्वदेवेति । अयमाशयः—( ३० पृ० ) उत्पत्तिशिष्टप्राबल्यन्यायवर्णनसमये वैश्वदेवशब्दोऽष्टानामाग्नेयादियागानां नामधेयमित्युक्तम् । तत्र यौगिकत्वं वैश्वदेवशब्दस्य गृहीत्वा ' वैश्वदेवीमामिक्षाम् ' इत्यनेन विहितस्याऽऽमिक्षायागस्य वैश्वदेवशब्दो नामधेयमिति प्राप्तम् । तथा सति वैश्वदेवेन यजेतेति वाक्यस्य वैयर्थ्यमेव स्यात् । तथा हि—वैश्वदेवेन यजेते-

देश्च तीरादौ लक्षणा न स्यात्, किंतु रूढिरेव स्यादिति वाच्यम्। तत्र मुख्यार्थप्रतीतिपूर्वकमेवेतरप्रतीतेः। प्रकृते च तदभावादित्यस्योक्तत्वात्। किंच ज्ञानसामान्येच्छायास्त्वन्मते क्वाप्यभावादपरोक्षज्ञानेच्छायां च जिज्ञासाशब्दस्यावयवशक्त्यभावात्समुदायशक्तेः कल्प्यत्वाविशेषे विचारे समुदायशक्तिरापरोक्षेच्छायां च लक्षणेत्येव किं न स्यात्। तस्माज्जिज्ञासाशब्दो विचारे रूढ एवेति * परेणोक्तम्।

तदसत्। जिज्ञासाशब्दादिच्छाप्रतीतिं विना विचारप्रतीतेरसिद्धेः। अन्यथा निरूढलाक्षणिके सर्वत्रैवेत्थमाख्यातुं शक्यतया निरूढलक्षणोच्छेदप्रसङ्गात्। उक्ता हि सा काव्यप्रकाशव्याख्यायां कुशलादिपदेषु कर्मणि कुशल इत्यादौ दर्भग्रहणाद्ययोगान्मुख्यार्थबाधे विवेचकत्वादौ संबन्धे रूढितः प्रसिद्धेरिति। काव्यप्रदीपेऽपि रूढितो यथा—कर्मणि कुशल इत्यादौ। अत्र दर्भग्रहणायोग्यत्वान्मुख्यार्थबाधः। विवेचकत्वं च संबन्धः। एवं त्वगादिपदानां चर्मादिवाचकानां त्वगिन्द्रियादावपीति। यद्यपि कैश्चिदालंकारिकादिभिः कुशललावण्यकुण्डलादिपदेषु दक्षत्वादिकं प्रवृत्तिनिमित्तमवलम्ब्यावयवार्थाप्रतीतावपि तत्प्रतीतिं चोपेत्य रूढिरेवोपगता तथाऽपि यत्र प्रवृत्तिनिमित्तस्यावयवार्थे प्रयोगप्राचुर्याभावात्तस्य झटित्यप्रतीतिबाधप्रतिसंधानं विनाऽपि तत्प्रतीतिश्च तत्रैव रूढिशक्तिरुपगता, न त्वन्यत्रापि। यथोक्तं काव्यप्रदीपोद्द्योते—कुशलो लावण्यं मण्डपः कुण्डलमित्यादौ व्युत्पत्तिनिमित्तस्य झटित्यप्रतीतेर्बा-

---

त्यनेन विहितस्य नामधेयस्य प्रयोजनं हि 'प्राचीनप्रवणे वैश्वदेवेन यजेत' इत्यत्र वैश्वदेवयागसंबन्धरूपम्। यदि चैकस्यैवाऽऽमिक्षायागस्य वैश्वदेवशब्दो नामधेयं तर्हि प्राचीनप्रवणदेशे तस्यैवैकस्य संबन्धो जायेत। तत्संबन्धश्च 'वैश्वदेवेन यजेत' इत्यनेन विहितं वैश्वदेवनामधेयं विनाऽप्यामिक्षायागे विश्वदेवसंबन्धादेव सिद्धो भवेत्। अतो वैश्वदेवेन यजेतेति वाक्यवैयर्थ्याल्लक्षणया यथा छत्रिणो गच्छन्तीत्यत्र च्छत्रिपदं छत्र्यच्छत्रिसमुदायपरं तथाऽत्रापि वैश्वदेवपदं वैश्वदेवावैश्वदेवसमुदायपरं भवतीति।

* परेणोक्तमिति। चन्द्रिकायां परेणोक्तमित्यर्थः।

धप्रतिसंधानं विनाऽपि प्रतीतेश्च कुशैः कलाचि कुशलपदस्य साधनाच्च रूढिशक्तिरेवात्रेति केचित् । इत एवास्वरसादाह-त्वगिति । एवं तैलपदस्य तिलविकारद्रवे शक्तस्य सार्षपेऽपि निरूढलक्षणेति । क्वचिदवयवार्थाप्रतीतावपि तत्प्रतीतिरस्तीति तु गङ्गादिपदात्क्वचित्प्रवाहादिप्रतीतिं विनाऽपि जायमानया तीरप्रतीत्या समाश्वास्यते । न कुशलमण्डपादिशब्देष्विवात्राव-यवार्थो मन्थरप्रवृत्तिकः । किंपदस्य जिज्ञासिते शक्तिः, आन-न्तर्याभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयो ह्यर्थः संगतिरि-त्यादिप्रचुरप्रयोगस्य ज्ञानेच्छायामप्युपलम्भात् । एतेन वाजि-शब्दो व्याख्यातः । यत्त्वपरिमितं देयमित्यत्रापरिमितशब्दस्य बहुत्ववाचकत्वमुक्तं तदयुक्तम् । परिमितान्यमुख्यार्थस्याली-कत्वात्प्रक्रान्तपरिमित्यभावस्य लक्षणैकगम्यत्वाच्च । विवरण-मते ज्ञानसामान्येच्छाया असत्त्वकथनं तु 'ज्ञानं खल्विष्यमा-णविषयेण सहावगतमिष्यतेऽनवगतविषय इच्छाया अयोगात् । ततश्च प्रतिपन्ने वस्तुनि ज्ञानमिष्यमाणं संदिग्धे निश्चयफलं वा परोक्षेऽपरोक्षफलं वेष्यते' इति तत्रत्यविवरणग्रन्थेनैवाऽऽचा-र्यानभिप्रेततया पूर्वमेव व्याख्यातम् । घटेन जलमाहरेत्यादौ योग्यतया छिद्रेतरघटादेरिव निश्चयरूपस्यापरोक्षरूपस्य वा ज्ञानस्य योग्यतया जिज्ञासापदाज्ज्ञानेऽपि न तत्र ताद्रूप्येण ज्ञाधातुबोध्यत्वमेवं विचारसाध्यज्ञानेच्छात्वेनापि न तद्बो-ध्यता । किंतु वस्तुतो यद्विचारसाध्यं ज्ञानं तद्विषयकेच्छाया ज्ञानेच्छात्वसामान्येनैवेति जिज्ञासाशब्दे विचारसाध्यापरो-क्षज्ञानेच्छावाचकत्वमस्माकमनुमतमित्यपि न युक्तम् । एवं ज्ञानेच्छारूपवाच्यार्थसंबन्धिनि विचारे निरूढलक्षणेति मते न काचिदनुपपत्तिः । विधिस्थलेष्वपि लक्षणा न्यायानुगृहीता न दोषायेति तु सर्वसंमतम् । निबन्धे तु जिज्ञासा नाम न वि-चारः । इच्छायां सन्निधानात् । न च शास्त्रप्रवृत्त्यङ्गविषयप्रयो-जनसूचनेन स्वार्थपरत्वोपपत्तौ विचारलक्षणा युक्ता । एवं च मुमुक्षानन्तरं ब्रह्मजिज्ञासा भवितुं युक्तेत्येव श्रौतः सूत्रार्थः । विचारस्त्वार्थिकः । ज्ञातुमिच्छा हि संदिग्धे विषये निर्णयाय

भवति। निर्णयश्च विचारसापेक्ष इतीच्छानिमित्तेन विचारा-क्षेपात्। आर्थिके चास्मिन्नर्थे कर्तव्यपदाध्याहार इत्युक्तम्।

यत्तु श्रौतार्थेऽनुवादत्वापत्तिरिति =परोक्तदूषणम्। तदसत्। सफलानुवादत्वस्येष्टत्वात्। फलस्य दर्शितत्वात्। निबन्धमते 'तद्विजिज्ञासस्व' (तै० ३।१।१) इत्यादेरप्यविधिरूपत्वाच्च न सूत्रस्य श्रुत्यननुसारिता। आर्थिके विचारे कर्तव्यत्वाभिधानं च सिद्धान्तकोटिनिगमनरूपतया न निष्फलम्। विचारसार्थक्य एव शास्त्रारम्भसिद्धेः। विचारं विनेच्छाया अनुपपत्तिरित्यस्य तं विनेच्छाया विषयसिद्ध्यनुपपत्तिरित्यर्थः। एतेन 'तद्वि-जिज्ञासस्व' इति श्रुत्यनुसारिणा सूत्रेणेच्छाया अविधेयत्वेन लक्षणयाऽपि विचारस्य विधेयत्वमावश्यकम्। किंचैवं सति जिज्ञासासंभवप्रदर्शनमात्रेण नैराकाङ्क्ष्यान्नाऽऽर्थिकविचारकर्त-व्यतापरत्वम्। शास्त्रारम्भवत्तस्य फलत्वेनैव सिद्धेः। कथं च विचारं विनेच्छाया अनुपपत्तिः। येन विचाराक्षेपकता। नहि कारणस्य कार्यं विनाऽनुपपत्तिः। न चेच्छा विचारसामग्री। फलेच्छायां सत्यामपि साधनानुष्ठानात्' इति परप्रलपितं निर-स्तम्। कौमुद्यां तु यस्मादधिकारिणां ब्रह्मज्ञानेच्छा संपन्ना तस्माद्ब्रह्मविचारः कर्तव्य इत्यवान्तरवाक्ये श्रुत्येच्छापर-त्वेऽपि महावाक्ये लक्षणया विचारपर इत्युभयपरो जिज्ञासा-शब्द इत्युक्तम्। न चात्र युगपद्वृत्ति×द्वयप्रसङ्गः। आवृत्तौ वृत्तिद्वयस्यादोषत्वात्। अनावृत्तावपि गङ्गायां मत्स्यघोषौ स्त

---

=परोक्तमिति। चन्द्रिकायां व्यासतीर्थेनोक्तमित्यर्थः। अयं भावः—निब-न्धोक्तमनूद्य विचारे रूढेरुक्तत्वादित्युक्तम्। ततश्च 'धातोः कर्मणः समा-नकर्तृकादिच्छायां वा' (पा० सू० ३।१।७) इतीच्छार्थकसन्विधायक-व्याकरणस्मृतिविरोधमाशङ्क्य व्याकरणस्य च साधुत्वमात्रपरत्वादित्युक्तम्। साधुत्वमात्रपरत्वे च प्रमाणभूताम् 'यत्रार्थस्य विसंवादः प्रत्यक्षेणोपलक्ष्यते। स्वरसंस्कारमात्रार्था तत्र व्याकरणस्मृतिः' इत्यभियुक्तोक्तिमुक्त्वा 'भवितुं युक्तेत्येव श्रौतः सूत्रार्थः' इत्यस्य दूषणमुक्तम्। भवतीत्यध्याहारस्य स्वतः-सिद्धत्वेऽप्यनुवादत्वप्रसङ्गादिति।

× युगपद्वृत्तिद्वयेति। शक्तिर्लक्षणा चेति वृत्तिद्वयप्रसङ्ग इत्यर्थः।

इत्यादौ वृत्तिद्वयाभ्युपगमाच्च । विषयत्वेन फलत्वेन च सूचनस्य जिज्ञासापदेनैव संभवाच्च । सप्रयोजनानेकार्थत्वं हि सूत्राणां विश्वतोमुखत्वलक्षणत्वाद्भूषणमेव ।

अत्र प्रसङ्गात्परोक्तदूषणानां निरासाय—'तत्पुनर्ब्रह्म प्रसिद्धमप्रसिद्धं वा स्यात् । यदि प्रसिद्धं न जिज्ञासितव्यमथाप्रसिद्धं नैव शक्यं जिज्ञासितुमिति । उच्यते—अस्ति तावद्ब्रह्म । नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वशक्तिसमन्वितम् । ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्ते । बृहतेर्धातोरर्थानुगमात्सर्वस्याऽऽत्मत्वाच्च ब्रह्मास्तित्वप्रसिद्धिः । सर्वो ह्यात्मास्तित्वं प्रत्येति, न नाहमस्मीति । यदि हि नाऽऽत्मास्तित्वप्रसिद्धिः स्यात्सर्वलोको नाहमस्मीति प्रतीयात् । आत्मा च ब्रह्म । यदि तर्हि लोके ब्रह्माऽऽत्मत्वेन प्रसिद्धमस्ति ततो ज्ञातमेवेत्यजिज्ञास्यत्वं पुनरापन्नम् । न । तद्विशेषं प्रति विप्रतिपत्तेः । देहमात्रं चैतन्यविशिष्टमात्मेति प्राकृता जना लोकायतिकाश्च प्रतिपन्नाः । इन्द्रियाण्येव चेतनान्यात्मेत्यपरे । मन इत्यन्ये । विज्ञानमात्रं क्षणिकमित्येके । शून्यमित्यपरे । अस्ति देहादिव्यतिरिक्तः संसारी कर्ता भोक्तेत्यपरे । भोक्तैव केवलं न कर्तेत्येके । अस्ति तद्व्यतिरिक्त ईश्वरः सर्वज्ञः सर्वशक्तिरिति केचित् । आत्मा स भोक्तुरित्यपरे । एवं बहवो विप्रतिपन्ना युक्तिवाक्यतदाभाससमाश्रयाः सन्तः । तत्राविचार्य यत्किंचित्प्रतिपद्यमानो निःश्रेयसात्प्रतिहन्येत । अनर्थं चेयात् । तस्माद्ब्रह्मजिज्ञासोपन्यासमुखेन वेदान्तवाक्यमीमांसा तदविरोधितर्कोपकरणा निःश्रेयसप्रयोजना प्रस्तूयते' इति भाष्यं संक्षेपतो व्याख्यायते ।

प्रथमवर्णके बन्धस्याध्यस्तत्वोक्त्या विषयादिप्रसिद्धावपि ब्रह्मप्रसिद्ध्यप्रसिद्ध्योर्विषयादिसंभवासंभवाभ्यां शास्त्रारम्भसंदेहे पूर्वपक्षमाह—तत्पुनरिति । तत्रायमाशयः—वेदान्तमहावाक्यतात्पर्यनिर्णयेन तादृशवाक्यार्थप्रतिपत्तिप्रयोजनमिदं शास्त्रमित्युक्तं न युक्तम् । तद्घटिततत्पदार्थप्रसिद्ध्यभावेन तादृशवाक्यार्थस्य दुर्ज्ञेयत्वात् । यदि चाधीतसाङ्गस्वाध्यायस्य निगमनिरुक्तव्याकरणादिना ब्रह्मादिपदात्तत्प्रसिद्धिस्तर्हि तत एव

पदार्थज्ञानवद्वाक्यार्थज्ञानमपि विनैव विचारं सिध्यतीति विचारवैयर्थ्यमेवेति नाऽऽरम्भणीयं शास्त्रमिति । उच्यत इति सिद्धान्तभाष्ये । तत्रास्ति तावद्ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावमित्यादि सर्वस्याऽऽत्मत्वाच्चेत्यतः प्राक्तनं तत्पदार्थप्रसिद्धिप्रदर्शनपरम् । सर्वस्याऽऽत्मत्वाच्चेत्यादि प्रतीयादित्यन्तं त्वंपदार्थप्रसिद्धिप्रदर्शनपरम् । आत्मा च ब्रह्मेति भाष्यमुक्तपदार्थप्रसिद्धेर्वाक्यार्थप्रतिपत्त्युपयोगिताप्रदर्शनपरम् । यदि तर्हीत्यादि पुनरापन्नमित्यन्तं पूर्वोक्ताक्षेपकर्त्राशयस्फुटीकरणपरम् । न, तद्विशेषं प्रति विप्रतिपत्तेरित्यादि भाष्यं चाप्रामाण्यज्ञानानास्कन्दितनिर्णयात्मनो मूलाविद्यानिवर्तकतावच्छेदकशक्तिमतो ज्ञानस्य प्रागसत्त्वप्रदर्शनेन विचारसाफल्योपपादकम् । तत्र विरुद्धन्यायानां बलाबलानिर्णये सत्प्रतिपक्षतया तत्त्वनिर्णयप्रतिरोधस्तत्संशयो वा तन्निश्चये कथंचिज्ज्ञानेऽप्रामाण्यसंशयो वा दुर्वारः । दुर्लभश्च तादृशज्ञानविशेषोत्पत्तिप्रतिबन्धकयोरसंभावनाविपरीतभावनयोः प्रतिघात इत्यवश्यं कर्तव्यो विचार इत्यभिप्रायकम् । तत्र कर्तृत्वाद्युपलक्षितजगत्कारणत्वाद्युपलक्षितसच्चिदानन्दघनब्रह्मैक्यरूपवाक्यार्थप्रतिपत्तौ विरोधिनीर्विप्रतिपत्तीराह—देहमात्रमित्यादिना । तत्र त्वं पदार्थधर्मिका विप्रतिपत्तयो लोकायतादिसांख्यान्तानाम् । ततश्चास्ति तद्व्यतिरिक्त इति विप्रतिपत्तिः सेश्वरसांख्यकणभुगक्षपादपाशुतादीनाम् । आत्मा स भोक्तुरिति तु सिद्धान्तकोटिप्रदर्शनम् । स सर्वज्ञत्वाद्युपलक्षितानन्तसच्चिदानन्दघनः परमात्मा भोक्तुरौपाधिकभोगवतो जीवस्याऽऽत्मा पारमार्थिकं रूपमिति तदर्थः ।

एतेन—'ब्रह्मणो जिज्ञास्यत्वार्थमेव प्रत्यगर्थेऽहमस्मीति प्रत्यक्त्वरूपेण सामान्येन प्रतिपत्तिः, चार्वाकानामहमर्थे देहेन्द्रियमनःशून्यब्रह्मत्वादिविप्रतिपत्तेर्विशेषप्रतिपत्तिश्चेत्युक्तमिति चन्द्रिकादावस्मन्मतमनूद्य—न चैतद्युक्तम् । *व्यधिकरणत्वात् ।

* व्यधिकरणत्वादिति । अहमित्याकारकानुभवविषयो यस्त्वंपदार्थो जीवस्तत्र सामान्यप्रतिपत्तिविशेषप्रतिपत्त्योः सत्त्वेऽपि जिज्ञास्ये ब्रह्मणि तत्पदार्थे तयोरप्रदर्शनेन व्यधिकरणत्वादित्यर्थः ।

प्रत्यगर्थो ब्रह्मैवेति चेत् । अस्तु तावत्, *तथाऽपि न तावद्बिम्बं ब्रह्म जिज्ञासाधर्मि, प्रतिविम्बे तु सामान्यप्रतिपत्त्यादीति युक्तम् । प्रतिविम्बमात्रे विप्रतिपत्त्या विम्बे जिज्ञासाया अदर्शनेन ब्रह्मोद्दिश्य प्रत्यगभेदादिविधानाय ब्रह्मण्येव ×तयोर्वक्तव्यत्वात् । =नापि देहत्वादिना विप्रतिपन्नः प्रतिविम्बः प्रत्यगर्थ एव जिज्ञासाधर्मी प्रतीचो ब्रह्मत्वेन जिज्ञासा च ब्रह्मजिज्ञासा चेति युक्तम् । लोके निश्चितेन धर्मिणैवानिश्चितेन प्रकारेण विचारपदाप्रयोगेण सूत्रेऽश्रुतप्रत्यक्पदकल्पनापातात् । +धर्मजिज्ञासेत्यादाविव श्रुतस्य ब्रह्मपदस्य कस्य कथं विचार इति प्रथमाकाङ्क्षितधर्मिपरत्वसंभवे तत्परित्यागेन तद्वि-

---

*तथाऽपि नेति । अयं भावः—प्रत्यगर्थो ब्रह्मैवेति तु 'तत्त्वमसि' इति महावाक्याज्ज्ञायत इत्यवश्यं वक्तव्यम् । तत्र हि जीवब्रह्मणोरैक्यं प्रतिपादितम् । तच्चैक्यं त्रिधा संभवति । तत्पदवाच्यं यद्बिम्बभूतं ब्रह्म तदुद्दिश्य त्वंपदार्थस्य प्रत्यगर्थस्याभेदविधानाद्वा त्वंपदार्थमुद्दिश्य तत्पदार्थाभेदविधानादथवा—उभयत्र विरुद्धांशत्यागेनैक्यमात्रविधानात् । तत्राऽऽद्ये जिज्ञासाधर्मि तत्पदार्थभूतं ब्रह्मैव । तस्य च प्रत्यगभिन्नत्वेन तज्जिज्ञासा ब्रह्मजिज्ञासेत्युच्यते । द्वितीये प्रत्यगर्थो जिज्ञासाधर्मी । तस्य ब्रह्मत्वेन जिज्ञासा ब्रह्मजिज्ञासा । तृतीये निर्विशेषमेकमेवेति बिम्बमेव जिज्ञासाधर्मि । तज्जिज्ञासा ब्रह्मजिज्ञासेत्येतत्पक्षत्रयं हृदि निधाय तत्रत्यं प्रथमं पक्षं निरस्यति—न ताद्बिम्बमिति ।

×तयोरिति । उक्तसामान्यविशेषप्रतिपत्त्योरित्यर्थः ।

द्वितीयपक्षमनूद्य निरस्यति—=नापीति । नापीत्यस्य युक्तमित्यनेनान्वयः । तदपि न युक्तमित्यर्थः । अयमाशयः—लोके हि निश्चितेन धर्मिणा यथा विचारशब्दप्रयोगो भवति तथाऽनिश्चितेन धर्मेण विचारपदप्रयोगो न क्वापि भवति । अतः प्रकृते प्रत्यगर्थस्य जिज्ञासाधर्मित्वेन निश्चितत्वाद्ब्रह्मत्वस्य चानिश्चितत्वात् 'पुरोवर्तिजिज्ञासा' 'धर्मजिज्ञासा' इत्यादिवत् 'प्रत्यग्जिज्ञासा' इत्येव सूत्रं कर्तव्यं स्यात्, न तु 'ब्रह्मजिज्ञासा' इति । तथा चाश्रुतस्य प्रत्यक्पदस्य कल्पनापातादद्वितीयपक्षो न युक्त इति ।

अश्रुतकल्पनारूपं दोषमुक्त्वा श्रुतहानिरूपं दोषमाह—+धर्मजिज्ञासेत्यादिना । ब्रह्मपदस्येत्यस्य धर्मिपरत्वसंभव इत्यनेन सहान्वयः । आकाङ्क्षास्वरूपमाह 'कस्य कथं विचारः' इति ।

परीतप्रकारपरत्वे श्रुतहानापाताच्च । * विरुद्धांशत्यागेन मुख-मात्रस्येव चिन्मात्रस्यैवाभेदस्वीकारेण विशिष्टयोर्बिम्बप्रतिबिम्ब-योरभेदाभावेन ब्रह्माभेदविधानाय तस्योद्देश्यत्वासंभवाच्च । ×किंच धर्मिण्यतदारोपनिमित्तत्वाल्लक्षणस्योत्तरसूत्रे प्रत्यगर्थ एव ब्रह्मत्वेन लक्षणीयः स्यात् । नहि वस्तुतः पुरुष इदंत्वादिना ज्ञायमाने स्थाणुत्वारोपः 'करचरणादिमान्पुरुषः' इति पुरु-षलक्षणोक्त्या निवर्तते किंतु 'अयं पुरुषः' इत्याद्युक्त्या। न= च जिज्ञासुना प्रतीचो ब्रह्मत्वं निश्चितम्, येन ब्रह्मणि लक्षिते प्रतीचि लक्षणविरोध्याकारो मिथ्येति ज्ञायेत । नापि लक्षणं प्रतीचोऽसाधारणधर्मतया तेन निश्चितम्, येन ब्रह्मणि

---

किं चास्मिन्पक्षे विशिष्टं प्रत्यगर्थमुद्दिश्य विशिष्टस्य ब्रह्मणोऽभेदो विधेयः। स च न युक्तः । चिन्मात्रैक्याङ्गीकारादित्याह— *विरुद्धांशेति । तस्य नाम प्रत्यगर्थस्येत्यर्थः । तथा च प्रत्यगर्थे विशेष्यभूतं चिन्मात्रमेवोद्देश्यमिति तत्रैव सामान्यप्रतिपत्त्यादिकं दर्शनीयं न तु विशिष्टे । तत्र च तत्प्रदर्शनं व्यधिकरणमिति भावः । अयं च दोष आद्यपक्षेऽपि बोध्यः । तत्रापि विशि-ष्टस्य ब्रह्मण उद्देश्यत्वासंभवस्य वक्तुं शक्यत्वात् ।

उक्तरीत्या द्वितीयपक्षे ब्रह्मजिज्ञासेत्यत्रत्यब्रह्मपदास्वारस्यमुक्त्वा द्वितीय-सूत्रास्वारस्यमप्याह— × किंचेति । अयमाशयः—जिज्ञास्ये हि वस्तुन्यतदाका-रारोपनिवृत्त्यर्थं लक्षणं कार्यम् । प्रकृते च प्रत्यगर्थ एव जिज्ञास्य इति तत्राब्र-ह्मत्वारोपनिवृत्तये 'प्रत्यग्ब्रह्म' इत्येव सूत्रं कार्यं न तु 'जन्माद्यस्य यतः' इति । जगज्जन्मादिकारणत्वेन ब्रह्म लक्षणीयम् । यच्च तथा लक्षितं तद्व्यधिकरण-मिति ।

ननु प्रत्यगर्थस्यैव वस्तुतो ब्रह्मत्वाद्ब्रह्मलक्षणोक्त्या प्रत्यर्थे जीवेऽतदाकार-निवृत्तिर्ज्ञायेतेत्याशङ्क्य तथाऽपि वैयधिकरण्यमेवेति दृष्टान्तेन द्रढयति—नहि वस्तुत इति । यथा करचरणादिमान्पुरुषः स्यादिति पुरुषसामान्यलक्षणोक्त्या स्थाणुत्वाद्यारोपो न निवर्तते किंतु 'अयं पुरुषः' इत्युक्त्यैव, तथा प्रत्यगर्थेऽहं-त्वादिना ज्ञायमाने देहेन्द्रियाद्यात्मकत्वारोपः 'जगत्कारणं ब्रह्म' इत्युक्त्या न निवर्तेत । किंतु 'प्रत्यग्ब्रह्म' इत्युक्त्यैव निवर्ततेति भावः ।

ब्रह्मणो लक्षणं प्रत्यगर्थेऽतदारोपनिवर्तकं नेत्येतदेव स्पष्टयति— =न च जिज्ञासुनेति ।

तत्कथनमुखेन ब्रह्माभेदो *ज्ञाप्येत । +त्वपक्षेऽपि ' शारीरश्चो-भयेऽपि हि भेदेनैनमधीयते ' ( ब्र० सू० १ । २ । २० ) ' प्राणभृच्च ' ( ब्र० सू० १ । ३ । ४ ) ' अधिकं तु भेदनिर्देशा-त् ' ( ब्र० सू० २ । १ । २२ ) इत्यादौ जन्मादिसूत्रोक्तलक्षण-स्य जीवे निषेधात् । ×अत एवोभयानुगतचिन्मात्रे त्वंपदलक्ष्ये =विप्रतिपत्तिः, जिज्ञासाधर्मि तु बिम्बं ब्रह्म चिन्मात्रमेवेति प्रत्यु-क्तम् । विशेष्यमात्रे विप्रतिपत्त्या ÷ विशिष्टधर्मिकविचारादर्श-नात् । विशिष्टस्य मुमुक्षुभिराविचार्यत्वाच्च । चिन्मात्रे देहत्वादिवि-प्रतिपत्तेरभावाच्च । सौत्रब्रह्मशब्दास्वारस्याच्च◡ । अथ जिज्ञा-साधर्मिणि ब्रह्मण्येव प्रतीचोऽन्यत्र वेति विप्रतिपत्तेर्न वैयधि-करण्यं तर्हि भवदीयभाष्ये—इह सूत्रे प्रतीचि देहत्वादिविप्र-तिपत्त्युक्तिरुत्तरसूत्रे जीवाच्छेदकस्य लक्षणस्योक्तिश्चायुक्ता । किंच—

ज्ञातं सामान्यतोऽज्ञातं विशेषेण विचार्यते ।
ज्ञाताज्ञातविभागस्तु निर्विशेषे न युज्यते ॥

उक्तं चानुव्याख्याने—

इदमित्थमिति ज्ञानं जिज्ञासायाः प्रयोजनम् ।

इति दूषणोद्भावनं परास्तम् ।

निरङ्कुशबृहत्त्ववाचिना ब्रह्मशब्देनैव जिज्ञास्ये सर्वज्ञत्वा-

---

* ज्ञाप्येतेति । जिज्ञासुना प्रत्यगसाधारणतया ज्ञातस्य लक्षणस्य सूत्रका-रेण ब्रह्मणि कथने कृते सति, अर्थात्प्रत्यग्ब्रह्मणोरैक्यं ज्ञाप्येतेत्यर्थः । + त्वत्पक्षेऽपीति । प्रत्यगसाधारणधर्मतया लक्षणस्यानिश्चितत्वे हेतुमाह— × अत एवो-भयेति । उक्तरीत्या द्वितीयं पक्षं निरस्य तृतीयं पक्षं दूषयति—

= विप्रतिपत्तिरिति । एवं च चिन्मात्र एव विप्रतिपत्त्या तत्रैक्यविधानं युक्तमिति शङ्काकाराशयः । जिज्ञासाधर्मि बिम्बं ब्रह्मेत्यनेन च ' ब्रह्मजि-ज्ञासा ' ' जन्माद्यस्य यतः ' इति सूत्रद्वयं युज्यत इति सूच्यते ।

÷ विशिष्टधर्मिकेति । बिम्बं ब्रह्म विशिष्टमेवेति स्वमताभिनिवेशं मनसि निधायेदमुच्यत इति बोध्यम् ।

◡ शब्दास्वारस्याच्चेति । तव मते हि चिन्मात्रमेव ब्रह्मेत्यङ्गीकाराद्बि-म्बभूते विशिष्टे जिज्ञासाधर्मिणि ब्रह्मशब्दो न स्वरसतो युज्यत इत्याशयः ।

ह्युपलक्षिते वस्तुनि जैवतात्त्विकरूपाभेदस्यापि लब्धत्वेन सर्वज्ञत्वाद्युपलक्षितप्रत्यगभिन्नधर्मिजिज्ञासायाः कर्तव्यतालाभात्। तादृशधर्मिज्ञानस्य चाधीतैः साङ्गैर्वेदान्तैरेव सिद्धतया तदर्थो विचारो न कर्तव्य इत्याशङ्कायामध्ययनमात्रसिद्धा प्रतीतिर्नाज्ञाननिवर्तनक्षमा। तात्पर्यसंशयस्यानपोदितत्वेन संशयरूपत्वादप्रामाण्यशङ्कास्कन्दितत्वात्। असंभावनादिरूपाज्ञाननिवर्तकतावच्छेदकशक्तिविरोधिदोषसाचिव्याच्च। तात्पर्यसंशयश्च वादिविप्रतिपत्त्या। यदि जीवस्य तात्विकं रूपं देहेन्द्रियादि तस्य शुद्धाभेदायोगः। यदि क्षणिकं विज्ञानं तदा नित्याभेदायोगः। यदि शून्यं तदा सदभेदायोगः। यदि च स्वाभाविकपरमार्थकर्तृत्वभोक्तृत्वादिमत्तदा तादृशसर्वज्ञत्वाद्युपलक्षितब्रह्माभेदायोगः। भोक्तैव केवलमिति सांख्यपक्षेऽपि जीवानां परस्परं भेदोपगमान्निरङ्कुशपरिच्छेदशून्यवस्त्वभेदायोग इति जीवस्य यदनौपाधिकं त्वंपदलक्षणीयं रूपं तद्देह एवेत्यादिविप्रतिपत्तयो भवन्ति। अनपोदितानिर्णीतबलाबलाश्च तात्पर्यसंशयद्वारा वाक्यार्थानिर्णये तन्निश्चयधर्मिकाप्रामाण्यग्रहेऽसंभावनाविपरीतभावनादिदृढीकरणे च हेतवः। एवं तत्पदार्थधर्मिकविप्रतिपत्तावप्यूह्यमिति क्व वैयधिकरण्यशङ्कावकाशः। क्व वा श्रुतहानमश्रुतकल्पनं वा। स्पष्टश्चायमर्थो निबन्धकल्पतर्वादिषु दर्शितः। पञ्चपादिकायामपि ताश्च वस्तुतो ब्रह्मपदार्थविषया एव तदेकार्थत्वाद्ब्रह्मशब्दस्येत्युक्तम्। तत्र तदेकार्थत्वादित्यस्य प्रत्यगभिन्नार्थकत्वादित्यर्थः। पूर्वोक्तरीत्या वस्तुपरिच्छेदराहित्यबोधनेन तल्लाभादिति भावः। एवं ब्रह्मणि विप्रतिपत्तिप्रदर्शनस्य प्रक्रान्तत्वादहंप्रत्ययविषयविप्रतिपत्त्याऽपि प्रणाड्या ब्रह्मविप्रतिपत्तिरेव निर्दिश्यते। यतो नाहंप्रत्ययाविषयविप्रतिपत्तिप्रदर्शनेन किंचित्कृत्यमस्ति। तस्मात्साध्वेतत्—आत्मा स भोक्तुरित्यपर इति। योऽयमहमित्युल्लिख्यमानश्चेतनो भोक्ताभासो मिथ्यैवानाद्यनिर्वाच्याविद्याविलसितः। परमार्थवस्तु यः सर्वज्ञ ईश्वरोऽहंप्रत्ययेऽनन्तर्भूतः सोऽस्याऽऽत्मा स्वरूपभूतः।

एवमसौ बृहत्यर्थान्वयाद्ब्रह्मशब्दाभिधानीयत्वं लभते । इत-
रथा तद्रूपविकलस्य न निरङ्कुशबृहत्त्वमिति न ब्रह्मशब्दाभि-
धेयत्वं स्यादिति पञ्चपादिकायामेव प्रपञ्चितम् । तत्रायमर्थः—
प्रणाड्या परम्परया । ब्रह्मविप्रतिपत्तिरेव प्रत्यगभिन्नत्रिविध-
परिच्छेदशून्यवस्तुविप्रतिपत्तिरेव । उक्तरीत्या प्रतीचो देहेन्द्रि-
यादिरूपत्वाभ्युपगमे च शुद्धबुद्धाद्यात्मके तदभेदायोगादिति
भावः । अहंप्रत्ययेऽनन्तर्भूत इति । अविद्योपाधिकस्यान्तः-
करणाद्युपाधिकस्य च मायाविद्याविषयत्वतदाश्रयत्वाद्युपाधि-
काज्जीवाद्व्यावहारिकभेदोपगमादिति भावः । तदुपदर्शनार्थ-
मेव भोक्तृत्वादौ भेदकथमेऽविद्याविलसितत्वाद्यभिधानम् ।
अखण्डार्थप्रतीतावुद्देश्यता*विधेयतारूपविषयताद्वयानभ्युपगमा-
च्च विरुद्धांशेत्यादिकमक्षतिकरम् । एकस्या एव च तादृश-
विषयताया ज्ञाताज्ञातोभयात्मकवस्तुवृत्तितयोद्देश्यताविधेयता-
त्मना परं सा व्यवह्रियते । जन्मादिसूत्रोक्तं लक्षणमप्य-
विद्यान्तःकरणाद्युपाधिकात्कल्पितभेदाज्जीवरूपाद्व्यावृत्तमेव ।

---

* विधेयतारूपविषयतेति । अत्रेदं बोध्यम्—ज्ञानं विषयि । तत्र विष-
यिता । पदार्थेषु विषयता । सा च त्रिधा । विशेष्यता प्रकरता संसर्गता चेति
भेदात् । घटोऽयमिति ज्ञाने घटो घटत्वं तयोः संबन्धश्चेति त्रयः पदार्था विष-
यभूताः । तत्र घटे विशेष्यताख्यविषयता । घटत्वे प्रकारताख्यविषयता ।
तयोः संबन्धे च संसर्गताख्यविषयता । स च संबन्धो नैयायिकमते समवायो
वेदान्तिनां मते तादात्म्यमित्यन्यदेतत् । विषयिता च त्रिधा । विशेष्यिता प्रका-
रिता संसर्गिता चेति भेदात् । तथा चायं घट इत्यत्र शाब्दबोधस्त्रिधा ।
तथा हि—घटत्वनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता समवायसंबन्धनिष्ठा
या संसर्गता तादृशसंसर्गतानिरूपिता घटनिष्ठा या विशेष्यता तादृशविशेष्यता-
निरूपिता विशेष्यिता ज्ञाने तच्छालि ज्ञानमित्येकः । घटनिष्ठा या विशेष्यता
तादृशविशेष्यतानिरूपिता समवायसंबन्धनिष्ठा या संसर्गता तादृशसंसर्गतानि-
रूपिता घटत्वनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता प्रकारिता ज्ञाने
तच्छालि ज्ञानमिति द्वितीयः । घटनिष्ठा या विशेष्यता तादृशविशेष्यतानिरू-
पिता घटत्वनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता समवायसंबन्धनिष्ठा या
संसर्गता तादृशसंसर्गतानिरूपिता संसर्गिता ज्ञाने तच्छालि ज्ञानमिति तृतीयः ।

औपाधिकानिर्वाच्यभेदस्यापि तादृशविरुद्धधर्मासांकर्योपपादकताया व्यवस्थापितत्वात् । तादृशभेदश्च न तात्त्विकाद्वैतविरोधी । ज्ञातं सामान्यतोऽज्ञातमित्यादिदूषणाभासश्च प्रागेव निरस्त इति सर्वमनवद्यम् ।

श्रीमच्छंकरपादाब्जभूषणे परदूषणे ।
शास्त्रस्याऽऽद्याधिकरणे स्वपक्षपरपक्षयोः ॥ १ ॥
सदसत्त्वज्ञापिकेयं रघुनाथकृतिः स्फुटम् ।
भूयात्सतां तोषणाय दुर्वादिविजयाय च ॥ २ ॥

## अथ जन्माद्यधिकरणम् ।

मायां कामपि शुद्धसत्त्ववपुषं संगृह्य लीलावशा-
त्सृष्ट्वा विश्वमिदं प्रकाशकतया सर्वज्ञशब्दोदितः ।
कोशाकारतया विभाति विभुरप्यन्तः परिच्छिन्नव-
त्तं प्रत्यञ्चमसङ्गमद्वयमृतं संविद्य मोदाम्यहम् ॥ १ ॥
यद्विश्वस्थितिभङ्गकर्तृ तदिह ब्रह्मेति सूत्रोदितं
व्याचख्यौ खलु विस्तरेण भगवानाचार्यवर्यः स्फुटम् ।
तत्राऽऽक्षेपशतं निवार्य कुधियामाक्षिप्य तत्कल्पितं
यत्तच्छंकरपादभूषणमिदं पश्यन्तु सत्सूरयः ॥ २ ॥

जन्माद्यस्य यतः ॥ २ ॥

प्रथमसूत्रे ब्रह्मस्वरूपप्रमाणादिविचारः प्रतिज्ञातः । तत्र यत्र सर्वं विशेषजातं कल्पितं यच्च सत्यज्ञानादिपदार्थेषु धर्मिभूतम-

उद्देश्यताविधेयताजन्यताजनकतास्वतास्वामितादयो धर्मा अपि विषयतायामेवान्तर्भूता भवन्ति । तथा हि—संबन्धो द्विधा । संयोगः समवायश्चेति । ये च स्वस्वामिभावादयः संबन्धाः प्रतीयन्ते ते न पृथग्गणनीया भवन्ति । किंत्वाश्रयधर्मेष्वेवान्तर्भूता भवन्ति । स्वस्वामिभाव इत्यत्र हि स्वश्च स्वामी च स्वस्वामिनौ । तयोर्भावः स्वस्वामिभावः । स्वत्वं स्वामित्वं चेत्यर्थ इति बोधेन स्वत्वस्वामित्वधर्मव्यतिरिक्तो न स्वस्वामिभावरूपः कश्चित्संबन्धः । तौ च धर्मौ प्रकारताविशेष्यतारूपौ । एवमेव जन्यजनकभावोद्देश्यविधेयभावादयो बोध्याः । एवं चोद्देश्यताविधेयतयोर्विशेष्यताप्रकारताख्यविषयतारूपत्वस्य सिद्धत्वादत्रत्यम् ' उद्देश्यताविधेयतारूपविषयता ' इति संगच्छत इति ।

खण्डं वस्तु वस्तुगत्या स एव ब्रह्मशब्दार्थः । तादृशे ब्रह्मणि सर्वे वेदान्ताः प्रमाणमिति ‘ शास्त्रयोनित्वात् ’ ( ब्र० सू० १ । १ । ३ ) ‘ तत्तुसमन्वयात् ’ ( ब्र० सू० १ । १ । ४ ) इत्येताभ्यामग्रिमसूत्राभ्यां क्रियमाणः प्रमाणोपन्यासो जिज्ञास्यत्वाभिमततादृशब्रह्मणो लक्षणेन निर्देशं विनाऽनाकाङ्क्षित एव स्यात् । लक्षणेन ज्ञात एवार्थे प्रमाणाकाङ्क्षोदयादिति लक्षणमुखेन ब्रह्मस्वरूपनिर्णयार्थमिदं सूत्रम् । तत्र पूर्वाधिकरणे परिच्छेदत्रयरहितस्यात एव प्रत्यगभिन्नस्य ब्रह्मणो जिज्ञास्यत्वमुक्तं तदिहाऽऽक्षिप्यत इत्यनन्तरसंगतिः । ‘यतो वै’ ( तै० ३ । १ । १ ) इत्यादिस्पष्टब्रह्मलिङ्गानां वाक्यानां ज्ञेये ब्रह्मणि समन्वयप्रतिपादनादध्यायसंगतिः पादसंगतिश्च । तत्र वाचस्पत्यादिसंमतेत्थमधिकरणरचना—निरुक्तस्य ब्रह्मणो जिज्ञास्यत्वं संभवति वा न वा, तदर्थं यतो वेत्यादि वाक्यं ब्रह्मलक्षणं प्रतिपादयति न वेति पूर्वोत्तरयुक्तिभ्यां वक्ष्यमाणाभ्यां संशये यद्यावदनुभूयते तत्सर्वं परिमितमशुद्धं विध्वंस्यबुद्धं च । न च तेनोपलब्धेन तद्विरुद्धं नित्यशुद्धबुद्धमुक्तस्वरूपस्य ब्रह्मणः स्वरूपं लक्षयितुं शक्यम् । न हि जातु कश्चित्कृतकत्वेन नित्यं लक्षयतीति न ‘ यतो वा ’ इत्यादि वाक्यं ब्रह्मलक्षणार्थम् । नापि सत्यं ज्ञानमनन्तं ब्रह्मेति वाक्यं तथाभूतब्रह्मलक्षणप्रतिपादकम् । तद्धि सत्यत्वादिधर्मस्य लक्षणत्वं बोधयत्युत सत्यादिरूपधर्मिणः । नाऽऽद्यः । जिज्ञास्यत्वेनोक्तस्य परिच्छेदत्रयरहिताद्वितीयब्रह्मणो विरोधेन तादृशधर्मवत्त्वासंभवात् । नापि द्वितीयः । सत्यादिशब्दैर्लोके सत्यत्वादिधर्मविनिर्मुक्तसत्यादिस्वरूपाव्यवहारेण तादृशस्वरूपाप्रसिद्धेः । न च श्रुत्यैव तादृशधर्मिस्वरूपप्रसिद्धिः । यज्जगज्जन्मादिकारणं ब्रह्म तत्सत्याद्यात्मकमित्येवंरूपेण कारणत्वसत्यत्वादिरूपोद्देश्यतावच्छेदकविधेयाद्यनेकधर्मसंसृष्टतया ब्रह्मबोधिकायाः श्रुतेः सकलधर्मविनिर्मुक्तधर्मिबोधकत्वासंभवात् । किंचासाधारणधर्मो हि लक्षणं न धर्मी, अभेदे लक्ष्यलक्षणभावानुपपत्तेरिति पूर्वपक्षे । यतो वेत्यादिवाक्योक्तं जगज्जन्मादिकारणत्वं

ब्रह्मणो लक्षणं संभवत्येव । तदुक्तं वाचस्पतिमिश्रैः—मा भूदनुभूयमानं जगत्परिच्छिन्नत्वात्तद्धर्मतया तदात्मतया वा ब्रह्मलक्षणम् । तदुत्पत्त्यादि तु भविष्यत्येव देशान्तरप्राप्तिरिव सवितुर्व्रज्याया इति । तस्य च लक्षणस्येतराद्वृत्तितया काल्पनिकसंबन्धेन ब्रह्मवृत्तितया च नातिव्याप्त्यसंभवावकाशः । कल्पितेनापि तेनोपलक्षणेन यद्रजतमभात्सा शुक्तिरिति कल्पितेन रजतेन शुक्तिरिव यज्जगज्जन्मादिकारणं तद्ब्रह्मेति ब्रह्म लक्ष्यते । कल्पितस्य तस्य मिथ्यात्वेन परमार्थतो निर्धर्मकब्रह्मस्वरूपाविरोधित्वात्कल्पितत्वेऽपि तस्य ब्रह्मासाधारणत्वाल्लक्षणत्वमुपपन्नमेव । असाधारणधर्मसंबन्धो हि लक्षणनिमित्तं न तत्सत्यत्वम् । काकादीनामसंबद्धानां गृहोपलक्षणत्वादर्शनात् । चन्द्रस्य शाखाग्रमिव जगज्जन्मादिकारणत्वस्य तटस्थतयोपलक्षणत्वविवक्षया च न 'विशिष्टज्ञेयतापत्त्यादि' परोक्तदूषणम् । एवं सत्यं ज्ञानमनन्तमिति च श्रुतिप्रतिपाद्यमखण्डं सत्यज्ञानादिस्वरूपमपि ब्रह्मलक्षणं संभवति । न च तादृशवाक्यानां पूर्वपक्षोक्तरीत्या तादृशाखण्डब्रह्मस्वरूपबोधकत्वासंभवः । यथाऽर्थवादवाक्येषु मुख्येऽर्थे उद्देश्यतावच्छेदकविधेयादिसंसर्गबोधे सत्यपि लक्षणीये स्तुतिरूपे न तत्संसर्गो भासते, तद्वत्सत्यादिवाक्येषु द्वारीभूते मुख्यार्थे तज्ज्ञानेऽपि लक्षिते स्वरूपमात्रेऽपि न स भासत इति लक्षणया तादृशाखण्डब्रह्मस्वरूपबोधकत्वाविरोधात् । पर्यवसितबोधे पदान्तरार्थसंसर्गभानमावश्यकमिति नियमस्याप्रामाणिकत्वाच्च । अर्थवादोपस्थितप्राशस्त्यादौ यागदेवतासंबन्धभानेऽपि न प्रकृते पदान्तरार्थसंसर्गभानप्रसक्तिः । क्वचित्तत्र दृष्टमात्रेणात्राप्यापादने लौकिकवाक्यानां प्रमाणान्तरसिद्धार्थ एव प्रामाण्यं न तु कविप्रतिभादिसिद्ध इति दृष्टत्वाज्ज्योतिष्टोमादिवाक्येष्वलौकिकार्थासिद्धिप्रसङ्गः । तत्र स्वतःप्रमाणवेदवाक्यतात्पर्यानुरोधाल्लोकसिद्धनियमानादरेणालौकिकार्थसिद्धिरिति चेत्तर्हि प्रकृतेऽपि तथा वक्तुं शक्यमेव । अपि च प्रकृष्टप्रकाशश्चन्द्र इति लौकिकवाक्येष्वपि पदान्तरार्थसंसर्गगोचरप्रमितिजनकत्वाभावोऽपि दृष्टः । नहि तत्र प्रकृष्टप्रकाशश्चन्द्रेतर-

ष्ट्याद्वृत्तश्चन्द्रपदवाच्यो वेति बोधः संभवति । प्रकृष्टप्रकाशवैशिष्ट्यस्य चन्द्रेतरव्यावृत्तत्वस्य च प्रत्यक्षेण गृहीतत्वात् । चन्द्रत्वं जातिविशेषस्तं प्रवृत्तिनिमित्तीकृत्य तदाश्रये चन्द्रपदं प्रवर्तत इत्याप्तोपदेशात्पूर्वमेव ग्रहात् । किंच तात्पर्यानुसारेण वाक्यार्थो वर्णनीयः । तत्र यदि वाच्यवाचकाद्यभिप्रायेण प्रश्नस्तदा तत्परत्वमेवास्तु वाक्यस्य न तत्राऽऽग्रहः । यदि चन्द्रशब्दवाच्यत्वाश्रयो यो व्यक्तिविशेषः स क इति प्रष्टुरभिप्रायस्तदा तन्मात्रप्रश्नोत्तरत्वात्प्रकृष्टप्रकाशस्य ज्ञातत्वेनाजिज्ञासितत्वात्प्रकृष्टप्रकाशानुवादेन तन्मात्रपरत्वमेव तादृशवाक्यस्योपेयम् । प्रकृष्टप्रकाशानुवादेन विना व्यक्तिविशेषस्य बोधयितुमशक्यतया तदनुवादः सफलः । न च प्रष्टुर्यावद्बुभुत्सितं तावदवश्यं वक्तव्यमित्येव नियमो न तु तदधिकं न वक्तव्यमिति । अन्यथा काश्याः को मार्ग इति प्रश्ने तदतिरिक्तमार्गचिह्नगिरिनद्यादिनिरूपणं न स्यादिति वाच्यम् । यत्र बुभुत्सितवस्तु प्रतिपत्त्युपयोग्यज्ञातं भवति तत्र प्रष्टुर्जिज्ञासा भवत्यवेति तत्र प्रश्नं विनाऽपि वाक्यतात्पर्यस्वीकारेण तन्निरूपणेऽपि प्रकृते जिज्ञासिते प्रकृष्टप्रकाशसंबन्धस्य प्रत्यक्षतो ज्ञातत्वेन तत्र न तात्पर्यं कल्पनीयं किंतु व्यक्तिविशेष एवेति सिद्धं पदान्तरार्थसंसर्गगोचरप्रमितिजनकत्वाभाववत्त्वं लक्षणवाक्यस्य ।

इयान्विशेषः—लौकिकदर्शितलक्षणवाक्यार्थे प्रातिपदिकार्थे चन्द्रस्वरूपे चन्द्रत्वसंबन्धो भासते सत्यादिवाक्ये सत्यत्वब्रह्मत्वसंसर्गोऽपि न भासते, अपि तु प्रातिपदिकार्थमात्रम् । 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' ( बृ० ४ । ४ । १९ ) 'उदरमन्तरं कुरुतेऽथ तस्य भयं भवति' ( तै० २ । ७ । १ ) इत्यादिश्रुतिभिर्भेददर्शनस्य निन्दितत्वेन स्वरूपमात्र एव श्रुतितात्पर्यावगमात् । अधिकमखण्डार्थविचारेऽद्वैतसिद्धितद्दीयटीकादौ द्रष्टव्यम् ।

ननु सत्यादिवाक्ये सत्यादिस्वरूपप्रातिपदिकार्थमात्रतात्पर्ये तादृशस्यैकेनापि पदेन बोधनसंभवात्पदान्तरवैयर्थ्यम् । मैवम् । सत्यत्वज्ञानत्वाद्युपलक्षितशुद्धानामैक्यानिश्चयाय पदान्तरोपादा-

नात् । अन्यथा सत्यत्वाद्युपलक्षिताद्भेदो ज्ञानत्वानन्तत्वाद्युपलक्षितव्यावृत्तिरिति भ्रमानिवृत्त्या ब्रह्मस्वरूपमोक्षस्य स्वप्रकाशचिदानन्दादिभिन्नेनानन्तवत्स्वरूपेणाभेदबुद्ध्यां तत्प्राप्तेरपुरुषार्थत्वज्ञानेन तत्साधनश्रवणादौ प्रवृत्त्यनुपपत्तेः । तस्य मिथ्यात्वबुद्ध्या ब्रह्मज्ञाने मिथ्याविषयकत्वरूपभ्रमत्वज्ञानात्तस्याज्ञानानिवर्तकत्वानुपपत्तिश्च । तावत्पदसत्त्वे तु समानविभक्तिकसत्यादिपदजन्यशाब्दबुद्धिविषयत्वान्यथानुपपत्त्या सत्यादिपदार्थानामैक्यनिश्चयान्नोक्तभ्रमसंभव इति सत्यादिवाक्यप्रतिपाद्यमखण्डं स्वरूपं लक्षणं सुवचमेव । स्वरूपैक्येऽपि कल्पितलक्ष्यलक्षणाकारभेदाभ्युपगमान्न 'अभेदे लक्ष्यलक्षणभावानुपपत्तिः' इति पूर्वपक्षोक्तदोषः ।

सत्यज्ञानानन्तादिस्वरूपं न मुख्यं लक्षणम्, अपि तु तदवगम इतरव्यावृत्तावुपयुज्यत इति तस्य लक्षणत्वोपचार इति केचित् । 'जन्माद्यस्य यतः' ( ब्र० सू० १ । १ । २ ) इति सूत्रेण जन्मादीत्यनेन जगज्जन्मादित्रितयकारणत्वस्य लक्षणत्वलाभः । यत इति पञ्चम्यनुरोधात् । यतः सत्यादिरूपादित्यर्थविवक्षया सत्यादिरूपस्य स्वरूपलक्षणत्वं च लभ्यत इति सिद्धान्तः ।

यत्तु चन्द्रिकायाम्—अत्र परैरित्यादिनोक्तपूर्वपक्षमनूद्य तन्नेत्यादिना जिज्ञास्यस्येतरव्यावृत्त्यर्थं× लक्षणसूत्रेऽस्मद्रीत्याऽन्यावृत्तिपूर्वपक्षस्यैवोचितत्वादित्युक्तम् । तदविचाररमणीयम् । तुल्यन्यायेनोक्तरीत्या लक्षणाप्रतिपत्तौ लक्षणेनाज्ञातेऽर्थे विचारासं-

× इतरव्यावृत्त्यर्थमिति । लक्षणस्य सजातीयविजातीयव्यावर्तकत्वेन जन्माद्यस्येति सूत्रे ब्रह्मलक्षणोक्तिरितरव्यावृत्त्यर्थैवेति वक्तव्यमेव । तथा च यथा सामान्यतो गोः प्रत्यक्षादिज्ञाने सत्यप्यश्वाद्यपेक्षया पार्थक्येन गोर्ज्ञानाभावे तादृशज्ञानार्थं सास्नादिमत्त्वे सति शृङ्गित्वं लक्षणमुच्यते तथा ब्रह्मापेक्षया जीवप्रधानाद्यविवेकेन जीवादावपि ब्रह्मत्वबुद्धौ प्रसक्तायां तद्व्यावृत्त्यर्थं जन्मादीति ब्रह्मलक्षणम् । एवं च सूत्रावतरणभूतस्य निरसनीयस्यान्यावृत्तिरूपस्यैव पूर्वपक्षस्य वाच्यत्वेन त्वदुक्तस्य च तथात्वाभावात्सूत्राननुगुणः पूर्वपक्ष इत्यस्मद्रीत्यैवान्यावृत्तिपूर्वपक्ष उचित इति भावः ।

भवशङ्काया अप्यवश्यनिरसनीयत्वेन त्वदुक्तशङ्कामात्रस्यौचित्ये बीजत्वस्य त्वदेकवेद्यत्वात् । धर्मविचारप्रतिज्ञानन्तरमितरव्या॰ वृत्तधर्मस्वरूपप्रतिपत्तये तदनुगुणायाः 'चोदनालक्षणोऽर्थो धर्मः' ( जै॰सू॰ १।१।२ ) इति धर्मलक्षणपरसूत्रप्रवृत्तेरिव ब्रह्मविचारप्रतिज्ञानन्तरमितरव्यावृत्तब्रह्मस्वरूपप्रतिपत्तये तदनुगुणाया ब्रह्मलक्षणपरसूत्रप्रवृत्तेरेवोचितत्वेन वाक्यशेषगतब्रह्मशब्दे रूढ्या जीवपरत्वपूर्वपक्षस्य त्वदभिमतस्य सूत्राननुगुणत्वात् । प्रकारान्तरेण त्वदुक्तरीतेरग्रे निरसनीयत्वाच्च ।

यदपि तत्रैव चन्द्रिकायाम्—अनित्यादिरूपस्य शब्दादेर्नित्यादिरूपाकाशादेर्लक्षणत्वदर्शनाच्च जगत इव कारणत्वस्याप्यनात्मतयाऽऽत्मविरुद्धस्वभावत्वादित्युक्तम् । तदभिप्रायस्तु—अनित्यशब्दस्य नित्याकाशलक्षणत्वदर्शनात्सिद्धान्तेऽप्यनात्मभूतस्य कारणत्वादेर्ब्रह्मलक्षणत्वस्वीकाराच्च विरुद्धस्वभावयोर्लक्ष्यलक्षणभावानुपपत्तिशङ्का पूर्वपक्षे न युक्तेति । तदपि वाचस्पत्यादिनिबन्धहृदयानवबोधनिबन्धनम् । शब्दस्य जगत्कारणत्वादेश्च विरुद्धस्वभावस्य गगनब्रह्मादिस्वरूपलक्षणत्वासंभवस्यैव तत्रोक्तत्वात् । अत एव तेन च ब्रह्मणः स्वरूपं न लक्षयितुं शक्यमिति पूर्वपक्षग्रन्थे वाचस्पतिमिश्रैरुक्तम् । अन्यथा ब्रह्म लक्षयितुं न शक्यमिति विन्यासोपेक्षायां बीजाभावः । न च जगतः कारणत्वादेर्वा तटस्थलक्षणत्वानाक्षेपे न्यूनता स्यादिति तन्निरासाय विरुद्धस्वभावस्यैव तत्रापि हेतुत्वं वक्तव्यं हेत्वन्तरानुक्तेरित्युक्तासंगतिरपरिहारार्थैवेति वाच्यम् । तत्रोपलब्धमात्रस्य यावदनुभूयते तत्सर्वं परिमितामित्यादिना परिच्छिन्नताकीर्तनेन धर्मतयोपलब्धस्य परिच्छिन्नवृत्तितासूचनादातिव्याप्तेर्धर्मत्वेनानधिगतस्य लक्षणवृत्तित्वाभावेनासंभवस्य चातिस्फुटतया न्यूनताशङ्कानुदयात् । अत एव वाचस्पतिग्रन्थे धर्मलक्षणशङ्कायां नापि नित्यत्वकारणत्वादीत्यादिना नित्यत्वादिकमेवोक्तम् । तस्य चाभावानामधिकरणस्वरूपत्वपक्षे स्वरूपलक्षणत्वस्यापि संभवाच्चेन स्वरूपं लक्ष्यत इत्यनभिधाय तल्लक्ष्यत इत्येवोक्तम् । ननु देशान्तरप्राप्तेः सवितृव्रज्यायामसत्त्वेन तल्लक्षणत्वा॰

भावादुक्तसिद्धान्ते देशान्तरप्राप्तिरिवेत्यादिना निबन्धेन दृष्टान्तोक्त्यसंगतिरिति चेत्। न। तत्प्रतीतिजनकप्रतीतिविषयत्वरूपलक्षणत्वमात्र एवास्य दृष्टान्तत्वात्। वस्तुतस्तु दार्ष्टान्तिके जगदुत्पत्त्यादावपि न साक्षाद्ब्रह्मनिष्ठत्वमित्यसंभववारणाय यत इति श्रुतिसौत्रपञ्चम्यनुरोधाच्च तदुत्पत्तिपदस्य तदुत्पत्तिकारणतापरत्वं स्वनिरूपितकारणतासंबन्धेनोत्पत्तेर्वा लक्षणत्वमवश्यं वाच्यम्। तथा च देशान्तरप्राप्तिपदस्यापि तज्जनकतापरत्वाद्देशान्तरप्राप्तेरपि स्वनिरूपितजनकतासंबन्धेन सवितृव्रज्यावृत्तित्वेन तल्लक्षकत्वाद्वा नासंगतिः। देशान्तरप्राप्तिरित्यस्य च देशभेदावच्छिन्नो महादिक्सूर्यसंयोगोऽर्थः। जनकता चासमवायिकारणतारूपा ग्राह्या। तेन संयोगजनके द्रव्ये नातिव्याप्तिः। सिद्धान्ते समवायानभ्युपगमेऽपि तत्स्थाने तादात्म्यलक्षणसंबन्धाभ्युपगमेन नासमवायिकारणत्वं दुर्वचम्। एतेन देशान्तरप्राप्तेः सूर्यगत्यनुमापकत्वेऽपि तल्लक्षणत्वाभावात्। न चात्र सूत्रे यतो वेत्यादिश्रुतावुत्पत्त्यादिकमद्वितीये ब्रह्मणि लिङ्गत्वेनोच्यत इति त्वयाऽपि स्वीकृतम्, इति चन्द्रिकाकारोक्तमुक्तसिद्धान्तमनूद्य दूषणं निरस्तम्। निरस्तं च चन्द्रिकोक्तं 'जिज्ञास्यत्वेनाऽऽद्यसूत्रे प्रकृतस्य निर्विशेषब्रह्मणो भ्रमाधिष्ठानत्वेनाकारणत्वाच्च। अधिष्ठानत्वस्यैव विवक्षायां तु श्रुतिसूत्रयोर्जन्मोक्त्ययोगात्' इति दूषणम्। उक्तरीत्योत्पत्तिपदस्य लक्षणया कारणत्वपरतया लक्ष्यीभूतब्रह्मशब्दार्थनिष्प्रपञ्चत्वप्रतिपत्त्युपयोगितयाऽध्यारोपन्यायेन यद्रजतमभात्सा शुक्तिरित्यारोपितरजतस्यैवाऽऽरोपितकारणत्वस्योपलक्षणतया निर्विशेषब्रह्मणो लक्षणत्वसंभवस्योपपादितत्वात्।

सूत्रेऽस्येत्यस्य जन्यमात्रस्येत्यर्थः। उत्तराधिकरणे वेदनित्यतामादायोक्तलक्षणाक्षेपपक्षे त्वविद्याद्यनादिभिन्नस्येत्यर्थः। जन्मादीति। जन्म, आदिर्यस्य तज्जन्मादीति विग्रहेण जन्मस्थितिभङ्गं समासार्थः। नपुंसकैकवचनेन समाहारबोधनात्। तथा च जन्मादित्रितयहेतुत्वं लक्षणं 'यतो वै' (तै० ३।१।१) इति श्रुत्यनुसारात्। 'जन्महेतुत्वमविद्यायामप्यस्त्यतो भङ्गेति।

तद्धेतुत्वमविद्यानाशेऽपीत्युभयघटितम् । सत्तास्फूर्तिः स्थितिस्तां
प्रति चावच्छिन्नाकाशं प्रति महाकाशस्येव ब्रह्मणो हेतुत्वम् ।
तच्च लक्षणान्तरम् ' इति केचित् । स्थितिसंहाराभ्यामुपादानत्वं
विवक्षितम् । तच्चाविद्यायामप्यस्त्यतो जन्महेतुत्वम् । तच्च
कर्तृत्वरूपम् । तेनाविद्याद्यन्यं प्रति कर्तृत्वे सत्युपादान-
त्वं लक्षणं फलितम् । धूमप्रागभावादिहेतौ धूमत्वस्य प्रागभा-
वाद्यवृत्तित्वात्प्रागभावस्येव कर्तृत्वस्योपादानत्वाद्यवृत्तित्वादुपादान-
त्वस्य न वैयर्थ्यमिति परे । सिद्धान्ते सर्वमेव लक्षणवाक्यं
वाच्यतावच्छेदकतत्तद्धर्मोपस्थितिद्वारा तदुपलक्षिताखण्डव्यक्ति-
तात्पर्यकमित्यङ्गी क्रियते । तथा च 'यतो वै ' ( तै० ३ । १ ।
१ ) इत्यादिलक्षणवाक्ये सृष्टिस्थितिप्रलयानामेकैककारणत्वो-
क्तौ तदुपस्थितिद्वारा तदुपलक्षितसत्त्वरजस्तमसामेकैकगुणोप-
लक्षितब्रह्मस्वरूपस्यैव वाक्याल्लाभे तस्यैव महावाक्यतात्पर्यवि-
षयतया निर्णयेन च महावाक्याधीनमुमुक्षुनिर्णयविषयत्वं
स्यात् , न तु गुणत्रयोपलक्षितस्य । तथा च गुणत्रयोपलक्षि-
तेनेशस्वरूपेण जीवस्वरूपाभेदाज्ञानसंशयादिकं न निवर्तेत ।
नहि च्छत्रिमात्रे तात्पर्याधीनः ' छत्री चैत्रः ' इति वाक्यज-
न्योऽखण्डार्थबोधश्छत्री कुण्डली वासस्वी न चैत्र इति भ्रमहेत्व-
ज्ञानानिवर्तकत्वेनाऽऽनुभाविकः । तथा च महावाक्यगततत्पदा-
र्थस्वरूपस्याखण्डस्य स्रष्टृत्वाद्युपस्थितिद्वारा बोधकं यतो वेति
वाक्यमिति न किमपि व्यर्थमित्यपरे । जन्मकारणत्वाद्येकैकस्यो-
पलक्षणतया लक्षणत्वसंभवेऽपि निरङ्कुशापरिच्छिन्नत्वोपपा-
दनपरत्वेन कारणत्वान्तरस्योपलक्षणत्वेन लक्षणत्वाभिधानस्य
समप्रयोजनत्वम् । अन्यथा कारणान्तरस्यान्यस्य संभावनायां
निरङ्कुशापरिच्छिन्नत्वनिर्णयो दुर्घट एवेत्यपि केचित् ।

यत्तु चन्द्रिकायाम्—" यच्चोक्तं परैः ' जन्मादीत्यत्रोत्पत्ति-
स्थितिभङ्गमेवोच्यते न त्वन्यत् । ' यतो वै ' इत्यादिश्रुत्यनुसा-
रात् ' इत्यादिनोक्तसिद्धान्तमनूद्य तन्न ' यतो वै ' इत्यत्र
चतुर्णां ' तमेवैकं जानथ ' ( मु० २ । २ । ५ ) इत्यादौ
' यस्मिन्द्यौः ' ( मु० २ । २ । ५ ) इति स्थित्यादीनामेकैक-

स्यैव श्रवणात् । न च ' अभिसंविशन्ति ' ( तै० ३ । १ । १ ) इत्येतदपि लयपरम् । ' प्रयन्ति ' ( तै० ३ । १ । १ ) इत्यनेन पौनरुक्त्यापत्त्या तस्य मोक्षपरत्वात् । न च प्रयन्तीत्यनेन सुषुप्तौ ब्रह्मप्राप्तिरुच्यते । तथाऽपि चतुष्टापरिहारात् । जगतो जन्माङ्गीकारेऽनित्यत्वापत्त्या मिथ्यात्वासिद्धेरुक्तत्वादिति दूषणमुक्त्वा सृष्ट्याद्यष्टकमेव जन्मादिपदार्थः । ' यतो वै ' इत्यत्र सृष्टिस्थितिप्रलयमोक्षाणां 'य आत्मानमन्तरो यमयति' (बृ०३।७। २२) ' त्वं मुक्तिदो बन्धदोऽतो मतो नस्त्वं ज्ञानदोऽज्ञानदश्चासि विष्णो ' इत्यादौ नियमनादीनामप्युक्तेः । विचारविधायकनानावाक्यपरामर्शेन सूत्रकृतैव स्कान्दे जन्माद्यष्टकर्तृत्वस्य लक्षणत्वेनोक्तत्वादत्रापि लक्षणत्वेन तस्यैव विवक्षणीयत्वात् । यद्वा—सर्वैर्मुमुक्षुभिर्विविच्याष्टकर्तृत्वस्येवान्यकर्तृत्वस्य ज्ञेयत्वनियमाभावान्नान्यदिहाऽऽदिशब्दार्थः । उक्तं च—

सृष्टिरक्षाहृतिज्ञाननियत्यज्ञानबन्धनान् ।
मोक्षं च विष्णुतश्चैव ज्ञात्वा मुक्तिर्न चान्यथा ॥ इति ।

अथवा—विषयोपपादकगुणपूर्तिसिद्ध्ये जीवाद्भेदके प्रसिद्धे जन्मादित्रितयहेतुत्वेऽभिहितेऽपि प्रयोजनसिद्ध्ये मोक्षदत्वस्यापि वक्तव्यत्वात् [1] " तस्य च बन्धकत्वं विनाऽयोगात् । तयोश्च तद्धेतुज्ञानाज्ञानदत्वं विनाऽनुपपत्तेस्त्रितयहेतुत्वस्यापि वक्तव्यत्वात् । पुनश्च दीपस्तम इव ज्ञानं बन्धकाज्ञानं स्वयमेव हन्ति किमीश्वरेणेति शङ्कायां दीपज्ञानादिस्वभावोऽपि भगवदायत्त इति वाच्यत्वात्प्रकृतोपयोगित्वादष्टकोक्तिः " इति स्वमतेन सिद्धान्त उक्तः ।

तत्रोच्यते—' यतो वै ' इत्यादिवाक्येऽभिसंविशन्तीत्यस्य लयपरतया लयकारणत्वस्यैवोक्तेः । अत एव सुषुप्तौ ब्रह्मप्राप्तेरपि न पृथगभिधानमिति चतुर्णां कारणत्वानामनुक्तेः । अथैवं प्रयन्त्यभिसंविशन्तीत्यनयोः पौनरुक्त्यपरिहारेण समयोजनत्वं कथमिति चेत्त्वयाऽप्येतद्वक्तव्यमेव । प्रयन्तीत्यनेनोत्पत्तिमद्भावमात्रं संविशन्तीत्यनेन मोक्षो विवक्षित इति मया स्थितस्य गतिरुच्यत इति चेत् । बाढमुच्यताम् । ' अविद्या'



[1] ख. "तस्यैव, इत्यपि पाठान्तरम् ।

निवृत्तिर्मोक्षः सा च वन्ध उदाहृतः ' (सर्व० सं० शां० १४६) 'तरति शोकमात्मवित्' ( छा० ७ । १ । ३ ) ' विद्वान्नामरूपाद्विमुक्तः ' ( मु० ३ । २ । ८ ) 'ज्ञात्वा देवं मुच्यते सर्वपाशैः' ( श्वे० १ । ८ ) ' छिद्यन्ते सर्वसंशयाः ' ( मु०२। २ । ८ ) इत्याद्यनेकैः श्रुतिस्मृतिपुराणवाक्यैर्मोक्षस्य लयविशेषरूपतोक्तेरेकविंशतिध्वंसरूपस्य लयस्य तन्त्रान्तरे मुक्तित्वाभ्युगमाच्च मोक्षस्य लयविशेषरूपतया निरुक्तपदार्थयोर्गोवलीवर्दन्यायेन भेदसत्त्वेऽपि पदद्वयलभ्यलयकारणत्वं लक्षणमेकमेव सूत्रे प्रतिपाद्यत इति कथं चतुर्णामुपादानम् । अन्यथा जन्मोत्पत्त्योरप्याद्यशरीरप्राणसंयोगो जन्म, आद्यक्षणसंवन्ध उत्पत्तिरिति सामान्यविशेषभावसत्त्वेन तत्रापि पृथगुभयकारणत्वस्य वक्तव्यतापत्त्या चतुर्णामिति तवाऽऽसक्तिवैफल्यात् । वस्तुतस्तु प्रयन्तीत्यस्य शत्रन्ततया लयोन्मुखानि सन्ति लययोग्यानि सन्ति लयं लभमानानि सन्ति वा यदभिसंविशन्ति यत्र लीयन्त इत्यर्थविवक्षया न पौनरुक्त्यशङ्कावसरः । अवश्यमेवायमर्थो श्रुत्या विवक्षित इति वक्तव्यम् । अन्यथा प्रयन्त्यभिसंविशन्तीत्येताभ्यामुत्पत्तिस्थित्योरिव पृथगर्थद्वयविवक्षायां प्रायपाठप्राप्तस्य यत्पदस्याभिसंविशन्तीत्येतत्समभिव्याहारेऽप्रयोगस्य निर्वीजतापत्तेः ।

यदपि चन्द्रिकायां मोक्षस्य वन्धध्वंसरूपत्व उत्पत्तिरपि प्रागभावनिवृत्तिः स्यादित्युक्तम् । तदभिप्रायस्तु लयकारणत्वेन मोक्षकारणत्वस्येव जन्मकारणत्वस्यापि संग्रहेण पृथक्तदुपादानवैयर्थ्यमिति । तदपि न सत् । सिद्धान्ते = सत्कार्यवादाभ्यु-

= सत्कार्यवादेति । अयं भावः—कार्यकारणभावे चतुर्धा विप्रतिपत्तिः शास्त्रेषूपलभ्यते । द्विविधं हि वस्तु सदसच्चेति । तत्र प्रकारचतुष्टयं संभवति । सतः सकाशात्सत्, सतः सकाशादसत्, असतः सकाशात्सत्, असतः सकाशादसत्, इति । तत्रान्त्यपक्षस्त्वसंभवी । अभावादभावोत्पत्तेर्दुर्वचत्वात् । आद्यपक्षे च पक्षद्वयम् । सतो ब्रह्मणः सकाशात्सन्नाम व्यावहारिकसत्ताविशिष्टं वस्तु जायते न तु वस्तुसादित्येकः । सतः प्रकृतेः सकाशात्सद्वस्तु सर्वं जगज्जायत इति द्वितीयः । एवं च पुनः प्रकारचतुष्टयं संपन्नम् । तत्र न तावदसतः सकात्सज्जायत इति शून्यवादपक्षो बौद्धसंमतो युक्तः । असतो नाम

निरुपाख्यस्य शशविषाणवत्कारणत्वानुपपत्तेः । तुच्छातुच्छयोस्तादात्म्यानुपपत्तेश्च । नाप्युत्पत्तेः प्रागसद्वस्तु घटादि सतः सकाशाज्जायत इति नैयायिकादिसंमत आरम्भवादपक्षो युक्तः । सत्तासंबन्धो ह्युत्पत्तिः । सा च कारकव्यापारात्प्रागसतः शशविषाणादेरिव घटादेर्न संभवति । ननु सत्त्वासत्त्वे घटादेर्धर्माविति चेत् । नैवम् । असति धर्मिणि तद्धर्म इति व्यपदेशानुपपत्त्या धर्मिणः सत्त्वापत्तेः । तस्मात्कारकव्यापारात्प्रागपि कार्यं सदेव । सतश्चाभिव्यक्तिरुपपद्यते । यथा तिलेषु विद्यमानस्य तैलस्य पीडनेनाभिव्यक्तिः । यथा च सौरभेयीषु विद्यमानस्य पयसो दोहनेनाभिव्यक्तिः । किंच कार्येण कारणं संबद्धं सत्तज्जनकमाहोस्विदसंबद्धम् । आद्ये कार्यस्य सत्त्वमायातम् । सतोरेव संबन्धो भवतीति नियमात् । द्वितीये सर्वं कार्यजातं सर्वस्माज्जायेत । असंबद्धत्वाविशेषात् । अत एवोक्तं सांख्याचार्यैः—

असत्त्वान्नास्ति संबन्धः कारणैः सत्त्वसङ्गिभिः ।
असंबद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः ॥ इति ।

एवं च कारकव्यापारात्प्राक्कारणे विद्यमानमेव कार्यं कारकव्यापारेणाभिव्यज्यत इति सिद्धम् । अयमेव सत्कार्यवाद इत्यभिधीयते । अयं च सत्कार्यवादः परिणामवादिनां सांख्यानां तथा विवर्तवादिनामद्वैतिवेदान्तिनां संमतः । तत्र सांख्याः सतः प्रकृतेः सकाशात्सद्वस्तु सर्वं जगज्जायत इति वदन्ति । प्रकृतिर्जगद्रूपेण परिणमत इति यावत् । अद्वैतिवेदान्तिनस्तु सतो ब्रह्मणः सकाशात्सन्नाम व्यावहारिकसत्ताविशिष्टं वस्तु जायते, न तु वस्तुसदिति वदन्ति । अयमेव विवर्तवाद इत्युच्यते । परिणामो नाम—उपादानसमसत्ताककार्यापत्तिः । विवर्तो नाम—उपादानविषमसत्ताककार्यापत्तिः । सांख्यमते हि यादृशी प्रकृतेः सत्ता तादृश्येव तत्परिणामभूतस्यास्य जगतः सत्तेति समसत्ताकत्वेन परिणामवाद इत्युच्यते । अद्वैतिवेदान्तिमते तु ब्रह्मणः पारमार्थिकी सत्ता जगतस्तु व्यावहारिकी सत्तेति विषमसत्ताकत्वेन विवर्तवाद इत्यभिधीयते । सत्कार्यवादस्तूभयोः सम एव । अद्वैतिवेदान्तिनामपि सत्कार्यवादः संमत एवेति तु 'असदिति चेन्न प्रतिषेधमात्रत्वात्' ( ब्र० सू० २ । १ । ७ ) 'असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात्' ( ब्र० सू० २ । १ । १७ ) इत्यादिसूत्रेषु भाष्यकारैः स्पष्टमेवोक्तम् । सांख्यसंमतः परिणामवादस्तु प्रकृतेश्चेतनानधिष्ठितत्वेनासंभवादिबहुकारणैस्त्यक्त इत्यन्यदेतत् । एवं च सिद्धान्ते सत्कार्यवादाभ्युपगमेन प्रागभावानङ्गीकारेऽप्यादि सम्यगेवेति सिद्धम् ।

पगमेन प्रागभावानङ्गीकारेणोत्पत्तेस्तन्निवृत्तिरूपत्वासंभवादुत्पत्तेः प्रागभावनिवृत्तिरूपत्वस्वीकारेऽपि तस्या उत्पत्त्यनन्तरमपि सत्त्वेनाग्रेऽपि 'इदानीमुत्पन्नः' इति व्यवहारापत्त्यादिवारणायाऽऽद्यक्षणसंबन्धविशिष्टप्रागभावनिवृत्तेरेवोत्पत्तिरूपताया अवश्यं स्वीकरणीयतापत्त्या लाघवेनोत्पत्तेराद्यक्षणसंबन्धरूपताया एव युक्तत्वाच्च । ध्वंसरूपाया अपि मुक्तेरभावस्याधिकरणस्वरूपत्वोपगमेन सुखरूपात्मस्वरूपत्वेन पुमर्थताया आद्याधिकरण उपपादितत्वाच्च न परोक्तापुमर्थत्वापत्त्यादिदूषणावसरः । 'तमेवैकं जानथ' ( मु० २ । २ । ५ ) इत्यादौ 'यस्मिन्द्यौः पृथिवी' ( मु० २ । २ । ५ ) इत्यादिना स्थित्यादीनामेकैकस्यैव ग्रहणमुपसंहारन्यायेनान्योपलक्षणमिति न परोक्तदोषः । एवं 'येन जातानि जीवन्ति' ( तै० ३ । १ ) इत्यत्रोक्तं प्राणधारणरूपजीवधातुमुख्यार्थमुपलक्षणीकृत्योत्पत्तिलयातिरिक्ततदीयव्यापारसामान्यार्थकस्थितिशब्देन तादृशव्यापारमनुगतीकृत्य यत इति पञ्चम्या निमित्तोपादानसाधारणतद्धेतुत्वाभिधानेन नियमनादिहेतुत्वस्यापि लाभात् । 'इमानि भूतानि ( तै० ३ । १ ) इत्यत्र भवन्तीति भूतानीति योगमनादृत्याऽऽकाशादीनामेव रूढ्योपस्थापनात्सम्यगेवोक्तं यतो वेत्यादिश्रुत्यनुसाराज्जन्मस्थितिलयकारणत्वमेव लक्षणं जन्मादिसूत्रप्रतिपाद्यमिति । त्वदुक्तरीत्या विचारविधायकनानावाक्यगतनानालक्षणानां संग्राह्यत्वे सत्यकामत्वसर्वान्तरत्वाद्युपेक्षायां बीजाभावेन जन्माद्यष्टकर्तृत्वस्यैव लक्षणत्व आग्रहानौचित्यात् ।

अथवेत्यादि चन्द्रिकोक्तमपि न क्षोदक्षमम् । जगज्जन्मकर्तृत्वेऽभिहिते जगदन्तःपातिमोक्षदत्वस्यापि लब्धत्वेन पृथक्तदुक्तेरनपेक्षितत्वात् । अन्येन बद्धस्यापि लोकेऽन्येन मुक्तिदर्शनात् । 'बन्धकत्वं विना मोचकत्वानुपपत्तिः' इति त्वदुक्तिर्विचारणीयैव । एवं मोचकत्वेनैव ज्ञानदत्वसिद्धेरार्थिकतया पृथग्ज्ञानदत्वमपि न वक्तव्यमेव । अन्यथाऽधिकारप्रदत्वं विना ज्ञानदत्वमपि न वक्तव्यमेव । अन्यथाऽधिकारप्रदत्वं विना ज्ञानदत्वस्याप्यसंभवाद्विचाराधिकारभूतभक्त्यादिदत्वस्यापि पृथक्कथनापत्तेः ।

सद्विलक्षणत्वेऽपि जगतो जन्मादिकमुपपद्यत एव । न च तथाभूते शशशृङ्गादौ जन्माद्यदर्शनाज्जगतोऽपि न तद्युक्तमिति शङ्क्यम् । सतोऽप्यात्मनो तददर्शनेन जगतः सत्त्वपक्षेऽप्युक्तदोषादिकस्याऽऽद्यसूत्र एव प्रपञ्चितत्वान्न जगतो जन्माङ्गीकारेत्यादिकं चन्द्रिकोक्तदूषणं विचारक्षमम् । जगज्जन्मादिकारणत्वं च तटस्थलक्षणं सत्यज्ञानानन्तानन्दादिकं च स्वरूपलक्षणमिति सिद्धान्तस्थितिः । तत्र स्वरूपलक्षणभूतत्रिविधपरिच्छेदशून्यत्वरूपानन्त्यप्रतिपत्त्युपयोगितया जगज्जन्मादिकारणत्वरूपं तटस्थलक्षणं सार्थकम् । अन्यथोक्तरूपमपि ब्रह्म कथं त्रिविधपरिच्छेदशून्यम् । जगतस्तदुपादानस्य तन्निमित्तस्य चान्यवस्तुनो विद्यमानत्वादिति शङ्कायां तत्प्रतिपत्तेर्दुर्घटत्वात् । अतस्तच्छङ्कानिवृत्तये यज्जगज्जन्मादिकारणं तद्ब्रह्मेति बोधनीयम् । ततश्च तेन जगदुपादानं ब्रह्मेति ज्ञाते तदधिष्ठानं ब्रह्मेति पर्यवस्यति । तत्र सर्ववस्त्वभावे बोधिते स्वाधिष्ठानगताभावप्रतियोगित्वरूपं मिथ्यात्वं जगतः सिध्यतीति पूर्वोक्तशङ्कानिरासः । अत एव त्रितयकारणत्वं लक्षणत्वेन निर्दिष्टम् । अन्यथैकैककारणताया अपि ब्रह्मासाधारणत्वेनेतरस्यानतिप्रयोजनकत्वात् । ननु तर्हि तटस्थलक्षणेनैव चारितार्थ्ये किं स्वरूपलक्षणकथनेनेति चेत् । अत्रोच्यते— यथाऽनुमितिकरणत्वादिनाऽनुमाने लक्षितेऽप्यनुमितिकरणत्वस्य लिङ्गतत्परामर्शादौ वादिविप्रतिपत्त्या संभावितत्वेन लक्ष्यविशेषानिर्णयात्तन्निर्णयाय तच्च लिङ्गपरामर्श इति तत्स्वरूपमुपदर्श्यते । यथा वा चन्द्रं दिदर्शयिषुः कश्चिदाप्तः चन्द्रबुभुत्सया सर्वदिक्षु प्रसारितदृष्टेर्दिगन्तरगतनक्षत्रतारादिभ्यो दृष्टिव्यावृत्तये केषुचिद्दृष्टिस्थिरीकरणार्थमधिकरणतया संबन्धविशेषेण शाखायां चन्द्र इति शाखामुपलक्षणतयोपादत्ते । ततश्च दिगन्तरव्यावृत्तदृष्टेरपि चन्द्रसमीपवर्तितारादिषु चन्द्रभ्रमो मा भूदिति तत्स्वरूपं प्रकृष्टप्रकाशश्चन्द्र इति प्रकृष्टप्रकाशात्मकं बोधयति । एवं हि सुखेन बोध्यबुद्धिश्चन्द्रेऽवतरति । तथा जगत्कारणत्वादिना लक्षितेऽपि ब्रह्मशब्दार्थे तद्रूपेण संभाव्यमानप्रधानपरमाण्वादिव्यावृ-

त्त्वया स्वरूपविशेषनिर्णयासंभवात्तन्निर्णयाय स्वरूपलक्षणाभिधानमप्यावश्यकमेव ।

यत्तु चन्द्रिकायाम्—"यच्चोक्तं परैः 'जन्मादिकारणत्वं तटस्थलक्षणम् । आनन्दादिरेव स्वरूपलक्षणम्' इति सिद्धान्तमनूद्य तत्र न तावल्लक्ष्यगतागते स्वरूपतटस्थलक्षणे इति युक्तम्, काकादेर्गृहे कारणत्वस्य च ब्रह्मण्य*ध्यासतटस्थलक्षणस्य च कारणत्रितयजन्यत्वस्याध्यासे सत्त्वेन स्वरूपलक्षणत्वापातात् । आनन्दादेः स्वरूपलक्षणत्वासंभवप्रसङ्गाच्च । एतेन सत्यासत्ये स्वरूपतटस्थलक्षणे इति निरस्तम् । काकादेरध्यासतटस्थलक्षणस्य च गृहादावकल्पितत्वात्" इति दूषणमुक्तम् । तत्रोच्यते—लक्ष्यान्तर्गतागते स्वरूपतटस्थलक्षणे इति विवक्षायामुक्तदोषाभावात् ।

यदप्यस्मिन्पक्षेऽन्तर्गतपदेन लक्ष्यैकदेशोक्तौ लक्ष्यस्याखण्डत्वहानिः । अभेदोक्तौ प्रकृष्टप्रकाशत्वादेश्चन्द्रस्वरूपलक्षणत्वं न स्यात् । त्वया लक्षणवाक्यस्याखण्डार्थत्वनिर्वाहाय प्रकृष्टत्वादेश्चन्द्रप्रातिपदिकाद्बहिर्भावस्योक्तत्वादिति दूषणं चन्द्रिकायामुक्तम् । तदसत् । लक्ष्यान्तर्गतपदेनोपाहितकेवलात्मना लक्ष्यात्यन्ताभिन्नत्वविवक्षायां दोषाभावात् । तस्य चाभावस्याधिकरणात्मकत्वपक्षाङ्गीकारेणान्तवत्त्वाभावरूप आनन्त्ये सत्त्वाज्ज्ञानानन्दादौ च सुतरां सत्त्वात्तेषां स्वरूपलक्षणत्वोपपत्तिः । न चैतत्कारणत्वादौ संभवति । तस्य लक्ष्यीभूतशुद्धब्रह्माभिन्नत्वविरहात् । लक्ष्यीभूतशुद्धचैतन्यीयोपहितरूपत्वाभावाच्च । प्रकृष्टप्रकाशत्वपदेन प्रकाशत्वसमानाधिकरणस्यैतज्ज्योतिर्मण्डलान्तर्गततेजोऽन्यधिकापकर्षशून्यत्वस्य विवक्षणादभावस्याधिकरणरूपत्वान्न प्रकृष्टप्रकाशत्वस्य स्वरूपलक्षणत्वानुपपत्तिः । प्रकृष्टत्वादेश्चन्द्रप्रातिपदिकार्थरूपत्वे तद्बहिर्भावे वोभयथाऽपि तत्संसर्गो वाक्यार्थबोधे न भासत इति पूर्वोक्तरीत्या पदान्तरार्थसंसर्गगोचरप्रमितिजनकत्वाभावरूपस्याखण्डार्थत्वस्य प्रकृष्टप्रकाशश्चन्द्र इति लक्षणवाक्ये निर्बाधात् । तदर्थं प्रकृष्टत्वादेश्चन्द्रप्रा-

* अध्यासतटस्थेति । अध्यासस्य तटस्थलक्षणमिति षष्ठीतत्पुरुषः ।

तिपदिकार्थबहिर्भावानावश्यकत्वात् । यद्यप्यानन्दादीनां ब्रह्म-स्वरूपत्वे ब्रह्मधर्मत्वं दुर्घटमिति प्रतिभाति तथाऽपि—

आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति तद्धर्माः ।
अपृथक्त्वेऽपि चैतन्यात्पृथगिवावभासन्ते ॥

इति पञ्चपादिकोक्तेराविद्यकभेदेन तेषामप्यस्ति ब्रह्मासाधारणधर्मत्वम् । तच्च न परमार्थतो ब्रह्माभेदविरोधि। एवं कल्पिताकारभेदेनैकस्यैव धर्मिणो लक्ष्यलक्षणभावो नानुपपन्न इत्याद्युक्तं प्राक्। एवं च प्रसिद्धस्यैवाऽऽनन्दत्वादिजात्याद्युपहितस्य कल्पनया तादात्म्याविशेषेण ब्रह्ममात्रवृत्तेः परमार्थतो ब्रह्माभिन्नस्योक्तरीत्या स्वरूपलक्षणत्वं निराबाधमेव । एतेन प्रसिद्धस्यासाधारणधर्मस्य लक्षणत्वेनाप्रसिद्धस्य धर्मिणश्च लक्ष्यतया लक्षणस्य लक्ष्यमात्रत्वानुपपत्तेश्चेति चन्द्रिकाकारोक्तदूषणं निरस्तम्। अखण्डार्थत्वविचारे धर्मिणः श्रुतिप्रसिद्धत्वस्योक्तत्वात्। आनन्दो लक्षणमिति चेत्तर्हि जगत्कारणं लक्षणमस्त्विति चन्द्रिकाकारोक्तं दूषणाभास एव ।; तस्य लक्षणताया अस्माकमिष्टत्वात्। विशिष्टब्रह्मणः शुद्धब्रह्मशक्तिरूपतायाः पुराणेषु स्पष्टमुक्तत्वान्नापसिद्धान्तशङ्कावसरः। तथा हि विष्णुपुराणे प्रथमेंऽशे तृतीयेऽध्याये मैत्रेयप्रश्ने पराशरः—

निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः ।
कथं सर्गादिकर्तृत्वं ब्रह्मणो ह्युपपद्यते ॥ इति ।
शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः ।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ॥ इत्युक्तम् ।

तत्रायमर्थः प्रश्ने—निर्गुणस्य सत्त्वादिगुणरहितस्याप्रमेयस्य देशकालादिपरिच्छेदरहितस्यात एव शुद्धस्यादेहस्य सहकारिरहितस्य केवलस्य वाऽमलात्मनो रागादिमलरहितस्य कथं सर्गादिकर्तृत्वम् । एतद्विलक्षणस्यैव कुलालादेर्लोके घटादिकर्तृत्वदर्शनादिति। उक्तमाक्षेपं परिहरति—शक्तय इति । तत्रायमर्थः—सर्वेषां भावानां मणिमन्त्रादीनामचिन्त्यज्ञानगोचरा अचिन्त्यं कुतर्कासहिष्णु यज्ज्ञानं कार्यान्यथानुपपत्तिजन्यं तस्य गोचराः शक्तयो यतः सन्त्यतस्तद्वदेव ब्रह्मणोऽपि

सर्गाद्याः सर्गकारणीभूताः शक्तयः सन्ति । तथा च मायाख्य-शक्तिनिष्ठहेतुत्वं ब्रह्मण्युपचर्यत इति भावः । तथा च श्रुतिः—

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।

इति स्वभावभूतसृष्ट्याद्यनुकूलशक्तिमत्त्वान्निर्गुणस्यापि जगतः स्रष्टृत्वमुक्तम् । कास्ताः शक्तय इत्यपेक्षायां कूर्मपुराण उत्तरभागे—

सर्वासामेव शक्तीनां ब्रह्मविष्णुशिवात्मकाः ।
प्रधानाः संस्मृता देवाः शक्तयः परमात्मनः ॥
आभ्यः परस्ताद्भगवान्परमात्मा सनातनः ॥ इति ।

शिवपुराणेऽपि—

सृष्टेः प्रवर्तको ब्रह्मा स्थितेर्विष्णुर्विमोहतः ।
संहारस्य ततो रुद्रस्तयोर्नित्यं नियामकः ॥
तस्मात्त्रयस्ते कथ्यन्ते जगतः कारणं त्रयम् ।
कारणत्रयहेतुश्च शिवः परमकारणम् ॥

स्कान्देऽपि—

ब्रह्मा विष्णुश्च रुद्रश्च परतत्त्वविभूतयः ।
एषां त्रयाणामधिकः सर्वकारणमीश्वरः ॥ इति ।

तथा च शक्तिरूपविशिष्टब्रह्मात्मकब्रह्मविष्णुरुद्राणामुपहितब्रह्माभेदेन स्वरूपलक्षणत्वमविरुद्धम् । कारणत्वस्य शक्तिनिष्ठस्य स्वरूपैक्याभावात्तटस्थलक्षणत्वमिति सर्वं सुस्थम् ।

एवं स्वप्रत्याय्यव्यावृत्तिभाव्यभाविनी स्वरूपतटस्थलक्षणे । × स्वप्रत्याय्यव्यावृत्तिकालत्वव्यापकत्वं स्वरूपलक्षणत्वं तदभावस्तटस्थलक्षणत्वमिति तदर्थः । कारणताया अविद्यात्मकशक्ति-

---

× स्वप्रत्याय्यव्यावृत्तीति । स्वस्य प्रत्याय्या ज्ञाप्या या व्यावृत्तिर्भेदस्तस्य यः कालस्तन्निष्ठकालत्वव्यापकत्वमित्यर्थः । विशिष्टब्रह्मणो हि प्रत्याय्यो भेदो भासमानो जगद्रूपस्तस्य कालो व्यवहारकालस्तन्निष्ठकालत्वव्यापकत्वं विशिष्टब्रह्मणो भवत्येव । तदेव च ब्रह्मणः स्वरूपम् । तस्योपहितब्रह्मणा सहैक्यात् । विशिष्टब्रह्मनिष्ठा या जगत्कारणता सा तु न ब्रह्मणः स्वरूपलक्षणं भवितुमर्हति । स्वप्रत्याय्यव्यावृत्तिकालत्वव्यापकत्वाभावात् । तथा हि—स्वं जगत्कारणता, स्वप्रत्याय्या व्यावृत्तिर्भासमानजगद्रूपो भेदस्तत्कालत्वव्यापकत्वं

विशेषरूपायास्तत्त्वज्ञानाव्यवहितोत्तरक्षणेऽवर्तमानत्वेन तत्क्षणे वर्तमानस्वप्रत्याय्यदृश्यभेदकालव्यापकत्वाभावान्न तस्य स्वरूपलक्षणत्वापत्तिः। एवं कर्तृत्वमपि मायावृत्त्यादिरूपं जन्यमेवेश्वरगतमिति तस्य स्वप्रत्याय्यव्यावृत्तिकालव्यापकत्वाभावात्तटस्थलक्षणत्वं स्पष्टमेव। एवं लक्ष्यकालव्यापकत्वतदभावरूपे यावल्लक्ष्यभाव्यभाविनी स्वरूपतटस्थलक्षणे इत्यपि साधु।

यत्तु चन्द्रिकायां—स्वन्मते स्वप्रत्याय्ययावद्व्यावृत्तिभाविव्यावर्तकान्तराभावाच्चस्यैव यावद्व्यावृत्तिभावित्वावश्यंभावादिति कारणत्वे स्वरूपलक्षणत्वापादनं तदुक्तलक्षणकर्तृहृदयानवबोधनिबन्धनम्। तथा हि—स्वप्रत्याय्येत्यस्य स्वप्रयोज्येत्यर्थविवक्षायामेव व्यावर्तकान्तराभावे कारणत्वस्यैव व्यावृत्तिप्रयोजकस्य यावद्व्यावृत्तिभावित्वावश्यंभावस्त्वदुक्तः साधुः। प्रकृते स्वप्रत्याय्यशब्देन स्वज्ञाप्येत्यर्थविवक्षया ज्ञापकस्य कारणत्वस्य ज्ञाप्ययावद्व्यावृत्तिभावित्वानावश्यकत्वेन कारणत्वस्य स्वरूपलक्षणत्वापादनासंभवात्। यद्यपि दृश्यव्यावृत्त्यादिकं मिथ्यैव तथाऽपि तदुपलक्षितस्य तात्त्विकस्वरूपस्य बोधनाय मुमुक्षुं तत्त्वजिज्ञासुं प्रति व्यावर्तकस्वरूपलक्षणादेरभिधानं लौकिकपरमार्थारुन्धत्यादिप्रतिपत्तये तन्निकटवर्तिन्यां स्थूलतारायामारोपितारुन्धतीत्वादेरुपदेशवन्न विरुध्यते। एतेन न च मिथ्याभेदसिध्यै मिथ्यालक्षणकीर्तनं मुमुक्षुं तत्त्वजिज्ञासुं प्रति

---

यद्यपि कारणताया व्यवहारकाले वर्तते तथाऽपि जीवन्मुक्तावस्थायां नास्ति। जीवन्मुक्तस्य हि ब्रह्मसाक्षात्कारसत्त्वेन तद्दृष्ट्या ब्रह्मणि जगत्कारणता नास्ति। येन च कर्मणा तस्य शरीरमारब्धं तस्य प्रारब्धकर्मणो भोगं विना क्षयाभावात्स्वशरीरादि सर्वं जगत्तद्दृष्ट्याऽपि वर्तत एवेति कारणताया भेदकालत्वव्यापकत्वं नास्ति। न च जीवन्मुक्तदृष्ट्या यथा ब्रह्मणि जगत्कारणता नास्ति तथा तद्दृष्ट्या स्वप्रत्याय्यजगद्रूपो भेदोऽपि नास्तीति भ्रमितव्यम्। 'आचार्यवान्पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' (छां० ६। १४। २) इति श्रुत्या ब्रह्मसाक्षात्कारवतो विदुषोऽपि शरीरपातपर्यन्तं जगद्दर्शनस्योक्तत्वात्।

शास्त्रेषु शोभत इति चन्द्रिकोक्तं दूषणं निरवकाशम् । एवं पूर्वो-
क्तस्वरूपतटस्थलक्षणयोर्लक्ष्यलक्षणशब्दाभ्यां ज्ञाप्यज्ञापकभाव
एव विवक्षणीयः । तथा च ' अत एव न यावल्लक्ष्यभाव्यभा-
विनी स्वरूपतटस्थलक्षणे । अलक्ष्यव्यावर्तकस्याभावे लक्ष्य-
स्यानवस्थानाच्च । न ह्यक्षीरव्यावर्तकहीनं क्षीरम् ' इत्यादि च-
न्द्रिकोक्तदूषणमपि निरस्तमेव । द्वितीयतृतीयलक्षणयोश्चन्द्रत्व-
स्येव कारणत्रितयजन्यत्वस्य स्वरूपलक्षणत्वोपगमाच्च न चन्द्रि-
कोक्तमध्यासतटस्थलक्षणातिव्याप्तेश्चेति स्वप्रत्याय्येत्यादिलक्ष-
णदूषणम् । अथ तयोर्लक्ष्यत्वे प्रथमलक्षणाव्याप्तिरलक्ष्यत्वे
द्वितीयतृतीयलक्षणयोरतिव्याप्तिरिति चेन्न । साध्यसंदेहजनक-
कोटिद्वयोपस्थापकपक्षधर्मताज्ञानविषयत्वे सति हेत्वभिमतत्वं
सव्यभिचारत्वमिति वदतां मतेऽलक्ष्यस्यापि विरुद्धस्यानुमिति-
विरोधिसंबन्धाव्यावृत्तिरनैकान्तिक इति लक्षणकर्तृमते लक्ष्य-
त्वेऽपि लक्ष्यालक्ष्यभावस्य मतभेदेन व्यवस्थितत्वादत्रापि तथा
वक्तुं शक्यत्वात् ।

यदपि चन्द्रिकायाम्—ईशानः प्रभुरव्ययः ।
अद्वैतः सर्वभावानां देवस्तुर्यो विभुः स्मृतः ॥ (माण्डू० १।१०) ।
तुरीयं सर्वदृक् सदा ( माण्डू० १ । १२ ) ।

इत्यादिश्रुत्या कारणत्वादेरपि यावल्लक्ष्यभावित्वाच्चेत्यादि
दूषणमुक्तं तदपीशानत्वप्रभुत्वादीनामुपलक्षणत्वात्सुलभसमा-
धानम् । सर्वविषयकत्वोपलक्षितदृग्रूपत्वस्य सार्वकालिक-
स्याकरादौ स्पष्टमुक्तत्वाच्च । स्वयं व्यावर्तकं स्वरूपलक्षणं
व्यावर्तकान्तरोपस्थापकं तटस्थलक्षणमित्यपि सुवचम् । काका-
दिर्हि व्यावर्तकसंस्थानाद्युपस्थापयतीति तस्य तटस्थलक्षणत्वं
कारणत्वेनोपस्थाप्य व्यावर्तकान्तराभावादित्यादिकं चन्द्रिको-
क्तमत्र दूषणं तु पूर्वोक्तरीत्या कारणत्वस्य ज्ञेयब्रह्मगतानन्त्य-
रूपव्यावर्तकान्तरोपस्थापकत्वान्निरालम्बनमेवेति दिक् ।

प्रकारान्तरेणाप्येतदधिकरणरचना वेदान्त्यभिमता—निरु-
क्तस्य ब्रह्मणो जिज्ञास्यत्वं न संभवति संभवति वा । तदर्थं
'तद्विजिज्ञासस्व' ( तै० ३ । १ । १ ) इत्यत्र जिज्ञास्यपरामर्शको

यस्तच्छब्दः स किं विशिष्टं ब्रह्म परामृशत्यथवा जगत्कारणत्वाद्युपलक्षितं व्यक्तिमात्रमिति लोके तदादिसर्वनाम्नामुभयविषत्वस्यापि दर्शनात्संशयः। पूर्वपक्षस्तु—'तद्विजिज्ञासस्व' (तै० ३।१।१) इत्यत्र तच्छब्दस्य प्रक्रान्तपरामर्शिनो येन रूपेण प्रक्रान्तता तद्रूपविशिष्टपरामर्शकत्वमेवोचितम्। असति बाधके शब्दानां विशिष्टार्थपरत्वस्यौत्सर्गिकत्वात्। न चात्र बाधकं किंचिदुपलभ्यते। अथ—

आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला।

इति वार्तिकोक्तेः शुद्धस्यैवाज्ञानविषयत्वेन विशिष्टस्य तदनुपपत्त्या विशिष्टज्ञानस्य मूलाविद्यारूपबन्धहेतुप्रत्यनीकत्वाभावात्। तद्विचारस्य निष्प्रपञ्चतालक्षणमुक्तिफलत्वानुपपत्तिरेव बाधिकेति चेत्। न। विशिष्टज्ञानस्य मोक्षहेतुतायाः श्रुतिसंप्रतिपन्नत्वे तदनुसारेणैव फलस्य कल्पनीयत्वात्। न च 'तमेव विदित्वाऽति मृत्युमेति। नान्यः पन्था विद्यतेऽयनाय' (श्वे० ३।८) इति श्रुत्यन्तरे ब्रह्मान्याविषयकज्ञानस्य मोक्षहेतुतायाः प्रतिपादितत्वात्तदनुरोधेनात्रापि कारणत्वाद्युपलक्षितव्यक्तिपरामर्शकत्वमेव कल्पयितुं युक्तमिति वाच्यम्। 'तमेवं विद्वानमृत इह भवति' (नृसिं० पू० १।६) 'एवं पश्यन्नेवं मन्वान एवं विजानन्' (छा० ७।१५।४) इत्यादिश्रुत्यन्तरेषु विशिष्टज्ञानस्यैव मोक्षहेतुतोक्तेः। तमेवेत्यत्र तं विदित्वैवेत्यर्थकरणौचित्यात्। चिन्मात्रविषयकज्ञानस्य प्रमाणेनासंभवाच्च। तथा हि—न तावच्चिन्मात्रविषयकज्ञानं प्रत्यक्षम्। आत्मनो बहिरिन्द्रियाणि प्रति रूपाद्यभावेनायोग्यत्वात्। तस्य स्वप्रकाशत्वेन सुखादीनां स्वप्रकाशसाक्षिमात्रभास्यत्वेन च मनसो ज्ञानाकरणत्वात्। 'औपनिषदं पुरुषं पृच्छामि' (बृ० ३।९।२६) 'नावेदविन्मनुते तं बृहन्तम्' (    ) इत्यादिश्रुत्या तस्योपनिषद्वाक्यमात्रबोध्यत्वोक्तेश्च। नाप्यनुमितिरूपं तत्। तत्र ह्यनात्मरूपे पक्ष आत्मसंसर्गो विषयोऽथवाऽऽत्मरूपे। नाऽऽद्यः। तस्य शुद्धचिन्मात्रविषयकत्वाभावेन परोक्षत्वेन च शुद्धचिन्मात्रविषयकाज्ञानतत्प्रयुक्तकार्यरूपापरोक्षाध्यासरूपबन्धा-

निवर्तकत्वात् । नान्त्यः । अत्यन्ताभेदे संसर्गासंभवात् । तद्-घटस्तद्घटविशिष्ट इत्यादिज्ञानस्याप्रमात्वेन तद्घटादिव्यक्तिभि-न्नवस्त्वनुयोगिकसंसर्गेण तद्घटादिव्यक्तिविशिष्टज्ञानत्वं तद्घ-टादिव्यक्तिप्रमात्वमित्यस्यावश्यं वाच्यत्वात्तद्व्यक्तौ तादात्म्य-संबन्धेन तद्व्यक्तिविशिष्टज्ञानस्यानुवादरूपत्वेनाप्रमाणत्वाच्च । घट इति ज्ञानविषयादधिकं घटे द्रव्यत्वसंसृष्टाभेदं विषयीकुर्वतो हि ज्ञानस्य प्रमात्वं युक्तम् । तद्व्यक्तौ तद्व्यक्तिस्वरूपं तद्व्यक्ति-तादात्म्यं विषयीकुर्वता तु ज्ञानेन तद्व्यक्तिरिति ज्ञानविषयाद-धिकं किं विषयीकृतं येन धारामध्यगतज्ञानवदप्रमा न स्यात् । तस्मादभेदे सत्यप्युपाधिभेदप्रयुक्तो वाऽवच्छेदकभेदप्रयुक्तो वा यत्र विशेषणविशेष्यव्यक्त्योर्भेदस्तत्रैवाभेदसंसर्गप्रमा । यथा घटो द्रव्यं भूतलसंयोगी घटोऽग्रे न भूतलसंयोगीत्यादौ । अत एव घटाभावो घटाभाववानित्यादावेकत्वादिविशिष्टघटाभावत्वादि-रूपेणैव विशेषणता नाप्युपमितिः । स गौरनेन गवयेन सदृश इत्याद्युपमितिस्थल इव प्रकृते सदृशवस्तुद्वयावगाहनेऽनात्मविष-यकत्वापत्तेः । नाप्यर्थापत्तिः । आत्मानि तत्संसर्गं विना कस्यचि-दर्थस्यानुपपन्नत्वाभावात् । संसर्गस्याऽऽत्मरूपत्वेऽनात्मरूपत्वे वा पूर्वोक्तदोषापत्तेः । नाप्यनुपलब्धिकरणकम् । तस्याभावमात्रे प्रमाणत्वात् । प्रमेयस्याऽऽत्मरूपत्वेऽनात्मरूपत्वे वा पूर्वोक्त-दोषापत्तेः । नापि शाब्दम् । तस्योद्देश्यतावच्छेदकविधेया-द्यनेकसंसर्गविषयकत्वनियमेन शुद्धब्रह्मविषयकत्वाभावात् । शब्दस्य परोक्षज्ञानजननस्वाभाव्येन परोक्षस्य तस्यापरोक्षाध्या-सानिवर्तकत्वस्योक्तत्वाच्चेत्यनुपपन्ना सिद्धान्त्यभिमता ब्रह्म-जिज्ञासेति पूर्वपक्षे सिद्धान्तः—शाब्दमेव तद्विवक्षितचिन्मात्र-विषयकं ज्ञानम् । 'यतो वै' ( तै० ३ । १ । १ ) इत्यादिवा-क्यस्य जगत्कारणत्वाद्युपलक्षितब्रह्मविचारकर्तव्यतापरत्वात् । न च शब्दानां विशिष्टार्थपरत्वस्यौत्सर्गिकत्वात्कथमेतदिति वा-च्यम् । सत्यं पदानामौत्सर्गिकं विशिष्टपरत्वम् । तथाऽपि बाधकब-लादेवात्र तत्परित्याज्यम् । किमत्र बाधकमिति चेत् । उच्यते—यतो वेत्यादिवाक्ये यच्छब्दोपबन्धादनुवादत्वं तावत्प्रतीयते । तच्च

पुरोवादसापेक्षम् । पुरोवादश्चात्र ब्रह्मविद्यामूर्धन्या सद्विद्यैव । सा च प्रत्यगभिन्नस्यैव ब्रह्मणो जगत्कारणतां प्रतिपादयति । तथा च पुरोवादानुसारेणानुवादस्य नेयतयाऽत्रापि प्रत्यगभिन्नस्यैव ब्रह्मणो जगत्कारणता वाच्या । तथा च सद्विद्योपदर्शिताभिरेवोपपादकयुक्तिभिरद्वैतसिद्धिब्रह्मानन्द्यादिनिबन्धलिखितदृश्यत्वादिलिङ्गकानुमानादिभिश्च ब्रह्मान्यनिखिलप्रपञ्चस्य मिथ्यात्वावगमादाद्यसूत्रोक्तरीत्या शुक्तिरजतादिन्यायेन श्रुत्यन्तरैश्च ब्रह्मज्ञानस्य कर्तृत्वादिबन्धनिवर्तकत्वस्य मूलाज्ञाननिवर्तकत्वेनैव वाच्यतया कारणत्वाद्यनिर्वाच्यवस्तुविशिष्टज्ञानस्य मिथ्याभूतानात्मविषयकत्वेन शुद्धचिद्विषयकमूलाज्ञानसमानविषयकत्वाभावेनाज्ञाननिवर्तकत्वाभावेन 'उदरमन्तरं कुरुते । अथ तस्य भयं भवति' ( तै० २ । ७ ) 'मृत्योः स मृत्युमाप्नोति । य इह नानेव पश्यति ' ( का० २ । ४ । १० ) इत्यादिश्रुतिभिर्विशिष्टज्ञानस्य भयहेतुत्वप्रतीतेरमृतत्वसाधनत्वासंभवात् । ' तमेव ' ( श्वे० ३ । ८ ) इत्यादौ तं विदित्वैवेति योजनायां श्रुतसमभिव्याहारभङ्गापत्त्याऽयुक्तत्वात् । ' तमेवं विद्वान् ' ( नृ० पू० १ । ६ ) इत्यादावुपलक्षितज्ञानस्यैव विवक्षणात् । ' यतो वै' इत्यादेः 'तद्विजिज्ञासस्व ' ( तै० ३ । १ )इत्यन्तस्य वाक्यस्य जगत्कारणत्वाद्युपलक्षितब्रह्मविचारकर्तव्यतापरत्वं निष्प्रत्यूहम् ।

अथ सद्विद्यायाः प्रत्यगभिन्ननिर्विशेषब्रह्मपरत्वे भवेदेवम् । तदेव न तस्यां जीवभिन्नसविशेषब्रह्मणः प्रतिपादनपरत्वावगमात् । तथा हि—सद्विद्योपक्रमे 'उत तमादेशमप्राक्ष्यः । येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति ' ( छा० ६ । १ । ३ ) इति सविशेषब्रह्मैव प्रतिपाद्यते । आदेशशब्दस्य जगन्नियमनानुकूलव्यापारविशेषरूपाज्ञात्मकशासितृत्वाश्रयपरत्वात् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञावाक्यं तु तत्तदवस्थाविशेषाविशिष्टकारणमेव कार्यमित्यारम्भणाधिकरणे निरूप्यमाणं कार्यकारणयोरनन्यत्वं स्वीकृत्य ब्रह्मणि विदित उपादानतया कार्यानुप्रविष्टो ब्रह्माकारो ज्ञात एवेत्येतदभिप्रायं सद्ब्रह्मण उपादानताद्योतकम् । ब्रह्मणश्चोपादानत्वं यद्यपि विवर्तमाश्रित्य वक्तुं शक्यते तथाऽपि

' यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ' ( छा० ६ । १ । ४ ) इति दृष्टान्ते परिणाम्युपादानस्य प्रतिपादनात्परिणामितयोपादानं ब्रह्म विवक्षितम् । तत्र वाक्ये ह्ययमर्थः केषांचित्संमतः—एकविज्ञानेन सर्वविज्ञानोक्त्या कार्यकारणयोरभेद उपक्षिप्ते पिण्डे दृष्टेऽपि घटादिगोचरः संशयः पिण्डघटयोरर्थक्रियानामादिभेदश्च कथमुपपन्न इति शङ्कायां वाचाऽऽरम्भणमिति वाक्यशेषः । वाचा । घटेन जलमाहरेत्यादिका वाक्, तत्पूर्वको व्यवहारश्च वाक्पदार्थस्तदर्थम् । अध्ययनेन वसतीत्यादाविव फलस्यापि हेतुत्वविवक्षया तृतीया । विकारो घटादिस्तन्नामधेयं च मृत्तिकयाऽऽरम्भणं स्पृश्यं संबन्धनीयमिति यावत् । आलम्भः स्पर्शहिंसयोरिति वचनात्स्पर्शार्थकस्याऽऽलभतेः संबन्धे पर्यवसानात् । कर्मणि ल्युट् । मृत्तिकेत्येवेत्यत्र विधमानस्यानुषक्तस्य मृत्तिकापदस्य तृतीयया विपरिणामः । तथा च घटमानयेत्याद्यभिधानरूपव्यवहारार्थं तन्मूलानयनादिव्यवहारार्थं च मृत्तिकया कम्बुग्रीवादिसंस्थानं घट इत्यादि नामधेयं च संबध्यत इति प्रतिपादिते पिण्डघटयोरेकद्रव्यत्वेऽप्यवस्थानां भेदात्संदेहादिकं सर्वमुपपद्यत इत्युक्तं भवति । ननूक्तसंदेहाद्युपपत्त्यर्थं तार्किकमत इव कार्यकारणद्रव्ययोर्भेद एव कुतो नोपेयत इत्याशङ्क्योक्तं मृत्तिकेत्येव सत्यमिति । घट इति पदमध्याहृत्य घटो मृत्तिकेत्येवार्थः सत्यं प्रामाणिक इति यावत् । तथा च घटो मृत्तिकेति लोकसिद्धप्रत्यभिज्ञया कार्यकारणद्रव्ययोरैक्यमेव न भेद इति ।

आनन्दतीर्थीयाभिमतस्तत्र वाक्येऽयमर्थः—एकविज्ञानेन सर्वविज्ञानं हि सादृश्यात्प्राधान्याद्वा । तत्रैकस्य ब्रह्मणो ज्ञानेन तत्सदृशस्य ज्ञाने मृत्पिण्डमृन्मया दृष्टान्ताः । प्रधानस्य तस्य ज्ञानेन तद्गुणीभूतस्य सर्वस्य ज्ञाने वाचाऽऽरम्भणमित्यादिसंस्कृतापभ्रंशो दृष्टान्तः । तथा हि तत्रार्थः—वाचा वागिन्द्रियमात्रेणाऽऽरम्भणं यस्य तन्नामधेयं विकारः । संस्कृतापभ्रंशरूपेण विक्रियमाणत्वात् । व्याकरणसापेक्षेण वागिन्द्रियेण

निष्पाद्यं मृत्तिकेत्येव सत्यम् । नित्यं प्रवाहरूपेणानादीत्यर्थः। न वधेनास्य हन्यते, एतत्सत्यं ब्रह्मपुरमित्यादौ सत्यपदस्य नित्ये प्रयोगात् । सदाशब्दस्य ल्यबन्तस्य सत्यपदत्वेन सदातनार्थकत्वाच्च । अपभ्रंशज्ञानाद्धि यत्फलं तदधिकं च । सार्वत्रिकव्यवहारादिकं संस्कृतज्ञानाद्भवतीति संस्कृतं प्रधानम् । तादृशगुणप्रधानदृष्टान्तलाभार्थं च वाचाऽऽरम्भणमित्यादावपि यथा सोम्यैकेनेत्यादिकमनुषञ्जनीयम् । तथा च सप्रपञ्चमेवोपादानभूतं निमित्तभूतं वा कारणं ब्रह्मावगम्यते मतभेदेन । तथा 'सदेव सोम्येदमग्र आसीत्' ( छा० ६ । २ । १ ) इत्यत्रापीदंशब्देन जगत उपादानात् । तस्य सदेवेत्यनेन सृष्टेः प्रागपि सत्यत्वावधारणात् । अग्र इति कालस्य तस्यां दशायां सत्ताप्रतिपादनात् । तदनन्तरं 'तदैक्षत' ( छा० ६ । २ । ३ ) इति वाक्येन सृष्ट्यनुकूलज्ञानसंकल्पकृतीनां प्रतिपादनात्सविशेषपर एव सद्विद्योपक्रमोऽवधार्यते । मध्ये च 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठिताः' ( छा० ६ । ८ । ४ ) इति प्रजाशब्दोदितानां जीवानां सच्छब्दोदिताद्ब्रह्मणो मूलमूलिभावादिना भेदप्रतिपादनमुपलभ्यते । 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' ( छा० ६ । ८ । ७ ) इत्युपसंहार इदंशब्दोदितं तच्छब्देन परामृश्य तत्सत्यमिति सर्वस्य प्रपञ्चस्य सत्यत्वावधारणात्संबोध्यसंबोधकभावेन श्वेतकेतूद्दालकयोर्भेदेन प्रतिपादनेन जीवनानात्वस्यैवावगमाच्च सप्रपञ्चतैवावगम्यते । तथा च सद्विद्याया उपक्रमोपसंहारपर्यालोचनया परमार्थतः सप्रपञ्चब्रह्मप्रतिपादनपरत्वावगमात्तदनुसारेण 'तत्त्वमसि' ( छा० ६ । ८ । ७ ) इति वाक्यं जीवब्रह्मभेदाविरोधेनैव व्याख्येयम् । तथा हि—'अनृक्षरा ऋजवः सन्तु पन्थाः' (ऋ० सं० अ० ८ अ० ३ व०२४) इत्यत्र यथा बहुवचनस्य स्वादेशः, यथा वा 'उत यत्सुन्वन्ति सामिधेनीस्तदन्वाह' इत्यत्र 'सुपां सुलुक्' ( पा० सू० ७।१।३९ ) इति सूत्रेण यत्तत्पदोत्तरसप्तम्या लुक् । यस्मिन्सुन्वन्ति तस्मिन्नित्यर्थस्य विवक्षितत्वात् । यथा वा—'गायत्री छन्दसां माता'

( नाराय० १५ । १ ) इत्यत्र विभक्तिव्यत्ययेन द्वितीया प्रथमार्थे । तथा 'तत्त्वमसि' ( छा० ६।८।७ ) इत्यत्र चतुर्थ्या स्वादेशादीनामन्यतमं स्वीकृत्य तस्मै त्वं समर्पणीयोऽसीत्यर्थः स्वीकार्यः । 'ब्रह्मणे त्वामहस ओमित्यात्मानं युञ्जीत' (नारा० २४ । १ ) इति श्रुतेः । पञ्चम्या वा स्वादेशादीनामन्यतमं स्वीकृत्य तस्मात्त्वमुत्पन्नोऽसीत्यर्थः । 'यतो वा इमानि भूतानि जायन्ते' ( तै० ३ । १ । १ ) इति श्रुतेः । षष्ठ्या वा तत्त्रितयं स्वीकृत्य तस्य त्वमसि तत्स्वामिकोऽसीति प्रतिपादनीयम् । 'स कारणं करणाधिपाधिपः' ( श्वे० ६ । ९ ) इति श्रुतेः । सप्तम्या वा तत्त्रितयं स्वीकृत्य तस्मिंस्त्वमसीत्यर्थो ग्राह्यः । 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठिताः' ( छा० ६ । ८ । ४ ) इति श्रुतेः । शरीरिशरीरभावाभिप्रायं वा सामानाधिकरण्यं भविष्यति मनुष्योऽहमित्यादिवत् । 'यस्याऽऽत्मा शरीरम्' ( बृ० ३ । ७ । २२ ) इति श्रुतेः । 'अघोरापापकाशिनी' ( रुद्र० अनु० १ ) इत्यत्रापापकाशिनीति प्रश्लेषवत् 'अतत्त्वमसि' इति वा 'स आत्मा तत्त्वमसि श्वेतकेतो' ( छा० ६ । ८ । ७ ) इत्यत्रापि प्रश्लेषो भविष्यति । तथा च सद्विद्यायाः सप्रपञ्चजीवभिन्नब्रह्मपरत्वावगमात्कथं प्रत्यगभिन्नब्रह्मपरत्वमिति चेत् । अत्रोच्यते—'उत तमादेशम्' ( छा० ६ । १ । ३ ) इत्युपक्रमो न ब्रह्मणः शासितृत्वं प्रतिपादयति । तथात्वे कर्तरि घञं स्वीकृत्य तत्परत्वं वक्तव्यम् । न च तदुपपद्यते । 'अकर्तरि च कारके संज्ञायाम्' ( पा० सू० ३।३।१९ ) इति कर्तरि तस्य पर्युदासात् । न च करणार्थस्यैव कर्तर्युपचारो भविष्यतीति वाच्यम् । तथा क्लेशकल्पनायां मूलाभावात् । अक्लेशेनैवोपपत्तौ तदयोगाच्च । उपदेशेऽपि ह्याङ्पूर्वकस्य दिशेः प्रचुरः प्रयोग उपलभ्यते—'आदित्यो ब्रह्मेत्यादेशः' ( छा० ३ । १९ । १ ) 'विद्युद्ब्रह्मेत्यादेशः, उभयमेतदादिष्टं भवत्यध्यात्मं चाऽऽधिदैवतं च' (छा० ३ । १८ । १ ) 'अथात आदेशो नेति नेति' ( बृ० २ । ३ । ६ ) 'गुह्या एवाऽऽदेशा मधुकृतः' ( छा० ३ । ५ । १ ) तदा-

दिष्टेन वर्त्मनेत्येवमादौ । यद्यप्युपदेशादेशयोर्भेदेन प्रयोग उप-लभ्यत एष आदेश एष उपदेश इति तथाऽप्यादेशशब्देनोपदेश-सामान्ये प्रतिपादिते गोबलीवर्दन्यायेनोपदेशशब्दश्चोदनात्मको-पदेशविशेषपरो भविष्यति । एषा वेदोपनिषदेतदनुशासन-मित्युत्तरत्र तथैव दर्शनात् । उपदेशार्थत्वस्वीकारे च कर्मणि घञं स्वीकृत्योपदेशैकगम्यत्वेन ब्रह्मोपक्रान्तमिति लभ्यते। न चाकर्तरि चेति सूत्रे संज्ञायामिति ग्रहणात्प्रकृते कथं कर्मणि घञ् संभवतीति शङ्क्यम् । को भवता दायो दत्तः को भवता लाभो लब्ध इति प्रयोगोपपत्तयेऽसंज्ञायामिति * प्रश्लेषस्याभ्युपगात्। अवश्यं चोपक्रम उपदेशैकगम्यत्वं वक्तव्यम् । श्वेतकेतुं स्वपुत्रं गुरुकुलात्सर्वान्वेदानधीत्य गृहमागतं स्तब्धं मानिनं प्रत्युद्दा-लकस्य स्तब्धतापनोदनार्थोऽयं प्रश्नः—'उत तमादेशमप्राक्ष्यः' इति । तत्र स्तब्धस्य मानिनः किमत्र प्रष्टव्यं स्वत एवायमर्थ ऊहितुं शक्यत इति शङ्का मा भूदिति । एवं च ' आचार्यवान्पु-रुषो वेद ' ( छा० ६ । १४ । २ ) इत्युपसंहारस्याप्युपक्रमा-नुगुण्यं लभ्यते । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा च विवर्ताभि-प्रायेणैव व्याख्येया, न तु परिणामाभिप्रायेण । ' वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ' ( छा० ६ । १ । ४ ) इति वाक्यशेषात् । स हि विकारानृततापरः । तथा हि तद्वाक्यार्थः—

---

* प्रश्लेषस्येति । अयं भावः—' अकर्तरि च कारके संज्ञायाम् ' (पा० सू० ३ । ३ । १९ ) इत्यत्र संज्ञायामित्यस्य सत्त्वात् ' को भवता लाभो लब्धः ' इत्यत्र घञ् न स्यात्, असत्त्वे च ' कृतः कटः ' इत्यत्रापि स्यादि-त्याशङ्क्यानभिधात् ' कृतः कटः ' इत्यत्र घञ् न स्यादित्युक्त्वा ' संज्ञा-याम् ' इति प्रत्याख्यातं भाष्ये । एतन्मूलकमेव कौमुद्यामुक्तम्—' संज्ञायामिति प्रायिकम् ' इति । एतत्सर्वं मनसि निधायोच्यते ' असंज्ञायामिति प्रश्ले-षस्य ' इति । योगविभागस्येष्टसिद्ध्यर्थत्ववत्प्रश्लेषस्यापि तदर्थत्वात्संज्ञाया अभावे काचित्कानां प्रयोगाणामनेन सिद्धिः कार्या । अयं च प्रश्लेषस्तन्त्रेण बोध्यः । एवं च संज्ञायामसंज्ञायां चेत्यर्थः पर्यवसितः । तथा च 'असंज्ञायाम्' इति प्रश्लेषे संज्ञायां घञ् न स्यादिति वक्तुं न शक्यते । वस्तुतस्तु ' संज्ञाया-मित्यस्य प्रायिकत्वाभ्युपगमात् ' इत्येव वक्तुमुचितम् ।

वाचाया आरम्भणमालम्बनं विकारो घटशरावादि । तर्हि वाक्तदालम्बनं च विकार इति द्वयं प्राप्तम् । नेत्याह—नामधेयम् । घटः शराव इति नाममात्रं न तु तत्र वस्तुसत्ताऽस्तीति द्योत्यते नामधेयपदेन । दृष्टं च नामपदस्याऽऽभासद्योतकत्वम्—'यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम्' ( गी० १६ । १७ ) इति । लोकेऽपि पुत्राभासे पुत्र इति नामधेयं नात्र पुत्रत्वमस्तीति । घटः सन्नित्यादिव्यवहारस्तर्हि कथमुपपाद्य इत्यत आह—मृत्तिकेत्येव सत्यमिति । मृत्तिकात्मनैव घटादिकं सत्यं न तु स्वरूपेणेत्यभिप्रायः । एवकारार्थप्रधानपरं चेदं वाक्यं गुडजिह्विकान्यायेन मृदो लोकप्राप्तसत्यत्वानुवादपूर्वकं विकारानृतताप्रतिपादनाय । एवमुत्तरेष्वपि लोहादिदृष्टान्तेषु द्रष्टव्यम् । अमुमर्थं दार्ष्टान्तिके दर्शयति—एवं सोम्य स आदेशो भवतीति । एवंशब्देन वाचाऽऽरम्भणं विकारो नामधेयमादेश एव सत्य इति प्रतिपादितं भवति ।

यत्त्वारम्भणाधिकरणे चन्द्रिकायाम्—एकविज्ञानेन सर्वविज्ञानायोगः । मृत्पिण्डदृष्टान्तानुपपत्तिश्च । कथं हि ब्रह्मविज्ञानात्सकलं विज्ञातं भवेत् । नहि शुक्तिस्वरूपविज्ञानाद्रजतज्ञता । प्रत्युत शुक्तेस्तत्रापरिज्ञानाद्यथैव रजतज्ञता ब्रह्मतत्त्वापरिज्ञानात्तथैव सर्वज्ञताऽपि वेति विवर्तवाद एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाद्यनुपपत्तिरूपदूषणमुक्तम् । तन्मन्दम् । विवर्तवादेऽधिष्ठानज्ञानेनाऽऽरोपितस्य तत्त्वतो ज्ञातत्वं संप्रतिपन्नम् । तच्चाधिष्ठानात्मकज्ञातस्वीयतत्त्वकत्वम् । उक्तं च भामत्याम्—रज्ज्वां ज्ञातायां भुजङ्गतत्त्वं ज्ञातं भवति । सा हि तस्य तत्त्वमिति । एवं च शुक्तिसाक्षात्कारानन्तरं यद्रजतमभात्सा शुक्तिरिति प्रत्ययाद्रजते शुक्तिकात्मकज्ञातस्वीयतत्त्वकत्वात्मकं शुक्तिकाज्ञानेन तत्त्वतो ज्ञातत्वमक्षतम् । एकविज्ञानेन सर्वविज्ञानमपि तत्त्वतो सर्वविज्ञानमेव विवक्षितम् । एवं चाधिष्ठानभूते ब्रह्मणि ज्ञाते 'इदं सर्वं यदयमात्मा' ( बृ० २ । ४ । ६ ) 'सर्वं खल्विदं ब्रह्म' ( छा० ३ । १४ । १ ) इति बाधायां सामानाधिकरण्यानुरोधाद्ब्रह्मरूपज्ञातस्वीयतत्त्वकत्वस्य ब्रह्मण्यारो-

पिते जगति सत्त्वान्नैकविज्ञानेन सर्वविज्ञानानुपपत्तिः। मृदादिविज्ञानेन घटादीनां विज्ञातस्वीयतत्त्वकत्वं गुडजिह्विकान्यायेनैवेत्युक्तमेव प्रागिति न दृष्टान्तासंगतिः।

यदपि तत्रैव चन्द्रिकायाम्—रज्ज्वां ज्ञातायां भुजङ्गतत्त्वं ज्ञातं भवति। सा हि तस्य तत्त्वम्। एवं च ब्रह्मज्ञानात्सर्वं तत्त्वतो ज्ञातं भवतीति भामत्युक्तमनूद्य—एवं हि ब्रह्मज्ञानेन ब्रह्मैव ज्ञातं भवतीत्यर्थः स्यात्। तच्चायुक्तम्। स्वस्य स्वहेतुत्वायोगात्। 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं स्यात्' (छा० ६। १। ३) इति श्रुतौ श्रुतादिपदायोगाच्चेत्यादिकं दूषणमुक्तम्। तदपि मन्दम्। ब्रह्मविज्ञानेन सर्वं तत्त्वतो ज्ञातं भवतीत्यत्र ब्रह्मविज्ञानेनेत्यभेदे तृतीया। अभेदस्य च विज्ञातमित्यत्र विज्ञानेऽन्वयः। तथा च ब्रह्मज्ञानाभिन्नं यत्तत्त्वतो ज्ञानं तद्विषयं स्वीयतत्त्वज्ञानाभिन्नज्ञानविषयब्रह्मकं सर्वमिति पर्यवसितार्थे न स्वस्य स्वहेतुत्वापत्तिरिति दूषणावकाशः। येनाश्रुतं श्रुतं भवतीत्यादावप्यश्रुतं वियदादिकं येन तत्त्वतः श्रुतं भवति, यदभिन्नश्रुतात्मकस्वीयतात्त्विकरूपवद्भवतीति रीत्या बाधायां सामानाधिकरण्येन पर्यवसितान्वयेन न श्रुतादिपदायोगोऽपीति।

यदपि तत्रैव विवर्तवादे मृत्पिण्डमृन्मयादिदृष्टान्तानुपपत्तिरिति चन्द्रिकायां दूषणमुक्तं तदस्मदीयश्रीमद्भाष्यहृदयानवबोधनिबन्धनम्। वाचाऽऽरम्भणश्रुतिव्याख्यानभाष्यस्यायमभिप्रायः—येनाश्रुतं श्रुतमिति बाधायां सामानाधिकरण्यम्। अश्रुतं वियदादिकं सर्वं तत्त्वतो यदभिन्नश्रुतब्रह्मव्यतिरिक्तस्वीयतात्त्विकरूपशून्यमित्यर्थः। तथा चैकं ब्रह्म सर्वस्याधिष्ठानमित्यर्थः प्रतिज्ञातः। तत्र मृत्पिण्डव्यतिरेकेण तत्त्वतस्तद्विकारो यथा नास्तीत्यादिदृष्टान्तो यथा सोम्यैकेनेत्यादिना प्रतिपाद्यते। मृत्पिण्डपदं च मुख्यार्थकैकपदयोगाद्भूमिरूपपिण्डार्थकम्। पिण्डपदं च स्थौल्यविशेषबोधकं मृन्मयमात्रोपादानतायोग्यतालाभाय। मृन्मयपदं च भूमिविकारमात्रार्थकम्। तथा च भूमिरूपविकारः सर्वो यथा भूमिं विना तत्त्वतो नास्तीत्यर्थः। भूमिविकारत्वं च

साक्षादेव वृक्षादावस्तीति भूमेर्विभक्तपिण्डस्य नानाविकारानुपा-
दानत्वेऽपि न क्षतिः । यद्यपि भूमिर्नाधिष्ठानं तथाऽप्यधिष्ठान-
तावच्छेदकशुक्त्यादिव्यतिरेकेण तत्त्वतो रूप्यादि नास्तीति
व्यवहारवद्भूमिविकारादिस्वरूपविचारदशायामाधारतावच्छेद-
कभूम्यादिव्यतिरेकेण तत्त्वतस्तद्विकारो नास्तीति व्यवहाराच्छु-
त्या तथोक्तम् । एवं च सर्वं मृन्मयमेकमृत्पिण्डात्मकविज्ञातस्वी-
यतत्त्वकमित्यपि बाधायां सामानाधिकरण्यम् । तत्र हेतुर्मृत्तिके-
त्येव सत्यमिति ।

सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थितः । इत्युक्तेः ।

मृत्तिका भूमिरिति गृह्यमाणं यत्तदवच्छिन्नसद्रूपं ब्रह्म ।
तदेव सत्यम् । मृत्तिकास्वरूपस्य सत्यत्वाभावात् । तदव-
च्छिन्नसद्रूपस्य दृष्टान्तत्वधीदशायां मृदो विविच्याज्ञानादभू-
मित्वेन ज्ञायमानत्वेन सद्रूपतालाभार्थमेव मृत्तिकेत्येवेत्यत्र 'इति'
इत्युक्तेः । अन्यथा तद्वैयर्थ्यापत्तेः । एतेन—शब्दप्रकरणे
व्याकरणादौ प्रकरणसिद्धं शब्दपरत्वं परित्यज्य * नवेति

* नवेति शब्दस्येति—'न वेति विभाषा' (पा० सू० १ । १ । ४४)
इत्यस्मिन्सूत्रे 'न वा' इतिशब्दस्येत्यर्थः । अयं भावः—इतिशब्दो लोके
गवित्ययमाहेत्यादावनुकरणेऽर्थपदार्थकस्य शब्दपदार्थकत्वकृद्भवति । अस्मि-
न्व्याकरणशास्त्रे तु 'स्वं रूपं शब्दस्याशब्दसंज्ञा' (पा० सू० १ । १ । ६८)
इत्यनेन शब्दपरत्वं बोधितम् । अतोऽत्र शब्दपदार्थकस्यार्थपदार्थत्वकृद्भवति ।
तस्य हि पदार्थविपर्यासकृत्त्वस्वभावात् । स च नवाशब्दाभ्यां सह प्रत्येकं संब-
ध्यते । व्याख्यानात् । तेन च नवाशब्दयोरर्थौ संज्ञिनौ भवतः । तत्र नकारस्य
निषेधोऽर्थः प्रसिद्ध एव । वेत्यस्य त्वस्तीत्यस्य संनिधाने पक्षे नास्तीत्यर्थः
प्रतीयते । नास्तीत्यस्य संनिधाने पक्षेऽस्तीत्यर्थः प्रतीयते । प्रकृते तु वेत्यस्य
संनिधानादस्तीत्यर्थस्य प्रतीतिर्भवति । तथा च निषेधविकल्पयोर्विभाषा संज्ञा
स्यादित्यर्थः फलितो भवति । तत्रापि श्रुतक्रमानुरोधात् 'न भवतीत्येतत्पूर्वकं
पक्षे भवति' इत्यस्यैव विभाषा संज्ञा भवति । तेन च 'विभाषा श्वेः' (पा०
सू० ६ । १ । ३०) इत्याद्युभयत्रविभाषासु पूर्वं निषेधेन किदकिदादिरूपे-
ष्वैक्यरूपं प्रापितेषु सत्सु पक्षे भवतीत्येकरूपेण विधिमुखेनैव विकल्पः सिध्यति ।

शब्दस्य स्वार्थपरत्वस्येवार्थप्रकरणेऽर्थपरत्वस्य प्रकरणादेव लाभे शब्दपरताया एव वक्तव्यतया तस्य च प्रकृतेऽनुपयुक्ततया मृत्तिकेत्येवेत्यत्रेतिशब्दवैयर्थ्यमेव त्वन्मत इति परोक्तं दूषणमनवकाशम्। आद्यर्थको वा 'इति' शब्दः प्रकृते।

इति हेतुप्रकरणप्रकारादिसमाप्तिषु (३।३।२४५)।

इत्यमरकोशात्। तथा च भूमिविकारस्वरूपस्य विचारदशायां तत्स्वरूपमिव भूमिस्वरूपस्य विचारदशायां साऽपि मिथ्यैव। तत्कारणापञ्चीकृतभूतान्येव सत्यानि। तेषामपि स्वरूपविचारदशायां तान्यपि मिथ्यैव। तत्कारणं ब्रह्मैव सत्यमित्याद्यर्थलाभः। एवमेवोत्तरेष्वपि दृष्टान्तेषु योजनीयम्। मृत्तिकेत्येव सत्यमित्यत्र हेतुर्वाचाऽऽरम्भणं विकारो नामधेयमित्यादि। तच्च व्याख्यातं प्राक्। अस्मिन्नेवार्थे—

को भवानिति निर्देशो वाचाऽऽरम्भो ह्यनर्थकः (२।१३।८७)।
शिबिका दारुसंघातो रचनास्थितिसंस्थितः।
अन्विष्यतां नृपश्रेष्ठ तद्भेदे शिबिका त्वया (२।१३।९१)।
एवं छत्रशलाकानां पृथग्भावो विमृश्यताम्।
क्व यातं छत्रमित्येष न्यायस्त्वयि तथा मयि (२।१३।९२)।
यस्तु राजेति यल्लोके यच्च राजभटादिकम्।
तथाऽन्यच्च नृपेत्येतन्न सत्संकल्पनामयम्। (२।१३।९५)।
एवमेकमिदं विश्वं न भेदि सकलं जगत्।
वासुदेवाभिधानस्य स्वरूपं परमात्मनः (२।१५।३५)।

इत्यादिविष्णुपुराणादिवाक्यसहस्रैरुपबृंहणरूपैरनिर्वचनीयापरपर्याये मिथ्यात्वे निर्णीततात्पर्यकं सद्विद्यागतम् 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादग्नेरग्नित्वं वाचाऽऽरम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्' (छा० ६।४।१) इत्यादिश्रुतिवाक्यं प्रमाणम्। तत्र हि त्रिवृत्कृतस्याग्न्यादिस्वरूपस्यात्रिवृत्कृततेजोब-

---

यदि च नवाशब्दावेव संज्ञिनौ स्यातां तर्हि 'विभाषा श्वेः' इत्यादौ नवाशब्दावादेशौ स्याताम्। क्वचित्त्वितिशब्दस्य न पदार्थविपर्यासकत्वम्। यथा—अनुवादवाक्ये। विस्तरस्तु शब्देन्दुशेखरादौ स्पष्ट इति।

भस्वरूपव्यतिरेकेण विचारासहत्वमग्नित्वमित्यन्तेन हेतूकृत्य वाचाऽऽरम्भणमित्यादिना त्रिवत्कृतमात्रं मिथ्येति प्रतिपाद्यते। परोक्तार्थे तु न किंचित्प्रमाणम् । अस्वारस्यं च वक्ष्यते । आधिक्मारम्भणाधिकरणे चन्द्रिकादूषणे मत्कृते द्रष्टव्यम् । तथा—

ज्ञानस्वरूपमत्यन्तं निर्मलं परमार्थतः ।
तदेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् (१।२।६) ॥

इति विष्णुपुराण एव ज्ञानस्वरूपस्यैव परमात्मनोऽर्थाकारता भ्रमसिद्धेति प्रतिपादितम् । तथा—

वस्त्वस्ति किं कुत्रचिदादिमध्यपर्यन्तहीनं सततैकरूपम् ।
यच्चान्यथात्वं द्विज याति भूयो न तत्तथा तत्र कुतो हि तत्त्वम् ।
( वि० पु० अं० २ । १२ । ४१ ) ।

इति तत्रैव विकारवर्ग आदिमध्यान्तरहितं पारमार्थिकं वस्तु नास्ति, अन्यथाभवतो वस्तुत्वाभावादिति प्रतिपादितम् । तथा—

मही घटत्वं घटतः कपालिका कपालिकाचूर्णरजस्ततोऽणुः ।
जनैः स्वकर्मस्तिमितात्मबोधैरालक्ष्यते ब्रूहि किमत्र तत्त्वम् ॥
( वि० पु० अं० २ । १२ । ४२ ) ।

सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत् ।
( वि० पु० अं० २ । १२ । ४५ ) ।

इत्यादिना प्रपञ्चानृततैव प्रतिपादितेति विवर्तमाश्रित्यैवैकविज्ञानेन सर्वविज्ञानप्रतिज्ञा विवर्तवादसंमतोक्तश्रीमच्छांकरभाष्याभिमेतवाचारम्भणश्रुत्यर्थं स्वीकृत्यैवोपपादनीया । पूर्वपक्षोपदर्शिते केषांचिदर्थे वाचेति तृतीयायाश्चतुर्थ्यर्थत्वाङ्गीकारो मृत्तिकेत्यनुषङ्गस्तृतीयान्ततया तस्य विपरिणामो मृत्तिकेत्येवेत्यत्र घटपदाध्याहारश्चेत्येवं योजनाया अतिक्लिष्टत्वादस्वारस्यं प्रपञ्चमिथ्यात्वबोधकोक्तप्रमाणविरोधश्च ।

आनन्दतीर्थीयसंमते पूर्वपक्षोपदर्शित उक्तवाक्यार्थेऽप्यस्वारस्यम् । तथा हि—तत्र वाचेत्यनेन वागिन्द्रियमात्रं लक्षणीयम् । अन्यथा व्याकरणानिष्पाद्यत्वालाभेनापभ्रंशालाभापत्तेः । मन्मते वाचेत्यस्य वाङ्मात्रमित्यर्थे नामधेयमित्यत्र नामधेयमात्रमित्यर्थे लक्षणा नु श्रुतमामाताधिकरण्यानुपपत्तिनिबन्धना लोकसिद्धा

चेति न दोषाय । तथा हि—तत्र वाक्ये वाचा व्यवह्रियमाणं विकारं वाचाऽऽरम्भणमितिवाक्योदितमनूद्य नामधेयत्वविधानं ह्यत्र स्वरसतः प्रतीयते । तत्र च श्रुतार्थमादाय सामानाधिकरण्यासंभवान्नामधेयपदेन नामधेयवाच्यत्वलक्षणामुपेत्य सामानाधिकरण्योपपादने पौनरुक्त्यापत्तेः । मृत्तिकेत्येव सत्यमिति वाक्यशेषस्वरसाच्चार्थपरिसंख्यार्थतामुपेत्य मात्रपदान्तर्भावेण मिथ्यात्वपर्यवसायितदर्थकथनस्यैव स्वरसत्वात् । लोकसिद्धिस्तु दृष्टं च नामधेयपदस्येत्यादिनोक्तैव प्राक् ( पृ० १४५ शां० प० ४ )। एवं सत्यशब्दस्याबाध्ये रूढत्वान्नित्यत्वार्थकत्वमपि लक्षणयैव । संस्कृतस्यापि मुख्यनित्यत्वाभावेन सदाशब्दमादाय योगासंभवेन व्याकरणनिष्पाद्यत्वरूपगौणनित्यत्वे लक्षणापत्तिश्च । सदाशब्दस्य त्यबन्तत्वमपि व्याकरणासिद्धमिति प्रामाणिकवैयाकरणसंमतम् । अधुना विकारशब्दस्य मुख्यविकारार्थकत्वे तदिष्टासिद्ध्या संस्कृतोच्चारणाशक्त्योच्चार्यमाणार्थकत्वं लक्षणयैव। नामशब्दस्यापि शब्दार्थकत्वं लक्षणयैव। अपभ्रंशस्य संकेतवत्प्रातिपदिकरूपरूढत्वाभावात् । यथा सोम्यैकेनेत्यादिकमनुषञ्जनीयमित्यपि न सत् । पूर्ववाक्यप्रविष्टभागस्योत्तरवाक्यघटकत्वेन प्रतिसंधानं ह्यनुषङ्गः। स च प्रकृते न संभवति। प्रकृते हि मृत्तिकेत्येव सत्यमित्यादेः पश्चाद्यथा सोम्यैकेन मृत्तिकेत्यनेन सर्वस्तद्विकारो विज्ञातो भवतीत्यादि हि विवक्षितदृष्टान्तलाभाय कल्पनीयम् । न चैतत्पूर्ववाक्ये प्रविष्टम् । किंच यथा वाचाऽऽरम्भणमित्यादिना गुणप्रधानभावः श्रुत्या ज्ञापितस्तथा मृत्पिण्डतद्विकारयोः सादृश्यमपि ज्ञाप्येत । यदि च मृत्पिण्डज्ञानेऽपि तद्विकाराणां घटत्वादिना ज्ञानासंभवान्मृत्त्वेन रूपेणैव घटादिज्ञानं मृत्पिण्डज्ञानादिति पर्यालोचनात्तत्सदृशज्ञानं तज्ज्ञानाधीनं लक्ष्यत इत्युच्यते तर्हि संस्कृतज्ञानादपभ्रंशज्ञानासंभवात्संस्कृतस्य प्राकृतकार्यकारित्वतात्पर्यकं 'मृत्तिकेत्यनेन सर्वस्तद्विकारो विज्ञातो भवति' इति वाक्यं संभवतीति तदेव श्रुत्योच्येत, किं वाचाऽऽरम्भणमित्यादिना गुणप्रधानभावज्ञापकेनेति श्रुतिस्वारस्यहानिः। अपि च कार्णा-

यसान्तानां सदृशदृष्टान्तानां पश्चादेव वाचाऽऽरम्भणं नामधेयं विकार इतिवत्संस्कृतं सत्यमिति सामान्यत एवोच्येत न तु मृत्पिण्डादिदृष्टान्तस्यैकैकस्यान्ते विशिष्य मृत्तिकेत्येकैकम् । शब्दान्तराणामपि संस्कृतानां संभवेन मृत्तिकेत्येवेत्यादेरुपादानमप्यस्वरसमेव । आयसमित्येव सत्यमित्यस्यैव पूर्णत्वसंभवेन कार्ष्णेति किमित्युक्तमिति शङ्काऽप्यनुत्तरा तन्मते । मन्मते तु कार्ष्णायसादिवाचकलघुशब्दान्तरसंभवेऽपि न दोषः । घटाद्यर्थविवक्षायां घटादिशब्दानामिव कलशादिशब्दानामपि तत्पर्यायाणां प्रयोगात् । एकविज्ञानेन तत्सदृशं तदधीनं च सर्वं ज्ञायत इत्यप्यसंगतमेव । तथा नियमाभावात् । नहि गोज्ञाने गवयादे राजज्ञाने च प्रजादेर्नियतं ज्ञानम् । अनियतज्ञाने च सदृशादेरेव किमित्युपादानमित्यत्राप्यनुत्तरमेव । तथा च सद्विद्योपक्रमे प्रतिज्ञातैकविज्ञानेन सर्वविज्ञानस्य विकारानृतत्वं स्वीकृत्य विवर्तवादमाश्रित्यैवोक्तरीत्योपपादनीयतया तदुपपादनायैव 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा० ६ । २ । १) इत्युपक्रमात् । 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' (छा० ६ । १६ । ३) इत्युपसंहाराच्चाद्वैतब्रह्मण एव महाप्रकरणितया तदनुसारेणैव तद्वाक्यस्थपदानां व्याख्येयत्वान्नानार्थपदानामर्थान्तरोपस्थापकत्वसंभवेऽपि प्रकृतवाक्यार्थानन्वयितया तत्परित्यागेन प्रकृतव्याख्यार्थानुकूलपदार्थोपस्थितिपरत्वमेवाऽऽस्थेयम् ।

सदेव सोम्येदमग्र आसीदित्यत्र निष्प्रपञ्चात्मतत्त्वरूपप्रकृतवाक्यार्थनिर्वाहो न संभवति । तत्रेदंशब्दोदिते जगति सदेवेत्यनेन सत्त्वावधारणात् । अग्र इति कालस्य तस्यां दशायां सत्तान प्रतिपादनात् । तदनन्तरं तदैक्षत नामरूपे व्याकरोदितीक्षणनामरूपद्वैतप्रपञ्चप्रतिपादनादित्युक्तं तु न सत् । सदेवेत्यत्र सच्छब्दो न सत्ताश्रयतयेदंपदार्थे पर्यवसितः । किंतु समानप्रकरणे 'आत्मा वा इदमेक एवाग्र आसीत्' (ऐ० १ । १) इत्यत्र 'एकः' इति पुंलिङ्गेन सच्छब्दस्थाने आत्मशब्दमुपक्षिप्य तस्यैव विशेषणाद्ब्रह्मपर एव ।

ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ( गी० १७।२३ )। इति स्मृतेस्तस्य ब्रह्मवाचकत्वात् । 'तदैक्षत' ( छा० ६।२।३ ) इति सच्छब्दार्थमाकृष्य तस्येक्षणादिपूर्वकस्रष्टृत्वाम्नानाच्च जगति तस्य बाधात् । 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठिताः' ( छा० ६ । ८ । ४ ) इति स्पष्टतया तेन पदेन ब्रह्मण एव प्रतिपादनात् ।

यत्त्वेवं सदेवेदमासीदित्यनेन सद्भेदविशिष्टप्रपञ्च आसीदिति सत्तां प्रतिपाद्य पुनरद्वितीयपदेन प्रपञ्चनिषेधे प्रपञ्चे प्रतीतस्य सत्त्वस्य व्याघातः । न च सदभिन्नस्य सत्त्वमिवाद्वितीयत्वं न विरुद्धं सदात्मनोभयोः संभवादिति सुवचम् । न ह्यत्र सद्रूपमात्रस्य सत्त्वमुच्यते किंतु सदभिन्नप्रपञ्चस्य । तथा च तन्निषेधेनासत्त्वरूपमिथ्यात्वलाभात्सत्त्वस्य चाऽऽसीदित्यनेन लाभाद्विरोधस्य दुर्वारत्वात् । नहि सदासीदित्यस्यासदासीदित्यर्थोऽविरुद्ध इति । तन्न सत् । यथा हि घटादिकं स्वोत्पत्तिपूर्वं मृदेवाऽऽसीदिति वाक्ये घटाद्यभेदोपलक्षितमृदेवाऽऽसीद्घटादिकं मृद्व्यतिरेकेण नाऽऽसीदित्यर्थस्तथा प्रकृतवाक्य इदमभेदोपलक्षितं सदेवाग्र आसीत् । 'अथात आदेशो नेति नेति' ( बृ० २ । ३ । ६ ) इत्यादिश्रुतिसिद्धं यदेकमेवाद्वितीयं सकलद्वैतशून्यं सत्तामात्रमात्मरूपं तद्व्यतिरेकेण सृष्टेः प्रागिदं नामरूपात्मकं किमपि नाऽऽसीदित्यस्यैवैवकारार्थप्राधान्येन सदेवेत्यादेरर्थत्वाद्विशेष्यसंगतैवकारस्यान्ययोगव्यवच्छेदार्थकतया सदन्यसामान्येऽग्रकालसत्त्वाभावस्यैव बोधनेन प्रपञ्चे सत्त्वादिसंबन्धबोधाभावान्न विरोधशङ्काऽपि । प्रतिपादितं चैतदारम्भणाधिकरणे 'सत्त्वाच्चावरस्य' ( ब्र० सू० २।१।१६ ) इत्यादिसूत्रव्याख्याने श्रीमद्भाष्यकारादिभिः ।

एकम्, एव, अद्वितीयम्, इति त्रिभिः पदैः स्वगतभेदसजातीयभेदविजातीयभेदत्रयं क्रमेण निषिध्यते । तदुक्तम्—

वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः
वृक्षान्तरात्सजातीयाद्विजातीयाच्छिलादितः ॥
तथा सद्वस्तुनो भेदत्रयं प्राप्तं निवार्यते ।
एकावधारणद्वैतप्रतिषेधैस्त्रिभिः क्रमात् ॥ इति ।

स्वगतभेदः—नानात्वरूपजीवेश्वरभेदः । सजातीयभेदः—द्रव्यत्वादिना सजातीयपृथिव्यादिभेदः । विजातीयभेदः—गुणगुण्यादिभेदः । एकपदेन, एवकारेण, द्वैतार्थकद्वितीयपदयुक्तेन निषेधार्थकनञा, च निषिध्यत इति तदर्थः। यदि च पृथिव्यादि न सजातीयं शुद्धब्रह्मणो द्रव्यत्वानङ्गीकारादित्युच्यते तदा जडभेदो विजातीयभेदः, चैतन्यभेदः, सजातीयभेदः, स्वभिन्नत्वे सति चिदात्मकत्वं साजात्यम् । तच्च जीवादौ वर्तत इति तन्निष्ठः स भेदः । स च सर्वानुगतत्वात्स्वस्य स्वस्मिन्नपि प्रसक्तः। ज्ञानानन्दादौ स्वरूपे ब्रह्मधर्मत्वस्य कल्पितत्वाज्ज्ञानानन्दादिधर्मधर्मिभेदः स्वगतभेद इति व्याख्येयम् । न चास्य गोर्द्वितीयोऽन्वेष्टव्यं इत्युक्तौ गौरेव द्वितीयोऽन्विष्यते नाश्वो न गर्दभ इति महाभाष्यानुसारात्समानजातीयद्वितीयपरत्वमेव द्वितीयशब्दस्य वाच्यमिति सजातीयभेदनिषेधपरत्वमेवाद्वितीयपदस्य, विजातीयस्वगतभेदनिषेधपरत्वं त्वेकावधारणपदयोर्यथेष्टं वाच्यमिति शङ्क्यम् । व्यावर्तकपदान्तरयुक्तस्य यद्धर्मविशिष्टवाचकपदस्य संनिहितं यद्द्वितीयपदं तत्तद्धर्मविशिष्टं द्वितीयमभिधत्ते । तथा चास्य गोर्द्वितीय इत्यादौ व्यावर्तकेनास्येति पदेन युक्तस्य गोपदस्य संनिहितेन द्वितीयपदेन गोरूपद्वितीयस्यैव बोधनेऽपि प्रकृते व्यावर्तकपदान्तराभावान्न सजातीयद्वितीयबोधकत्वम् । उक्तनियमादेव 'द्वितीयगामी नहि शब्द एष नः' इत्यादौ द्वितीयशब्दस्य द्वितीयसामान्यपरत्वं संगच्छते । न चाद्वितीयपदे न द्वितीयमद्वितीयमिति तत्पुरुषसमासाश्रयणे न द्वितीयं किंतु प्रथमं तृतीयं चेत्यर्थः स्यात् । तयोश्च प्रथमत्वादिना नाद्वितीयपदबोध्यता, किंतु द्वितीयभिन्नत्वेन । सा च न संभवति । तयोरपि किंचिदपेक्ष्य द्वितीयत्वादिति तत्पुरुषसमासार्थासंभवान्न विद्यते द्वितीयं यत्रेति बहुव्रीहिरेवाऽऽश्रयणीयः । तथा च भेदभेद्यमात्रस्य द्वितीयत्वादेकेनैवाद्वितीयपदेन द्वयमात्रनिषेधसंभव एकावधारणपदयोर्वैयर्थ्यमिति वाच्यम् । बलीवर्दपदसंनिधाने गोपदस्य विशेषार्थे संकोच इव सजातीयस्वगतभेदनिषेधार्थकैकावधारणपदसंनिधिबलादद्वैतपदस्य विजातीयद्वितीयत्वावच्छिन्न-

प्रतियोगिताकनिषेधरूपविशेषार्थकत्वात् । अत्र द्वितीयपदस्य विजातीयद्वितीयलक्षणया तच्छून्यत्वबोधादर्थात्तादृशद्वितीयस्य भेदो निषिध्यते । शाब्द एव वा तादृशभेदस्य निषेधः। तथा हि—समानप्रकरणे 'आत्मा वा इदमेक एवाग्र आसीत्। नान्यत्किंचन मिषत्' ( ऐ० १ । १ ) इत्यत्र धातूनामनेकार्थत्वान्मिषदित्यासीत्यर्थकमित्यैतरेयभाष्ये व्याख्यानात्तदेकवाक्यतया प्रकृते द्वितीयपदस्यान्यार्थकत्वाल्लक्षणाया आवश्यकत्वे द्वित्वसंख्यापूरकत्वादित्यागेनाऽऽत्मान्यविजातीयत्वेन लक्षणाया एव युक्तत्वात् । तादृशत्वेन निषेधे बाधकाभावादविनिगम्यत्वाच्च विशेष्यस्य भेदस्येव विशेषणस्य भेदस्यापि निषेधप्रतीतेः । एकपदस्य केवलार्थकत्वेन कैवल्यस्य स्वान्यशून्यत्वरूपतया प्रकृते संकोचेन जीवेश्वरादिरूपस्वान्यशून्यबोधकत्वाद्भेदनिषेधबोधकत्वम् । एवकारस्याप्यन्यतादात्म्यव्यवच्छेदबोधकत्वेऽपि प्रकृते पृथिव्यादिरूपसजातीयस्वान्यतादात्म्यशून्यत्वबोधकत्वेन विशेषणीभूतानां सजातीयतद्गतभेदानामुक्तरीत्या निषेधबोधकत्वम् । एवं च भेदत्रयस्य पदत्रयेण निषेधोक्तिर्ब्रह्मभिन्नसामान्यस्य मिथ्यात्वे प्रकृतश्रुतेः पर्यवसानोक्तिश्च न व्याहतेति बोध्यम् । अथवा स्वान्यत्वावच्छिन्ने द्वितीयगामीत्याजानी(नि)कप्रयोगदर्शनात्तत्र द्वितीयशब्दस्य मुख्यवृत्तत्वात्सजातीयस्वान्यत्वादिना पदत्रयलक्षणापेक्षया मुख्यया वृत्त्या द्वितीयपदेन स्वान्यत्वेन बोधः । पदान्तरं तु तदसंकोचतात्पर्यकमित्यद्वितीयपदेनैव भेदत्रयनिषेधबोधः ।

एवम् 'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' ( छा० ६ । ३ । २ ) इत्यनेन मध्येऽपि जीवब्रह्मणोरभेद उक्तरीत्या निष्प्रपञ्चाद्वितीयब्रह्मपरोपक्रमानुगुण एव परामृश्यते । यद्यपि परमात्मनः 'यः सर्वेषु भूतेषु तिष्ठन्सर्वेभ्यो भूतेभ्योऽन्तरः' ( बृ० ३।७।१५ ) इत्यन्तर्यामिरूपेणाप्यनुप्रवेशोऽस्ति तथाऽपि स नेह विवक्षितः । जीवेनेति विशेषणात् । एवम् 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' ( छा० ६ । १६ । ३ ) इत्युपसंहारोऽप्युपक्रमानुगुण

एवोपलभ्यते । ऐतदात्म्यमिदं सर्वमिति हि 'इदं सर्वं यदय-मात्मा' (बृ० ४।५।७) इत्यादिश्रुत्यन्तरानुसारात् 'सदेव सोम्येदमग्र आसीत् (छा० ६।२।१) इत्युपक्रमानुसाराच्च 'एष आत्माऽस्य' इति बहुव्रीहिं कृत्वा ततो भावप्रत्यये कृते भावप्रत्ययस्य प्रकारीभूतप्रकृत्यर्थपरत्वाद्बहुव्रीह्यर्थे विशेषणीभूतात्मपरामर्शकत्वेन 'एष आत्मेदं सर्वम्' इति प्रतिपादयति। एष आत्मेदं सर्वमित्येव वक्तव्ये सामानाधिकरण्यमात्मात्मीयभावेनौपचारिकमिति शङ्कानिराकरणाय बहुव्रीहिभावप्रत्यययोरुपादानम् । तथा सति बहुव्रीहिणैव मुख्यया वृत्त्याऽऽत्मात्मीयभावे लब्धे पुनर्भावप्रत्ययरूपप्रयत्नान्तरकरणं व्यर्थं स्यादिति सा शङ्काऽपोदिता भवति । तच्च सामानाधिकरण्यं मृद्घट इति परिणामाभिप्रायेण रजतं शुक्तिरित्यारोपितबाधाभिप्रायेणेति द्वेधाऽपि संभवति । तन्निर्धारणार्थं तत्सत्यमिति वाक्यम् । तत्र तच्छब्दः प्रकृतमात्मानं परामृशति । तस्यैव तात्पर्यविषयतयाऽस्मिन्संदर्भे प्राधान्यात्स आत्मेति वाक्ये तस्यैव परामर्शो तदैकार्थ्यानुसाराच्च । ततश्च तच्छब्देनाऽऽत्मानं परामृश्य तस्य विशिष्य सत्यताप्रतिपादनमनात्मनोऽनृततां बोधयत्पूर्वोपक्षिप्तं सामानाधिकरण्यं बाधायामेवेति व्यवस्थापयति । ततश्च तत्त्वमसीति वाक्यमपि स्वरसानुसारेण च यथाश्रुतमेव । न तु विभक्तिलोपादिना क्लेशेन व्याख्येयम् । स्वरसापरित्यागेन विभक्तिलोपाद्याश्रयणे व्यामोह एव शङ्कावसरप्रदर्शितवचनव्यक्तिभिः स्यात् । न हीयमेव वचनव्यक्तिः स्वीकर्तव्या नेयमित्यत्र किंचिन्नियामकमस्ति । तादृशवचनव्यक्तिष्वात्मशब्देनान्तःकरणोक्तेः प्रजाशब्देन जायमानवाचकेन भूतशब्देन भवन्तीति भूतानीति व्युत्पत्त्योत्पन्नवाचकेन नित्यस्य जीवस्याप्रतिपादनात् । न चौपाधिकं जन्यत्वं जीवस्यापीति वाच्यम् । प्रजाशब्देन जीवस्य सोपाधिकस्य ग्रहणे तस्यैव तदाश्रितत्वलाभापत्त्या तत्स्वरूपनिर्णयानापत्तेः । एतेनैकमेवाद्वितीयमिति वाक्ये द्वितीयशब्दः सहायवाची । 'असिद्वितीयोऽनुससार पाण्डवम्' इति प्रयोगात् 'असिद्वितीयोऽसिसहायः'

इति महाभाष्योक्तेश्च । तथा चाद्वितीयमसहायमित्यर्थः । एवमेकशब्दस्यापि नानार्थत्वेनाविरुद्धार्थानादायोपपत्तौ न मिथ्यात्वपर्यवसायिताऽऽस्थेया । एकशब्दस्य नानार्थत्वम् ' एके मुख्यान्यकेवलाः ' ( अमर० ३ । ३।१६ ) इति कोशात् । ' एकशब्दोऽयमन्यप्रधानासहायसंख्याप्रथमसमानवाची ' इति ' एको गोत्रे ' ( पा० सू० ४ । १।९३ ) इति सूत्रे कैयटोक्तेश्चावगन्तव्यम् । तथा च जीवादिभ्योऽन्यत्वं प्राधान्यं वैकशब्दार्थोऽस्त्विति परोक्तं निरस्तम् । उक्तरीत्योपक्रमोपसंहारपर्यालोचनया ब्रह्माद्वैतस्यैव महाप्रकरणितया तदनुसारेणैव द्वितीयादिपदानां व्याख्येयतयैकादिपदानां नानार्थत्वेऽपि प्रकृतार्थानन्वयित्वात् ।

अर्थान्तराणां प्रकृतवाक्येऽसंभवदुक्तिकत्वाच्च । तथा हि—नाद्वितीयमित्यस्यासहायमर्थः । ब्रह्मणः स्रष्टृत्वेऽविद्यादृष्टादिसंहायापेक्षत्वेनासहायत्वासंभवात् । स्वतन्त्रसहायार्थे द्वितीयशब्दस्य शक्तिग्राहकप्रमाणानुपलम्भाल्लक्षणापत्तेश्च । एकशब्दस्यापि नोक्तान्याद्यर्थकत्वं प्रकृते संभवति । न तावज्जीवादिभ्योऽन्यत्वं तदर्थः । स्रष्टृत्वप्रतिपादनेनैव तल्लाभात् । अनन्यलभ्यस्यैव शब्दार्थत्वात् । अत एव न प्राधान्यं प्राथम्यं वा तदर्थः । सर्वकार्यमूलकारणत्वेनैव तल्लाभात् । ईक्षणपूर्वकस्य तस्याविद्यादावसंभवेन तस्य ब्रह्मासाधारणत्वात् । असहायप्राथम्यार्थकत्वासंभवस्तूक्त एव । नापि संख्यार्थः । एकवचनेनैव संख्यालाभात् । अद्वितीयत्वविरोधेन ब्रह्मणि तदसंभवाच्च । नापि साम्यमर्थः । सर्वलीलाविग्रहाणां नानाविधतत्तत्कार्यकारित्वेन कार्यतः साम्यासंभवात् । सर्वशरीरावच्छिन्नेशव्यक्तेरेकत्वेनैव गुणतः साम्याभावात् । तद्भिन्नत्वे सति तद्गुणसजातीयगुणवत्त्वस्यैव गुणतः साम्यत्वात् ।

यत्तु ' ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि ' (छा० ६।१६।३ ) इत्यत्र तत्पदेन नाऽऽत्मा परामृश्यते । किंत्वैतदात्म्यम् । नपुंसकत्वात् । ऐतदात्म्यमित्यस्य चैष एवात्मा चैतदात्मा, तस्येदम्, ऐतदात्म्यमित्यर्थः । एवं चैतदीयं वस्तु

त्वमसीत्यर्थः । न त्वात्माभेदः । एतदात्मा यस्येत्याद्यर्थे भावप्र-
त्ययवैयर्थ्यापत्तेस्ततो वरमर्थान्तराश्रयणमिति ।

स स्रष्टा चैव संहर्ता नियन्ता रक्षिता हरिः ।
तेन व्याप्तमिदं सर्वमैतदात्म्यमतो विदुः ॥

इति स्मृतेश्चेति । तदसत् । तस्येदमित्यर्थे ष्यञोऽविधानात्प्र-
योगादर्शनाच्च । स्वार्थे च सौख्यमित्यादिप्रयोगदर्शनात् । तथा
चैतत्सत्, आत्मा यस्य सर्वस्य तदेतदात्मा । तस्य भाव ऐतदा-
त्म्यमित्येव विग्रहः । भावप्रत्ययप्रयोजनं तूक्तमेव ( १५५ ।
प० ९ ) । किंच तत्सत्यमित्यत्र नपुंसकशब्दनिर्दिष्टब्रह्मण
एव नपुंसकतत्पदेन निर्देशसंभवान्नेदं युक्तम् । न हि तत्सत्य-
मित्यत्र सर्वं सत्यमित्यर्थः । असत्कारणनिरासाय सदेव सोम्येः
त्यादिनोक्तस्य कारणसत्त्वस्य तत्र परामर्शात् । स आत्मेति
कारणवाचितत्पदसमभिव्याहाराच्च । ननु तत्त्वमसीति स्वस्वार-
स्यानुसारेण यथाश्रुतमेवेत्यसंमतम् । सार्वज्ञ्यासार्वज्ञ्यविशिष्टयो-
रीशजीवयोरैक्यस्यायोग्यतापराहतत्वादिति चेत् । न । सोऽयमित्या-
दाविव जहदजहल्लक्षणया विरुद्धाकारत्यागेन शुद्धस्वरूपैक्यबोध-
नात् । यथा चैतत्तथा जिज्ञासाधिकरणे प्रतिपादितं चन्द्रिकोक्तदूष-
णपरिहारावसरे विस्तरेण । विरुद्धाकारत्यागश्च विरुद्धाकारस्या-
विवक्षया ब्रह्मानुभवाविषयत्वम् । अविवक्षा च प्रधानप्रमेयनि-
र्वाहाय । अद्वितीयब्रह्मणः प्रमेयत्वं चोपक्रमोपसंहारैक्यादिरू-
पलिङ्गावधृततात्पर्यात् ।

यत्त्वेवं सति 'असद्वा इदमग्र आसीत्' ( तै० २ । ७ ।
१ ) 'सर्वं खल्विदं ब्रह्म' ( छा० ३ । १४ । १ ) इत्यादाव-
सत्त्वशून्यत्वयोश्चित्त्वजडत्वयोर्वाऽविवक्षया ब्रह्मणः शून्येन
जडेन वैक्यापत्तिरिति परेणोक्तम् । तदसत् । शून्यसतोश्चिज्जड-
योर्वा विरुद्धाकारत्यागेन जीवब्रह्मणोरिवानुस्यूताकारस्याभा-
वात् । असतो निःस्वरूपत्वाज्जडस्य बाध्यस्वरूपत्वात् ।

यत्तु जहदजहल्लक्षणास्वीकारे पदद्वयलक्षणापत्त्या पूर्वोक्तश्रु-
तिसिद्धतज्जत्वात्तदधीनत्वात्तदाश्रितत्वाद्वा मन्मत इव तत्त्वमिति
व्यपदेशोऽस्त्वित परेणोक्तम् । तदप्यसत् । अभेदे तात्पर्यं उक्करी-

त्याऽवधृते लक्षणाबाहुल्यस्यादोषत्वात् । नहि लक्षणैक्यानुसारेण तात्पर्यपरित्यागः । तदुक्तं न्यायचिन्तामणौ—तात्पर्याद्वृत्तिर्न वृत्तेस्तात्पर्यम् । तात्पर्यात् । उपक्रमोपसंहारादिभिर्निर्णीततात्पर्यात् । वृत्तेः । वृत्तिलाघवात् । इति तदर्थः । वृत्तिलाघवात्तात्पर्यस्वीकारेऽर्थवादस्थनानापदमुख्यत्वाय 'उपासीत' इत्यादिपदाध्याहारापत्तेः । अत एवोपक्रममात्रानुरोधेन ऋगादिपदे 'उच्चैर्ऋचा क्रियते' इति विधिस्थलेऽपि *लक्षणाऽऽश्रिता । यत्र तूपक्रमादिकमनिर्णायकं तत्र तात्पर्यनिर्णायकत्वेन वृत्तिलाघवमप्याद्रियते । यथा स्थपत्यधिकरणे जहदजहल्लक्षणया मुख्यपरत्वे संभवति गौणार्थपरत्वकल्पनानुपपत्तेः । तज्जत्वाद्यर्थस्य जीवेऽनुपपत्तेरुक्तत्वाच्च ।

यत्तु 'स आत्मा तत्त्वमसि' इत्यत्रातत्त्वमसीति पदच्छेदः शकुनिसूत्रदृष्टान्तानुसारादिति परेणोक्तम् । तदप्यसत् । एकमेवाद्वितीयमित्युपक्रमानुसारेणातदिति पदच्छेदस्यायुक्तत्वात् । शकुनिसूत्रयोर्विद्यमानस्यापि भेदस्यातदिति पदच्छेदासाधकत्वात् । यथा ज्वरादिरोगग्रस्तस्य तन्निर्मोके स्वास्थ्येन विश्रान्तवज्जाग्रत्स्वप्नावस्थयोः करणव्यापारजनितश्रमापनुत्तये जीवस्य देवतात्मकस्वरूपावस्थानमित्यस्मिन्नर्थे शकुनिसूत्रदृष्टान्त इति तस्यान्यथोपपत्तेः । एवमन्येषामपि दृष्टान्तानामन्यथोपपत्तिराकरेषु द्रष्टव्या । सर्वांशे सारूप्यस्य क्वापि दृष्टान्तेऽदर्शनात्प्रकृतोपयुक्तार्थ

---

*लक्षणाऽऽश्रितेति । अयं भावः—ज्योतिष्टोमे हि 'उच्चैर्ऋचा क्रियते, उपांशु यजुषा, उच्चैः साम्ना' इति पठ्यते । एतेषु विधिवाक्येषु य ऋगादिशब्दा वर्तन्ते ते किं मन्त्रवाचका आहोस्विद्वेदवाचका इति संशयः । तत्र यदि मन्त्रवाचकाः स्युस्तर्हि यजुर्वेदोत्पन्ना अत एवाध्वर्युणा प्रयुज्यमाना अपि ऋच उच्चैरेव पठितव्याः स्युः । इष्यन्ते तूपांशु । अतस्तत्रासंजातविरोधन्यायेन प्रबलमुपक्रममनुसृत्य तदनुरोधेनैवोपसंहारो नीयते । तथा हि—'त्रयो वेदा असृज्यन्त । अग्नेर्ऋग्वेदः । वायोर्यजुर्वेदः । आदित्यात्सामवेदः' इत्युपक्रमः । अत्र वेदशब्दस्य श्रवणात्तदनुरोधेन 'उच्चैर्ऋचा क्रियते' इत्याद्युपसंहारभूतविध्युद्देशेऽपि ऋगादिशब्दा अपि लक्षणया ऋग्वेदादिपरा एवेति निश्चीयते । तथा च ऋग्वेदादीनेवोद्दिश्योच्चैस्त्वादयो धर्मा विधीयन्त इति सिद्धम् ।

एव तस्याऽऽदरणीयत्वात् । अतदिति पदच्छेद एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधाद्ब्रह्मजीवैक्यस्याप्रसक्तत्वेन निषेधानुपपत्तेश्च ।

यत्तु श्रुतितात्पर्याज्ञानेन 'तद्धैक आहुरसदेवेदमग्र आसीत्' (छा० ६।२।१) इत्यादाविव कुसमयेन वा देहेन्द्रियादीन्प्रति स्वातन्त्र्यरूपैश्वर्यस्य सर्वैरपि स्वात्मन्याभिमन्यमानत्वेन प्रत्यक्षेण वा प्रसक्तिरैक्यस्येति परेणोक्तम् । तन्न साधु । श्रुतितात्पर्याज्ञाने श्रुतितः कस्याप्यर्थस्य प्रसक्तेर्वक्तुमशक्यत्वात् । अज्ञानशब्देन तात्पर्यसंशयोक्तौ तत्त्वमसीति वाऽतत्त्वमसीति वा विवक्षितमिति संशयानिवृत्तेर्वाक्यस्यानिर्णायकत्वापातात् । तात्पर्यनिर्णायकैर्लिङ्गैर्वचनव्यक्तिनिर्णये तु द्वैतपरैस्त्वदभिमतैस्तैर्निर्णीतवचनव्यक्त्याऽद्वैतप्रसक्तेरभावात् । अद्वैतब्रह्मात्मतात्पर्यनिर्णायकैरद्वैतपरोपक्रमोपसंहारादिलिङ्गैस्तात्पर्यस्य प्रमितत्वे तस्याऽऽभिमानिकत्वाभावाच्चेन चेदैक्यप्रसक्तिस्तदा तस्य निषेद्धुमशक्यत्वात् । 'तद्धैक आहुरसदेवेदमग्र आसीत्' (छा० ६।२।१) इत्यसद्वादमेकीयमतेनानूद्य 'कथं नु खलु सोम्यैवं स्यात्कथमसतः सज्जायेत' (छा० ६।२।२) इति तद्दूषणाभिधानवदैक्यस्यैकीयमतसिद्धत्वेनानुवादादर्शनात्तद्दूषणानुपलम्भाच्च तादृशकुसमयानुपलम्भाच्चैक्यस्यासद्वाद इवानादिकुसमयप्राप्तत्वाभावात् । देहेन्द्रियादीनां जीवैक्येनाध्यस्तत्वात्तान्प्रति स्वातन्त्र्याभिमानस्य सार्वलौकिकस्य वक्तुमशक्यत्वात् । यत्किंचित्प्रति स्वातन्त्र्यस्येश्वरलक्षणत्वाभावाच्चैक्यस्य प्रत्यक्षप्राप्तत्वस्य वक्तुमशक्यत्वाच्च । एतेन 'एकमेवाद्वितीयम्' (छा० ६।२।१) इति समाभ्यधिकराहित्यस्योपक्रमात् 'ऐतदात्म्यम्' (छा० ६।८।७) इति तस्यैवोपसंहारात् 'अतत्त्वमसि' इति नवकृत्वोऽभ्यासाच्छास्त्रं विना शास्त्रैकसमधिगम्येश्वरभेदस्याप्रसक्ततयाऽपूर्वत्वात् 'अथ संपत्स्ये' (छा० ६।१४।२) इति फलश्रवणात् 'येनाश्रुतं श्रुतं भवति' (छा० ६।१।३) इत्यर्थवादाच्छकुनिसूत्रादिदृष्टान्तैरुपपादनाच्च षड्विधतात्पर्यलिङ्गानि भेदपराण्येवेति निरस्तम् । समाभ्यधिकराहित्यमात्रबोधेऽपि तात्त्विकभेदोपक्रम-

त्वालाभेन वास्तवाभेदेऽपि समाभ्यधिकराहित्यस्य संभवात्समाभ्यधिकराहित्येनापकृष्टानां सत्त्वलाभेनातात्त्विकभेदप्रत्ययेऽपि वास्तवाभेदे क्षतेरभावात्। समाभ्यधिकयोः प्रसक्तेरभावात्तन्निषेधायोगाच्च। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनाय द्वितीयसामान्याभावस्यैवोपक्रम इत्यस्य वाच्यत्वात्। आनन्दतीर्थीयास्तु-

जिज्ञासाकारणीभूतगुणपूर्तिप्रसिद्धये ।
जीवादिभेदकं विष्णोर्विश्वकर्तृत्वमुच्यते ॥

इति पूर्वाधिकरणसंगतिमुक्त्वा 'तद्विजिज्ञासस्व तद्ब्रह्म' (तै० ३।१।१) इति वाक्यस्थं ब्रह्म किं जीव उत विष्णुरिति चिन्ता। तदर्थं ब्रह्मशब्दस्य रूढ्यर्थत्यागे हेतुर्नास्त्युतास्तीति। तदर्थं विध्युद्देश्यस्थब्रह्मशब्दस्वारस्याय यतो वेत्यादि पूर्ववाक्यं जीवे कथंचिन्नेतुं शक्यमुताशक्यमिति संशये जीव एवोक्तवाक्यस्थं ब्रह्म × बृह जातिजीवकमलासनशब्दराशिषु' इत्यभिधानाद्ब्रह्मशब्दस्य तत्र रूढेर्विष्णौ यौगिकत्वात्। रूढेश्चावयवार्थनिरपेक्षायास्तत्सापेक्षयोगाद्बलीयस्त्वस्य रथकारादिशब्देषु स्थितत्वादिति पूर्वपक्षे सिद्धान्तः—विष्णुरेव जिज्ञास्यं ब्रह्म। भाष्योक्तश्रुतिभिर्विष्णुमात्रनिष्ठकारणत्वस्य यतो वेत्यादौ श्रवणात्तस्य जीवेऽनुपपत्त्या रूढेरपि बाधात्। अदृष्टद्वारा कल्पकत्वेन वा जीवकारणत्वे जातादिपदानां मुख्यार्थत्यागापत्तेरिति रीत्याऽधिकरणरचनामाहुः।

तत्रोच्यते—जिज्ञासाकारणीभूतेत्यादिनोक्ता संगतिस्तावदनुपपन्ना। सामान्यतो ज्ञाते विशेषतो वेदितव्ये च सर्वत्र जिज्ञासादर्शनात्। विशेषधर्मपुरस्कारेण जिज्ञासां प्रति सामान्यधर्मप्रकारकज्ञानस्य कारणतायास्तार्किकैरुक्तत्वाच्च। सामान्यधर्मप्रकारकज्ञानसाध्यायां जिज्ञासायां गुणपूर्तेरकारणत्वात्स्वरूपतो गुणपूर्तेर्व्यधिकरणतया तत्कारणत्वस्यासंभवदुक्तिकत्वाच्च। यदि च कारणीभूतेति न गुणपूर्तेर्विशेषणं किंतु गुणपूर्तिसिद्धावेवेति न व्यधिकरणत्वमित्युच्यते तथाऽपि ब्रह्मविचारानन्तरभाविन्या जगज्जन्मादिकर्ता विष्णुरिति ज्ञानाज्जायमानाया

× बृह जातीति। 'बृह' धातुर्जातिजीवादिवाचक इत्यर्थः।

गुणपूर्णो विष्णुरिति निश्चयरूपायास्तस्याः कथं जिज्ञासाकार-
णत्वम् । अनन्यथासिद्धनियतपूर्ववर्तिन एव कारणत्वादापात-
प्रतिपत्तिरूपायास्तस्या गुरुमुखात्तत्तद्वाक्यार्थज्ञानरूपश्रवणेनैव
सिद्धेस्तया श्रवणानन्तरभाविमननरूपत्वन्मतसिद्धविचारसाध्य-
त्वाभावात् । तदर्थं विश्वकर्तृत्वमुच्यत इत्यनुपपन्नमेव । जिज्ञासां
प्रत्यन्यत्र क्लृप्तसामान्यधर्मप्रकारकज्ञानेन तत्सहभूताया-
स्तस्या अन्यथासिद्धत्वात्तत्कारणत्वकल्पकप्रमाणानुपलम्भाच्च
न तस्याः कारणत्वम् । एतेनान्येष्वनेकेषु सत्सु तस्यैव जिज्ञा-
स्यत्वं तद्गतविशेषादेव वाच्यम् । स च गुणपूर्तिरेवेति सा जिज्ञा-
सा कारणं स्यादिति निरस्तम् । जिज्ञासाकारणमोक्षहेतुज्ञानविष-
यत्वरूपसामान्यधर्मप्रकारकज्ञानाविषयताया अन्यत्रासत्त्वेन मुमु-
क्षोस्तज्जिज्ञासानुपपत्तेः । श्रुतिप्रतिपन्नस्य स्ववाक्यगतजगज्ज-
न्मादिकारणत्वस्यैव तद्विशेषत्वोपपत्तेश्च गुणपूर्तिरेव विशेष
इत्यस्यासिद्धेः । अत एव तदनुनिष्पादिनी गुणपूर्तिर्न तद्धेतुरि-
त्युक्तं प्राक् । विश्वकर्तृत्वस्य जीवादिभेदकत्वोक्तिरपि न युक्ता ।
तद्धि ब्रह्मणि जीवत्वज्ञानप्रतिबन्धकजीवभेदानुमितिजनकज्ञान-
विषयत्वम् । तच्च न संभवति । ब्रह्म जगज्जन्मादिकारणमिति
ज्ञानेऽपि जीवत्वजडत्वादिव्याप्यसोपाधिकसत्ताश्रयत्वसंकुचित-
ज्ञानाश्रयत्वादिज्ञानाधीनब्रह्मविशेष्यकजीवत्वादिप्रकारकज्ञानसं-
भवात् । सत्यत्वादेस्तु निरुपाधिकसत्तारूपत्वेन तत्प्रकारकज्ञा-
नस्य जीवत्वज्ञानविरोधित्वात्संभवति व्यावर्तकत्वम् । न च
जगज्जन्मादिकर्तृत्वस्य जीवत्वाभावव्याप्यतया तज्ज्ञाने न
ब्रह्मणि जीवत्वज्ञानमिति वाच्यम् । उक्तसत्यत्वादिबोधकस-
त्यादिवाक्यावगमात्प्राग्जीवत्वादिव्यञ्जकसंकुचितज्ञानाश्रयत्वा-
दिज्ञानाधीनतज्जातीयत्वशङ्कायां व्याप्तिज्ञानप्रतिबन्धात्कारण-
त्वादेरुक्तव्यावर्तकत्वासंभवात् । न च कारणत्वस्य जीवावृत्ति-
त्वात्तज्जीवाद्ब्रह्म व्यावर्तयतीति वक्तुं शक्यम् । घटत्वरूपसंस्था-
नस्याघटेभ्यो व्यावर्तकत्वेऽप्यघटान्तर्गतपटादिगतपृथिवीत्वाभि-
व्यञ्जकगन्धवत्त्वसंबन्धान्वयज्ञानदशायां पृथिवीजातीयत्वश-
ङ्कया पृथिवीजातीयत्वाभावसाधकत्वादर्शनेन जीवत्वाभिव्य-

ञ्जकोक्तधर्मान्वयज्ञानाधीनतज्जातीयत्वशङ्कायास्तदवृत्तिधर्मसत्ता-मात्रेण निरासासंभवात्। तद्धर्माभिव्यञ्जकधर्मविरोधित्वेन ज्ञायमानधर्मस्यैव तद्धर्मावच्छिन्नप्रतियोगिताकभेदव्यवहारप्रयोजकतया वक्तव्यतया पृथिवीत्वसमानाधिकरणत्वेन ज्ञातघटत्वस्य पृथिवीत्वावच्छिन्नप्रतियोगिताकभेदासाधकत्ववज्जीवत्वाभिव्यञ्जकोक्तधर्मसमानाधिकरणत्वेन ज्ञातस्य जगज्जन्मादिकारणत्वस्य जीवभेदासाधकत्वात्। किंच गुणपूर्तिवाचकब्रह्मशब्देनैव जीवभेदसिद्धेस्तदर्थं विश्वकर्तृत्वमुच्यत इत्युक्तिरपि न साधीयसी। अथ कारणत्वमेव तदुपपादकमिति रूढिमात्रोपजीविपूर्वपक्षे ततः प्राङ् न तदवगम इति चेत्। कारणत्वं जीवसाधारणं न वा। आद्ये तदाक्षिप्तगुणपूर्णत्वादेरपि न तद्भेदगमकत्वसंभवः। द्वितीये कारणाभिन्नजिज्ञास्यबोधकब्रह्मशब्देन जीवरूढिभङ्गः। एतेन जिज्ञासायाः स्वप्रकाशजीवातिरिक्तवस्तुविषयतानैयत्यात्तस्याश्च पूर्णताप्रतिपत्त्यधीनत्वात्तदुपपादकं कारणत्वं जीवादिभेदकमिति कल्पनं निरस्तम्। पूर्वपक्षोऽप्ययुक्तः। ब्रह्मशब्दस्य शरीरबृंहकत्वरूपयोगेणैव जीवे प्रयोगोपपत्त्या—

> तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने।
> तत्रैव मुख्यवृत्तोऽयमन्यत्र ह्युपचारतः॥

इति वचनविरुद्धायां जीवे तद्रूढौ मानाभावः।

यत्तु बृह जातिजीवकमलासनशब्दराशिष्विति तत्प्रमाणप्रदर्शनं तद्वैयाकरणमूर्धन्यैरप्पय्यदीक्षितप्रभृतिभिर्व्याकरणे तथा धातुपाठादर्शनोक्तेर्न श्रद्धेयम्। क्रियापरत्वाभावाच्च तादृशधातुरूढिर्न युज्यते। तद्गतवृद्धिक्रियापरत्वे च जीवे बाधः। शरीरद्वारा तदुपपादनं च गौणत्वेनाप्युपपन्नम्, न रूढौ गमकम्। बृहेर्मनिनन्ततया निष्पन्नस्य ब्रह्मशब्दस्य नावयवशक्तिमात्रनिबन्धनत्वम्। आपेक्षिकबृहत्त्वशालिषु त्र्यणुकादिषु ब्रह्मशब्दाप्रयोगात्। द्व्यणुकाद्यपेक्षया तस्यापि महत्त्वात्। अतः पङ्कजशब्दयोगव्यवस्थापककुमुदादिव्यावृत्ततामरसानुवृत्तपद्मत्ववद्ब्रह्मशब्दप्रयोगविषयान्नमयादिपञ्चव्यक्त्यनुवृत्त्यन्याव्यावृत्ताकारादर्शनेनानेकशक्तिकल्पनस्यान्याय्यत्वात्। प्रवृत्तिनिमित्तपौष्कल्यप्रयो-

गवाहुल्याभ्यां पूर्वोक्तवचनाच्च ब्रह्मशब्दस्य विष्णावेव रूढिनिश्च-याच्च तस्य जीवे रूढियुक्तेरपि केचित्पूर्वपक्षायुक्तत्वं वर्ण-यन्ति । किंच बृहधातुनिष्पन्नस्य ब्रह्मशब्दस्य जीवे रूढ्यङ्गी-कारे सिद्धान्तासिद्धिः । ब्रह्मणि तस्य केवलयोगाङ्गीकारेण रूढितस्तस्य दुर्बलत्वात् । वैदिकत्वाद्योगः प्रबलः । योगस्य वैदिकत्वम् 'अथ कस्मादुच्यते ब्रह्म, बृहन्तो ह्यस्मिन्गुणाः' इति श्रुतिसिद्धमिति चेत् । स्वरूपतो दुर्बलस्य पदार्थधर्मक्रमस्य श्रुतिरूपाश्रयबलप्रयुक्तबलवत्तायाः पूर्वतन्त्रे * शिष्टाकोपाधिक-रण एव निरासात् । × तत्र हि 'क्षुत आचामेत्' इति स्मृतिवि-हिताचमनादीनां 'वेदं कृत्वा वेदिं करोति' इति श्रौतक्रमकाला-दिभिः स्मार्ताचमनस्य वेदवेदिकरणमध्येऽनुष्ठाने श्रौतक्रमस्या-नुष्ठातुमशक्यत्वाद्विरोधेनैकतरबाधावश्यकत्वे पदार्थधर्मत्वेन स्व-रूपतो दुर्बलस्यापि क्रमादेः श्रौतत्वेन प्राबल्यं पूर्वपक्षयित्वा क्रमादेः पदार्थप्राप्त्यपेक्षत्वाच्छ्रौतस्मार्तनित्यनैमित्तिकपदार्थालो-चनेनैव क्रमस्य कल्पनादिति धर्मिभूतपदार्थप्राबल्येन श्रौत-क्रमबाधस्यैव सिद्धान्तितत्वात् । स्वरूपतो दुर्बलस्येति समबलस्य बलशून्यस्याप्युपलक्षणम् । युक्तितौल्यात् । एतेन

---

* शिष्टाकोप इति—'शिष्टाकोपेऽविरुद्धमिति चेत्' ( जै० सू० १ । ३ । ९ ) इत्यस्मिन्सूत्र इति भावः । शिष्टानां श्रुतिप्रतिपादितानां पदार्थाना-मकोपेऽविरोधे सत्यविरुद्धमाचमनादिकमनुष्ठेयमिति तदर्थः ।

× तत्र हि क्षुत इति—स्मृतिविहिताचमनादीनां श्रौतक्रमकालादिभि-र्विरोधेनेत्यन्वयः । विरोधे हेतुमाह—अनुष्ठातुमशक्यत्वादिति । अयं भावः—'क्षुत आचामेत्' इत्यनेन पुरुषार्थमाचमनं विहितम् । यदा तु क्रतुमध्ये क्षु-तादि निमित्तं प्राप्नोति तदा नैमित्तिकमाचमनं क्रत्वङ्गत्वेन स्मृत्या विधीयते 'आचान्तेन कर्तव्यम्' इति । इयं च स्मृतिः श्रुतिविरोधादप्रमाणम् । तथा हि—श्रुत्या हि 'वेदं कृत्वा वेदिं करोति' इति वेदकरणानन्तरं वेदिकरणं विधीयते । वेदो नाम दर्भमयं संमार्जनसाधनम् । वेदिर्नामाऽऽहवनीयगार्हपत्यमध्यवर्तिनी चतुरङ्गुलखाता भूमिः । क्त्वाप्रत्ययेन चाऽऽनन्तर्यं बोध्यते । यदि च वेदवेदि-करणमध्ये क्षुतादिनिमित्तकमाचमनं प्राप्नुयात्तर्हि श्रुत्युक्तस्याऽऽनन्तर्यस्य विघातात्तद्विरोधः स्यात् । तथा च श्रुतिविरोधात्स्मृतिरप्रमाणमिति प्राप्ते ब्रूमः—

'तदेव ब्रह्म परमं कवीनाम्' ( महानारा० १ । ६ ) इति श्रुत्या ब्रह्मशब्दस्य विष्णौ रूढ्यभिधानाद्ब्रह्मणि योगरूढ एवायं न तु केवलं यौगिक इति कल्पनाऽपि निरस्ता। शरीरबृंहकत्वादियोगस्य जीवेऽपि संभवात्साम्येन जीवपूर्वपक्षानुत्थितेः सिद्धान्तासिद्धेश्च। योगस्यानतिप्रसक्तत्वान्न ब्रह्मणि रूढिरिति पूर्वपक्ष्याशयवर्णनमपि ब्रह्मगुणेऽत्रतिप्रसङ्गाद्धेयम्। ब्रह्मणि विद्वद्रूढ्या जीवनिष्ठाज्ञरूढिबाधेन सिद्धान्तसमर्थनं तु शिष्टाकोपाधिकरणविरोधान्निरस्तमेव। योगरूढ्योर्निरूढानिरूढलक्षणयोश्च विलम्बिताविलम्बितोपस्थितिकतया प्राबल्येऽपि नेह तथात्वम्। समुदायशक्तेरविलम्बितप्रातीतिकत्वाविशेषात्। आर्यम्लेच्छप्रसिद्धिविषययवादिदृष्टान्तप्रदर्शनमपि हेयम्। इहाऽऽर्यप्रसिद्धिविषयत्वसत्त्वात्। बृह जातिजीवेत्युदाहृतधात्वनुशासनमूलिकाया जीवादौ रूढेरज्ञसंबन्धित्वाभावेन तस्या अपि विद्वद्रूढित्वाच्च। वैदिकत्वेन प्राबल्यं चानुपदमेव निरस्तम्। 'तदेव ब्रह्म परमं कवीनाम्' ( महाना० १ । ६ ) इति श्रुत्या विष्णौ ब्रह्मशब्दस्य रूढिकल्पनमपि न साधु। 'चैत्रः परमधार्मिकः' इत्यत्र परमशब्देन चैत्रस्य धार्मिकत्वोत्कर्षसिद्धावपि तत्र तच्छब्दस्य रूढ्यसिद्धिवद्विष्णौ बृहत्त्वोत्कर्षसिद्धावपि तत्र तस्य रूढ्यसिद्धेः। परमेति विशेषणेनान्यत्रापि शक्तेरेव ज्ञापनान्नोक्तश्रुतिर्जीवे ब्रह्मशब्दरूढिबाधिकेत्येवार्थस्य पौष्कल्यात्तत्र तस्य मुख्यत्वमेव सिध्यतीति न जीवरूढ्या पूर्वपक्षोत्थानम्। किं-

---

यथा वेदवेद्यादयः श्रुत्युक्ताः पदार्थास्तथैवाऽऽचमनादयः स्मृत्युक्ताः पदार्थाः। क्रमस्तु पदार्थनिष्ठो धर्मः। स च पदार्थानुपजीवति। एवं च पदार्थानां धर्मापेक्षया प्राबल्यमुपजीव्यत्वात्। धर्मस्य चोपजीवकत्वात्तदपेक्षया दौर्बल्यम्। श्रुतेस्तु स्वतः प्रमाणत्वात्स्मृत्यपेक्षया प्राबल्यम्। श्रुतिमूलकत्वात्स्मृतेश्च तदपेक्षया दौर्बल्यं बोध्यम्। तथा च श्रुत्यपेक्षया दुर्बलाया अपि स्मृतेराचमनरूपप्रबलपदार्थाश्रितत्वेन प्राबल्यात्पदार्थधर्मभूतदुर्बलक्रमाश्रितत्वेन दुर्बलायाः श्रुतेर्बाधः । छेदकरणान्तरं क्षुते सत्याचमनमेव कार्यमिति सिद्धान्तः। तथा चोच्यते—

अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः।
दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैः॥ इति।

चाज्ञाते निश्चिते च जिज्ञासाया अदर्शनाज्जिज्ञास्यत्वस्य संदि-ग्धत्वव्याप्यत्वसिद्धौ जीवस्यासंदिग्धतया व्यापकनिवृत्त्या व्याप्यनिवृत्तेरवश्यवाच्यत्वान्न जीवस्य जिज्ञास्यतेति जिज्ञास्यसमर्पकब्रह्मशब्दे कथं जीवरूढ्युन्मेषः । न च जीवस्यापि देहाद्यन्यतया संदिग्धतया जिज्ञास्यतैव टीकादौ पूर्वपक्षे जीवस्याजिज्ञास्यत्वोक्तिर्ब्रह्मवदतिगहनत्वाभावाभिप्रायेति नोक्तदोष इति वाच्यम् । तथा सति तेनैव शास्त्रारम्भसिद्धेः कृतं शास्त्रारम्भाक्षेपेण । अथ जिज्ञासाविधेरप्रामाण्येन पूर्वपक्षोत्थानमिति चेत्तर्ह्यप्रामाण्येन पूर्वपक्षसौलभ्ये जीवपूर्वपक्षस्यायुक्तत्वात् । किंच 'नारायणोऽसौ परमो विचिन्त्यः' इति जिज्ञास्ये नारायणशब्दश्रवणान्न जीवपूर्वपक्षोत्थानसंभवः । नारायणशब्दस्यान्यत्र रूढ्यभावात् । तद्रूढिभङ्गेन पूर्वपक्षे तु ब्रह्मशब्दरूढेरेवात्र किं न भज्यते । तद्विजिज्ञासस्वेति जिज्ञासाविधेस्त्वन्मते मननविधिपूर्वकत्वाच्चिन्तनस्य मननरूपत्वात् । किंच ब्रह्मशब्दावयवार्थगुणपूर्त्या जीवभेदे पूर्वाधिकरणसिद्धे कथं पुनरिह तस्य जीवपरत्वशङ्कोत्थानम् । रूढ्या योगभङ्गेनेति चेत् । क तर्हि बृहन्तो ह्यस्मिन्गुणा इति योगस्य पूर्वपक्षिणा सावकाशता वक्तव्या । सर्वस्यापि ब्रह्मशब्दघटितवाक्यस्य रूढ्या जीवपरत्वात् । यत्र ब्रह्मासाधारणलिङ्गेन निरवकाशेन रूढिभङ्गः, यथा 'तदेव ब्रह्म परमं कवीनाम्' इत्यत्र 'यमन्तःसमुद्रे' इति समुद्रशायित्वलिङ्गात्तत्र योगः सावकाश इति चेत् । इहापि जिज्ञास्यत्वकारणत्वरूपनिरवकाशलिङ्गसहकृतया तादृशयोगश्रुत्या रूढिभङ्गसंभवात्कथं पूर्वपक्षोदयः । तदाच्छादनेन पूर्वपक्षोपपादनं चास्मदीयैः प्रदर्शितरीत्या पूर्वपक्षोपपादनसंभवे न न्याय्यम् । एवमभिसंविशन्तीत्युक्तं मोक्षप्राप्यत्वं मोक्षदत्वं वा जीवे कथमप्यनुपपन्नं कथं न जीवपूर्वपक्षं प्रतिबध्नाति । त्वन्मते ब्रह्मण लयउपादानत्वानङ्गीकरणेन यत्प्रयन्त्यभिसंविशन्तीत्यस्य मुक्तप्राप्यत्वार्थकत्वस्यैवोक्तत्वात् । तदाच्छादनेन पूर्वपक्षप्रवृत्तेः प्रकारान्तरेण पूर्वपक्षस्थानार्थकत्वानुपपत्त्या मोक्षदत्वस्य वर्णनसंभवेऽन्याय्यत्वात् । किंच जात्यादिसाधारणरूढ्या

कथं जीवमात्रपूर्वपक्षोत्थानम् । 'आत्मा वा अरे द्रष्टव्यः' ( बृ० २।४।५ ) इतिवाक्यगतात्मशब्दानुरोधादिति चन्द्रिकोक्तं तु न सम्यक् । तथा सति 'नारायणोऽसौ परमो विचिन्त्यः' इतिवाक्यानुरोधान्न जीवोऽपि जिज्ञास्य इति तत्पूर्वपक्षानुत्थितेरपरिहारात् ।

केचित्तु—यथा धर्मविचारानन्तरमितरव्यावृत्ततत्स्वरूपप्रतिपत्तये तदनुगुणस्य 'चोदनालक्षणोऽर्थो धर्मः' ( जै० सू० १।१।२ ) इति सूत्रस्य प्रवृत्तेरिव ब्रह्मविचारप्रतिज्ञानन्तरमितरव्यावृत्तब्रह्मप्रतिपत्तये तदनुगुणलक्षणसूत्रप्रवृत्तेरेवोचितत्वात् । वाक्यशेषगतब्रह्मशब्दरूढ्या जीवपरत्वपूर्वपक्षस्य सूत्राननुगुणत्वात् ।

तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने ।
तत्रैव मुख्यवृत्तोऽयमन्यत्र ह्युपचारतः ॥

इतिवचनविरुद्धाया भगवतोऽन्यत्र रूढेरयुक्तत्वाच्चेति रीत्या पूर्वपक्षायुक्तत्वमाहुः ।

'यतो वै' इत्यादिनोक्तकारणत्वेन सिद्धान्ते ब्रह्मशब्दरूढिबाधनमपि न युक्तम् । त्वत्सिद्धान्ते पूर्वाधिकरणे सर्वेषामद्वैतवाक्यानां विचारविधिगतब्रह्मशब्दानुरोधेनान्यथानयनवदिहापि 'यतो वै' इत्यादेस्तत्प्रापकाणां चान्यथानयनस्य युक्तत्वात्पूर्वाधिकरणे योगार्थानुरोधेन बह्वन्यथाकरणे रूढ्यनुग्रहाय तदन्यथाकरणस्य कैमुत्यन्यायसिद्धत्वात् । एकेन सावकाशेन ब्रह्मशब्देन निरवकाशानेकलिङ्गभङ्गो न युक्त इति चेन्न । व्रीहीणां पुरोडाशद्वारा पशोर्हृदयादिद्वारा यागकरणत्ववज्जीवस्याप्यदृष्टद्वारा त्वदीयपूर्वपक्षिणैवोक्तरीत्या जगत्कारणत्वसंभवेन लिङ्गस्यापि सावकाशत्वात् । न च जातादिपदमुख्यार्थत्यागो दोषः । 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यादिविधिवाक्यगतगार्हपत्यपदमुख्यत्वानुरोधेन मन्त्रस्थेन्द्रपदरूढित्यागवद्विचारविधिगतब्रह्मशब्दरूढ्यनुरोधेनानुवादगतजातादिपदमुख्यार्थत्यागौचित्यात् । अन्यथा गृहपतेरयं गार्हपत्य इतीन्द्रे सावकाशस्य गार्हपत्यशब्दस्य मन्त्रगतनिरवकाशेन्द्रपदानुरोधेनान्यथानयनापत्तेः ।



दीपिकाकारास्तु प्रकारान्तरेणोक्तसिद्धान्तायुक्तत्वमाहुः । तथा हि—

यतो वा इत्यादिजगत्कारणत्वानुवादस्य जीवे पर्यवसानायोगा-द्विचारविधिगतस्य ब्रह्मशब्दस्य रूढ्यर्थोऽपि जीवो यदि परित्यज्यते तदा भृगुवल्ल्यामन्नादिवाक्यानि पञ्चान्यपि ब्रह्मनिर्णायकानि । न तु मन्मत इव 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' ( तै० ३ । ६ । १ ) इति वाक्यमेव ब्रह्मणो निर्णायकम्, आनन्द एव जगज्जन्मादिकारणम्, अन्नादयस्तु चत्वारोऽपि कोशाः, अन्नाद्ध्येवेति वाक्यानि स्थूलारुन्धतीन्यायेन प्रवृत्तानीति स्वी क्रियते । अन्नादिषु पञ्चस्वपि ब्रह्मशब्दस्य जगत्कारणत्वलक्षणयोजनस्य च दर्शनात् । पुनः पुनरुपसत्ति-स्त्वन्नमयादिकोशान्तर्गतानां पञ्चानां ब्रह्मरूपाणां मध्ये पूर्वपूर्व-रूपापरोक्षीकरणानन्तरमुत्तरोत्तररूपापरोक्षीकरणाय । तपोनुज्ञाप्राप्तये प्रतिपर्यायं 'तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार' ( तै० ३ । २ । १ ) इति 'तपसा ब्रह्म विजिज्ञासस्व' ( तै० ३ । २। १ ) इति श्रवणादिति ।

तव मते येष्वन्नप्राणमनोविज्ञानानन्दादिषु ब्रह्मशब्दस्य वृत्तिस्तवानुमता तेष्वपि ब्रह्मशब्दस्य वृत्तिस्त्वया परित्यक्तव्या स्यात् । जगत्कारणत्वानुवादपर्यवसानायोगस्य तेष्वपि समानत्वात् । नहि तव मते प्रतिशरीरं तत्तत्कोशमात्राधिष्ठातृरूपाभिव्यक्तेनान्नादिरूपेण ब्रह्मणश्चतुर्मुखादिसकलजगत्कर्तृत्वं संभवति । तव मते सर्वेषां भगवद्रूपाणां सविशेषाभिन्नत्वेऽपि तत्तत्कृत्यानां व्यवस्थितानामेव पुराणादिषु वर्णनात्तत्तत्कृत्यं तत्तद्रूपस्यैवेति वक्तव्यत्वात् । अन्यथा रावणवधादिकृत्यमध्ये कंसशिशुपालादिवधादिकृत्यस्यापि वर्णनापत्तेः । यदि च तात्त्विकाभेददृष्ट्या रूपान्तराविष्कृतोऽपि महिमा रूपान्तरेषु वर्णयितुं युक्त एव । रावणवधादेः कृष्णरूपाविष्कृतचरितमात्रप्रस्तावेष्ववर्णनेऽपि सर्वरूपाभिमानिपरब्रह्मदृष्ट्या कृष्णवर्णनप्रस्तावे—

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।

इति कृष्णे वर्णनदर्शनात् । अतः—

एतन्नानावताराणां निदानं बीजमव्ययम् ।

इत्यादिपुराणादिप्रसिद्धमूलरूपाभेददृष्ट्याऽन्नादिरूपेषु जगत्कर्तृत्वानुवादो नानुपपन्न इत्युच्यते तदा ज्ञानानन्दादिरूपेण जीवेऽपि जगत्कर्तृतानुवादोऽपि युक्त एव । 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्' ( ब्र० सू० २ । ३ । २९ ) इति सूत्रे ज्ञानानन्दादिगुणा एवास्य गुणाः सारः स्वरूपमतो तत्त्वमसीत्यभेदव्यपदेशः । भविष्यत्पर्वणि च—

> जीवा भिन्नाः परो भिन्नस्तथाऽपि ज्ञानरूपतः ।
> प्रोच्यते ब्रह्मरूपेण वेदवादेषु सर्वशः ॥

इति त्वद्भाष्यकारेण ज्ञानादिरूपेण जीवपरयोरभेदविषयतया (तत्त्वमसीत्यभेदविषयतया) तत्त्वमसीत्यभेदप्रतिपादनस्य समर्थितत्वात् । अत्रापि सविशेषाभेदस्य वक्तुं शक्यत्वात् । नहि ब्रह्मस्वरूपाणामेव सः, न जीवपरयोरित्यत्र किंचिद्गमकमस्ति । प्रतिपादितं चैतदाद्यसूत्र एव प्रपञ्चेन ।

अथ ज्ञानादिरूपेण जीवस्य न मुख्योऽभेदो मन्मते किंतु गौण एव । प्रबलभेदश्रुतिविरोधेन तद्विषयतयैव तत्त्वमसीत्यभेदप्रतिपादनम् 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्' ( ब्र० सू० २ । ३ । २९ ) इति सूत्रे भाष्यकारानुमतम् । अत एव तत्त्वप्रकाशिकायां परमात्मगुणसदृशानन्दादिस्वरूपत्वेन जीवस्य गौण्या वृत्त्याऽभेदव्यपदेशोपपत्तेरिति तत्सूत्रस्थभाष्यार्थो वर्णितः । न चात्रापि पूर्वपक्षोक्तरीत्याऽदृष्टद्वारा कल्पकत्वेन वा जीवकारणत्वमेवानुवाद्यमास्तामिति शक्यं वदितुम् । तत्त्वमसीत्यत्र प्रबलभेदश्रुतिविरोधवदत्र संकुचितानुवाद्यजगत्कारणत्वग्रहणे मानाभावादिति चेत् । अत्र वदन्ति—विधेयानुवाद्यरूपतया जीवब्रह्मसमर्पकस्य भागद्वयस्याभेदपरिपन्थिधर्मद्वयोपस्थापकतया विरोधे सत्यविरोधाय कस्यचिद्भागस्यार्थबाधे स्वीकर्तव्ये विधेयभागस्य तात्पर्यवत्तया प्रबलत्वादनुवादमुख्यार्थसिद्धये विधावमुख्यार्थपरिग्रहस्य 'न विधौ परः शब्दार्थः' इत्यनेन न्यायविद्भिर्निराकृतत्वादनुवाद्यभागस्यैवार्थबाधः । माप्नुवन्यथा मनोरथे ध्याने च संस्कारयोनीनर्थान्मनसाऽनुभवन्त्येवं स्वप्नेऽपि किमनुपपन्नम् । इयांस्तु विशेषः—मनोरथादौ

प्रयत्नपूर्विका सृष्टिः पदार्थानाम् । स्वप्ने तु पुनरीश्वरेच्छाधीनै-वेति 'संध्ये सृष्टिराह हि' ( ब्र० सू० ३ । २ । १ ) इति सूत्रे सुधोक्तरीत्या जीवगतध्यानादिविषयस्रष्टृतागोचरत्वलक्ष-णस्य संकोचस्यैव न्याय्यत्वेन ब्रह्मशब्दरूढ्यर्थत्यागायोगात् । ध्यानमनोरथयोर्विषयसृष्टेर्जीवप्रयत्नसाध्यत्वमेवेति वदतां मते ध्यानमनोरथयोरसंभावितो विषयः कोऽपि नास्तीति स्थूला-दिसकलप्रपञ्चस्य चिरंतनहिरण्यगर्भादिजीवप्रभवत्वोपपत्तेस्ता-दृशसकलप्रपञ्चकर्तृत्वस्यासंकुचितस्यैव तादृशजीवे संभवादित्य-स्यापि कथंचिद्वक्तुं शक्यत्वेन ब्रह्मशब्दरूढ्यर्थत्यागे जगत्कार-णत्वानुवादबाधापत्तिरूपयुक्तेरसंभवात् । तत्रापरितोषे संकुचि-तजगत्कारणत्वानुवादरूपोद्देश्यधर्मबाधस्यैव ब्रह्मशब्दरूढ्यर्थवि-धेयगतजीवत्वरूपधर्मापरित्यागस्यैवोक्तरीत्या न्याय्यत्वाच्च । दृष्टश्च पूर्वमीमांसायामनुवाद्यगतधर्मस्य विधेयधर्मविरोधेन त्याग-रूपो बाधः 'उक्थ्याग्निष्टोमसंयोगादस्तुतशस्त्रः स्यात्सति हि संस्थान्यत्वम्' ( जै० सू० १० । ५ । ४९ ) इत्यधिकरणे । तत्र हि 'अग्निष्टोमे राजन्यस्य गृह्णीयादप्युक्थ्ये ग्राह्यः' इति वाक्ये राजन्यकर्तृकयोरुक्थ्याग्निष्टोमयोर्विधीयमानः षोडशिग्रह-स्तदङ्गभूतस्तुतिशस्त्रसहितस्तद्रहितो वा विधीयत इति पूर्वोत्तर-युक्तिभ्यां संशये स्तुतिशस्त्ररहित एव विधीयते । तत्सहितस्य विधाने 'आगन्तूनामन्ते निवेशः' इति न्यायेन स्तुतिशस्त्राभ्यां समाप्तिरूपसंस्थायाश्चरम एव प्राप्तौ तयाऽग्निष्टोमादिसंस्थाया-भङ्गप्रसङ्गेनाग्निष्टोमादेरुद्देश्यस्यैवासिद्धिप्रसङ्गेन तदुद्देशेन षो-डशिग्रहविध्ययोगादिति पूर्वपक्षे स्तुतिशस्त्राभ्यां समाप्तिरूपसं-स्थावत्त्वेन निर्ज्ञातः षोडशिग्रहस्तथैव विधीयते । न चाग्निष्टोमादि-संस्थाभङ्गेनोद्देश्यासिद्धिर्दोषः । अग्निष्टोमादिसंस्थोपमर्देन संस्था-न्तरविध्युपपत्तेरिति सिद्धान्तितम् । एवं च विधीयमानषोडशि-ग्रहाङ्गत्वेन प्राप्तयाऽपि तत्संस्थया यदा तद्विरोधिनोरनुवाद्यध-र्मयोरग्निष्टोमादिसंस्थयोर्बाधस्तदा किमु वक्तव्यं साक्षाद्विधीयमा-नेन प्रबलरूढ्या ब्रह्मशब्दार्थजीवत्वेन तद्विरुद्धस्यानुवाद्यधर्मज-गत्कारणत्वस्योक्तसंकोचरूपो बाध इति ।

यद्विश्वस्थितिभङ्गकर्तृ तदिह ब्रह्मेति सूत्रोदितं
व्याचख्यौ खलु विस्तरेण भगवानाचार्यवर्यः स्फुटम् ।
तत्राऽऽक्षेपशतं निवार्य कुधियामाक्षिप्य तत्कल्पितं
यत्तच्छंकरपादभूषणमिदं पश्यन्तु सत्सूरयः ।
मीमांसान्यायपञ्चास्यराघवाचार्यसूरिणाम् ।
शिष्यस्य शांकरे पादभूषणे परदूषणे ॥
कृतिर्वितनुतां मोदं जन्माधिकरणे सताम् ।
शांकरानन्दतीर्थीयव्याख्ययोस्तत्त्वनिश्चयात् ॥
इति जन्माद्यधिकरणम् ॥

## अथ शास्त्रयोनित्वाधिकरणम् ।

शास्त्रं योनिरमुष्य * शास्त्रकृदिति च व्याचख्युरार्या हि नो
रुद्रे केचिदतिप्रसक्तमवदन्पूर्वोक्तसल्लक्षणम् ।
आलोच्योभयमाहिता च भवतादद्वैतिनां द्वैतिनां
काऽप्येषा रघुनाथपण्डितकृतिर्मोदाय खेदाय च ॥

### शास्त्रयोनित्वात् ॥ ३ ॥

अस्मिन्नधिकरणे शास्त्रयोनित्वसमन्वयमुखेन ब्रह्मणः सार्वज्ञ्यं दृढीकृत्य पूर्वसूत्रोक्तजगज्जन्मादिकारणत्वलक्षणस्य ब्रह्मणि समर्थनाच्छास्त्राध्यायपादसंगतयः । जन्मादिसूत्रोक्तं जगज्जन्मादिकारणत्वमुपादानत्वकर्तृत्वादिरूपमभिन्ननिमित्तोपादानत्वशब्दप्रतिपाद्यं लक्षणं ब्रह्मणि संभवति वा न वेति, तदर्थं ब्रह्मणः सर्वज्ञत्वं संभवति वा न वेति, तदर्थं वेदप्रणेतृत्वं ब्रह्मणोऽबुद्धिपूर्वकमुत बुबोधयिषापूर्वकमिति संशये—उक्तलक्षणजगज्जन्मादिकारणत्वं ब्रह्मणो न संभवति । तद्घटककर्तृत्वोपयोगिसर्वज्ञत्वस्य ब्रह्मण्यसंभवात् । तथा हि—ब्रह्मणस्तव मते स्वरू-

* शास्त्रकृदिति चेति । श्रीमच्छंकराचार्या हि 'शास्त्रयोनित्वात्' इत्यस्य वाक्यार्थद्वयं चक्रुः । तथा हि—शास्त्रस्य ऋग्वेदादिरूपस्य योनिः कारणं यत्तच्छास्त्रयोनि ब्रह्म । अथवा शास्त्रमृग्वेदादि योनिः कारणं यथावत्स्वरूपबोधकं यस्य तच्छास्त्रयोनि ब्रह्मेति तद्भावः ।

पात्मकज्ञानेनैवाऽऽध्यासिकभास्यतादात्म्यलक्षणं सर्वावभासक-
त्वमेव सर्वज्ञत्वं संमतम् । यस्य सर्वावभासनक्षमं नित्यज्ञान-
मस्ति सोऽसर्वज्ञ इति विप्रतिषिद्धमितीक्षत्यधिकरणीयभाष्यानु-
रोधात् । न चैतत्सृष्टेः प्राक्संभवति । प्रकाशस्य विद्यमानस्वसंब-
द्धप्रकाश्यमात्रप्रकाशकत्वनियमेनातीतानागतवस्तुप्रकाशकत्वस्य
तदानीमसंभवात् । न चानुमित्यादेरिवातीतादिविषयकत्वं स्वरू-
पज्ञानेऽप्यास्तामिति शङ्क्यम् । तथा सति स्वरूपज्ञानस्य परो-
क्षत्वापत्तौ ' यत्साक्षादपरोक्षाद्ब्रह्म ' ( बृ० ३ । ४ । १ ) इति
श्रुतिविरोधापत्तेः । अनुमित्यादेरन्तःकरणपरिणामविशेषरू-
पस्य साकारतया ब्रह्मणस्तथात्वे निराकारत्वभङ्गापत्तेः ।
तस्मात्प्रधानमेव जगदुपादानकारणम् । 'तदैक्षत ' (छा० ६।२।३)
' सोऽकामयत ' ( बृ० १ । २ । ४ ) इत्यादिनोक्तमीक्षापूर्व-
कजगत्कर्तृत्वं तु महत्तत्त्वोपाधिकस्य जीवविशेषस्यैव । तदुक्तं
सांख्यप्रवचनभाष्ये—प्रकृतिप्रवर्तकस्येश्वरस्यैश्वर्यं न प्रकृति-
परिणामादिना संभवति । अन्योन्याश्रयात् । इच्छानन्तरं प्रकृ-
तिप्रवर्तने(नं) ततश्चेच्छादिरिति । या च तदैक्षतेति चेतनकारणता-
श्रुतिः सा सर्गादावुत्पन्नस्य महत्तत्त्वोपाधिकस्य पुरुषस्य जन्य-
ज्ञानपरेति । ननु सांख्येनापि 'यो ब्रह्माणं विदधाति पूर्वं यो वै
वेदांश्च प्रहिणोति तस्मै' (श्वे० ६।१८) इति श्रुतिप्रामाण्याद्वेदोच्चारणं
बुबोधयिषापूर्वकमेव ब्रह्मशब्दवाच्यहिरण्यगर्भस्रष्टुरवश्यं वाच्यम् ।
तथा सति तस्याप्यतीतानागतार्थापरोक्षस्यासंभवेन सर्वज्ञा-
नाकराणां सर्वगुणानां वेदानामुच्चारणमनुपपन्नमिति तेनापि
कस्यचित्स्वरूपज्ञानेनैव सार्वज्ञ्यं वक्तव्यमिति तुल्योऽनुयोग
इति चेत् । न । तन्मते योगर्द्धिसंपादितसार्वज्ञ्येन विष्ण्वादिनैव
वेदोपदेशाभ्युपगमात् । न च योगर्द्धेर्वेदोक्तधर्मानुष्ठानसाध्यत्वा-
दन्योन्याश्रयः शङ्क्यः । तस्यापि पूर्वतनसिद्धाधिगतवेदोदिता-
र्थज्ञानत्वोपगमात् । बीजाङ्कुरादीनामिव सिद्धानामप्यविश्रान्त-
प्रागवधिकधाराभ्युपगमात् । न च यो ब्रह्माणमिति श्रुतिरपि
बुद्धिपूर्विकां कर्तृतामाह । ' अस्य महतो भूतस्य निःश्वसितमेत-
द्यद्वेदः ' ( बृ० २ । ४ । १० ) इति निःश्वसितश्रुत्यनुरोधात् ।

तथा हि—यथा स्वापकाले निःश्वासादिकं विनैव पुरुषबुद्धिं पुरुषात्प्रादुर्भवति तथा वेदा अपि विनैव पुरुषबुद्धिं स्वयंभुवः प्रादुर्भवन्तीत्यभिधानात्। अत एव च न वेदानां पौरुषेयत्वं बुद्धिपूर्वकं पुरुषभवत्वमेव तदिति। तथा च स्वयंभुवः सकाशादबुद्धिपूर्वकमेव वेदाविर्भावः। अदृष्टवशादाविर्भूतेभ्यो वेदेभ्यश्चोपचितपुण्यानां तेषामतःकरणवृत्तिरूपमेव वेदार्थज्ञानं न स्वरूपभूतम्। तेन च तेषामीक्षापूर्वकं सृष्टिकर्तृत्वमिति न तुल्योऽनुयोगः। एवं च तव मते दर्शितरीत्या कर्तृत्वोपयोगिसर्वज्ञत्वस्य ब्रह्मण्यसंभवान्न जन्मादिसूत्रोक्तं कारणत्वं ब्रह्मणो लक्षणं संभवतीति पूर्वपक्षे सिद्धान्तः—शास्त्रयोनित्वादिति। शास्त्रस्य वेदस्य योनिः कारणं तत्त्वादिति विग्रहः। सर्वज्ञमिति च पदमध्याहार्यम्। ब्रह्मशब्दश्च जिज्ञासासूत्रादनुषञ्जनीयः। तथा च ब्रह्म सर्वज्ञं शास्त्रयोनित्वाद्यावद्वेदकर्तृत्वादिति सूत्रार्थः। तथा च पूर्वपक्ष्यभिमतवेदकर्तृत्वेनैव ब्रह्मणः सर्वज्ञत्वसिद्धिः।

यदुक्तं यो ब्रह्माणमिति श्रुतौ प्रतिपाद्यमानो वेदोपदेष्टा योगर्द्धिसमासादितसार्वज्ञ्यो विष्ण्वादिरेवेति। तदयुक्तम्। महत्तत्त्वोपाधिकत्वेन त्वदभ्युपगतो यो ब्रह्मा हिरण्यगर्भनामा तत्स्रष्टृत्वेनाभिहितस्य वेदोपदेष्टुर्महत्तत्त्वात्प्रागवस्थितस्य तत्सर्जनानुकूलज्ञानेच्छादिमत्त्वस्याऽऽवश्यकतया तदानीं बुद्धिवृत्त्याद्यसंभवेन स्वरूपात्मकज्ञानमादायैव तत्सर्जकत्वस्य त्वयाऽवश्यं वाच्यतया वेदकर्तृत्वस्यापि तथैव वक्तव्यत्वात्। अत एव 'तꣳ ह देवमात्मबुद्धिप्रकाशम्' (श्वे० ६।१८) इत्युत्तरत्र तत्रैव मन्त्रे विशेषणं दर्शितम्। आत्मभूता स्वरूपभूता या बुद्धिर्ज्ञानं सैव प्रकाशो विषयावभासो यस्य। यद्वाऽऽत्मा स्वरूपं बुद्धेर्महत्तत्त्वस्य प्रकाशो यस्येति तदर्थः। निःश्वितश्रुतिस्तु न बुद्धिपूर्वकत्वशून्यसर्जनाभिप्राया किंत्वप्रयाससाध्यत्वाभिप्राया। तथा च 'तदेव ब्रह्म परमं कवीनाम्' (महाना० १।६) इतिश्रुतिसिद्धबुबोधयिषापूर्वकवेदकर्तृत्वान्यथानुपपत्त्या स्वरूपज्ञानेनैव सार्वज्ञ्यमवश्यं त्वयाऽभ्युपपाद्यमेवेति तुल्योऽनुयोगः। कथं तर्हि सिद्धान्ते स्वरूपज्ञानस्यातीतानागतादिविषयकत्वमिति चेत्। विद्यमानसर्वविषयकत्व-

मादायैव स्वस्ववर्तमानतादशायां विषयेष्वाध्यासिकतादात्म्यस-
त्त्वात्सुलभं तावता च सर्वज्ञत्वम्। ईश्वरज्ञानस्यापरोक्षत्वमात्रा-
ङ्गीकारिभिरीदृशस्यैव सर्वज्ञत्वस्य वक्तव्यत्वादन्यस्य दुर्वच-
त्वात्। अन्यथा परोक्षत्वापत्तेश्च। तत्सिद्धं वेदकर्तृत्वात्सर्वज्ञं
ब्रह्मेति न जगज्जन्मादिकर्तृत्वलक्षणस्य ब्रह्मण्यसंभवः।

यत्तु चन्द्रिकायाम्—अत्र परेषां भाष्ये शास्त्रस्य योनिरिति
विग्रहमाश्रित्य ऋगादिकारणत्वं ब्रह्मण उच्यते। पूर्वसूत्रेऽर्थतो
लब्धस्य सार्वज्ञ्यस्य स्फोरणार्थमित्युक्तमित्यस्मन्मतमनूद्य लक्षणा-
नन्तरमवश्यापेक्षित+प्रमाणपरत्वसंभवेऽन्यपरत्वायोगात्। ×त्व-
दभिमतभ्रमाधिष्ठानत्वमात्रेण सार्वज्ञ्यालाभाच्च। =पूर्वसूत्रेऽर्थतो
लब्धस्य सर्वशक्त्यादित्यागेन सार्वज्ञ्यस्यैव स्फोरणे निमित्ताभा-
वाच्च। सांख्याभिमताचेतनकारणतायाश्च चेतनत्वमात्रेण निषे-
धसंभवात्। सांख्यानङ्गीकृतेन शास्त्रयोनित्वेन सार्वज्ञ्यसाध-
नायोगाच्च। श्रुत्या शास्त्रयोनित्वं तेन च सार्वज्ञ्यं प्रसाध्य तेन
प्रधानस्य कारणतानिषेधाद्वरं श्रुत्यैव तन्निषेधः। जगन्निर्माणेना-
स्फुटीकृतस्य सार्वज्ञ्यस्य तदेकदेशशास्त्रनिर्माणेन स्फुटीकरणा-
योगाच्चेति। तन्नेत्यादिना दूषितं तदापातरमणीयम्। ब्रह्मणः
सर्वज्ञत्वासंभवान्निरुक्तकारणत्वलक्षणमसंभवीति लक्षणासंभव-

---

+ प्रमाणपरत्वेति। लक्षणप्रमाणाभ्यां वस्तुसिद्ध्या लक्षणानन्तरं तद्विशिष्टे
प्रमाणं जिज्ञासितमिति मद्रीत्या तथैव वाच्यमिति भावः।
ननु सत्यं प्रमाणं जिज्ञासितं तथाऽपि सार्वज्ञ्यमपि समर्थनीयम्। अन्यथा
प्रागुक्तकारणत्वस्यैवासिद्धिः स्यात्। नहि किंचिज्ज्ञस्यैवंविधविश्वनिर्माणं शक्य-
मिति चेत्। अत्रेदं प्रष्टव्यम्—कारणत्वेनाऽऽक्षिप्तं यत्सार्वज्ञ्यं तत्किं जिज्ञा-
सितस्य शुद्धस्य ब्रह्मण आहोस्विद्विशिष्टस्येति। नाऽऽद्य इत्याशयेनाऽऽह—
× त्वदभिमतभ्रमेति। शुद्धस्य कारणत्वं नाम, उपादानत्वम्। तच्च न
परिणामित्वम्। निर्विकारश्रुतिव्याकोपात्। किंतु विवर्ताधिष्ठानत्वम्। तच्च न
सार्वज्ञ्याक्षेपकमित्याशयः।

न द्वितीय इत्याह—= पूर्वसूत्र इति। भवदीयभाष्ये हि 'जन्मस्थितिभङ्गं
यतः सर्वज्ञात्सर्वशक्तेः कारणाद्भवति' इत्युक्त्वा 'परिमितज्ञानशक्तिभिर्ज्ञातुं
कर्तुमशक्यत्वात्' इति भाष्यमुक्त्वा च सर्वशक्तेरप्युपक्षिप्तत्वादिति तद्भावः।

शङ्कयाऽसंभवदुःस्थे लक्षणे प्रमाणाभिधानस्यावसराभावात्। जन्मादिसूत्रोदाहृतस्य यतो वा इत्यादिश्रुतिरूपस्य प्रमाणस्यावगतत्वेन प्रमाणाकाङ्क्षाया अनुदयाच्च। त्वयाऽपि न प्रमाणजिज्ञासया सूत्रमवतारितं किंतु विवादानिव्याविवारकतयैव। प्रमाधिष्ठानत्वमात्रं न जन्मादिसूत्रे लक्षणतया विवक्षितं किंतु कर्तृत्वादिकमपि। पूर्वसूत्र इत्यादिकमपि न युक्तम्। सर्वज्ञत्वासिद्धिपरिहाराय शास्त्रकर्तृत्वेन सर्वज्ञत्वसाधनाय शास्त्रस्य ब्रह्मकार्यत्वबोधकेन 'अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदः' ( बृ० २।४।१० ) इत्युदाहरणेन सर्वशक्तित्वस्य सर्वकर्तृतारूपस्य स्फुटीकरणात्। तथा हि—निरुक्तवैदिकप्रपञ्चोत्पत्त्यनन्तरम् 'अयं च लोकः परश्च लोकः सर्वाणि च भूतान्यस्यैव निःश्वसितानि' (बृ०३।७।१) इति लौकिकप्रपञ्चस्यापि निःश्वसितन्यायेन सृष्टिराम्नाता। ततश्च सर्वशक्तित्वमपि तेन सिद्धप्रायमेव तदपि शास्त्रयोनित्वसूत्रेण सूचितमेव। आहत्य तु नोक्तम्। तस्य लक्षणासंभवनिरासकसर्वज्ञत्वसाधकत्वाभावात्। अथवा वेदनित्यत्वाद्ब्रह्मणो विश्वयोनिता नेति शङ्कां पराकर्तुं शास्त्रयोनित्वमुच्यत इति कल्पतरूक्तरीत्यैतदधिकरणयोजनाया अपि सूत्राणां विश्वतोमुखत्वेन भाष्यसंमततया तस्यां वेदांशे शङ्काविशेषस्येव लोकांशे निराकरणीयस्याभावाच्च। वेदांशे शङ्काविशेषेणाधिकरणयोजना चेत्थं तत्संमता—जन्मादिसूत्रोक्तनिखिलजगत्कारणत्वं न ब्रह्मणः संभवति। 'वाचा विरूपनित्यया' ( ऋ० सं० ६।५।२५ ) इति श्रुत्या जगदन्तःपातिवेदस्य नित्यत्वप्रतिपादनादिति पूर्वपक्षे—'अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदः' ( बृ० २।४।१० ) इति श्रुतेर्वेदकर्तृत्वमप्यनेन सूत्रेणोच्यते। तथा च वेदकर्तृत्वाज्जगत्कारणं ब्रह्मेति नोक्तलक्षणासंभवः। 'वाचा विरूपनित्यया' ( ऋ० सं० ६।५।२५ ) इति श्रुतिर्निःश्वसितश्रुत्यनुरोधात् 'तस्मात्तेपानाच्चत्वारो वेदा अजायन्त' 'ऋचः सामानि जज्ञिरे' ( ऋ० सं० ८।४।१८ ) इत्यादिश्रुत्यनुरोधात्प्रवाहनित्यत्वाभिप्राया। न च नित्यत्वश्रुत्यनुरोधान्निःश्वसितोत्पत्तिश्रुत्योरनिर्माणार्थकत्वं किं न

स्याच्छ्रुतित्वाविशेषादिति शङ्क्यम् । 'वाचा विरूपनि-
त्यया' ( ऋ० सं० ६ । ५ । २५ ) इति श्रुत्या वेदा-
नां स्वरूपतो नित्यत्वस्य प्रतिपादयितुमशक्यत्वाद्वर्णानामुत्प-
त्तिविनाशयोः प्रत्यक्षसिद्धत्वेन वर्णरूपाणां वेदानां स्वरूपतो
नित्यत्वासंभवात् । वर्णानां नित्यत्वपक्षेऽपि न वर्णा एव वेदः ।
अतिप्रसङ्गात् । किंतु क्रमविशेषेण स्वरविशेषेण विशिष्टा वर्णा
एव वेदः । नित्यानां विभूनां च वर्णानां न देशतः कालतो
वा क्रमः संभवति । स्वरोऽपि स्थानविशेषनिष्पत्तिप्र-
युक्तो न नित्येषु संभवति । किंतु तदभिव्यञ्जकध्वन्युपाधिक
एव सोऽङ्गीकर्तव्यः । ततश्च विशेषेण क्रमादेस्तदुपाधिभूतध्वने-
श्चानित्यतया स्वरूपेण वेदस्य नित्यत्वासंभवात्प्रवाहनित्यत्व-
मेव तादृशश्रुत्यभिप्रेतमित्यकामेनाप्यङ्गीकर्तव्यत्वात् । न चैवं
वेदस्य पौरुषेयत्वापत्तिः । इष्टापत्तौ तन्मूलभूतकर्तृपुरुषज्ञानस्य
प्रामाण्याप्रामाण्यसंशये वेदस्यापि संदिग्धप्रामाण्यकता स्यादिति
तन्निराकरणाय सिद्धान्ते वेदस्यापौरुषेयतयैव प्रामाण्याभ्युप-
गमो विरुध्येतेति वाच्यम् । सिद्धान्तेऽपौरुषेयतया वेदप्रामा-
ण्याभ्युपगमेऽपि निःश्वासितश्रुत्या सुप्तोत्थितातिनिपुणोपाध्या-
यवदनायासेन मन्वादीन्प्रति स्मृतयथापूर्वकल्पीयानुपूर्वीकवेदा-
ध्यापकत्वरूपवेदकर्तृत्वस्यैव प्रतिपादनेनाऽऽधुनिककविवाक्यसं-
दर्भवत्प्रमाणान्तरेणार्थमुपलभ्य तदर्थकापूर्वानुपूर्वीकवाक्यसंदर्भ-
रचयितृत्वस्य वेदेऽनङ्गीकारेण वेदस्य कर्तृज्ञानप्रामाण्यसंशयाधी-
नाप्रामाण्यसंशयविषयतात्मकसंदिग्धप्रामाण्यकत्वापत्त्ययोगात् ।
वेदस्येश्वरकर्तृकत्वेऽपि तार्किकमत इव प्रमाया गुणजन्यत्वेन
वेदप्रामाण्यस्येश्वरप्रमामूलकत्वमित्यनभ्युपगमाद्वक्तृप्रमामूलकप्रा-
माण्यकत्वाभावरूपापौरुषेयत्वोक्तिः सिद्धान्ताभिप्रेता न विरु-
ध्यते । वेदस्यानादितात्पर्यवत्त्वोपगमाद्योग्यवाक्यत्वेनासति
बाधके प्रमाजनकत्वोपगमाच्च प्रामाण्यनिर्वाहः । न चैवं शास्त्रयो-
नित्व आधुनिकोपाध्यायादीश्वरस्याविशेषः शङ्क्यः । उपाध्या-
यान्तरानपेक्षविवक्षापूर्वकयथापूर्वकल्पीयानुपूर्वीकवेदकर्तृत्वरूपा-
दिकवित्वात्मकाध्यापकत्वस्यैव निःश्वासितवाक्येनाभिधानादाधु-
निकसुप्तोत्थितोपाध्यायस्य यथापूर्वानुपूर्वीकस्मृतवेदाध्यापकत्वेऽ-

पि तदीयवेदप्राप्तेरुपाध्यायान्तराधीनत्वेन तस्याऽऽदिकवित्वाभावात् ।

अष्टादशानामेतासां विद्यानां भिन्नवर्त्मनाम् ।
आदिकर्ता कविः साक्षाच्छूलपाणिरिति श्रुतिः ॥

इति स्मृत्येश्वरस्योक्तरूपादिकवित्वबोधनात् । यथापूर्वानुपूर्वीतात्पर्यानुसंधानेनेश्वरस्य तादृशवेदकर्तृत्वाभ्युपगमेऽपि पूर्वकल्पीयानुपूर्वीक्रमादिसापेक्षतामात्रेण न तस्य वेदे स्वतन्त्रकर्तृत्वहानिः । लोके पूर्वरचितकटाकारमनुसंधाय तथाकारं पुनः कटं कुर्वतः शिल्पिनः कटांशे स्वतन्त्रकर्तृत्वव्यवहारव्याघाताद्दर्शनात् । एतेनोक्तकल्पतरूक्तसूत्र*योजनामनूद्यास्य श्रुतीनां परस्परविरोधपरिहारेण '×यावद्विकारम्' ( ब्र० सू० २ । ३ । ७ ) इत्यादिसूत्रोक्तैर्भिन्नत्वादिसाधारणहेतुभिर्ब्रह्मेतरसर्वानित्यत्वमिति प्रतिपादके वक्तव्यत्वात्, किंचाध्यापकेऽपि पूर्वपूर्वसदृशानुपूर्वीरचयितृत्वस्याभावादभिनवानुपूर्वीरचयितृत्वादेश्च ब्रह्मण्यभावादध्यापकादधिकस्य शास्त्रयोनित्वस्य ब्रह्मण्यसिद्धिरिति चन्द्रिकोक्तं दूषणमनवकाशम् । पूर्वाधिकरणोक्तलक्षणासंभवाक्षेपनिरासाय जगत्कारणत्वलक्षणोपक्षिप्तसर्वज्ञत्वासिद्ध्या नोक्तलक्षणसंभव इतिशङ्कानिरासाय चात्र शास्त्रयोनित्वप्रतिपादनाय वियत्पादीयप्रमेयस्य निःश्वसितश्रुतेर्वेदनित्यत्वश्रुतेश्चाविरोधोपपादनेऽपि तस्यैतदधिकरणप्रमेयत्वाभावात् । ईश्वर आदिकवित्वादिरूपस्याध्यापकाद्विशेषस्योक्तत्वाच ।

सांख्येत्यादिकं त्वनुक्तोपालम्भनम् । अस्मिन्नधिकरणे सांख्याभिमताचेतनकारणतावादनिराकरणस्यास्मद्भाष्यादावनुक्तत्वात् । तस्येक्षत्यधिकरण एवोक्तत्वादिति भाष्यदर्शिनां स्पष्टमेव । सांख्यानङ्गीकृतेन शास्त्रयोनित्वेनेत्यादिकमपि न साधु ।

---

* योजनामनूद्येति । 'अथवा वेदनित्यत्वाद्ब्रह्मणो विश्वयोनिता । मेति शङ्कामपाकर्तुं शास्त्रयोनित्वमुच्यते' इत्यनूद्येत्यर्थः ।

× यावद्विकारमिति । तत्र 'आकाशादिकालमनःपरमाणून्पक्षीकृत्य विकारत्वं साध्यत आत्मान्यत्वे सति विभक्तत्वाद्घटशरावोदञ्चनादिवत्' इति त्वन्मते व्याख्यातत्वादिति भावः ।

वेदानित्यत्ववादिना सांख्येन पुरुषविशेषे शास्त्रयोनित्वोपगमात् । 'यो ब्रह्माणम्' (श्वे०६।१८) इतिश्रुतिसिद्धबुबोधयिषापूर्वकवेदोच्चारयितृत्वस्याप्यङ्गीकृतत्वाच्च । परं वेदोपदेष्टाऽपि न जगत्कर्ता, अपि तु महत्तत्त्वोपाधिको ब्रह्मशब्दवाच्यो हिरण्यगर्भ एवेति तदभिप्रायः । स्पष्टं चेदं सांख्यप्रवचनभाष्यादौ । श्रुत्येत्यादिकमपि दर्शितैतदधिकरणीयपूर्वपक्षसिद्धान्तयोरदूषणमिति बालेनापि सुबोधम् । जगत्कर्तृत्वोपयोगिसर्वज्ञत्वासंभवान्न जगत्कर्तृत्वं ब्रह्मणः संभवतीति पूर्वपक्षे वेदकर्तृत्वेन सर्वज्ञत्वमस्मिन्नधिकरणे सिद्धान्त्यते, न प्रधानस्य श्रुत्या जगत्कारणत्वनिषेधः। श्रौतजगत्कारणत्वस्य प्रधाने निषेध ईक्षत्यधिकरणे सिद्धान्त्यत इति न किंचिदेतत् । जगन्निर्माणेनेत्यादिनोक्तं दूषणमप्येतदधिकरणीयप्रदर्शितपूर्वपक्षसिद्धान्तरहस्यदुरवगाहाब्धौ निमग्नं नोन्मज्जनमर्हति । जगत्कारणत्वलक्षणेन सर्वज्ञत्वमुपक्षिप्तं तदेव द्रढयन्नाहेति शास्त्रयोनित्वसूत्रावतारकभाष्येऽपि द्रढयन्नित्यस्य कारणत्वलक्षणेनापेक्षितस्य सर्वज्ञत्वस्यासिद्धिशङ्कायां तत्सिद्धिमाहेत्येवार्थो विवक्षितः । अन्यथा जगत्कारणत्वेन लब्धसर्वज्ञत्वे शास्त्रयोनित्वस्य हेत्वन्तरत्वे पूर्वाधिकरणगुणसूत्रत्वापत्तेरभिमताधिकरणान्तरत्वव्याघातात् । अथैवं निखिलवेदकर्तृत्वेन निखिलवेदार्थज्ञत्वस्य ब्रह्मणि सिद्धावपि वेदाप्रतिपाद्याधुनिकपुरुषविशेषपाणिगतवराटकसंख्यागङ्गावालुकावायसादिदशनसंख्यादिज्ञानासिद्धेः कथं ब्रह्मणः सर्वज्ञत्वसिद्धिरिति चेत् । न । अनेन हेतुना तदसिद्धावप्युक्तरीत्या स्वरूपज्ञानेनैवातीतानागतविषयज्ञताप्रसाधनमात्रेणैव प्रकृतसिद्धेः । दर्शिताधुनिकपदार्थजातमाध्यासिकसंबन्धेनैव सकलकार्योपादाने ब्रह्मस्वरूपज्ञाने संबद्धं तेन स्वरूपज्ञानेन प्रकाश्यत इत्यत्र विवादाभावात् । शास्त्रयोनित्वहेतुनाऽपि तत्सिद्धिप्रकारस्य श्रीमद्भाष्यकारैः प्रदर्शितत्वाच्च । तथा हि भाष्यम्—"महत ऋग्वेदादेः शास्त्रस्यानेकविद्यास्थानोपबृंहितस्य प्रदीपवत्सर्वार्थावद्योतिनः सर्वज्ञकल्पस्य योनिः कारणं ब्रह्म नहीदृशस्य शास्त्रस्य ऋग्वेदादिलक्षणस्य सर्वज्ञगुणान्वितस्य सर्वज्ञादन्यतः संभवोऽस्ति । यद्य-

द्विस्तरार्थं शास्त्रं यस्मात्पुरुषविशेषात्संभवति यथा व्याकरणादि पाणिन्यादेर्ज्ञेयैकदेशार्थमपि स ततोऽप्यधिकतरविज्ञान इति प्रसिद्धं लोके । किमु वक्तव्यमनेकशाखाभेदभिन्नस्य देवतिर्यङ्मनुष्यवर्णाश्रमादिप्रविभागहेतोर्ऋग्वेदाख्यस्य सर्वज्ञानाकरस्याप्रयत्नेनैव लीलान्यायेन पुरुषनिःश्वासवद्यस्मान्महतो भूताद्योनेः संभवः । 'अस्य महतो भूतस्य निःश्वसितमेतद्दृग्वेदः' ( बृ० २ । ४ । १० ) इत्यादिश्रुतेः । तस्य महतो भूतस्य निरतिशयं सर्वज्ञत्वं सर्वशक्तिमत्वं चेति " इति । तत्र महत इत्यादि कारणमित्यन्तं हेतुवाक्यम् । नहीदृशस्येत्यादि सर्वज्ञादन्यतः संभवोऽस्तीत्यन्तं व्यतिरेकमुखेण सर्वज्ञत्वप्रतिज्ञा । यद्यद्विस्तरार्थं शास्त्रमित्यादि ततोऽप्यधिकतरविज्ञान इत्यन्तं सामान्यव्याप्तिप्रदर्शकमुदाहरणम् । किमु वक्तव्यदित्यादि संभव इत्यन्तमुपनयः । तस्येत्यादि सर्वज्ञत्वमित्यन्तं निगमनम् । एवं च पञ्चावयववाक्यप्रदर्शनं सामान्यव्याप्त्यधीनानुमानेन वेदार्थातिरिक्तस्याप्याधुनिकपुरुषविशेषपाणिगतवराटकगङ्गावालुकावायसदशनसंख्यादिज्ञानसिद्ध्येऽनुमानप्रकारश्च विवरणाद्याकरग्रन्थे दर्शितः । स चेत्थम्—वेदाः स्वविषयाधिकविषयकज्ञानवत्प्रणीता वाक्यप्रमाणत्वात्पाणिन्यादिशास्त्रवदिति । यद्यपि सूत्राक्षरानुगुण्याय ब्रह्म वेदविषयाधिकविषयज्ञं वेदप्रणेतृत्वादित्येव वाच्यं तथाऽपि फलतो विशेषाभावमभिसंधाय तथोक्तम् । कल्पतरौ तु दर्शितब्रह्मपक्षकानुमानमेव दर्शितम् । ननु स्वविषयाधिकविषयकज्ञानवत्त्वमात्रस्य साध्यत्वे सर्वावभासकवेदकर्तृत्वेन पक्षधर्मताबलान्न सर्वज्ञत्वसिद्धिर्वेदविषयाधिकाविषयकज्ञानवत्त्वमात्रसिद्धेरिति चेत् । न । वेदविषयविषयकज्ञानवेदविषयाधिकाविषयकज्ञानोभयस्य साध्यत्वेन विनिगमकाभावाद्बाधानवताराच्च वेदाप्रतिपाद्याधुनिकपुरुषविशेषपाणिगतवराटकगङ्गावालुकावायसदशनसंख्यादिसाधारणज्ञानवत्त्वस्यापि सिद्धेः सर्वज्ञत्वसिद्धेर्निष्प्रत्यूहत्वात् । न च सर्वज्ञमित्येव साध्यनिर्देशः कुतो न कृत इति शङ्क्यम् । यद्यद्विस्तरार्थं शास्त्रमिति भाष्योपदर्शितसामान्यव्याप्तेस्तत्र सामर्थ्याभावात् ।

केचित्तु—वेदकर्तृत्वेन निःश्वसितश्रुतिप्रतिपादित ईश्वरो वेदानधीनवेदार्थतदधिकार्थगोचरज्ञानवान् । उपाध्यायान्तरमनपेक्ष्य निखिलवेदकर्तृत्वात् । मन्वादीनामपि वेदार्थतदधिकवर्णावलीविशेषादिज्ञानमस्तीतीश्वरज्ञानस्य तद्वैलक्षण्याय वेदानधीनेति । सिद्धं वेदं विना वेदार्थतदधिकार्थज्ञानमुपायान्तराभावात्स्वशक्तिमादायैव वक्तव्यम् । ततश्च यस्य शक्तिर्वेदार्थतदधिकार्थगोचरज्ञानक्षमा तस्याऽऽधुनिकपुरुषविशेषपाणिगतवराटकादिसंख्याज्ञानादिकमपि कैमुतिकन्यायेन सिध्यतीति सार्वज्ञ्यसिद्धिरिति वदन्ति । विशेषणप्रयोजनान्याकरे द्रष्टव्यानि ।

यत्तु चन्द्रिकायाम्—वेदाः स्वविषयादधिकविषयकज्ञानवत्प्रणीता इति प्रदर्शितविवरणोक्तमनुमानमत्र भामतीविवरणयोरित्यनेनानूद्य तन्न, एकार्थमात्रज्ञेन प्रयुक्तस्यानेकार्थकशब्दस्यानेकाबाधितार्थबोधकत्वदर्शनात् । नन्वन्योऽर्थो न तात्पर्यविषय इति चेत्तर्हि प्राशस्त्यपरार्थवादप्रतीतवायुक्षेपिष्ठत्वादिसंसर्गज्ञं ब्रह्म न स्यात् । पदार्थज्ञानं विना पदाप्रयोगेऽपि संसर्गज्ञानासिद्धेः । मानान्तरासिद्धे संसर्गेऽवान्तरतात्पर्यस्याप्यभावात् । किंच वेदस्यातत्त्वे तात्पर्ये प्रामाण्यायोगात्तत्त्वे चिन्मात्रे तात्पर्याद्ब्रह्मापि तन्मात्रज्ञं स्यात् । किंच प्रत्यक्षादिसिद्धस्य घटादेर्निष्प्रयोजनगङ्गावालुकाकाकदशनसंख्यादेश्च शास्त्राविषयत्वात्तज्ज्ञं ब्रह्म न स्यात् । अपि च न तावदर्थमुपलभ्य रचयितृत्वं वेदप्रणेतृत्वम् । पौरुषेयत्वापातात् । नाप्यध्यापकवदुच्चारयितृत्वमात्रम् । तेन सार्वज्ञ्यासिद्धेः । किंच स्वव्यतिरिक्तोपदेश्यपुरुषगोचरस्य भ्रमस्य भ्रान्तिसिद्धशरीरादेश्चाभाव उच्चारणायोगात्तस्य चासार्वज्ञ्यं विनाऽसंभवाच्छास्त्रयोनित्वमसार्वज्ञ्य एव हेतुरिति दूषितम् । तदसत् । यद्यद्विस्तरार्थं शास्त्रं यस्मात्पुरुषविशेषात्संभवति स ततोऽप्यधिकतरविज्ञान इति भाष्येण यो यच्छास्त्रकर्ता स तदर्थतदधिकार्थज्ञानवानिति सामान्यव्याप्तेर्विवक्षितायाएकार्थमात्रज्ञप्रयुक्तानेकार्थबोधकाधुनिकलौकिकवाक्यान्तर्भावेण व्यभिचारस्य कथमपि शङ्कितुमप्यशक्यत्वात् । यो यद्वाक्यप्रमाणप्रणेता स तदर्थतदधिकार्थज्ञानवानिति सामान्यव्या-

प्तिविवक्षातात्पर्यानुरोधेनाप्युक्तव्यभिचारोद्भावनं न सम्यक्। तथा व्याप्तिविवक्षायामपि तादृशव्याप्तौ साध्ये स्वविषयशब्देन स्वप्रयोजकबुबोधयिषाविषयार्थविवक्षया दर्शितलौकिकवाक्यान्तर्भावेण व्यभिचारस्य वारणसंभवात् । प्राशस्त्यपरार्थवादेऽत्याद्युक्तदूषणस्याप्यनवकाशात् । अर्थवादवाक्ये हि तद्वाक्यवाच्यार्थज्ञानद्वारा प्राशस्त्यबोधो भवत्वितीच्छायाः प्रयोजकत्वात् । तद्विषयतायाश्च वायुक्षेपिष्ठत्वादिसंसर्गसाधारणत्वात्। मानान्तरप्राप्तार्थबोधके हि वाक्ये तदर्थप्रमित्युद्देश्यकत्वरूपमेव तात्पर्यं नोपेयते, न तूक्तेच्छानिरूपितोक्तविधविषयत्वमपीति न मानान्तरेत्याद्युक्तदूषणं विचारसहम् । ब्रह्मभिन्ने वेदार्थे तात्त्विकप्रामाण्याभावेऽपि व्यावहारिकप्रामाण्याभ्युपगमेन 'किंच वेदस्यातत्त्वे' इत्यादिनोक्तदूषणं बहुशो दत्तोत्तरत्वाच्चर्वितचर्वणमेव । वेदकर्तृत्वेन वेदार्थज्ञानसिद्धावपि वेदाविषयाधुनिकपुरुषपाणिगतवराटकगङ्गावालुकादिसंख्याज्ञानासिद्धौ कथं ब्रह्मणः सर्वज्ञत्वमिति शङ्कायां यद्यद्विस्तरार्थं शास्त्रमिति सामान्यव्याप्तिबलाद्वेदाविषयज्ञानासिद्धये प्रवृत्तानुमाने 'किंच प्रत्यक्षा' इत्यादिनोक्तदूषणं तूत्स्वप्रवचनमेव । अपि चेत्यादिकमपि न सत् । ईश्वरस्यार्थमुपलभ्य वेदरचयितृत्वेऽपि 'धाता यथापूर्वमकल्पयत्' इत्यादिश्रुत्यनुरोधेन पूर्वकल्पीययथावस्थितवर्णानुपूर्वीतात्पर्यज्ञानाद्यनुसंधानपूर्वकतत्समानानुपूर्वीतात्पर्यकवेदोच्चारयितृत्वस्यैव स्वीकारेण भारतादिवत्सजातीयोच्चारणाद्यनपेक्षोच्चारणकर्तृत्वरूपपौरुषेयत्वस्य वेद आपादनासंभवात् । भारतादेर्हि निरुक्तरूपं पौरुषेयत्वं व्यासादिना प्रमाणान्तरेणार्थमुपलभ्य तदनुसारेणापूर्वां वर्णावलीं मनस्यालोच्य भारतादिकं रचितमित्येतादृशार्थप्रतिपादकैर्भारतादिवचनैरेवावगम्यते । चरमं किंच स्वव्यतिरिक्तेत्यादिकमपि न सत्। भ्रान्तिसिद्धस्य शरीरादेर्भ्रान्तिसिद्धत्वेनावगाहमानस्य पारमार्थिकत्वेनानवगाहमानस्य भगवज्ज्ञानस्य भ्रमत्वायोगस्य बहुशोऽद्वैतग्रन्थेषु प्रदर्शितत्वेनोक्तदूषणतत्परिहारयोः पिष्टपेषणत्वात् । तथा हि—निरुक्तानुमाने वेदकर्तृत्वेन वेदार्थज्ञानस्य भगवति स्वीकारे 'स्वेन

मनः शृणोत ग्रावाणः स प्रजापतिरात्मनो वपामुदखिदत्' इत्यादिवेदवाक्यप्रतिपाद्यासदर्थविषयभ्रान्तिमत्त्वमपि ब्रह्मणि सिध्येदित्याशङ्क्योक्तं कल्पतरौ—ईश्वरस्यासदर्थविषयकज्ञानवत्त्वेऽपि तज्ज्ञानस्य प्रमित्युपयोग्याहार्यज्ञानत्वान्न तेन भ्रान्तिमत्त्वमीश्वरस्य । न ह्यभावप्रमित्युपयोग्यधिकरणे प्रतियोगितावच्छेदकविशिष्टप्रतियोग्यारोपवन्तः पुरुषा धर्मार्थप्रमित्युपयोगिकाकहंसाद्याख्यायिकारचनामूलारोपवन्तो वाल्मिकिव्यासादयो वा बालारोग्यसाधनौषधपानकर्तव्यताप्रमित्युपयोगिबालप्ररोचनार्थं तदभिमतफलान्तरोपन्यासमूलारोपवन्तश्च पित्रादयश्च भ्रान्ता इति व्यपदिश्यन्ते । किंच यत्सत्तानिश्चयरूपं न भवति तेनान्यत्रान्यवैशिष्ट्यावगाहि ज्ञानमप्रमाणमिति तदीयभ्रान्तिविषयतया पुरोवर्तिनि रजतत्ववैशिष्ट्यं गृह्णन्भ्रान्तिज्ञोऽभ्रान्त उच्यत इति । अधिकरणरत्नमालायां तु—

न कर्तृ ब्रह्म वेदस्य किं वा कर्तृ न कर्तृ तत् ।
विरूपनित्यया वाचेत्येवं नित्यत्वकीर्तनात् ॥
कर्तृ निःश्वसिताद्युक्तेर्नित्यत्वं पूर्वसाम्यतः ।
सर्वावभासि वेदस्य कर्तृत्वात्सर्वविद्भवेत् ॥

इत्यादिरीत्यैतदधिकरणरचनामाहुः । सा चेत्थं तत्संमता—जन्माद्यस्येति सूत्रेऽस्येत्यस्य—

जीव ईशो विशुद्धा चिद्विभागस्तु तयोर्द्वयोः ।
अविद्या तच्चितोर्योगः षडस्माकमनादयः ॥

इत्यनेनोक्तानादिषट्कभिन्नस्येत्यर्थः । तथा च जन्मादिसूत्रेऽनादिषट्कभिन्नकर्तृत्वं ब्रह्मलक्षणं विवक्षितं तन्न संभवति । अनादिषट्कभिन्नान्तःपातिवेदस्य नित्यतायाः 'वाचा विरूपनित्यया' इतिश्रुतिसिद्धत्वादित्याशङ्क्यास्मिन्नधिकरणे वेदकारणत्वं ब्रह्मण उच्यते । तेन चाऽऽक्षिप्तं सर्वज्ञत्वमपि । एतस्य चाऽऽनुषङ्गिकत्वान्न पृथक्संगत्यपेक्षा । अत एव वेदानित्यत्वव्यवस्थापनं वियत्पाद एव संगतमिति शङ्कानवकाशः । अत्र तत्कथनस्याऽऽनुषङ्गिकत्वादिति । तत्र चास्य महतो भूतस्य निःश्वसितमिति वाक्यं ब्रह्मणः स्वप्रकाशवेदकर्तृत्वेन सर्वज्ञत्वं

प्रतिपादयति न वेति वेदनित्यत्वानित्यत्वयोर्दर्शितश्रुतिसद्भावात्संशयं प्रदर्श्य नित्यत्वश्रुतेर्न प्रतिपादयतीति पूर्वपक्षमाह पूर्वार्धेन—न कर्तृ ब्रह्म वेदस्य किं वा कर्तृ न कर्तृ तत् । इति ।

श्रुतिद्वयसद्भावेऽपि नित्यत्वश्रुत्यैव पूर्वपक्षे पूर्वोपदर्शिता वेदस्य जन्यत्वे पौरुषेयत्वापत्त्या संदिग्धप्रामाण्यकत्वापत्तिरित्यादिका युक्तिरेवेहापि विवक्षिता । एवं पूर्वपक्षे सिद्धान्तमाह—कर्तृ निःश्वसिताद्युक्तेरिति । अयमत्र सिद्धान्ताभिप्रायः—'अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदः' ( बृ० २ । ४ । १० ) इत्यादिना वेदस्य निःश्वसितत्वमभिधाय वाक्यशेषे—'अयं च लोकः सर्वाणि च भूतान्यस्यैव निःश्वसितानि' इत्यनेन लौकिकप्रपञ्चस्य निःश्वसितत्वोक्तेस्तस्यानायासेन जन्यत्वरूपस्यैव मुख्यार्थबाधेन वक्तव्यतया तत्साम्याद्वेदस्यापि तादृशनिःश्वसितत्वस्य वक्तव्यत्वादेकस्मिन्वाक्य एकपदस्य भिन्नार्थत्वकल्पनायोगात् । पूर्वोपदर्शितयुक्त्या वेदे मुख्यनित्यत्वस्याप्यसंभवाच्च प्रवाहनित्यत्वाभिप्रायैव नित्यत्वश्रुतिः । तदिदमुक्तम्—नित्यत्वं पूर्वसाम्यत इति । तथा च वेदस्य स्वतन्त्रेश्वरकर्तृकत्वेऽपि पूर्ववदेव बुबोधयिषापूर्वकं सजातीयोच्चारणापेक्षोच्चारणकत्वरूपापौरुषेयत्वोपपादनेन संदिग्धप्रामाण्यकत्वदोषनिरासः । आदिकवित्वेन चाऽऽधुनिकाध्यापकाद्विशेष इति । एतेनैवास्य महत इत्यादिवेदवाक्यं ब्रह्मणो वेदकर्तृत्वेन सर्वज्ञत्वं न साधयति । वेदस्य सापेक्षत्वप्रसङ्गादिति पूर्वपक्षे—साधयति । अर्थमुपलभ्य रचयितृत्वस्याभावात् । उच्चारयितृत्वमात्रस्य च सापेक्षत्वानापादकत्वादिति परेषामधिकरणमपास्तमिति चन्द्रिकोक्तमपास्तम् । अध्यापकाद्विशेषस्य दर्शितत्वात् । विवक्षापूर्वकं सजातीयानुपूर्वीकवेदोच्चारयितृत्वस्यास्मत्पूर्वाचार्यग्रन्थेषु लिखितत्वादस्मत्सिद्धान्तत्वेनार्थमुपलभ्य रचयितृत्वाभावादिति लेखनं प्रामादिकमेव । न चैवं वेदकर्तृत्वे सिद्धेऽपि कथं जन्मादिसूत्रोक्तलक्षणाक्षिप्तं सर्वज्ञत्वं ब्रह्मणः सिध्यतीत्यत आह—

सर्वावभासि वेदस्य कर्तृत्वात्सर्वविद्भवेत् । इति ।

सर्वजगद्व्यवस्थावभासककार्यभूतवेदगता शक्तिरुपादानकारणीभूतब्रह्मगतसर्वावभासकशक्तिं दीपगतप्रकाशनशक्तिर्दीपकारणवह्निगतप्रकाशनशक्तिमिव कल्पयति । कार्यकारणयोरेकशक्तित्वादिति वेदकर्तृत्वेन ब्रह्मणः सर्वज्ञत्वं सिध्यतीति सिद्धान्ताभिप्रायः । स्पष्टश्चायं विवरणादौ ।

यत्तु चन्द्रिकायाम्—विवरणे तु यथा दीपगता प्रकाशनशक्तिस्तदुपादाने वह्नौ तथा वेदगतसर्वप्रकाशनशक्तिस्तदुपादाने ब्रह्मणि कार्यकारणयोरेकशक्तित्वादिति निरुक्तमर्थमनूद्य । तन्न । कारणेऽदृष्टस्यापि शक्तिविशेषस्य कार्ये दर्शनात् । किंच त्वन्मतेऽन्धकारदहनादेरपि ब्रह्मोपादानकत्वात्तद्गतप्रकाशनदाहादिशक्तिमद्ब्रह्म स्यात् । अविद्याऽपि शास्त्रोपादानमिति साऽपि सर्वज्ञा स्यात् । किंच परिणामिपरिणामयोरेकशक्तिमत्त्वेऽपि कथमधिष्ठानाध्यस्तयोस्तत् । एतेनाधिष्ठानस्य ब्रह्मणो विज्ञानशक्तिविवर्तरूपं शास्त्रमिति निरस्तम् । अविद्याकाशादेरपि तद्विवर्ततया शास्त्रवत्सर्वप्रकाशकत्वापातात् । रज्ज्वामपि भयकम्पादिशक्तेर्ब्रह्मण्यप्यावरणशक्तेः प्रसङ्गात् । बाह्यागमानामपि ब्रह्मविवर्ततया तदर्थज्ञत्वे ब्रह्मणो भ्रान्तत्वप्रसङ्गाच्च । अपि च त्वया कार्योपादानयोरेकशक्तित्वस्योक्तत्वाद्वेदः स्वयमज्ञ एव जीवान्प्रति प्रकाशक इति ब्रह्मापि तथा स्यात् । तथा च सार्वज्ञ्यार्थं यत्नेऽत्यन्तासार्वज्ञ्यमेवाऽऽपन्नम् । किंच जन्मादिकारणत्वेनैवोपलक्षणेनोपलक्ष्यस्वरूपसिद्धेः किं निर्विशेषत्वप्रतिकूलसार्वज्ञ्यस्फोरणेनेति दूषणमुक्तम् ।

तत्रेदं वक्तव्यम्—कार्यकारणयोरेकशक्तिमत्त्वमित्युत्सर्गः । स च सति बाधकप्रमाणे न प्रवर्तते । तदनवतारे च तत्प्रवृत्तिर्निराबाधैव । घटगतोदकाहरणादिशक्तेर्मृत्पिण्ड इवान्धकारगतावरणशक्तेः स्वप्रकाशरूपत्वेन श्रुतिशतसिद्धे ब्रह्मण्यपादनायोगः । दृष्टान्ते प्रत्यक्षविरोधरूपबाधकस्येवात्रापि स्वप्रकाशत्वबोधकश्रुतिशतविरोधरूपबाधकसत्त्वात् । एवं च बाधकाभावादौत्सर्गिकनियमेन ब्रह्मणि वेदगतसर्वार्थप्रकाशनशक्तिः सिध्यन्ती नापह्नोतुमुचिता । यद्वा वेदगता प्रकाशनशक्तिः स्वाश्रयोपादान-

निष्ठा प्रकाशनशक्तित्वात्। या या प्रकाशनशक्तिः सा सा स्वाश्रयोपादाननिष्ठा। दीपगतप्रकाशनशक्तिवत्। इति विशेषनियम एव कार्यकारणयोरेकशक्तित्वादित्यनेन विवक्षितः। नातो जलाहरणादिकमादाय व्यभिचारावकाशः। कार्यकारणयोरित्यस्योपादानोपादेययोरित्यर्थः। उपादानत्वं च कार्याभिन्नत्वम्। एवं चाऽऽवरणरूपतया 'नीहारेण प्रावृताः' (ऋ०सं०८।३।१७) इत्यादिश्रुतिशतानुभवादिना सिद्धेऽज्ञाने प्रकाशनशक्तेर्बाधात्तस्यास्तदन्यत्रैवोपादाननिष्ठत्वसिद्ध्या फलतो ब्रह्मणः सार्वज्ञ्यसिद्धिर्निराबाधैव। एतेनाविद्याऽपि शास्त्रोपादानमिति साऽपि सर्वज्ञा स्यादिति दूषणं निरालम्बनमेव। तथा किंचेत्याद्यपि। अधिष्ठानस्य ब्रह्मणो विज्ञानशक्तिविवर्तरूपशास्त्रमित्येतदर्थकः 'तस्यैव विज्ञानशक्तिविवर्तत्वान्नामरूपप्रपञ्चस्य' इति पञ्चपादिकाग्रन्थोऽप्युक्तविशेषनियमाभिप्रायः। न तु यो यो ज्ञानशक्तिविवर्तः स तदीयप्रकाशनशक्तिमानिति नियमाभिप्रायः। तथैव विवरणे तदभिप्रायवर्णनादिति। एतेनेत्यादिनोक्तदूषणमपि निरालम्बनमेव।

बाह्यागमानामपीत्यादिकं तु न विचारसहम्। तथा हि— किं बाह्यागमार्था अत्यन्तमसन्तः किंवाऽनिर्वचनीयाः किंवा बाह्यागमजन्यं ज्ञान*मन्यथाख्यातिरूपमिति वा तवानुमतं येन

* अन्यथाख्यातीति। अत्रेदं बोध्यम्—

आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा।
तथाऽनिर्वचनख्यातिरित्येतत्ख्यातिपञ्चकम्॥
योगाचारा माध्यमिकास्तथा मीमांसका अपि।
नैयायिका मायिनश्च प्रायः ख्यातीः क्रमाज्जगुः॥

रामानुजीयास्तु सत्ख्यातिं स्वी कुर्वन्ति। तत्राऽऽत्मख्यातिर्नाम—आत्मनो बुद्धेः ख्यातिर्विषयरूपेण प्रतिभासः। शुक्तिरजतस्थले 'इदं रजतम्' इति बुद्धिरेव रजतरूपेणावभासते। न तु तत्र विषयान्तरापेक्षाऽस्ति। अयं घट इत्यादिषु सर्वत्र बुद्धेरेव विषयाकारोल्लेखसंभवेनात्रापि तथैवौचित्यात्। तथा च प्रयोगः—विमतं रजतं बुद्धिरूपं चक्षुरादिसंप्रयोगमन्तरेणापरोक्षत्वात्। संमतबुद्धिवत्। इति विज्ञानवादिनो बौद्धा मन्यन्ते। शून्यवादिनो बौद्धास्तु—

ब्रह्मणो भ्रान्तत्वमापाद्यते । आद्ये किमापादकमसत् । अर्थप्रकाशनशक्तिमत्त्वमेवेति चेत् । प्रकाशनशक्तिपदेन तत्तदर्थव्यवहारे

---

असत्ख्यातिमाहुः । असतो रजतादेः ख्यातिः प्रतीतिरसत्ख्यातिरिति । मीमांसकास्तु—अख्यातिं मन्यन्ते । तेषामयमाशयः—न ख्यातिरख्यातिः । अप्रतीतिरिति यावत् । शुक्तिरजतस्थले ‘ इदं रजतम् ’ इत्यत्रेदमंश एव प्रत्यक्षप्रतीतिविषयः । न तु रजतांशः । तस्य चक्षुःसंनिकर्षाभावात् । किंतु रजतमिति स्मृत्याऽऽकारदर्शनं बोध्यमिति । नैयायिकास्तु—अन्यथाख्यातिमङ्गी कुर्वन्ति । तथा हि—अन्यस्यान्यरूपेण प्रतीतिरन्यथाख्यातिः । शुक्तिरजतस्थले देशान्तरगतं कालान्तरगतं वा रजतमेव शुक्तिसंप्रयुक्तेन दोषोपहतेनेन्द्रियेण शुक्त्यात्मना गृह्यते । न चैवमननुभूतस्यापि पदार्थस्य ग्रहणं स्यादिति वाच्यम् । सादृश्यादेर्नियामकत्वात् । तथा च प्रयोगः—विवादास्पदं शुक्तिशकलं रजतज्ञानविषयः । रजतोपायान्यत्वे सति रजतार्थिप्रवृत्तिविषयत्वात् । सत्यरजतवत् । रजतस्योपायः खन्यादिस्तस्य रजतार्थिप्रवृत्तिविषयत्वेऽपि रजतज्ञानविषयत्वात्तत्र व्यभिचारः । तद्वारणाय सत्यन्तं विशेषणमिति । मायिनस्तु—अनिर्वचनीयख्यातिं वदन्ति । तेषामयमाशयः—सत्त्वेनासत्त्वेन चानिर्वचनीयस्य रजतादेः ख्यातिः प्रतीतिरनिर्वचनीयख्यातिः । शुक्तिरजतस्थले हि रजतं न सत् । भ्रान्तिबाधयोरसंभवात् । नहि सद्वस्तुनो ज्ञानविषयत्वे भ्रान्तिर्वा बाधः संभवति । नाप्यसत् । ख्यातिबाधयोरसंभवात् । बाधस्य प्रतियोगिपूर्वकत्वेनासतस्तदसंभवात् । किंतु शुक्त्यज्ञानपरिणामभूतं सदसद्भ्यामनिर्वचनीयमपूर्वं रजतमुत्पद्यते । तदेव च तत्र रजतज्ञानविषयः । तथा चोच्यते—

सत्त्वे न भ्रान्तिबाधौ स्तो नासत्त्वे ख्यातिबाधने ।
सदसद्भ्यामनिर्वाच्याऽविद्याऽऽविद्यैः सह भ्रमः ॥ इति ।

आविद्यैर्नामाविद्यापरिणामभूतै रजतादिभिरित्यर्थः । प्रपञ्चस्याप्यनाद्यविद्यापरिणामभूतत्वादनिर्वचनीयत्वमेवेति । रामानुजीयानां त्वयं भावः—सत्ख्यातिर्नाम सत एव रजतादेः ख्यातिः प्रतीतिः । ज्ञानविषयस्य सत्यत्वमिति फलितोऽर्थः । तथा हि—पञ्चीकरणप्रक्रियया पृथिव्यादिषु सर्वत्र सर्वभूतानां विद्यमानत्वाच्छुक्तिकादौ रजतांशस्यापि सत्त्वाज्ज्ञानविषयस्य सत्यत्वं सिध्यति । ननु तर्हि भ्रमत्वं कथमिति चेत् । विषयव्यवहारबाधादिति ब्रूमः । यद्यपि शुक्तिकादौ रजतांशो विद्यते तथाऽपि तस्य स्वल्पत्वान्न तद्व्यवहारो भवतीति तज्ज्ञानं भ्रम इत्युच्यते । शुक्त्यंशभूयस्त्वज्ञानं [illegible] [illegible]निवृत्तिरिति ।

कारणतावच्छेदकमुद्रया प्रयोजकं तत्तदर्थविषयकत्वं विवक्षितम्। कारणतावच्छेदकधर्मस्यापि शक्त्यवच्छेदकतया शक्तिव्यपदेशयोग्यत्वात् । तादृशविषयकत्वं शब्दस्य व्यापारानुबन्धिविषयकत्वस्वीकारात् । वेदस्य तादृशशक्तिमत्त्वमक्षतमेव । स्वप्रकाशज्ञप्तिरूपब्रह्मणोऽपि मायावृत्तिद्वारकप्राकाराख्यविषयताविशेषनिरूपकत्वरूपं तत्तदर्थविषयकत्वं विद्यमानभास्यसर्वार्थनिरूपिताध्यासिकतादात्म्यापरपर्यायमक्षतमेव । एवं चासदर्थतादात्म्यस्यासदर्थनिष्ठाकाराख्यविषयताविशेषनिरूपकत्वस्य बाह्यागमादौ कथंचिद्विद्यमानस्याप्याप्तत्वादिबोधकप्रमाणशतविरोधेन तदुपादाने ब्रह्मण्यनङ्गीकारान्नासदर्थविषयकत्वरूपासदर्थप्रकाशनशक्तिमत्त्वमिति कथं तेन भ्रान्तत्वापादनम् । अस्तु वा कथंचिदसदर्थविषयकत्वं ब्रह्मणस्तथाऽप्यसतोऽप्यर्थांस्तत्त्वेनावगाहमानस्य मायावृत्तिरूपब्रह्मज्ञानस्य भ्रमत्वायोगेन नेश्वरस्य भ्रान्तत्वापत्तिः । एतेन द्वितीयपक्षोऽपि निरस्तः । अनिर्वचनीयमनिर्वचनीयत्वेन जानतो भगवतः शुक्तिरजतमनिर्वचनीयमिति जानतामन्येषामिव भ्रान्तत्वापादनायोगात् । न तृतीयः । वेदगता यादृशयादृशविशिष्टार्थप्रकाशिका या या शक्तिः सा सर्वाऽपि स्वाश्रयोपादाननिष्ठा, विशिष्टार्थप्रकाशनशक्तित्वादिति नियमस्यैवोक्तभङ्ग्या विवक्षणाद्बाह्यागमजन्यप्रतीतिविषयो यादृशविशिष्टार्थस्तादृशविशिष्टार्थप्रकाशनशक्तिमति ब्रह्मणि न भ्रान्तत्वापत्तिः । आपादकाभावात् । अपि चेत्यादिकमप्ययुक्तम् । कार्योपादानयोरेकशक्तिमत्त्वमित्युक्तेऽपि कार्योपादानयोरेकधर्मत्वानुक्तेः कथं वेदस्याज्ञत्वे ब्रह्मणोऽज्ञत्वापत्तिः । अज्ञत्वस्य शक्तिरूपत्वाभावात् । कार्योपादानयोरेकशक्तिमत्त्वमिति कार्योपादानयोरेकधर्मत्वमिति चोत्सर्ग एव न नियम इति पूर्वमेवाऽऽवेदितत्वात् । उत्सर्गस्य च बाधकाभाव एव प्रवृत्तेः । सर्वज्ञत्वबोधकश्रुतिविरोधादेव वेदगताज्ञत्वबलान्न ब्रह्मणि तत्प्रसङ्गः । किंचेत्यादिकं तु जन्मादिसूत्रोक्तं कारणत्वलक्षणं न संभवति । तदुपपादकसर्वज्ञत्वस्य ब्रह्मण्यसंभवादिति पूर्वपक्षनिरासाय कारणत्वोपयोगि सर्वज्ञत्वं वेदकर्तृत्वात्समर्थ्यत इति पूर्वोपदर्शितपूर्वपक्षसिद्धान्तरचनासम-

न्मतसिद्धमाच्छाद्य केवलमुत्प्रेक्षामात्रमिति सुधियो विदां-कुर्वन्तु ।

आनन्दतीर्थीयास्तु पूर्वसूत्रोक्तजगज्जन्मादिकारणत्वलक्षणस्यातिव्याप्तिनिरासकं विष्ण्वेकनिष्ठलक्षणप्रमाणप्रतिपादनपरं सूत्रमिति वदन्ति । तथा हि चन्द्रिकायाम्—उक्तलक्षणस्यातिव्याप्तिनिरासाय प्रमाणमुच्यत इति संगतिमुक्त्वा जगत्कारणत्वं किं विष्णोरेवोतान्यस्यापीति चिन्तां प्रदर्श्यानुमानेन रुद्रादीनामपि जगत्कारणत्वसिद्धेरतिव्याप्तिरिति × पूर्वपक्षयित्वा—

---

× पूर्वपक्षयित्वेति । आगमसहायेन पूर्वपक्षमुक्त्वाऽनुमानसहायेन बहुप्रकारकं पूर्वपक्षं कृत्वेत्यर्थः । तथा हि—'जन्माद्यस्य यतः (१।१।२) ' इत्यनेन जगज्जन्मादिकारणत्वरूपं यद्ब्रह्मणो लक्षणमुक्तं तत्साक्षाच्छिवप्रणीतपाशुपतागमानुरोधेन रुद्रेऽतिव्याप्तमिति पूर्वपक्षः । अनुमानावष्टम्भेन पूर्वपक्षस्तु बहुप्रकारकः संभवति । स च यथा—क्षित्यादिकं पक्षीकृत्य सकर्तृकत्वं साध्यते कार्यत्वाद्घटवदित्यनुमानेन रुद्रादावतिव्याप्तिः । ननु 'अनुमानं पक्षीकृत्याप्रामाण्यं साध्यतेऽतिप्रसङ्गाद्धेतोः ' इत्यनुमानेनानुमानस्य प्रामाण्याभावान्न रुद्रादिषु पूर्वोक्तलक्षणस्यातिव्याप्तिरिति चेत् । अत्रोच्यते—अतिप्रसङ्गहेतुकानुमानं प्रमाणं चेत्तर्ह्यनुमानप्रामाण्यं स्वीकृत्य सामान्यानुमानप्रामाण्यनिषेधे स्वक्रियाविरोधः । अप्रमाणं चेदप्रमाणभूतेनोक्तानुमानेन सामान्यानुमानप्रामाण्यनिषेधो दुर्वचः । तथा चातिव्याप्तिः सुस्थैवेत्येकः पक्षः । अथवा 'शिवं पक्षीकृत्य जगज्जन्मादिकर्तृत्वं साध्यते सर्वज्ञत्वाद्धेतोः, यत्र यत्र जगज्जन्मादिकर्तृत्वाभावस्तत्र तत्र सर्वज्ञत्वाभावः ' इत्यनुमानेनातिव्याप्तिः । सर्वज्ञत्वं च शैवागमसिद्धम् । तथा चाऽऽगमसहायेनानुमानेनायं पूर्वपक्ष इति द्वितीयः पक्षः । यद्वा 'महाकल्पत्वं पक्षीकृत्य महाकल्पत्वाश्रयसमानजातीयकल्पवृत्त्यादिकार्यकर्तृभिन्नकर्तृकादिकार्यवदवृत्तित्वं साध्यते कल्पत्वव्याप्यत्वाद्धेतोः, अवान्तरकल्पत्ववत् ' इत्यनुमानेन नानाकर्तृत्वं सिद्धम् । अत्र महाकल्पत्वाश्रयसमानजातीयो यः कल्पस्तद्वृत्ति यदादिकार्यं तत्कर्तृभिन्नः कर्ता यस्य तादृशकार्यवदवृत्तित्वमिति विग्रहो बोध्यः । महाकल्पोऽन्यमहाकल्पनिष्ठादिकर्तृभिन्नादिकर्तृमानिति निष्कृष्टोऽर्थः । एवमग्रेऽप्यूह्यम् । तथा 'महाकल्पत्वं पक्षीकृत्य महाकल्पत्वाश्रयसमानजातीयकल्पवृत्त्यादिकार्यपातृभिन्नपात्रादिकार्यवदवृत्तित्वं साध्यते कल्पत्वव्याप्यत्वात् ' इत्यनुमानेन पालकनानात्वं सिध्यति । तथा

चक्षुरादि यथाऽशक्तं रसगन्धादिवस्तुषु ।
अनुमाऽपि तथाऽशक्ता धर्मब्रह्मादिवस्तुषु ॥

इत्यादिना विष्ण्वेकनिष्ठजगत्कारणत्वे शास्त्रप्रमाणकेऽनुमानं न प्रमाणं कार्यत्वादिहेतूनामन्यत्र निरासात् । 'नावेदवित्' (तै० ३।१२।९) इति श्रुत्या जगत्कारणेऽनुमानप्रामाण्यनिरासाच्चेति सिद्धान्तः कृतः ।

तत्रेदमुच्यते—कथं रुद्रादेर्जगत्कारणत्वमनुमानेनाऽऽशङ्क्यते । तन्मात्रवृत्तिकारणताग्राहकानुमानानुपलम्भात् । न च कार्यं सकर्तृकं कार्यत्वाद्घटवदित्यनुमानेन तत्सिद्धिः संभवति । तेन सामान्यतः कर्तृसिद्धावपि विशिष्य रुद्रः कर्ता इत्यस्यासिद्धेः ।

यत्तु 'नावेदविन्मनुते तं बृहन्तम्' (तै० ३ । १२ । ९) इति श्रुत्या विष्णोरनुमानगम्यत्वनिषेधान्निरुक्तानुमानं विष्णव्यतिरिक्ते रुद्रादावेव जगत्कर्तरि परिशेषात्पर्यवस्यतीति चन्द्रिकायामुक्तम् । तदसत् । एवं सति 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानः' इत्यादिमहोपनिषत्स्थश्रुत्या 'नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते' इत्यादि नारायणोपनिषत्स्थश्रुत्या 'न कारणं कारणानां धाता' इत्यादिश्रुत्या च रुद्रादेः प्रलयकालवर्तित्वकारणत्वयोर्निषेधान्निरुक्तानुमानस्य रुद्रकर्तृत्वपरिशेषपर्यवसानासंभवात् ।

---

'महाकल्पत्वं पक्षीकृत्य महाकल्पत्वाश्रयसमानजातीयकल्पवृत्त्यादिकार्यसंहर्तृभिन्नसंहर्त्रादिकार्यवद्वृत्तित्वं साध्यते कल्पत्वव्याप्यत्वात्' इत्यनुमानेन संहर्तृनानात्वं सिध्यति । एवं च कल्पभेदेन कर्तृपातृसंहर्तृणां नानात्वसिद्धिः । अथवा 'जगत्संहर्तृत्वं पक्षीकृत्य जगत्स्रष्ट्रेकनिष्ठत्वाभावः साध्यते संहारशक्तित्वाद्धेतोः, घटसंहारशक्तिवत्' इत्यनुमानेनैकस्मिन्नपि कल्पे कर्त्रपेक्षया संहर्तुर्भेदः सिध्यति । तथा महीमहीधरादि पक्षीकृत्य नानाकर्तृकत्वं साध्यते विचित्रकार्यत्वात्प्रासादादिवत्' इत्यनुमानेन नानाकर्तृत्वं सिध्यति । एवं च सर्वजगज्जन्मादिकर्तृत्वं ब्रह्मणो लक्षणं चेदसंभवः । कतिपयकर्तृत्वं चेदतिव्याप्तिरिति तृतीयः पक्षः । एतादृशा अन्येऽपि पक्षाः संभवन्ति । एवं चैतादृशबहुप्रकारैः पूर्वपक्षयित्वा 'चक्षुरादि' इत्यादिरीत्या सिद्धान्तः कृतः ।

यत्तु श्रुतिमनादृत्याऽऽगमं सहायीकृत्यानुमानावष्टम्भेन रुद्रादीनां श्रुतिविरुद्धस्यापि जगत्कारणत्वस्याङ्गीकारेण समयपादे माध्यमिकमतावलम्बनेनैवात्र पूर्वपक्षप्रवृत्तिर्निराबाधा श्रौते विष्णावानुमानिककारणत्वं तु न संभवति । स्वाप्रामाण्यबोधकश्रुतेरनुमानसहायत्वासंभवात् । यद्वा 'यदाऽतमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः' (श्वे०४।१८) इति श्रुतिविरोधेन 'एको ह वै नारायण आसीत्' इति श्रुतेरर्थान्तरपरत्वमर्थवादत्वं वाऽङ्गीकृत्य पूर्वपक्षसंभवः । उक्तं च चन्द्रिकायाम्—न च विष्णोरन्यस्य कारणत्वनिषेधक उदाहृतश्रुतिविरोधः । तासामुक्तयुक्तिविरोधेन विष्णोः कारणत्वविधिपरत्वादिति । तदसत् । शास्त्रानादरेण पूर्वपक्षे शास्त्राप्रामाण्यवादिनं पूर्वपक्षिणं शास्त्रैकप्रमाणसमधिगम्यविष्ण्वेकनिष्ठजगत्कारणत्वात्मकशास्त्रयोनित्वेन तदसिद्धेन सिद्धान्तकारणायोगाच्चन्द्रिकाकर्तुस्तदनभिमतत्वाच्च । पूर्वपक्ष्यनभिमतेन हेतुना सिद्धान्तकरणस्य तदनुमतत्वे 'अत्र परेषां भाष्ये शास्त्रस्य योनिरिति विग्रहमाश्रित्य ऋगादिकारणत्वं ब्रह्मण उच्यते, पूर्वसूत्रेऽर्थतो लब्धस्य सार्वज्ञ्यस्य स्फोरणार्थमित्युक्तमित्यस्मन्मतमनूद्य दूषणेषु सांख्यानङ्गीकृतेन शास्त्रयोनित्वेन सार्वज्ञ्यसाधनायोगाच्च' इति दूषणस्य स्वशिरस्ताडनरूपतापत्त्योन्मत्तप्रलपितत्वापत्तेः ।

यद्वा—यदाऽतमस्तन्न दिवा न रात्रिरित्यादिना पूर्वपक्षप्रवृत्त्युपपादनमपि न सत् । त्वदीयोद्घोषरीत्या निरवकाशनारायणश्रुतेः । योगादिना सावकाशशिवपदादिघटितश्रुत्याऽर्थान्तरपरत्वस्य त्वत्पूर्वपक्षिणा शङ्कितुमशक्यत्वान्नारायणपदस्य निरवकाशत्वम् । योगादिना नारायणशब्दस्यान्यपरत्वे णत्वानुपपत्तिरिति त्वदीयैरुद्घोषात्तव संमतं न विस्मरणार्हम् । नहि नारायणशब्दस्य निरवकाशत्वमेतदधिकरणसिद्धान्तयुक्तित्वेनाभिमतम् । येन तदाच्छाद्य पूर्वपक्षप्रवृत्तिः स्यात् । यदाऽतम इत्यादीनामपि शिवस्य कारणत्वविधिपरत्वेन शिव एव केवल इत्यादेरप्यर्थवादपरत्वस्य वक्तुं शक्यत्वेन विनिगमकाभावेन

किमनुरोधेन कस्यार्थान्तरत्वमित्यनिर्णयेन पूर्वपक्षाप्रवृत्तेर्दुर्धरत्वात्। किंच श्रुत्यनादरेण पूर्वपक्षे 'नावेदवित्' (तै० ३।१२।९) इत्यादिश्रुत्या विष्णोरनुमानगम्यत्वनिषेधान्निरुक्तानुमानं विष्णवतिरिक्ते रुद्रादावेव जगत्कर्तरि परिशेषात्पर्यवस्यतीति चन्द्रिकायां पूर्वपक्ष्याशयवर्णनमत्यन्तासंगतमेव स्यात्। 'एको ह वै नारायणः' इत्यादेः 'शिव एव केवलः' (श्वे० ४।१८) इति श्रुत्यनुरोधेनार्थान्तरपरत्वाभिप्रायेण पूर्वपक्षे 'तेजसा सौम्य शुङ्गेन सन्मूलमन्विच्छ' (छा० ६।८।४) 'पण्डितो मेधावी गान्धारानेवोपसंपद्यते, एवमिह' (छा०६।१४।२) इत्यादिश्रुतिभिरीश्वरस्यानुमानगम्यत्वस्याप्युक्तेर्नावेदविदित्यस्या अप्यर्थान्तरत्वसंभावनायामुक्तानुमानेन रुद्रपरिशेषस्य पूर्वपक्षिणा वक्तुमशक्यत्वाच्च।

यदपि शिवो जगत्कर्ता सर्वज्ञत्वादित्यादिना व्यतिरेकिणाऽनुमानेन विशिष्य शिवादिर्जगत्कर्तेति सिध्यतीति चन्द्रिकायामुक्तम्। तदपि न सत्। 'सर्वज्ञः सुगतो बुद्धः' (अम० १।१।१३) इति सर्वज्ञत्वप्रसिद्धेर्बुद्धसाधारण्यात्सर्वज्ञत्वहेतोर्जगत्कारणत्वव्यभिचारित्वात्। योगिनामपि सर्वज्ञत्वस्य योगशास्त्रादिसिद्धत्वेन तत्र व्यभिचाराच्च। न च धर्माद्यनपेक्षसर्वज्ञत्वादिकमेव सर्वविषयकनित्यज्ञानादिमत्त्वपर्यवसितं हेतुः। तच्च शिवादेरागमसिद्धं न योगिनां बुद्धादेश्च। तेषां सर्वविषयकज्ञानस्य योगजधर्मनिमित्तकत्वेन जन्यत्वात्। उक्तं च चन्द्रिकायाम्—सर्वज्ञत्वादिकं च तस्याऽऽगमसिद्धमिति। आगमसहायेनात्र पूर्वपक्ष इति वक्तुं शक्यम्। तथा सति 'स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्' (ब्र० सू० २।१।१) इति द्वितीयाध्यायस्थाद्यस्मृत्यधिकरणेनास्य पौनरुक्त्यप्रसङ्गः सर्वज्ञशिवप्रणीतागमेन। शिवस्यैव जगत्कर्तृत्वं न विष्णोरिति पूर्वपक्षयित्वाऽऽप्ततमविष्ण्वादिप्रणीतपाञ्चरात्रादिप्रबलस्मृतिसहकृतवेदोक्तजगत्कर्तृत्वं विष्णोरेवेति तत्र सिद्धान्तकरणात्।

यत्तु नामलिङ्गानुशासनरूपकोशस्य संज्ञासंज्ञिभावसंबन्धप्रमापकस्य न बुद्धादेः सर्वज्ञत्वसाधकत्वम्। अन्यथा कोशेन

वाजिकर्णादिकं वृक्षादेरपि सिध्येदिति नोक्तसर्वज्ञत्वहेतोर्जगत्कर्तृत्वव्यभिचारिता । सर्वविषयकलौकिकज्ञानवत्त्वरूपसर्वज्ञत्वस्यैव हेतुत्वेन योगिज्ञाने विषयताविशेषात्मकलौकिकत्वस्याभावेन तादृशहेतोर्योगिषु सत्त्वे प्रमाणाभावाच्च । नोक्तसर्वज्ञत्वहेतोरुक्तसाध्यव्यभिचारिताऽपि । बुद्धस्य सर्वविषयकज्ञानस्य योगजधर्मनिमित्तकत्वेन जन्यत्वकथनं प्रामादिकम् । विष्णववतारे तथा संभवात् । प्रसिद्धं च बुद्धस्य नवमावतारत्वमिति । तदसत् । 'विष्णुर्नारायणः कृष्णः' (अम० १।१।१८) इत्यादिसंज्ञासंज्ञिभावसंबन्धबोधकेनापि कोशेन व्यापकत्वरूपस्य—

कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
आपो नारा इति प्रोक्ताः ॥

इत्यादिनोक्तयोगार्थबोधस्य सकलाभियुक्तसंमतस्यैव 'सर्वज्ञः सुगतः' इति कोशेनासति बाधके सर्वज्ञत्वबोधनस्य निरपवादतया तादृशकोशस्य बुद्धादेः सर्वज्ञत्वे प्रमाणत्वानपवादात् । योगिप्रत्यक्षबाधेन न वृक्षादीनां कोशेन वाजिकर्णादिसिद्धिः । योगिनामतीतानागतसर्वपदार्थापरोक्षज्ञानस्य योगशास्त्रसिद्धस्य तन्त्रान्तरसिद्धस्य चापलापायोगेन तदीयसर्वविषयकज्ञाने लौकिकत्वाभावोक्तिः प्रामादिकैव । जगत्कारणत्वलक्षणालक्ष्ये बुद्धादौ सर्वज्ञत्वहेतोर्व्यभिचारवारणाय विवक्षितसर्वविषयकनित्यज्ञानवत्त्वहेतोर्बुद्धादावसिद्धिकथनायैव बुद्धज्ञानस्य जन्यत्वोक्तेर्विष्णवतारे तत्संभवेऽपि तस्योक्तलक्षणलक्ष्यत्वेन तत्र जगत्कारणत्वसत्त्वेन च व्यभिचारानवकाशात्प्रकृतासंगत्यभावेन तदुक्तेः प्रामादिकत्वोक्तिरेव प्रामादिकी ।

यदपि सर्वज्ञत्वेन जगत्कारणत्वे रुद्रेऽनुमीयमाने योगिनामपि पक्षकुक्षौ निक्षेपेण पूर्वपक्षे कथं तत्र व्यभिचारोद्भावनम् । न हि शिवस्यैव जगत्कारणत्वमिति पूर्वपक्षः । अपि तु शक्तिसूर्यादीनामपि । तदपि मन्दम् । सर्वज्ञत्वादिकं च तस्याऽऽगमासिद्धमित्यागमसहायेनात्र पूर्वपक्ष इति वक्तुस्तत्र शैवाद्यागमानामिव शाक्तसौराद्यागमानाद्युक्त्यभेन तत्सिद्धसर्वज्ञत्वहेतुना

शक्तिसूर्यादीनां पक्षकोटिनिवेशेन तत्रातिव्याप्तिपूर्वपक्षस्य त्वदीयानां संमतत्वेऽपि योग्यागमानामनुपलम्भेन योगिनां पक्षकोटिनिवेशस्य त्वदीयासंमतत्वात् । अन्यथा कारणत्वस्य शास्त्रयोनित्वेऽपि वेदेऽपि क्वचित्क्वचिद्रुद्रादीनां जगत्कारणत्वप्रतिपादनाज्जगत्कारणत्वलक्षणस्य रुद्रादावतिव्याप्तिरित्याक्षेपेण सम्यग्विचारितादुपक्रमादितात्पर्यलिङ्गरूपात्समन्वयाद्विष्णुरेव जगत्कर्तृतया वेदप्रतिपाद्यः, न रुद्रादिः । अन्यथाप्रतिपत्तिरज्ञानमूलेति सिद्धान्तकरणायोगात् । रुद्रादीनामिव योगिनां वेदे जगत्कारणत्वेनाप्रतीतेः । शास्त्रप्रमाणकजगत्कारणत्वलक्षणस्य तत्रातिव्याप्त्यप्रसक्तेः । तथा हि चन्द्रिकायाम्—कारणत्वस्य शास्त्रयोनित्वेऽप्यतिव्याप्तिः । काव्यव्याख्यानात्काव्यस्येव वेदव्याख्यानरूपाच्छैवाद्यागमान्मानान्तराविरोधाद्रुद्रादेः कारणत्वे वेदतात्पर्यनिश्चयात् । 'ज्ञात्वा शिवं शान्तिमत्यन्तमेति' श्वे० ४ । १४ ) इत्यादिशास्त्रस्य मोक्षदत्वादिना शिवपरत्वात् । 'सर्वे वेदा यत्पदमामनन्ति' ( का० २ । १५ ) इत्यादिश्रुतेः शिवे तात्पर्यमित्येवंपरतयाऽऽगमैरेव व्याख्यातत्वाच्चेति समन्वयाधिकरणे पूर्वपक्षो दर्शितः । तत्त्वप्रकाशिकायामपि—रुद्रादीनामपि कारणत्वेन शास्त्रयोनित्वम् । पाशुपतादिशास्त्रेषु रुद्रादिर्जगत्कारणत्वेन वेदवेद्य इति निगदितत्वात् । न च तेषामप्रामाण्येन न साधकत्वम् । वेदेऽपि तेषां कारणतया प्रतीयमानत्वात् । प्रतीतिसध्रीचीनस्य च प्रामाण्योपपत्तेरिति पूर्वपक्षो दर्शितः । तथा च योगिनां पक्षकुक्षौ निवेशेन पूर्वपक्षोपपादनं स्वकीयग्रन्थानालोचननिबन्धनमेवेति तद्विदां स्पष्टम् ।

यदप्यस्तु व्यभिचारः । निर्दुष्टानुमानैर्न च पूर्वपक्षप्रवृत्तिरिति नियमाभावात् । तथा सति सिद्धान्तानुपपत्तेरिति । तदपि न सत् । निर्दुष्टचक्षुरादेरपि यथा रसगन्धादिग्रहणे न शक्तिस्तथा व्यभिचारदोषरहितानुमानस्यापि नियतप्रामाण्यकश्रुतिसाहाय्याभावे—

> यत्नेन साधितोऽप्यर्थः कुशलैरनुमातृभिः ।
> ततो बुद्धिमताऽन्येन ह्यन्यथैवोपपाद्यते ॥

इति रीत्या प्रतिपक्षसंभावनयाऽनियतप्रामाण्येन—

अचिन्त्याः खलु ये भावा न तांस्तर्केषु योजयेत् ।

इति भारतोक्तेश्च तर्कागोचराचिन्त्यपरब्रह्मणि कारणे शक्तिर्नास्तीत्यनेनैव सिद्धान्तोपपत्तेः ।

चक्षुरादि यथाऽशक्तं रसगन्धादिवस्तुषु ।
अनुमाऽपि तथाऽशक्ता धर्मब्रह्मादिवस्तुषु ॥

इत्यनेन तथैव त्वदीयैः सिद्धान्तकरणाच्च व्याप्तिपक्षधर्मताशून्यव्यभिचारदुष्टानुमानेनातिव्याप्तिपूर्वपक्षकरणस्यात्यन्तमनुचितत्वात् ।

यत्तु—आगमसिद्धसर्वविषयकनित्यज्ञानत्वरूपसर्वज्ञत्वहेतुकेनाऽऽगमसहायेन रुद्रादेरत्र जगत्कारणत्वेनातिव्याप्तिपूर्वपक्षेऽपि न स्मृत्यधिकरणेनास्य पौनरुक्त्यम् । अत्र कर्तृत्वं विष्णोरन्यस्य वेति संदिह्य विष्णोरेवेति सिद्धान्त्यते । स्मृत्यधिकरणे तु विष्णोर्जगत्कर्तृत्वं युक्तमयुक्तं वेति संदिह्य युक्तमिति सिद्धान्त्यत इति विषयभेदादिति । तच्चन्द्रिकायामेव—एकेनैव सिद्धान्तेन श्रुत्यर्थाभ्यामुक्तसंदेहद्वयमूलकपूर्वपक्षद्वयनिराससंभवे संदेहप्रकारभेदमात्रेणाधिकरणभेदानौचित्यात् । अन्यथाऽतिप्रसङ्गात् । अत्राऽऽगमाविरोधपरिहाराभावस्येव स्मृत्यनन्तर्गतयुक्तिविरोधपरिहाराभावस्य तत्र सत्त्वेन द्वयोः साम्याच्च । एतेन समयाविगानं तत्र संदेहबीजमत्र तु पूर्वन्यायप्रसिद्धिरिति निरस्तम् । निरस्तं चात्रार्थादागमप्रामाण्यनिरासेऽपि कण्ठतस्तन्निरासाय पुनरुक्तिरिति । कण्ठतो निषेधे विशेषानुपलम्भात् । अन्यथाऽनुमानस्यापि कण्ठतः कारणप्रामाण्यनिषेधायाधिकरणान्तरारम्भप्रसङ्गः । न चात्रानुमानागमयोर्द्वयोर्निषेधस्तत्र त्वागममात्रस्येति न पौनरुक्त्यमिति वाच्यम् । तथाऽपि तेनास्याऽऽगमनिरासांशे पौनरुक्त्यापरिहारात् । अनेन तस्य पौनरुक्त्यपरिहाराच्चेत्यादिना तत्र दूषणोक्तेः । असंभवपर्यवसायिनस्तदयुक्तत्वस्यैव प्रथमं निरासौचित्यात् । अतिव्याप्तिपर्यवसायिनोऽन्यत्र तत्सत्त्वस्यानन्तरमेव निरसितुं युक्तत्वाच्च ।

यत्त्वसंभवनिरासस्य प्रथमं प्राप्तत्वेऽपि द्वितीयाध्यायादिनां संगतत्वात्तत्रोक्तेः। असंभवस्य प्रथमं निराकरणमतिव्याप्तेर्वेत्यत्र नियामकाभावाच्च। प्रत्युत लक्षणप्रयोजनेतरभेदानुमितिजनकव्याप्तिपक्षधर्मताविषयकपरामर्शे प्रथमोपस्थितव्याप्तिनिर्वाहकातिव्याप्तेरादौ पक्षधर्मतानिर्वाहकासंभवपरिहारस्यानन्तरमेव कर्तुमुचितत्वाच्चेति। तदतिमन्दम्। असंभवनिरासस्य प्रथमं कर्तुं योग्यत्वे प्रथमाध्याये तदकरणेन तस्य द्वितीयाध्यायसंगतत्वकरणानौचित्यापरिहारात्। लक्षणदोषेषु वक्तव्येषु सति संभवे प्रथममसंभवोद्भावनस्यैव न्यायवित्संप्रदायसिद्धत्वेन तस्यैवासंभवनिराकरणप्राथम्ये गमकत्वात्। व्याप्त्यादिलक्षणेऽसंभवाव्याप्तिदोषद्वयसंभावनायामसंभवोऽव्याप्तिर्वेति सामान्यनिरुक्तिपञ्चलक्षणीचतुर्दशलक्षणान्तर्गतद्वितीयस्वलक्षणप्रथममिश्रलक्षणादिषु गदाधरलेखनेनैतद्गमकस्य तद्विदां स्पष्टत्वात्। व्याप्तिपक्षधर्मताविषयकपरामर्शे व्याप्तेः प्रथममुपस्थितत्वेऽपि पक्षे हेतुज्ञानाधीनव्याप्तिस्मृत्यात्मकव्याप्तिविशिष्टहेतुज्ञानाधीनविशिष्टवैशिष्ट्या[वगा]हिपरामर्शनिर्वाहकत्वेन हेतौ पक्षधर्मताया व्याप्तेः पूर्वमेवोपस्थित्यपेक्षणेन तन्निर्वाहकासंभवपरिहारस्यैवोक्तगमकेन कर्तुमौचित्याच्चेति न किंचिदेतत्।

यत्तु चन्द्रिकायामागमासिद्धसर्वज्ञत्वादिहेतुना रुद्रादिरेव जगत्कर्तेति पूर्वपक्षे स्मृत्यधिकरणेन पौनरुक्त्यमाशङ्क्य स्मृत्यधिकरणे पाशुपतादिस्मृत्या पूर्वपक्षे पाञ्चरात्रादिस्मृत्या सिद्धान्तः। इह तु स्मृत्यनुमानाभ्यां पूर्वपक्षे श्रुत्यादिरूपशास्त्रेण सिद्धान्तः। अत एव तत्र सूत्रे नान्यस्मृतीति स्मृतिशब्दः। अत्र तु शास्त्रमितिशब्द इति। तदसत्। श्रुतिविरोधादप्रमाणतयाऽध्यवसितेनाऽऽगमेन तत्र पुनः पूर्वपक्षानुत्थितेः। ननु सर्वज्ञाप्तोक्तपाशुपतादिस्मृतिविरोधाद्विगुणायाः पिपीलिकालिपिसंनिभायाः श्रुतेर्दुर्बलतया बाधेन तत्र पूर्वपक्षोदय इति चन्द्रिकायामुक्तमेवेति चेत्। सत्यमुक्तम्। असदुक्तमेव तत्। शास्त्रारम्भस्य वेदप्रामाण्योपजीवकत्वात्तद्विरोधेन पूर्वपक्षसिद्धान्तग्रन्थनरूपन्यायोत्थानस्यात्यन्तमसंगतत्वात्। वेदाध्ययनपूर्वकं मतवाक्यमस्य वाक्य

स्यायमर्थ इति यावच्छक्ति गुरुमुखाद्वेदार्थग्रहणरूपश्रवणानन्तरं तस्य दाढर्च्याय युक्त्यनुसंधानात्मकमननरूपशास्त्रविचारे प्रवृत्तः शिष्यो ब्रह्ममीमांसयाऽङ्गत्वेनापेक्ष्यमाणब्रह्मतर्केण गुरुमुखात्सर्वापेक्षया वेदप्रामाण्यमवधार्य तत्त्यागेन ब्रह्मतर्कसिद्धप्रामाण्यकवेदविरुद्धार्थे वेदापेक्षया ब्रह्मतर्कावगतदौर्बल्यवत्या पाशुपतादिस्मृत्या रुद्रस्य जगत्कारणत्वं कथं पूर्वपक्षयेत् । योग्याशङ्का हि पूर्वपक्षो नाम । ब्रह्मतर्कस्य ब्रह्ममीमांसाङ्गत्वं च—

> प्रमाणन्यायमीमांसा क्रियते तर्कशास्त्रतः
> मानन्यायैस्तु तत्सिद्धैर्मीमांसा मेयशोधनम् ॥

इत्यनुव्याख्यानोक्तरीत्या तव मतसिद्धमित्यादिकं सविस्तरं निरूपितं दीक्षितचरणैर्मध्वमुखमर्दनादौ । जिज्ञासाधिकरणे चन्द्रिकोक्तानन्दतीर्थीयाधिकरणयोजनादूषणावसरे संगृहीतमस्माभिर्विस्तरत इति नेह लिख्यते ।

यत्तु ब्रह्मतर्के वेदशैवागमयोः प्रामाण्याप्रामाण्यव्यवस्थायाः कृतत्वेऽपि कलिमलावगुण्ठितानामल्पायुःप्रज्ञानां कृत्स्नं ब्रह्मतर्कमधीत्य ब्रह्ममीमांसाध्ययनेऽसमर्थानामुपकृत्यै प्रवृत्तः कृपालुर्भगवान्बादरायणो ब्रह्मसूत्रेष्वेव प्रमेयविशेषे दुरागमालम्बप्राप्तपूर्वपक्षमुत्प्रेक्ष्य तन्निराकरणाय दुरागमाप्रामाण्यं सूचयामासेत्यङ्गीकारेणादोषात् । अवश्यं चैतद्वक्तव्यं परेणापि । अन्यथा विधिवदधीतवेदवेदाङ्गत्वेनाऽऽपाततोऽधिगताखिलवेदार्थोऽस्मिञ्जन्मनि जन्मान्तरे वा काम्यनिषिद्धवर्जनपुरःसरं नित्यनैमित्तिकप्रायश्चित्तोपासनानुष्ठानेन निर्गताखिलकल्मषतया नितान्त(मल)स्वान्तो ब्रह्मैव नित्यमनित्यमन्यदिति विवेकवानिहामुत्रफलभोगविरक्तः शान्तो दान्तः संन्यासी तितिक्षुः समाहितो गुरुवेदान्तवाक्यादिषु श्रद्धावान्प्रमाता ब्रह्ममीमांसायामधिकारीति त्वदीयैरुक्तत्वयैतादृशस्य सकलपापशून्यस्याधिगताखिलवेदार्थस्य ब्रह्मैव नित्यमिति जानतः परिव्राजकस्य विरक्तस्योक्तश्रद्धावतः शिष्यस्य सांख्यबौद्धाविवसनादितन्त्रबोधितार्थेषु श्रवणमात्रेण दुरत्ययकिल्बिषसाधनेषु शङ्कया अप्यनुन्मेषेण तन्निरासाय तत्तदधिकरणानामनारम्भ एव प्रसज्येतेति स्वकीयाचार्याणां

रुतमनुरौति तत्स्वकीयचन्द्रिकाग्रन्थपूर्वापरानुसंधानविधुरतया तदीयभावानवबोधनिबन्धनमस्मदीयग्रन्थसिद्धान्ततात्पर्यानवबोधनिबन्धनं च । तथा हि—प्रमेयविशेषे ब्रह्मणि वेदान्तानां प्रामाण्यानादरेण शास्त्रानारम्भं पूर्वपक्षयित्वा तत्प्रामाण्योपजीवकस्य शास्त्रारम्भस्य जिज्ञासाधिकरण एव चन्द्रिकायां समर्थितत्वेन तद्विस्मृत्य शास्त्रारम्भोपजीव्यवेदप्रामाण्यमनादृत्यात्र पूर्वपक्षप्रवृत्तेस्तदनभिप्रेतत्वस्यातिस्पष्टत्वात् । उक्तं च चन्द्रिकायां जिज्ञासाधिकरणे पूर्वपक्षोपपादनावसरे—सिद्धचैतन्यबोधने श्रुतेरनुवादकत्वलक्षणमप्रामाण्यं वायुक्षेपिष्ठादिवाक्यवत्सत्त्वम् । वेदान्ताध्ययनं तु जपार्थमेवास्त्विति ब्रह्मतर्केण वेदप्रामाण्यव्यवस्थापनेऽपि कृत्स्नं ब्रह्मतर्कमधीत्य ब्रह्ममीमांसाध्ययनेऽसमर्थानां ब्रह्मसूत्रेष्वेव प्रमेयविशेषे दुरागमालम्बप्राप्तपूर्वपक्षत्सुप्रेक्ष्य तन्निराकरणाय दुरागमाप्रामाण्यसूचनार्थं चेदेतदधिकरणीयपूर्वपक्षसिद्धान्तग्रन्थनरूपन्यायप्रवृत्तिस्तदनुमता तदा वेदान्तानां बहुमुखतया परतन्त्रप्रज्ञानां पुंसां तैः स्वतोऽर्थनिश्चयायोगेन स्मृत्या तदर्थे निश्चेतव्ये सति मन्वादिस्मृतीनामनुष्ठेयार्थपरत्वेन सावकाशत्वात् । कापिलस्मृतेस्तु सिद्धार्थनिष्ठाया मोक्षसाधनसम्यग्दर्शनमधिकृत्य प्रवृत्ताया अन्यपरत्वायोगान्निरवकाशत्वरूपदोषप्रसङ्गात्तदनुसारेण वेदान्ता अचेतनकारणपरतया नेया इति प्राप्ते मन्वादिस्मृतिषु पुराणादिषु च ब्रह्मकारणत्ववाक्यानां सत्त्वात्तेषामनवकाशत्वरूपदोषप्रसङ्गात्तदनुरोधेन चेतनकारणत्वपरतया वेदान्ता व्याख्येया इति स्मृत्यधिकरणीयास्मदीयसंमतपूर्वपक्षसिद्धान्तावनूद्य, तत्र स्पर्शनश्रुतिविरोधेन सर्ववेष्टनादिस्मृत्यप्रामाण्यस्य पूर्वतन्त्र एवोक्तत्वेनेह स्मृतिविरोधेन श्रुत्यस्वारस्यशङ्कानुदयादिति चन्द्रिकायामस्मद्रीत्योक्तपूर्वपक्षदूषणस्य स्वशिरसि पाषाणनिक्षेपरूपतापत्त्योन्मत्तप्रलपितत्वापत्तेः । त्वदुपदर्शितमार्गेणैव सकलपूर्वतन्त्राध्ययनासमर्थस्य पूर्वपक्षिदर्शितयुक्त्या स्मृतिप्राबल्यमालम्ब्योक्तपूर्वपक्षप्रवृत्तौ बाधकाभावस्यातिस्पष्टत्वात् । मन्मते वेदान्तानामप्रामाण्यमनादृत्यैवाधीतसाङ्गस्वाध्यायस्य शमादिमतो ब्रह्मजिज्ञासाधिकारिण आपा-

ततो गृहीतपदपदार्थसंबन्धस्यापि कस्यचित् 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति विश्वं सत्यम्' एवमादि वाक्यं पश्यतस्तथा परस्परविरुद्धसगुणनिर्गुणवाक्यानि तथा 'सदेव सौम्येदमग्र आसीत्' (छा० ६ । २ । १ 'असदेवेदमग्र आसीत्' (छा० ६ । २ । १) इत्यादिवाक्यानि तथा 'तत्त्वमसि' (छा० ६ । ८ । ७) 'द्वा सुपर्णा सयुजा सखायौ' (श्वे० ४।६) इत्यादीनि भेदाभेदवाक्यान्यात्मानेकत्वैकत्ववाक्यानि च पश्यतो 'ब्रह्मैव सदसत्यमन्यत्' इत्यादिरूपो जातोऽपि विवेको शङ्काकलङ्कित एव भवति । तादृशशङ्कानिवृत्तेः कस्याचिदीश्वरानुग्रहवशाद्विरुद्धवाक्यान्यन्यथा न्याख्येयानीति दृढनिश्चयासंभवेन तं प्रति विचारवैयर्थ्येऽपि कस्यचित्प्रथमसूत्राध्ययनेन सा शङ्काऽपोदिता भवतीत्याप्तोपदेशपूर्वकप्रथमसूत्राध्ययनेन कस्यचिदवशिष्टाः शङ्का उत्तरत्र निराकरिष्यन्त इत्यध्यापकवचनविश्वासपूर्वकतत्तदधिकरणाध्ययनेनैव तादृशशङ्कानिवृत्तेस्तान्प्रति विवेकदार्ढ्यायोत्तराधिकरणसार्थक्यस्यास्मदीयपूर्वाचार्यैर्वर्णितत्वाच्च स्वकीयाधिकरणयोजनासाम्येनास्मदीयाधिकरणयोजनायां दूषणापादनमस्मदीयग्रन्थाज्ञानमूलमद्वैतवादद्वेषनिबन्धनमेव । एवं तिष्ठन्तु तावच्छ्रुतयो विष्ण्वादिप्रत्यक्षमूलाभिः पाञ्चरात्रादिस्मृतिभिस्तत्रत्यसिद्धान्तोपपत्तेरिति चन्द्रिकोक्तमपि ब्रह्मतर्कसिद्धप्रामाण्यकवेदोपजीवित्वाच्छास्त्रारम्भस्य तद्विहाय न्यायोत्थानस्यानुचितत्वाद्धेयम् । अथ श्रुतेरप्रामाण्यमनर्थकत्वं वा न ब्रवीमि किंतु पाशुपतस्मृत्यनुरोधि रुद्रादेर्जगत्कारणत्वं श्रुतेरर्थ इति तत्र पूर्वपक्ष्याशय इति चेन्नैवं वक्तुं शक्यम् । स्मृतेः श्रुतितो दुर्बलत्वात्प्रबलेन दुर्बलानुसरणस्य वक्तुमशक्यत्वात् ।

यत्तु स्मृत्यधिकरणीयतत्त्वप्रकाशिकायां पाशुपतादिस्मृतेः श्रुतितः प्राबल्यमवलम्ब्यैव पूर्वपक्षोक्तेरुक्तपूर्वपक्ष्याशयवर्णनं सम्यगेव । तथा हि तत्र पूर्वपक्षग्रन्थः—न विष्णोर्जगत्कारणत्वं युक्तम् । तत्र प्रमाणाभावात् । न च 'यतो वा इमानि भूतानि जायन्ते' (तै० ३।१।१) इत्यादिः श्रुतिः प्रमाणम् ।

श्रुतेर्विष्णोर्जगत्कारणत्वप्रतिपादकत्वे पाशुपतसांख्ययोगादिस्मृतिविरोधेनाप्रामाण्यापातात् । अन्यार्थतोपपत्तेः । पाशुपतादिस्मृतीनां रुद्रादेर्जगत्कारणत्वप्रतिपादकत्वात् । न च विरोधेऽप्यप्रामाण्याभावः । वस्तुविकल्पप्रसङ्गात् । न च देशकालादिभेदेन श्रुतिस्मृत्योरविरोधः । स्मृतिषु रुद्रादेः सकलजगत्कर्तृत्वाभिधानात् । न च वाच्यं श्रुतिविरोधे स्मृतीनामेवान्यार्थत्वमप्रामाण्यं वा किं न स्यात् । 'विरोधे त्वनपेक्षं स्यात्' इति न्यायादिति । प्रबलविरोधेन दुर्बलस्यान्यार्थतादेः कल्पनीयत्वात् । नहि स्मृतिभ्यः श्रुतेः प्राबल्यमस्ति । स्मृतीनां रुद्रकमलासनादिभिराप्तैर्विरचितानां दोषाभावगुणयुक्तत्वात् । रुद्रादीनां सर्वज्ञत्वस्य जगद्धितोपदेष्टृत्वस्य च सुप्रसिद्धत्वात् । श्रुतेश्च पिपीलिकालिपिनिभायाः कर्तृगुणशून्यत्वात् । क्वचिच्छ्रुतिविरोधेन स्मृतेरर्थान्तरपरिकल्पनादिति तु श्रुतिमूलत्व एव भवति । मूलमूलिनोर्मूलस्य प्रबलत्वात् । न च पाशुपतादिस्मृतीनां श्रुतिर्मूलम् । रुद्रादिप्रत्यक्षस्यैव मूलत्वात् । एवं च—

दुर्बलस्य प्रमाणस्य बलवानाश्रयो यदि ।
तदाऽपि विपरीतत्वं शिष्टाकोपे यथोदितम् ॥ इति ।

तदेतत्पूर्वापरानुसंधानराहित्योचितम् । तथा हि—स्मृत्यधिकरणतत्त्वप्रकाशिकायां पूर्वपक्षोपपादने पाशुपतादिस्मृतेः श्रुतितः प्राबल्योक्तावपि ' रुद्रो जगत्कर्ता सर्वज्ञत्वात् । न च हेत्वसिद्धिः । तस्य सर्वज्ञताया आगमसिद्धत्वादित्यागमसहायेन शास्त्रयोनित्वाधिकरणपूर्वपक्षे स्मृत्यधिकरणेनास्य पौनरुक्त्यदोषपरिहाराय स्मृत्यधिकरणे पाशुपतादिस्मृत्या पूर्वपक्षे पाञ्चरात्रस्मृत्या सिद्धान्तः । इह तु स्मृत्यनुमानाभ्यां पूर्वपक्षे श्रुत्यादिरूपशास्त्रेण सिद्धान्तः ' इति चन्द्रिकोक्तं न सम्यक् । ब्रह्मतर्कसिद्धाधिकबलश्रुतिविरोधेनाप्रमाणतयाऽध्यवसितेनाऽऽगमेन तत्र पुनः पूर्वपक्षानुत्थितेरिति त्वदीयोक्तं दूषयन्तं प्रति समीचीनयुक्त्यादिकमप्रदर्श्य त्वदीयतत्त्वप्रकाशिकोक्तिप्रदर्शनमात्रेण निरसितुमशक्यत्वात् । ' बाधे दृढेऽन्यसाम्यात्किम्, दृढेऽन्यदपि बाध्यताम् ' इति खण्डनोक्तरीत्या तस्या

अपि दूष्यत्वात् । त्वत्पूर्वपक्षिणा श्रुतेर्ब्रह्मतर्कसिद्धस्य पाशुपतादिस्मृत्यपेक्षयाऽधिकबलवत्त्वस्य त्यागेन पूर्वपक्षयितुमशक्यत्वादित्यस्यासकृदावेदितत्वात् ।

अथोपबृंहणानुसारेण श्रुतेरर्थवर्णनौचित्यात्पाशुपतादिस्मृतीनामुपबृंहणरूपत्वात्तदनुरोधेन श्रुत्यर्थवर्णनमेव युक्तमिति पूर्वपक्ष्याशय इति चेत् । अत्र तद्विस्मरणेन सिद्धान्तकरणायोगात् । अथ समीचीनपाञ्चरात्रादिस्मृत्यात्मकोपबृंहणैर्विष्णवैकनिष्ठकारणत्वनिर्णयात्तद्विरोधेन पाशुपतादिस्मृत्यप्रामाण्यमुक्त्वा सिद्धान्त्यत इति चेत् । तद्विस्मृत्य पुनः स्मृत्यधिकरणे पाशुपतादिस्मृत्यवष्टम्भेन रुद्रादेर्जगत्कारणत्वपूर्वपक्षोत्थानस्यानुचितत्वात् ।

यत्त्वस्मिन्नधिकरणे स्मृत्यधिकरणे च पूर्वपक्षिण उपबृंहणानुसारेण श्रुतेरर्थवर्णनस्य सिद्धान्तेऽपि पाञ्चरात्रादिस्मृत्युपबृंहणेन निर्णयस्य चास्मदीयानभिप्रेततया तदाक्षेपदूषणादिकं छलनिगृहीतमिति । तदसत् । अस्मिन्नधिकरण आगमसहकृतसर्वज्ञत्वहेतुकानुमानेन रुद्रादेर्जगत्कर्तृत्वाल्लक्षणातिव्याप्तिपूर्वपक्षेऽस्य स्मृत्यधिकरणेन पौनरुक्त्यदोषपरिहाराय पूर्वोक्तचन्द्रिकोक्तौ स्मृतेः श्रुतितो दुर्बलत्वात्प्रबलानुसारेण दुर्बलस्य नेयतायाः सर्वसिद्धत्वादित्युक्तदूषणपरिहारायोक्ततटस्थाक्षेपतद्दूषणाभ्यामुक्तदूषणस्थिरीकरणे छलनिग्रहाप्रसक्तेः । उक्ताक्षेपे चन्द्रिकायामुक्तमित्यनुक्तेश्च । किंचाऽऽगमोक्तसर्वज्ञत्वहेतुकानुमानेन रुद्रादेर्जगत्कारणत्वपूर्वपक्षोऽसंगत एव । आगमेनैव रुद्रादेर्जगत्कारणत्वस्य पूर्वपक्षयितुं शक्यत्वेनानुमानस्याजागलस्तनीयत्वापत्तेः । कथंचित्तत्समर्थनेऽपि ' नारायणादेव सर्वाणि भूतानि समुत्पद्यन्ते ' इति नारायणपदघटितसावधारणप्रत्यक्षश्रुतिवाक्येन ' औदुम्बरी सर्वा वेष्टयितव्या ' इति सर्ववेष्टनबोधकस्मृत्यनुमितश्रुत्युक्तसर्ववेष्टनानुष्ठानस्य ' औदुम्बरीं स्पृष्ट्वोद्गायेत् ' इति प्रत्यक्षश्रुत्या बाधस्येव निरुक्तानुमानस्य बाधौचित्याच्चोक्तश्रुतिविरोधे रुद्रादेर्जगत्कर्तृत्वविषयेऽनुमानाप्रवृत्तेर्न तदवष्टम्भेनोक्तपूर्वपक्षोदयः ।

यत्तु त्वन्मते—' नेह नानाऽस्ति किंचन ' ( बृ० ४ । ४ ।

१९ ) इतिश्रुतिसिद्धे जगन्मिथ्यात्वे 'विमतं मिथ्या दृश्यत्वात्' इत्याद्यनुमानानामिव 'अत्रायं पुरुषः स्वयंज्योतिः' ( बृ० ४ । ३ । ९ ) इति श्रुतिसिद्ध आत्मनः स्वप्रकाशत्वे 'अनुभूतिः स्वप्रकाशा अनुभूतित्वात्' इत्याद्यनुमानानामिव चाऽऽगमप्रमाणसिद्धेऽपि जगत्कारणत्व उक्तानुमानप्रवृत्तिर्निराबाधैव । प्रत्यक्षकलितमप्यर्थं बुभुत्सन्ते तर्करसिका इति वाचस्पत्युक्तेश्च प्रमाणान्तरप्रमितेऽर्थेऽनुमानं न प्रवर्तत इति त्वया वक्तुमशक्यत्वात् । नापि प्रमाणान्तरप्रमितेऽर्थेऽनुमानं निष्प्रयोजनम् । दार्ढ्यरूपप्रयोजनसत्त्वादिति । तदस्मदीयसिद्धान्ताशयापरिचयनिबन्धनम् । यतः—

प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम् ।

इति मनुस्मृतौ प्रत्यक्षानुमानागमेष्वागमस्याऽऽगमत्वेनैव प्राबल्योक्तेः प्रबलप्रमाणनिश्चितेऽर्थेऽनुमानं न प्रवर्तते । आगमार्थनिश्चयेन सिद्धिरूपेण तत्प्रतिबन्धादनुपयोगाच्च । न चैवं प्रत्यक्षकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिका इति वाचस्पतिवचनविरोधः शङ्क्यः ।

तलवद्दृश्यते व्योम खद्योतो हव्यवाडिव ।
न तलं विद्यते व्योम्नि न खद्योतो हुताशनः ॥
तस्मात्प्रत्यक्षदृष्टेऽपि युक्तमर्थं परीक्षितुम् ।
परीक्ष्य ज्ञापयन्नर्थान्न धर्मात्परिहीयते ॥

इति साक्षिप्रकरणे नारदस्मृतौ प्रत्यक्षस्य भ्रमप्रमासाधारणतयाऽपरीक्षितप्रामाण्यकत्वेन प्रत्यक्षदृष्टस्यापि प्रत्यक्षमविश्वस्य प्रमाणोपदेशादिभिः परीक्षणीयत्वप्रतिपादनेनानिश्चितप्रामाण्यकप्रत्यक्षदृष्ट एवार्थे परीक्षार्थसिषाधयिषयाऽनुमानप्रवृत्तेर्वाचस्पत्युक्तत्वात् । न च तर्हि 'नेह नानाऽस्ति' ( बृ० ४ । ४ । १९ ) इत्यादिश्रुतिसिद्धे जगन्मिथ्यात्वे कथं तव मतेऽनुमानानां प्रवृत्तिरिति शङ्क्यम् । जगद्विशिष्टे ब्रह्मणि जगत्कालावच्छिन्नवृत्तिकाभावप्रतियोगित्वरूपे प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं वा मिथ्यात्वमित्यस्मदीयैरुक्तमिथ्यात्वात्मके 'नेह नानाऽस्ति किंचन' ( बृ० ४।४। १९ ) इति श्रुत्यर्थे ब्रह्मणि

नानात्वमवताराववतारिकृतभेदादिकं नास्तीत्यर्थं परिकल्प्य विवदमानं प्रति तादृशश्रुतेरुक्तरूपमिथ्यात्वमेवार्थ इत्यनुमानसंवादेन ग्राहयितुं मिथ्यात्वानुमानानाम् । 'अत्रायं पुरुषः स्वयंज्योतिः' ( बृ० ४ । ३ । ९ ) इति श्रुतेरर्थान्तरं परिकल्प्याऽऽत्मनः स्वप्रकाशत्वरूपे तदर्थे विवदमानं प्रत्यात्मनः स्वप्रकाशत्वरूपं तदर्थमनुमानेन ग्राहयितुं स्वप्रकाशत्वानुमानानां प्रवृत्तिरिति ब्रह्मानन्दाद्यैरद्वैतसिद्धिव्याख्यायामुक्तत्वेन श्रुतिप्रमितेऽर्थेऽनुमानप्रवृत्तेरस्मदनुमतत्वाभावात् ।

तर्करसिकानां तथाविधेऽर्थे सिषाधयिषाधीनानुमानप्रवृत्तावपि रुद्रे प्रबलागमप्रमितजगत्कारणत्वातिव्याप्तिपूर्वपक्षेणैव जन्मादिसूत्रोक्तब्रह्मलक्षणाक्षेपसिद्धेरनुमानव्यसनितया सिषाधयिषाधीनानुमानस्याऽऽहार्यज्ञानस्येव विषयदार्ढ्याप्रयोजकतया चाजागलस्तनीयतया दुर्धरत्वात् । अत एव नहि करिणि दृष्टे चीत्कारेण तमनुमिमतेऽनुमातार इति वाचस्पतिनैवोक्तम् ।

यदप्यस्मिन्नधिकरणेऽनुमानेनान्येषामपि कारणत्वमिति पूर्वपक्षयित्वाऽनुमानस्य श्रुतिबाधकादिकमुद्भाव्यानुमानागम्यत्वं गजत्कारणस्येति सिद्धान्त्यते । तदुक्तं चन्द्रिकायाम्—सिद्धान्तेऽनुमानेषु श्रुतिबाधादेः, शशादीनां च विषाणित्वादौ च कर्तुं शक्यत्वादिति । तथा च सिद्धान्तदोषमुद्भाव्य पूर्वपक्षासंभववर्णनमज्ञानमूलम् । अन्यथा भवन्मते सर्वाधिकरणेषु सिद्धान्तदोषमुद्भाव्य पूर्वपक्षनिरासेन मीमांसोच्छेदापत्तिरिति । तदप्यसदाग्रहमूलमेव । शास्त्रस्य योनिः कारणं तत्त्वात्, शास्त्रं योनिः प्रमाणमस्य तच्छास्त्रयोनि तत्त्वादिति वा सूत्रार्थेऽनुमानस्य श्रुतिबाधादेः कथमप्यप्रतीतेस्तस्य सिद्धान्तयुक्तित्वासिद्धेः। चन्द्रिकाद्युक्तं तु त्वद्रीत्या पूर्वपक्षासंभवं वदन्तं प्रति नोपन्यासार्हम् ।

चक्षुरादि यथाऽशक्तं रसगन्धादिवस्तुषु ।
अनुमाऽपि तथाऽशक्ता धर्मब्रह्मादिवस्तुषु ॥



इति स्वदीयचन्द्रिकादिषु जगत्कारणस्य शास्त्रैकसमधिगम्य-

त्वस्यैव सिद्धान्तयुक्तित्वोक्तेश्च श्रुतिबाधादेरित्यस्यौपनिषदत्व- श्रुतिबाधादेरित्येवार्थ इति वक्तव्यत्वात् । चन्द्रिकायामेव महा- कल्पत्वमित्याद्यनुमानेषु श्रुतिबाधादेरित्युक्तत्वेन च तादृशकर्तृ- भेदानुमानेष्वेव श्रुतिबाधोद्भावनस्य तदभिप्रेतत्वेन सर्वज्ञत्वहेतुके रुद्रादेः कर्तृत्वानुमाने श्रुतिबाधस्य सिद्धान्तयुक्तित्वानभिप्रेत- त्वाच्च । युक्तं चैतत् । 'नारायणादेव सर्वाणि भूतानि समु- त्पद्यन्ते' इति प्रत्यक्षनारायणपदघटितसावधारणश्रुतेर्यथाकथं- चिदस्वाभिमतार्थवर्णनमन्तरा तद्बाधेनानुमानेन रुद्रादेः कारणत्व- पूर्वपक्षस्य मीमांसासंप्रदायविरुद्धत्वस्य तद्विदां स्पष्टत्वात् । तादृशश्रुतेर्नत्वानुपपत्त्या त्वत्पूर्वपक्षिणा योगादिनाऽन्यार्थत्व- स्य वक्तुमशक्यत्वादित्यस्य पूर्वमेवाऽऽवेदितत्वात् । नानाक- र्तृकानुमानेष्वपि श्रुतिबाधादेः सिद्धान्तयुक्तित्वं यथा न संभवति तथा तदनुमानावष्टम्भेन पूर्वपक्षनिराकरणप्रसङ्गेऽग्रे वक्ष्यामः ।

भवन्मते इत्यादिकं चात्यन्तमसदेव । नहि मन्मते सिद्धान्त- युक्तिबोधकश्रुत्यादेः पूर्वपक्षसमये पूर्वपक्ष्यभिमतार्थकत्ववर्ण- नमन्तरा काप्यधिकरणे पूर्वपक्षप्रवृत्तिरस्तीत्यस्मदीयग्रन्थदर्शिनां स्पष्टमेव । उदाहरणार्थं किंचिदुच्यते—'आकाशस्तल्लिङ्गात्' (ब्र० सू० १ । १ । २२) इत्यधिकरणनिर्णयवाक्ये भूताकाशपूर्वपक्षेऽभ्यस्तपूर्वपठिताकाशश्रुत्यनुरोधात् 'सर्वाणि ह वा भूतानि' इत्यत्र सर्वशब्दस्य वाय्वादिसर्वभूतप- रत्वं पूर्वपक्षिणा वर्णितम् । 'अन्तस्तद्धर्मोपदेशात्' (ब्र० सू० १ । १ । २० ) इत्यधिकरणे जीवपूर्वपक्षे निर्णयवाक्योक्तस- र्वपाप्मोदितत्वस्य 'न ह वै देवान्पापं गच्छति' (बृ० १ । ५ । २० ) इति श्रुत्यन्तरानुसारेण जीवगतत्वं पूर्वपक्षिणोपपादितम् । एवं सर्वत्र द्रष्टव्यम् ।

किंचात्र पूर्वसूत्रोक्तकृत्स्नजगज्जन्मादिकारणत्वरूपब्रह्मलक्ष- णस्य रुद्रादावतिव्याप्तिशङ्का किंवा कारणत्वमात्रस्य वा । नाऽऽ- द्यः । कारणवाक्यान्तर्गतनारायणमहोपनिषदादिवाक्यबोधितवि- धिरुद्रपुरःसरसकलजगत्कारणत्वस्य विधिरुद्रादिगतत्वशङ्कानु-

दयात् । न द्वितीयः । स्वयोग्यकिंचित्कारणत्वस्यास्मदादिसाधारणस्य रुद्रादिनिष्ठत्वेऽपि पूर्वसूत्रोक्तविधिरुद्रपुरःसरसकलजगत्कारणत्वलक्षणस्याविव्याप्त्यभावात् । एतेन कालभेदेन विष्णो रुद्रादेश्च कारणत्वे विरोधाभावमाश्रित्य शिवादेर्विष्णोश्च नारायणत्वमिति पूर्वपक्षोऽपि निरस्तः ।

यत्तु 'तद्विजिज्ञासस्व तद्ब्रह्म' (तै० ३ । १ । १) इति जिज्ञासाभिधायकवाक्यस्थब्रह्मपदस्य विष्णुपरत्वे साधकतयोपन्यस्तस्य 'यतो वा इमानि भूतानि जायन्ते' (तै० ३ । १ । १) इति वाक्यशेषस्य स्वारस्यानुरोधेन 'इमानि भूतानि' इति निर्दिष्टप्रसिद्धसकलभूतकारणत्वमपि लक्षणमभिप्रेतम् । एवम् 'आत्मन आकाशः संभूत आकाशाद्वायुः' (तै० २ । १ । १) इति श्रुतिप्रमितमप्याकाशान्तभूतकारणत्वमपि । तच्च रुद्रादावतिव्याप्तमिति सम्यगेव । एतेन नारायणोपनिषदादिप्रतिपन्नविधिरुद्रपुरःसरसकलजगत्कारणत्वलक्षणस्यातिव्याप्त्यभावात्कथमेतदिति निरस्तम् । तादृशलक्षणस्यातिव्याप्त्यकथनात् । एतदभिप्रायेणैव सर्वजगज्जन्मादिकर्तृत्वलक्षणं चेदसंभवः, कतिपयकर्तृत्वं चेदतिव्याप्तिरिति चन्द्रिकायामुक्तमिति । तदपि पूर्वापरस्वकीयाचार्यग्रन्थाविचारमूलम् । तथा हि—प्रसिद्धसकलभूतकारणत्वं लक्षणमित्यस्य कोऽर्थः । वर्तमानप्रत्यक्षमात्रसिद्धघटाङ्कुरादिकारणत्वमिति वा प्रत्यक्षानुमानागमादिसिद्धातीतानागतसकलभूतकारणत्वमिति वा । नाऽऽद्यः । तादृशलक्षणस्य जन्माद्यधिकरणाभिप्रेतत्वे तेन गुणपूर्त्यलाभात् ।

> जिज्ञासाकारणीभूतगुणपूर्तिप्रसिद्धये ।
> जीवादिभेदकं विष्णोर्जगत्कर्तृत्वमुच्यते ॥

इति त्वदीयप्रतिज्ञाविरोधापत्तेः । स्वयोग्यप्रसिद्धकतिपयभूतकर्तृत्वस्य जीवेऽनुपपत्त्यभावेन तदनुपपत्त्या जन्माधिकरणे जीवे ब्रह्मशब्दरूढिबाधेन विष्णुरेव जिज्ञास्यं ब्रह्मेति सिद्धान्तकरणानुपपत्तेश्च । जिज्ञास्ये विष्णौ गुणपूर्तिलाभाय जीवे ब्रह्मशब्दरूढिबाधेन सिद्धान्तकरणाय च जन्मादिसूत्रे सकलकारणवाक्यप्रतिपन्नातीतानागतविधिरुद्रपुरःसरसकलजगत्कर्तृत्वलक्षणस्यैव

जन्मादिसूत्रेऽभिप्रेततायास्त्वया वक्तव्यतया तस्य च रुद्रेऽसंभवात्तत्रातिव्याप्तिपूर्वपक्षासंभवस्य दुर्वारत्वात् । उक्तं च चन्द्रिकायां जन्माधिकरणसिद्धान्ते—इमानीति सर्वनाम्नश्च संकोचकाभावादिति, विचारविधायकनानावाक्यपरामर्शेन स्कान्दे सूत्रकृतैव जन्माद्यष्टकर्तृत्वस्य लक्षणत्वेनोक्तत्वादत्रापि तस्यैवोक्तत्वादिति च । तथा च विचारविधायकनानावाक्यपर्यालोचनया जन्माद्यष्टकर्तृत्वस्येव तथाविधवाक्यपर्यालोचनया विधिरुद्रपुरःसरसकलातीतानागतजगत्कर्तृत्वस्यैव लक्षणत्वौचित्यादर्धजरतीयस्यान्याय्यत्वात् । अन्यथा गुणपूर्त्यसिद्ध्यापत्तेः । प्रसिद्धसकलभूतकर्तृत्वलक्षणमपि जन्माधिकरणाभिप्रेतमित्युक्तिरसंगतैव । किंच 'इदꣳ सर्वमसृजत यदिदं किंच' (बृ० १।२।५) इति प्रत्यक्षादिसिद्धातीतानागतसकलजगत्कारणत्वस्यैव श्रुतिषु प्रतिपादनात्तदनुसारेण श्रुतिसमानार्थकसूत्रेणास्येत्यनेन प्रत्यक्षादिसिद्धातीतानागतसकलजगत्परामर्शस्यैव युक्तत्वात् । सूत्रेण प्रसिद्धकतिपयभूतकारणत्वमपि लक्षणत्वेन विवक्षितमित्यस्य वक्तुमनुचितत्वात् । किंच 'यतो वै' (तै० ३ । १ । १) इत्यादिवाक्ये यच्छब्दोपनिबन्धादनुवादत्वं तावत्प्रतीयते । तत्र पुरोवादापेक्षायां विनिगमकाभावात्कारणवाक्यसामान्यमेव पुरोवाद इति वक्तव्यम् । तथा च तदनुरोधेन 'इमानि' इत्यनेन सकलकारणवाक्यबोधितविधिरुद्रपुरःसरसकलभूतानामेव ग्रहणौचित्यात् । इमानीति सर्वनाम्नश्च संकोचकाभावादिति चन्द्रिकायां तथैवोक्तत्वाच्च । विधिरुद्रपुरःसरसकलजगत्कारणत्वस्यैव लक्षणत्वेन जन्मादिसूत्राभिमततया न तस्य लक्षणस्य रुद्रे कथमप्यातिव्याप्तिः संभवति । 'यतो वै' (तै० ३ । १ । १) इत्यादिवाक्यस्य 'आत्मन आकाशः संभूतः' (तै० २ । १ । २) इतिश्रुतिप्रतिपादिताकाशादिपञ्चभूतसृष्ट्यनुवादकत्वेऽपि तद्वाक्यस्याद्वैतिरीत्या 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै० २ । १।१) इति श्लोकान्तर्गतानन्तपदोपात्तत्रिविधपरिच्छेदशून्यत्वप्रतिपादकतया तव मतरीत्याऽनन्तपदोपात्तगुणपूर्तिप्रतिपादकतया चातीतानागतसकलवियदादिकारणब्रह्मप्रतिपादकत्वावश्यकतया

' यतो वै ' ( तै० ३ । १ । १ ) इत्यादिवाक्यस्यापि तादृश-पुरोवादानुसारेणातीतादिसाधारण्येन सर्वजगत्कारणप्रतिपादन-परत्वस्यैव वाच्यत्वात्स्वसृज्यजगत्कारणत्वोपयोगिज्ञानेच्छाचि-कीर्षाप्रयोजकभूतकार्यरुद्रादिदेहोपादानभूतभूतकारणत्वस्य रुद्रा-दावभावाच्च न तल्लक्षणस्य रुद्रेऽतिव्याप्तिः संभवति । एतेन ' आत्मन आकाशः संभूतः । आकाशाद्वायुः ' ( तै०२।१।२ ) इतिश्रुतिप्रतिपन्नाकाशादिभूतकारणत्वमपि लक्षणं पूर्वसूत्रोक्तम् । तच्च रुद्रादावतिव्याप्तमित्यपि निरस्तम् । एतदभिप्रायेणैवेत्या-दिकम् ' त्वदीयचन्द्रिकोक्तमयुक्तम् ' इति वदन्तं प्रति नोप-न्यासार्हम् ।

यदपि स्मृत्यधिकरणेनास्योक्तपौनरुक्त्यपरिहाराय ' यद्वा विष्णोरन्येषां च कारणत्वमिति समुच्चयेन लक्षणातिव्या-प्त्या पूर्वपक्षे विष्णोरेवेत्यवधारणेन सिद्धान्तः । स्मृत्यधि-करणे तु विष्णोः कारणत्वं नेत्यसंभवेन पूर्वपक्षेऽस्तीति सिद्धान्तः । अत एव टीकायामत्र विष्णोरेवान्यस्याप्यस्ति न वेति संदेहः, तत्र तु युक्तं न वेत्येव संदेहः । यद्यप्यागमप्रामाण्य-वादिनेहाप्यसंभवो वक्तुमुचितस्तथाऽपि वक्ष्यमाणे श्रुतेः स्वतः-प्रामाण्यविष्णुपरत्वे समवलत्तां चोपेत्य कालादिभेदेनाविरुद्धं द्व-योरपि कर्तृत्वम् । श्रुत्यादौ तु ' इदꣳ सर्वमसृजत ' ( बृ० १।२।५ ) इति कारणत्वोक्तिस्तत्तत्कालसृज्याभिप्राया सर्वस्रष्टृत्वयोग्यत्वा-भिप्रायेति चन्द्रिकोक्तम् । तदप्यसत् । नारायणमहोपनिषदादिप्र-तिपन्नस्य विधिरुद्रपुरःसरजगत्कारणत्वलक्षणस्य रुद्रादिसाधा-रण्येनातिव्याप्तिपूर्वपक्षानुदयाच्छ्रुत्या श्रुतिसंकोचेऽपि स्मृत्या श्रुतिसंकोचायोगात् । तत्तदुत्तरकालोत्पत्तिकत्वमात्राभिप्रायेण वर्तमानसामीप्येत्यनेनाऽऽगामिन्यपि ' इदꣳ सर्वमसृजत ' ( बृ०१। २ । ५ ) इतिनिर्देशाविरोधात् । असंभवपूर्वपक्षस्य प्रथममेव निरसितुं युक्तत्वात् । संदेहप्रकारभेदमात्रेणाधिकरणभेदानौ-चित्यस्योक्तत्वात् । ' एकमेवाद्वितीयम् ' ( छा० ६ । २ । १ ) ' एको ह वै नारायण आसीन्न ब्रह्मा नेशानः ' ( म० ना० १ ) इत्येकत्वावधारणादिविरोधाच्चेति पूर्वमेवोक्तत्वात् ।

यत्तु—एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा ।
साधारणे समानेऽल्पे संख्यायां च प्रयुज्यते ॥

इति कोशादेकमेवेत्यत्रैकशब्दस्य साधारणसमानार्थकत्वस्य पूर्वपक्षिणोऽभिप्रेतत्वेन न तद्विरोध इति । तन्मन्दम् । तथाऽपि न ब्रह्मा नेशान इत्यस्य विरोधापरिहारात् । किंच श्रुत्यागमयोस्तुल्यबलतायां सर्वज्ञपशुपतिप्रणीतत्वादन्यन्न प्रयोजकम् । तथा च तस्य सार्वज्ञ्ये सति तत्प्रणीततया तुल्यबलत्वसिद्धिः, तुल्यबलत्वे सति तस्य सर्वज्ञत्वसिद्धिरन्यथा विष्णुसर्वज्ञताबोधकस्मृत्या बाधादन्योन्याश्रयः ।

यत्तु पशुपतेः सर्वज्ञत्वस्याऽऽगमं विना महाजनपरिगृहीतत्वेनैतिह्येनैव वा 'यः सर्वज्ञः स सर्ववित्' (मु० १।१।१०) इति श्रुत्या वा तादृक्पूर्वपक्षिणाऽङ्गीकृतत्वाद्वा नान्योन्याश्रयः। उक्तं च तत्त्वप्रकाशिकायां—रुद्रादीनां सर्वज्ञत्वस्य जगद्धितोपदेष्टृत्वस्य च सुप्रसिद्धत्वादिति।'कृशानुरेताः सर्वज्ञः' (अम० १।१।३३) इति कोशात्सर्वज्ञशब्दस्य तत्र रूढत्वात् । अन्यथा सर्वविदित्यनेन पौनरुक्त्यापत्तेश्चेति । तदसत् । उक्तप्रसिद्ध्यादेरप्यागममूलत्वात् । नहि मूलसंभवेऽमूलप्रसिद्ध्यादिकल्पनं युक्तम् । 'यः सर्वज्ञः स सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते' (मु० १।१।१०) इति श्रुतेः कार्यब्रह्महिरण्यगर्भादिसकलनामरूपात्मकजगत्कारणप्रतिपादकतया तत्कारणं रुद्र इति विशिष्याप्रतिपादनात्तया रुद्रस्य सर्वज्ञत्वासिद्धेः । रुद्रो जगत्कर्ता सर्वज्ञत्वादित्यनुमाने बुद्धे व्यभिचारं वारयता त्वयैव नामलिङ्गानुशासनरूपकोशस्य संज्ञासंज्ञिभावसंबन्धप्रमापकस्य न बुद्धादेः सर्वज्ञत्वसाधकत्वम् । अन्यथा कोशेन वाजिकर्णादिकं वृक्षेऽपि सिध्येदित्युक्तत्वात्तद्विस्मृत्य 'कृशानुरेताःसर्वज्ञः' (अम०१।१।३३) इति कोशेन रुद्रे सर्वज्ञशब्दस्य रूढत्वेऽपि तेन श्रुत्यागमयोस्तुल्यबलताप्रयोजकसर्वज्ञतायाः पूर्वपक्ष्यभिमतत्वोपपादनस्य वक्तुमशक्यत्वात् । 'यः सर्वज्ञः स सर्ववित्' (मु० १ । १ । १०) इत्यत्र द्वाभ्यां पदाभ्यां सामान्याकारेण विशेषाकारेण च ज्ञानयोरभिधानेन पौनरुक्त्यापादनायोगाच्च ।

तुल्यबलतायां प्रयोजकमस्तु वा मा वेत्यत्रोदासीनेन कृत्वाचिन्तान्यायेन पूर्वपक्षप्रवृत्तिरित्यप्यस्मद्रीत्या प्रकारान्तरेण पूर्वपक्षोपपादनसंभवात्सत्यां गतावनुचितम् । अपि च कारणवाक्यानामत्र कात्स्न्र्येन पुरोवादत्वात्तत्र च रुद्रादेः कार्यत्वकर्मवाशित्वश्रवणात्तत एव कारणत्वाभावप्रतिपत्तौ तस्य कथं रुद्रादिसाधारण्यशङ्का ।

यत्तु 'पत्युरसामञ्जस्यात्' (ब्र० सू० २ । २ । ३७) इत्यधिकरणसिद्धार्थोपन्यासेन दुरागमावेद्यत्वप्रतिपादनप्रधानकैतदधिकरणोक्तपूर्वपक्षानौचित्यकथनमनुचितम् । अन्यथा भवन्मतेऽपीक्षत्यधिकरणपूर्वपक्षस्य 'आनुमानिकमप्येकेषाम्' (ब्र० सू० १ । ४ । १) 'ज्योतिरुपक्रमात्' (ब्र० सू० १ । ४ । ९) 'न संख्योपसंग्रहात्' (ब्र० सू० १।४।११) इत्याद्यधिकरणसिद्धान्तासिद्धार्थोपन्यासेनानौचित्यस्य वक्तुं शक्यत्वेन तदधिकरणानुत्थानप्रसङ्ग इति । तदस्मदीयग्रन्थाज्ञानमूलकस्वमतिपरिपाकमात्रम् । तथा हि—अस्मद्ग्रन्थेष्वीक्षत्यधिकरणे जन्मादिसूत्रोक्तं ब्रह्मलक्षणत्वेनाभिमतं जगज्जन्मादिकारणत्वादिकं प्रधानेऽपि संघटयितुं शक्यम् । अतोऽनुमानसिद्धसावयवप्रधानपरत्वमेव वेदान्तानामस्तु न त्वलौकिकनिरवयवब्रह्मपरत्वमिति सद्विद्यामालम्ब्य लक्षणासंभवशङ्कायामशब्दत्वेन प्रधाने श्रुतिस्वारस्यनिराकरणेन सा शङ्का परिहृता । तदुपोद्बलनाय च सर्वासां श्रुतीनां ब्रह्मणि गतिसामान्यं प्रतिज्ञाय 'आनन्दमयोऽभ्यासात्' (ब्र० सू० १ । १ । १२) इत्यारभ्य 'पत्यादिशब्देभ्यः' (ब्र० सू० १ । ३ । ४३) इत्यन्तैः सूत्रैस्तत्तच्छ्रुतिपर्यालोचनया गतिसामान्यमेव शङ्काविशेषनिराकरणपूर्वकं व्यवस्थापितम् । तथा ह्याकरेषूक्तम्—अस्मिंश्चाधिकरणे सांख्यपक्षः सद्विद्यामालम्ब्य प्रवृत्तो निराक्रियते । अन्येषां तु पक्षाणां तदुपन्यस्तवाक्ययुक्त्योराभासताप्रतिपादनपूर्वकं निराकरणम् 'एतेन सर्वे व्याख्याताः' (ब्र० सू० १ । ४ । २८) इत्यादिषु भविष्यति । सांख्यस्यापि श्रुत्यन्तरावष्टम्भेन युक्त्यन्तरावष्टम्भेन च निराकरणमुत्तरत्र भविष्यतीति ।

'आनुमानिकमप्येकेषाम्' (ब्र० सू० १।४।१) 'ज्योतिरुपक्रमात्' (ब्र० सू० १।४।९) 'न संख्योपसंग्रहात्' (ब्र० सू० १।४।११) इत्याद्यधिकरणेषु यत्प्रधानस्याशब्दत्वोक्त्या क्वचिदपि वेदे कारणत्वेन तन्न प्रतिपाद्यत इत्युक्तम्। तदसिद्धम्। काठके 'महतः परमव्यक्तम्' (का० १।३।११) इत्यव्यक्तशब्देन 'अजामेकां लोहितशुक्लकृष्णाम्' (श्वे० ४।५) इति मन्त्रेऽजाशब्देन च कारणत्वेन प्रधानस्य प्रतिपादनात्। तथा 'यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः' (बृ० ४।४।१७) इति मन्त्रे पञ्च पञ्चजना इति पञ्चसंख्याविषयाऽपरा पञ्चसंख्या श्रूयते। पञ्चशब्दद्वयदर्शनादेते पञ्च पञ्चकाः पञ्चविंशतिः संपद्यन्ते। तया पञ्चविंशतिसंख्यया यावन्तः संख्येया आकाङ्क्ष्यन्ते तावन्त्येव तत्त्वानि सांख्यैः संख्यायन्ते। तया श्रुतिप्रसिद्धया पञ्चविंशतिसंख्यया तेषां स्मृतिप्रसिद्धानां पञ्चविंशतितत्त्वानामुपसंग्रहाच्छ्रुतिप्रतिपाद्यत्वमेव प्रधानादीनामित्याक्षिप्य समाधीयते। तथा च 'आनुमानिकमप्येकेषाम्' (ब्र० सू० १।४।१) इत्याद्यधिकरणसिद्धस्य प्रधानेऽव्यक्ताजापञ्चपञ्चजनादिशब्दाप्रतिपाद्यत्वस्योपन्यासेनेक्षत्यधिकरणीयस्य सद्विद्यागतजगत्कारणवाचकसदादिशब्दवाच्यत्वेन प्रधानमेव जगत्कारणं न ब्रह्मेति पूर्वपक्षस्य निरासायोगात्स्त्विर साय तदधिकरणोत्थानस्याऽऽवश्यकत्वात् 'पत्युरसामञ्जस्यात्' (ब्र० सू० २।२।३७) इत्यधिकरणसिद्धार्थस्य रुद्रादेः कार्यत्वादेः दुरागमावेद्यत्वप्रतिपादनप्रधानकाधिकरणश्रेयत्वाभावेन तेनास्य पौनरुक्त्याभावेऽपि कारणवाक्यप्रतिपन्नकार्यत्वोपन्यासेन सकलकारणवाक्यप्रतिपन्नविधिरुद्रपुरःसरजगत्कारणत्वलक्षणस्य रुद्रेऽतिव्याप्तिपूर्वपक्षानौचित्योद्भावनस्य युक्तत्वात्।

यत्तु पुरोवादवाक्येषु रुद्रादेः कार्यत्वश्रवणम् 'नहि निन्दा-' न्यायेन विष्णोः कारणत्वविधिपरमिति यद्वेत्यादिनोक्तस्य समुच्चयेन लक्षणस्यातिव्याप्तिरिति पूर्वपक्षस्याऽऽशयः। तथा चोक्तं चन्द्रिकायाम्—श्रुतौ शिवस्याऽऽगमे च विष्णोः कारणता-

निषेधस्तु यथोदितहोमनिन्दाऽनुदितहोमादिस्तुतिपरा तथा विष्ण्वादेः कारणताविधिपर इति प्राप्ते प्रमाणत्वेनाङ्गीकृतश्रुतिपरिगृहीतया 'ऋग्यजुः' इत्यादिभाष्योदाहृतया स्मृत्या दुरागमाप्रामाण्यमिति सिद्धान्त इति । तत्र कारणतानिषेध इत्युपलक्षणम् । श्रुतौ 'एक एव नारायण आसीन्न ब्रह्मा नेशानः' (महाना०) इति रुद्रादेः कारणत्वनिषेधस्येव 'नारायणाद्रुद्रो जायते' (महाना० १) इति कार्यत्वस्यापि प्रतिपादनात् । तस्याप्युक्तन्यायेन विष्णोः कारणत्वविधिपरत्वस्यैव वक्तव्यत्वादिति चन्द्रिकाशयवर्णनमप्यसत् । तथा सति वाय्वन्तरिक्षादेरपि कार्यत्वश्रवणस्य तथात्वप्रसङ्गेनोक्तभूतादिकारणत्वलक्षणस्यासंभवप्रसङ्गात् । कल्पकानुपलम्भस्य तुल्यत्वात् । कारणत्वादिश्रवणं तत्कल्पकमिति चेत् । 'वायुश्चान्तरिक्षं चैतदमृतम्' (बृ० २ । ३ । ३) इत्यमृतत्वश्रवणस्य तत्रापि कल्पकस्य सत्त्वात् । अमृतत्वं वाय्वन्तरिक्षादेश्चिरकालावस्थायित्वाभिप्रायं चेत्कारणत्वश्रवणमप्यवान्तरकिंचित्कारणत्वविषयं किं नान्यथासिद्धम् । अत्र प्रत्यक्षविरोधस्येव तत्र श्रुत्यागमविरोधस्य सत्त्वाच्च । उक्तपूर्वपक्षे—

> ऋग्यजुःसामाथर्वाश्च भारतं पाञ्चरात्रकम् ।
> मूलरामायणं चैव शास्त्रमित्यभिधीयते ॥ (स्कान्दे)

इति भाष्योदाहृतश्रुतिपरिगृहीतस्मृत्या दुरागमाप्रामाण्येनात्र सिद्धान्त इत्यपि चन्द्रिकोक्तं न साधु । प्रत्यक्षवचनेन सिद्धान्तन्यायेन पूर्वपक्षोत्थानासंभवात् । नहि प्रत्यक्षवचनविरोधे युक्तयः संभवन्ति ।

यत्तु भवन्मते 'अनुकृतेस्तस्य च' (ब्र० सू० १ । ३ । २२) इत्यधिकरणे 'न तद्भासयते सूर्यः' (गी० १५ । ६) 'यदादित्यगतं तेजः' (गी० १५ । १२) इति प्रत्यक्षवचनाविरुद्धस्य 'न तत्र सूर्यो भाति न चन्द्रतारकम्' (मु० २ । २ । १०) इत्यादिश्रुतेस्तेजोधातुपरत्वपूर्वपक्षस्येव तथा—

> आत्मनो वै सहस्राणि बहूनि भरतर्षभ ।
> योगी कुर्याद्बलं प्राप्य तैश्च सर्वैर्महीं चरेत् ॥

इतिप्रत्यक्षवचनाविरुद्धस्य देवताधिकरणे बहुषु यागेषु युगपदेकस्य स्वरूपसंनिधानानुपपत्तिपूर्वपक्षस्येव च प्रत्यक्षवचनविरुद्धस्याप्यज्ञानेनात्रत्यपूर्वपक्षस्य संभव इति। तदप्यस्मदीयग्रन्थतात्पर्यानवबोधनिबन्धनं स्वबुद्धिपरिपाकमात्रमेव। न ह्यस्मन्मते ‘अनुकृतेस्तस्य च (ब्र० सू० १। ३। २२)’ इत्यधिकरणे ‘न तद्भासयते (गी० १५। ६)’, ‘यदादित्यगतं तेजः (गी०१५।१२)’ इतिप्रत्यक्षवचनाज्ञानेन ‘न तत्र सूर्यो भाति(मु०२।२।१०)’ इत्यादिश्रुतेस्तेजोधातुपरत्वमिति पूर्वपक्षः किंतु ‘न तद्भासयते’ इति स्मार्तणिजर्थस्य भातीतिप्रबलश्रुतिबलाद्बाधमङ्गीकृत्यैव। तथा हि—ज्ञाधातूक्तार्थ इव भाधातूक्तार्थे विषयानपेक्षणात्। ‘न तत्र भाति’ इत्यत्र तत्रेति न विषयसप्तमी। तथा सति विषयापेक्षाजननाय भातीत्यस्य णिजर्थगर्भताश्रयणीयतापत्तेः। तद्वरं भावलक्षण उपपदसप्तम्येवेयमिति। तथा च तस्मिन्सति सूर्यादिकं न भातीत्यर्थो लभ्यते। न चैवं ‘तस्मिन्सति सूर्यादिकं न भाति’ ‘तं भान्तमनुभाति’ इति परस्परविरुद्धवाक्यार्थद्वयमापद्येतेति शङ्क्यम्। तस्मिन्सति न भातीत्यनेन तत्प्रयुक्तस्पष्टभाननिषेधबोधाभ्युपगमात्। ततश्च तमनुभातीत्यनेनार्थात्तमनुसृत्यास्पष्टं भातीति लाभात्। सर्वनाम्नः सति संभवे प्रकृतपरामर्शिताया न्याय्यत्वात्। अनुभाति सर्वमित्यत्र सर्वशब्दः प्रकृतसूर्यचन्द्रतारकाग्न्यादिपर एव। तेन चाक्षुषेष्वेवार्थेषु भानार्थं तेजोपेक्षा न सर्वत्रेति तेजोधातोः ‘अनुभाति सर्वम्’ इत्यनेनावगतसर्वावभासकत्वविरहेऽपि न क्षतिः। तथा च सूर्याद्यस्पष्टभानहेतुत्वे सति तत्स्पष्टभानविरोधित्वं पादत्रयेण लभ्यं तेजोधातुपदवाच्यज्योतिष एव लिङ्गम्। ज्योतिषामेव सौरादीनां चन्द्रतारकादिज्योतिःस्पष्टभानविरोधित्वे सति तदस्पष्टभानहेतुत्वं प्रायो दृष्टमतस्तेजोधातुरेव मन्त्रप्रतिपाद्यः। स च सृष्ट्याद्युत्पन्नापञ्चीकृततेजसा सूर्यादिरिव समुत्पद्यते। तस्य च सूर्याद्युदयानुविधाऽप्यु(धाय्यु)दयस्य सूर्यचन्द्रादितेजोमण्डलमात्रनिष्ठत्वाभ्युपगमात्। चन्द्रसूर्यादयः स्पष्टं भान्तीत्यस्य सूर्यादीनां प्रकृतज्योतिर्विवेकाग्रहाद्भ्रममात्रत्वमित्यभ्युपगमाच्च। तादृशतेजोधातुस्वीकारे सूर्यचन्द्राद्यभावेऽपि पदार्थभानं

स्यात् । सूर्यादिषु स्पष्टं भासमानेषु कथं तेषां स्पष्टभाननिषेध इति शङ्कानामनवकाशः । न चैवं सति ' तस्य भासा सर्वमिदं विभाति ' ( कौ० २ । ५ । १५ ) इत्यनुपपन्नम् । आदित्यादिभाने तेजसाऽनपेक्षणात्तेजोभिन्नचाक्षुष एव तेजसः कारणत्वादिति वाच्यम् । उपक्रमानुसारेण मन्त्रस्य ज्योतिष्परतानिर्णये तदनुसारेण तस्य भासेति तृतीया न * करणतृतीया, अपि तु + साहित्यार्थकोपपदविभक्तिरेव बाधकाभावात् । तथा च तस्य भासा सह सर्वं सूर्यादिकं भातीति मन्त्रार्थः । अस्तु वा करणतृतीया । चाक्षुषप्रत्यक्ष एव तेजोपेक्षा कल्प्यते । तेजसश्चाक्षुषेऽपि सर्वत्र विषये तेजःसंयोगस्य सुलभत्वेन तेजोवयवान्तरेण तेजोवयवान्तरसंयोगस्य क्वापि तेजश्चाक्षुषे व्यतिरेकादर्शनान्न तेजोभिन्नेति निवेशनीयम् । गौरवात् । "न तत्र सूर्यो भाति' इति मन्त्रस्य कठवल्ल्यां मुण्डके च ब्रह्मप्रकरणे पाठेऽप्युक्त-

---

* न करणतृतीयेति । ' कर्तृकरणयोस्तृतीया ' ( पा० सू० २ । ३ । १८ ) इत्यनेन तृतीया न भवति । तथा सति तद्भाःकरणकमिदंकर्तृकं विभानमिति शाब्दबोधः स्यादिति भावः ।

+ साहित्यार्थकोपपदेति । ' सहयुक्तेऽप्रधाने ' ( पा० सू० २ । ३ । १९ ) इत्यनेनेति भावः । तथा हि—सहार्थो नाम साहित्यम् । तच्च स्वसमभिव्याहृतक्रियादिसमानकालिकतत्क्रियादिमत्त्वरूपम् । तादृशसहार्थेन युक्तेऽप्रधानत्वेन च विवक्षितेऽर्थे तद्वाचकात्तृतीया भवतीत्यर्थः । प्रकृते च यद्यपि साहित्यबोधकः सहशब्दो न प्रयुक्तस्तथाऽपि सहशब्दाध्याहारेण तदर्थप्रतीत्या वा ' वृद्धो यूना ' ( पा० सू० १ । २ । ६५ ) इति निर्देशादध्याहारं विना केवलार्थप्रतीत्या तद्युक्तत्वात्तृतीया सिध्यति । इयं चोपपदविभक्तिः । उपपदविभक्तित्वं नाम पदयोगनिमित्तकविभक्तित्वम् । ननु ' उपपदविभक्तेः कारकविभक्तिर्बलीयसी ' इत्यस्याः परिभाषाया जागरूकत्वात्कथमत्रोपपदविभक्तिरित्युच्यत इति चेत् । अत्रोच्यते—कारकविभक्तित्वं नाम क्रियाजनकत्वसमानाधिकरणकर्त्रादिषट्कान्यतमार्थत्वम् । एवं च यत्र कर्तृत्वादिना विवक्षा तत्रैव सा परिभाषा प्रवर्तते । प्रकृते तु कर्तृत्वेनाविवक्षणात्तत्परिभाषाया अप्रवृत्त्योपपदविभक्तिः सिध्यतीत्यभिप्रेत्याऽऽह—बाधकाभावादिति । तथा च शाब्दबोधः—तद्भाःसाहित्यवदिदंकर्तृकं विभानमिति ।

रीत्या मन्त्रबोध्यतेजोधातुगतोक्तलिङ्गेन प्रकरणबाधात्स्वरसतो मन्त्रेण तेजोधातुरेवोपासनार्थं प्रतिपाद्यते । अधिकमाकरादौ द्रष्टव्यम् । तथा च प्रबलश्रुतिबलाण्णिजर्थबाधेन पूर्वपक्षे 'न तद्भासयते' (गी० १५ । ६) इत्यस्य 'न तत्र सूर्यो भाति' इतितेजोधातुप्रतिपादकश्रुतिसमानार्थकतया विरोधाभावेन तद्वचनाज्ञानेन न 'अनुकृतेस्तस्य च (ब्र० सू० १ । ३ । २२) इत्यत्र पूर्वपक्षः । 'यदादित्यगतं तेजः (गी० १५ । १२)' इति स्मृत्या जगदवभासिकाऽऽदित्यादिप्रभा परमात्मसंबन्धिनीत्येतादृशार्थप्रतिपादनात्तस्य च पूर्वपक्षिसंमते 'न तत्र सूर्यो भाति (मु० २ । २ । १०)' इत्यादिपादत्रयोक्तोक्तलिङ्गावगते तेजोधातुविशेषरूपार्थे तद्वचनविरोधशङ्कैव नास्तीत्यस्मदीयग्रन्थदर्शिनां विदुषां स्पष्टमेवेति तद्वचनाज्ञानेन तद्वचनविरुद्धस्तेजोधातुरेव 'न तत्र सूर्यो भाति (मु० २ । २ । १०)' इतिवाक्यप्रतिपाद्य इति 'अनुकृतेस्तस्य च' (ब्र० सू० १ । ३।२२) इत्यधिकरणेऽस्मदीयः पूर्वपक्ष इति व्यामोहमात्रमेव । एवं देवताधिकरणे—

> आत्मनो वै सहस्राणि बहूनि भरतर्षभ ।
> योगी कुर्याद्बलं प्राप्य तैश्च सर्वैर्महीं चरेत् ॥

इति प्रत्यक्षवचनविरुद्धो बहुषु यागेषु युगपदेकस्य स्वरूपसंनिधानानुपपत्तिपूर्वपक्षोऽप्यस्मन्मतसिद्धस्तद्वचनाज्ञानेनैव प्रवृत्त इत्यप्यस्मदीयग्रन्थार्थानवबोधनिबन्धनं व्यामोहमात्रमेव । तथा हि—देवताधिकरणे ब्रह्मविद्याधिकारप्रयोजकान्तःकरणाद्युपेतशरीरित्वाभावेन देवानां न ब्रह्मविद्याधिकार इति मन्त्रार्थवादानां विध्येकवाक्यतयैव प्रामाण्यम्, न स्वार्थे इति मन्त्रातिरिक्तदेवतास्वरूपानङ्गीकारेण देवानां ब्रह्मविद्याधिकारप्रयोजकशरीरित्वाभ्युपगमे कर्माङ्गभूतानां तेषामृत्विगादिवत्स्वरूपसंनिधानापत्तिः । न च सा युगपदनेकेषु यागेषु संभवति । एकस्मिन्नप्यनुपलब्धेरित्याक्षेपकर्त्रा पूर्वपक्षिणा मन्त्ररूपाणां देवानां शरीरित्वनियतयोगित्वानङ्गीकारादुक्तवचनविरोधाभावेन तदीयोक्तपूर्वपक्षे तद्वचनाज्ञानकल्पनानावश्यकत्वात् । 'ऋग्यजुःसाम' इतिप्रत्यक्षवचनाज्ञानेनाचोक्तपूर्वपक्षे स्मृत्यधिक-

रणेनास्य पौनरुक्त्यमिति पूर्वोक्तदोषापरिहारस्तदवस्थ एव ।

यत्तु चन्द्रिकायां स्वप्रयोजकगुणप्रयुक्तपरतःप्रामाण्यस्य मुख्यत्वेनाप्रामाण्यप्रयोजकदोषाभावप्रयुक्तस्वतःप्रामाण्यस्य जघन्यत्वादागमविरोधे श्रुतेस्तद्गृहीतस्मृतेश्च न स्वार्थपरत्वम्, किंतु विस्पष्टागमानुसारेणास्पष्टश्रुत्यादि नेयमिति पूर्वपक्षे प्रामाण्यस्य स्वतस्त्वेन स्मृत्यधिकरणे सिद्धान्त इति नोक्तपौनरुक्त्यमिति । तदप्यसत् । इहैव दुरागमाद्यप्रामाण्यप्रतिष्ठापयिषया स्वतःप्रामाण्ये वक्तव्ये परतःप्रामाण्ये शङ्कानुत्थानात् । पौरुषेयाणामपौरुषेयवेदमूलकतया प्रामाण्यस्य वक्तव्यतया दोषाभावप्रयुक्तस्यापि तत्प्रामाण्योपजीव्यतया जघन्यत्वेऽपि तस्यैवाऽऽदरणीयत्वात् । भ्रमादिमूलकत्वसंभावनया गुणप्रयुक्तत्वस्य दुरवधारणतया ततोऽपि दोषाभावप्रयुक्तप्रामाण्यस्यैव युक्तत्वाच्च ।

यत्तु श्रुतेः स्वतःप्रामाण्यं दुरागमानां समबलतां चाङ्गीकृत्यैव पूर्वपक्षिणाऽङ्गीकृतस्वतःप्रामाण्यश्रुतिपरिगृहीतस्मृत्यैव तदप्रामाण्येन सिद्धान्ते कृत इहैव स्वतःप्रामाण्यव्यवस्थापनप्रयासो नाऽऽवश्यकः । न चैवं परतःप्रामाण्ये शङ्कानुत्थितिः । तत्प्रकारस्योक्तत्वात् । पौरुषेयस्याप्याप्तिमूलत्वेन संवादेन वा प्रामाण्यसंभवेन तस्यापौरुषेयवेदमूलतयैव प्रामाण्यमिति नियमश्चासिद्धः । भ्रमादिमूलकत्वसंभावनयेत्यादिकं तु सिद्धान्तयुक्तिरेवेति नेदानीमुद्भावनार्हमिति । तदसत् । पूर्वपक्षिणः श्रुतेः *स्वतःप्रामाण्यपरिग्रहस्य तद्व्यवस्थापकोक्तयुक्त्यनुसंधानमूलकत्वेनैव वक्तव्यतया तद्विस्मरणेन तद्बाध्ययुक्त्या परतःप्रामाण्ये शङ्कानौचित्यस्य बालेनापि सुबोधत्वात् । आप्तिसंवादयोर-

---

* स्वतःप्रामाण्येति । अयं भावः—वेदान्तिनां मते प्रत्यक्षानुमानोपमानागमार्थापत्त्यनुपलब्धिरूपाणि षट् प्रमाणानि सन्ति । तानि च प्रसिद्धानि । तदन्तर्गता च श्रुतिः प्रसिद्धैव । न च प्रसिद्धस्य प्रमाणस्य प्रामाण्यमन्येन परीक्षितव्यम् । तस्य स्वत एव स्वविषयोपस्थापनसामर्थ्यात् । यदि चान्येन परीक्ष्येत तर्हि तस्याप्यन्येन परीक्ष्येत तस्याप्यन्येनेत्यनवस्था स्यात् । तस्मात्प्रसिद्धत्वाच्छ्रुतेः स्वत एव प्रामाण्यम् । स्पष्टं चेदं शास्त्रदीपिकायाम् ।

प्यमूलयोरसंभवेनापौरुषेयवेदस्यैव तन्मूलत्वकल्पनाया न्याय्यत्वेन पौरुषेयाणामपौरुषेयवेदमूलतयैव प्रामाण्यमिति नियमावश्यकत्वाच्च ।

यदपि चन्द्रिकायाम्—अस्य समन्वयप्रस्तावायोक्तलक्षणे ब्रह्मणि ऋगादि शास्त्रं प्रमाणमिति प्रतिज्ञारूपत्वेन स्वपक्षे साधकोपन्यासपरत्वात्तस्य च समन्वयोपपादकाविरोधव्युत्पादनाय बाधकोद्धारपरत्वाद्द्वयमर्थवदित्येतदधिकरणस्मृत्यधिकरणयोः पुनरुक्तिवारणम् । तदपि न सत् । समन्वयप्रस्तावायोक्तप्रतिज्ञया साधकोपन्यासे ह्यज्ञातत्वं प्रयोजकम् । तच्चानुमानाद्यगोचरत्वं स्वविषयेऽपेक्षते । न त्वन्यस्यैतदविषयत्वमिति तत्कथनानौचित्यात् । यत्तु शास्त्रं ब्रह्मणि प्रमाणमिति प्रतिज्ञायोपक्रमादिभिस्तस्य शास्त्रस्य विष्णुपरत्वमित्युत्तरसूत्रे प्रतिपादिते कथमित्याकाङ्क्षायां प्रतिवाक्यं तत्परत्वव्युत्पादनाय समस्तोऽध्यायः । यदि ऋगादि शास्त्रं ब्रह्मणि प्रमाणमिति न प्रतिज्ञायेत तदा तदाकाङ्क्षाविरहाद्ब्रह्मणि शक्तितात्पर्यलक्षणरूपसमन्वयप्रतिपादकाध्यायानुत्थानमेव स्यादिति सार्थकमिदमिति चन्द्रिकार्थे स्थिते समन्वये ह्यज्ञातत्वं प्रयोजकमित्यादि किं केन संगतमित्यादि जल्पनं तदस्मदीयाभिप्रायानवबोधनिबन्धनम् । तथा हि यदि समन्वयप्रस्तावायोक्तलक्षणे ब्रह्मणि ऋगादि शास्त्रं प्रमाणमितिप्रतिज्ञारूपमिदमधिकरणं तदोक्तप्रमाणप्रतिज्ञायां प्रमाणान्तराज्ञातत्वस्यैव प्रयोजकतया ऋगादि शास्त्रमुक्तलक्षणं ब्रह्म न प्रतिपादयति । जगज्जन्मादिकारणत्वस्यानुमानेनैव सिद्धत्वात् । तेनैव लाघवानुगृहीतेन सर्वज्ञत्वसर्वशक्तित्वादिसिद्ध्या गुणपूर्त्यादेरपि सिद्धत्वात् । प्रमाणान्तरगम्ये चार्थे वेदस्य तात्पर्यकल्पनायोगाद्ब्रह्मविचारो न कर्तव्य इति ऋगादि शास्त्रं यथाकथंचिन्नेयमिति पूर्वपक्षयित्वोक्तलक्षणं ब्रह्म नानुमानादिगम्यं किंतु शास्त्रप्रमाणकमेवेति सिद्धान्तकरणमेवोचितम्' न तु जगत्कारणत्वस्यानुमानेनान्यसाधारण्येनातिव्याप्त्याशङ्कयाऽन्यस्यैतदविषयत्वप्रतिपादनेनेति । समन्वयप्रस्तावायोक्तप्रमाणप्रतिज्ञया साधकोपन्यासे ह्यज्ञातत्वं प्रयोजकमित्यादेः सुसं-

गतत्वस्य विदुषां स्पष्टत्वात् । किंचात्र साधकोपन्यासस्यैवां भिप्रेतत्वे त्वदीयभाष्येऽत्र दुरागमताबोधकस्मृतिवचनोदाहरण-मनुपयुक्तमेव स्यात् ।

शास्त्रप्रमाणकत्वोक्त्यावर्थसिद्धस्य जगत्कारणतायामनुमाना-प्रामाण्ये दृष्टान्तीकृतागमाप्रामाण्यस्य स्मृत्यधिकरणप्रमेयस्या-त्रानुवाद एव तादृशस्मृतिवचनोदाहरणेन क्रियते दुरागमाप्रामा-ण्यमुपपादयितुमिति तु चन्द्रिकाद्युक्तं न सत् । तथा सति स्मृत्यनुमानयोरशास्त्रत्वाविशेषात्स्मृत्यधिकरणे जगत्कारणतायां स्मृत्यप्रामाण्ये दृष्टान्तार्थमनुमानाप्रामाण्यस्याग्रेतनतत्तदधिकरण-प्रमेयस्यानुमानाप्रामाण्यमुपपादयितुमनुवादौचित्येन तदकरणेन न्यूनताया दुर्वारत्वात् ।

अनुमानस्यातिदुर्बलत्वात्तदनुक्तिरिति चन्द्रिकोक्तं तु न सत् ।
उद्वेजयति सूक्ष्मोऽपि चरणे कण्टकाङ्कुरः ।

इति न्यायेन मन्दविषयन्यायेन च तदप्रामाण्योपपादनेन पृथक्तन्निरासस्यौचित्यात् । एतेनात्रानुमानेन पूर्वपक्षे जगत्का-रणत्वस्य तदयोग्यत्वेन सिद्धान्तः, स्मृत्यधिकरणे तु शैवाग-मेन पूर्वपक्षे तदप्रामाण्येन सिद्धान्त इति भेद इति चन्द्रिकोक्तं निरस्तम् । तथा सत्यत्र भाष्ये दुरागमताबोधकस्मृतिवचनो-दाहरणस्याप्रकृतत्वापातात् । किंच शास्त्रप्रमाणकत्वोक्तिमात्रेण कथमन्येषामार्थिकमप्रामाण्यम् । चक्षुःप्रमाणकेऽपि घटादौ त्व-क्प्रमाणकत्वदर्शनात् । प्रत्यक्षप्रमाणकेऽपि वह्न्यादावनुमानप्र-माणकत्वदर्शनाच्च ।

न च सर्वं वाक्यं सावधारणमिति न्यायेन शास्त्रमेव योनिः प्रमाणमिति विग्रहेण शास्त्रप्रमाणकमेव शास्त्रैकप्रमाणकमिति वा 'नावेदवित्' ( तै० ३ । १२ । ९ ) इति 'औपनिषदम्' इति श्रुतेश्च सिद्धान्तकरणादर्थादन्येषामप्रामाण्यमिति शङ्क्यम् । तथा सति 'नावेदवित्' ( तै० ३ । १२ । ९ ) इति श्रुत्यौ-पनिषदत्वादिव्यपदेशैश्चावधारणावगत्या जगत्कारणत्वादौ शा-स्त्रैकप्रमाणकत्वसिद्धान्तायावधारणाव्यवच्छेद्यं तस्य मानान्तर-विषयत्वमेवावश्यं पूर्वपक्षयितुमुचितं न तु तस्य साधारण्यम् ।

एतेनानुमानेनोक्तलक्षणातिव्याप्तिपूर्वपक्षिणं तादृशसाधारणश्रुत्यर्थाज्ञानकल्पनं निरस्तम् । शास्त्रं यथोक्तलक्षणं ब्रह्म न प्रतिपादयति जगत्कारणत्वस्यानुमानेन सिद्धत्वादित्याद्यस्मद्भाष्यकारप्रदर्शितद्वितीयवर्णकरीत्याऽधिकरणीयपूर्वपक्षसिद्धान्तग्रन्थनरूपायां सत्यां गतौ तादृशश्रुत्यर्थाज्ञानकल्पनया पूर्वपक्षोत्थानस्यानुचितत्वाच्च । प्रतिवाक्यं तत्तद्वेदवाक्यस्यायमर्थ इति श्रवणानन्तरं मननरूपविचारे प्रवृत्तस्य शिष्यस्य तत्तच्छ्रुत्यर्थाज्ञानेन पूर्वपक्ष इति त्वया वक्तुमशक्यत्वाच्च ।

किंच विष्णोरेव जिज्ञास्यताप्रयोजकस्य योगरूढत्वेन पूर्वाधिकरणनिर्णीतब्रह्मशब्दार्थस्य तन्मात्रवृत्तिगुणपूर्णत्वादेः सिद्धिप्रयोजकत्वेन तल्लक्षणतयोक्तकारणत्वस्य तन्मात्रनिष्ठत्वेन निर्णयात्कथं तस्येतरसाधारण्यशङ्कोन्मिषति । जिज्ञासाविधायकवाक्ये कारणमनूद्य तस्य ब्रह्मत्वविधानादनुमानसिद्धकारणत्वस्यान्यगतत्वे सोऽपि ब्रह्मशब्दार्थः स्यादिति शङ्कायां किं बाधकमिति चेत् ।

> तदेव ब्रह्म परमं कवीनाम्(महाना० १ । ६)।
> तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने ।
> तत्रैव मुख्यवृत्तोऽयमन्यत्र ह्युपचारतः ॥

इतिश्रुतिस्मृत्यवगतविष्ण्वेकनिष्ठरूढिज्ञानस्यैव बाधकत्वात् । कारणत्वबलादेव रूढित्याग आकाशपद इवेति चेत् । न । आकाशाधिकरणे हि परोवरीयस्त्वाद्यसाधारणनिरवकाशलिङ्गेनाऽऽकाशपदरूढित्यागेऽपि साधारणतया शङ्क्यमानकारणत्वबलाद्रूढित्यागायोगात् । किं च रुद्रादीनां जीवकोटयन्तर्भावेण कारणत्वस्य साधारण्यशङ्का ब्रह्मकोटयन्तर्भावेण वा । नाऽऽद्यः । कारणत्वपूर्णत्वाभ्यां जिज्ञास्ये जीवभेदे निश्चिते जीवभेदकस्य कारणत्वस्य कथं जीवसाधारण्यशङ्का । यत्तु गन्धवत्त्वलक्षणेन पृथिव्या इतरभेदे निश्चितेऽपि कालिकेन तस्य कालसाधारण्येन कालेऽतिव्याप्तिशङ्केव जिज्ञास्ये कारणत्वेन रुद्रादिजीवभिन्नत्वनिश्चयेऽप्यनुमानेन कारणत्वस्य जीवविशेषगतत्वप्राप्त्या तादृशनिश्चयविघटनेन पूर्वपक्षप्रवृत्तिरिति ।

तदसत् । संबन्धौदासीन्येन सामान्यतो गन्धवत्त्वस्य काल-साधारण्येन तस्यासाधारणधर्मत्वरूपव्यावर्तकलक्षणत्वस्याभा-वेन तेनेतरभेदनिश्चयासंभवेन समवायेन गन्धवत्त्वस्यैव लक्ष-णत्वेन तेनेतरभेदे निश्चिते तस्येतरकालादिसाधारण्येनाति-व्याप्तिशङ्काया असंभवात्केनापि नैयायिकादिनाऽप्रदर्शित-त्वाच्च स्वमतिपरिपाक एव तथोक्तिरिति विदुषां स्पष्टत्वात् । किंचानुमानेन कारणत्वस्य साधारण्यसिद्धावपि किं तेन स्यात् । शास्त्रानारम्भ इति चेत् । कुतः कारणत्वस्य साधा-रण्यमात्रेण शास्त्रानारम्भः । कारणत्वस्य साधारण्ये जिज्ञास्ये श्रुतस्य ब्रह्मशब्दस्य जीवविशेषपरत्वसंभवात् । जीवान्यधर्मि-कगुणपूर्णत्वप्रकारकजिज्ञासाया असंभवेन शास्त्रानारम्भ इति तु योगरूढब्रह्मशब्दस्यान्यपरत्वासंभवस्य पूर्वमेवाऽऽवेदितत्वा-दयुक्तमेव । अनुमानादिनैव कारणत्वसिद्धेः शास्त्रानारम्भ इति चेत् । रुद्रादीनां हि तत्सिद्धिरनुमानादितः स्यात् । विष्णोस्तु तत्सिद्धये शास्त्रमारभ्येतैव । अनुमानादेव तत्सिद्धिस्तु न तवा-प्यभिमता । तथा सति लाघवतर्कसहकृतेन कर्त्रनेकत्वे वक्ष्यमा-णप्रतिकूलतर्कपराहत्या च तदैक्यस्यैव सिद्ध्या कथं कारण-त्वस्य साधारण्यशङ्का । लोके गजगवयगर्दभादीनां घटपटा-दीनां च निर्मातारो विजातीया एव दृश्यन्त इति सुधायामुक्त-त्वाल्लोकदर्शनानुसारेण कर्तारं कल्पयतो गौरवाश्रयणमेवोचित-मिति न लाघवतर्कसहकारेण कत्रैक्यसिद्धिरिति जल्पनं तु न स्वकीयाभीष्टसाधकम् । तथा सति लोके कर्तृणां स्वोचितक-विषयकर्तृत्वस्यासर्वज्ञत्वस्यैव च दर्शनाज्जगत्कर्तृणामपि तथात्व-सिद्ध्यापत्त्या यावज्जगत्कारणत्वस्य ब्रह्मलक्षणस्य साधारण्य-शङ्कयाऽतिव्याप्तिपूर्वपक्षोत्थानासंभवात् । नापि रुद्रस्येश्वरको-ट्यन्तर्भावेणेति द्वितीयः पक्षः साधुः । एकमेवेत्यादिश्रुतिविरो-धात् । तत्रत्यैकमिति शब्दस्य साधारण्याद्यर्थकत्वमालम्ब्य पूर्वपक्षप्रवृत्तिरिति परोक्तमसत् । तथाऽपि 'न ब्रह्मा नेशानः' इत्यस्य विरोधापरिहारात् । कचित्प्रकरणादिवशात्साधारण्याद्य-र्थकत्वेऽप्येकमेवेत्यादिश्रुतिस्थैकशब्दस्य सर्वत्रा[illegible]

जातीयद्वितीयरहितत्वस्य स्वरसतः प्रतीतस्य त्यागेन साधारण्याद्यर्थकत्वकल्पनायां पूर्वपक्षिणः प्रमाणानुपलम्भाच्च । ‘ न ब्रह्मा नेशानः ’ इत्यनेन तादृशस्वरससिद्धैकपदार्थस्य विवरणाच्च । ‘ नैवेह किंचनाग्र आसीत् ’ ‘ आमूलमनाधारमिमाः प्रजा जायन्ते’ ‘दिव्यो देव एकनारायणः ’ इति सुबालोपनिषदि नैवेह किंचनेत्युपक्रमानुरोधेन मूलकारणैक्यावधारणेनैकशब्दस्य साधारण्यार्थकत्वशङ्कानुदयाच्च ।

किंच ‘ मोचकत्वेन विष्णुर्जिज्ञास्यश्चेद्बन्धकत्वेनाजिज्ञास्योऽपि स्यात् । न चायमबन्धकः । जीवस्याबद्धत्वस्वबद्धत्वयोरयोगेनान्यबद्धत्वे वाच्येऽन्यस्य चेतनस्याचेतनस्य वेशाधीनत्वेन पुनरीशस्य बन्धकत्वेनाजिज्ञास्यता । अनधीनत्वे स्वानधीनकृताद्बन्धान्मोचकत्वं नेश्वरस्येति न जिज्ञास्यत्वमिति प्राप्ते प्रसन्नस्य बन्धकत्वं प्रसादहेतौ ज्ञाने जिज्ञासायाः कर्तव्यत्वानुकूलमेव, न प्रतिकूलम् । सूत्रे सृष्ट्यादिहेतुत्वोक्तिस्तु मोचकत्वसंभावनार्थेति सिद्धान्तः ’ इति त्वदीयचन्द्रिकायाम् । ‘मोक्षदत्वाद्ब्रह्म जिज्ञास्यमित्युक्तं प्रथमसूत्रे तत्कथमिति शङ्कायामनेन सूत्रेण तदुपपाद्यते ’ इत्यनुव्याख्यानस्य भाववर्णनेन ‘ तद्विजिज्ञासस्व तद्ब्रह्म ’ ( तै० ३ । १ । १ ) इतिवाक्यस्थं ब्रह्म किं जीव उत विष्णुरिति चिन्तेति ग्रन्थेन च जीवभिन्नजिज्ञास्येश्वरस्यैव जगत्कारणलक्षणलक्ष्यत्वोक्ते रुद्रस्येश्वरत्वे तस्यानुमानेन सृष्टिहेतुत्वे च विष्णोरिव मोचकत्वसंभावनात् । ‘ ज्ञात्वा शिवं शान्तिमत्यन्तमेति ’ ( श्वे० ४ । १४ ) ।

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥ ( श्वे० ६।२०

इत्यादिश्रुतिभिश्च तस्य मोक्षदत्वस्याप्युक्तेश्च लक्ष्यत्वस्यैव संभवान्नातिव्याप्तिशङ्कासंभवोऽपि ।

यत्तु रुद्रस्येश्वरत्वेऽपि जगत्कर्तृत्वलक्षणलक्ष्यविष्णुभिन्नत्वेनातिव्याप्तिः । अत एव तद्ब्रह्मेतिवाक्यस्थं ब्रह्म किं जीव उत विष्णुरिति चिन्तायां विष्णुरिति शब्द इति । तत्तुच्छम् । रुद्र-

स्येश्वरत्वे जगत्कारणत्वे चान्नमयप्राणमयादीनामिव जगत्कारणैक्यश्रुत्यनुरोधेन तस्य विष्णुना समं सविशेषाभिन्नत्वस्यैव वक्तव्यतया लक्ष्यत्वानपायात् । अन्नमयादिषु ब्रह्मशब्दश्रवणात्तथात्वमिति चेत् । 'ऋतꣳ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्' ( म० ना० १०।१२।१ ) इत्यादिषु रुद्रेऽपि ब्रह्मशब्दश्रवणाविशेषात् । यत्तु–ऋतꣳ सत्यमित्यादिमन्त्रे पूर्वार्धोक्तविष्ण्वाख्यपरब्रह्म प्रति ऊर्ध्वरेतं प्रति स्थितमपरं ब्रह्म नीलपिङ्गलार्थकविरूपाक्षशब्देनोच्यते । अन्यथा कृष्णपिङ्गलं नीललोहितमित्यनयोरेकतरस्य पौनरुक्त्यापत्तेः । 'तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्' ( म० ना० १०।१। ६ ) इति श्रुत्या तदेकवाक्यतापन्ने 'अद्भ्यः संभूतो हिरण्यगर्भः' ( म० ना० १०।१।१२) इत्युत्तरानुवाके श्रुतेन 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' ( तै० आ० ३।१३ ) इति लक्ष्मीपतित्वलिङ्गेन ऋतादिशब्दानां विष्णुपरत्वानिर्णयाच्च । किंच 'ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिः' (म०ना०१०।४७) इत्युत्तरवाक्ये ब्रह्माधिपतिरित्यस्य बहुव्रीहिरूपताऽवश्यमनुसरणीया । अन्यथा तत्रत्यब्रह्मशब्दस्य स्वरितान्तत्वानुपपत्तेः । समासान्तरत्वे वाऽन्तोदात्तत्वेन 'अनुदात्तं पदमेकवर्जम्' ( पा० सू० ६ । १ । १५८ ) इत्यस्य प्रसङ्गेन समासस्य स्वरितपूर्वपदान्तत्वानिर्वाह इति । तदसत् । पिङ्गललोहितपदयोः 'नमस्ताम्राय चारुणाय च' इत्यत्र ताम्रारुणशब्दयोरिव भिन्नार्थतया पौनरुक्त्याभावात् । 'पतिं विश्वस्याऽऽत्मेश्वरꣳ शाश्वतꣳ शिवम्' ( म० ना० १०।११।३ ) इत्यादावात्मेश्वरमित्यनेनानन्येश्वरत्वमिव ब्रह्म परमात्मरूपमेवाधिपतिर्यस्येति बहुव्रीहिणाऽनन्याधिपतित्वस्यैव बोधनात् । अन्यथा ब्रह्मणोऽधिपतिरित्युत्तरवाक्यासंगतेः । न च रुद्रो ब्रह्माणं प्रत्यधिपतिरिति त्वयेष्यते । नापि ब्रह्मशब्दोऽयं जीववाचीत्यपि वक्तुं शक्यम् । 'ईश्वरः सर्वभूतानाम्' ( म०ना०१०।४७। ५ ) इत्यनेन पौनरुक्त्यापत्तेः । अनन्याधिपतित्वद्योतनायैव जीवोत्तमं हिरण्यगर्भं प्रत्यधिपतिरित्युक्तिरर्थवती भवति नान्यथा । किंच सदाशिव इति दोषमन्यस्ताहितम्, ओमिति

प्रणववाच्यत्वं चोच्यमानं रुद्रस्य परब्रह्मरूपतां गमयति । 'यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं पश्यत जायमानꣳ स नो देवः शुभया स्मृत्या संयुनक्तु । यस्मात्परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायान्' (म० ना० १०।१०।१९–२०) इत्युपक्रम्य 'यो वेदादौ स्वरः प्रोक्तः' ( म० ना० १०।१०।२४ ) इत्यादिना तस्यैव रुद्रस्योंकारवाच्यत्वमुक्त्वा ' यः परः स महेश्वरः ' ( म० ना० १०।१०।२४ ) इति तस्यैव परब्रह्मशब्दवाच्यमहेश्वरत्वनिर्णयात्स एव चात्र ' ऋतꣳ सत्यम् ' ( म०ना० १०।१२।१ ) इति प्रत्यभिज्ञायते । न च तत्र लक्ष्मीपतित्वलिङ्गसंभवः शङ्कापथमारोहति ।

तत्र माहेश्वरी लक्ष्मीर्मूर्तिर्मूर्तिमतः प्रभोः । इत्यारभ्य—

तस्याङ्कमध्यमारूढा शक्तिर्माहेश्वरी परा ।<br>
महालक्ष्मीरिति ख्याता श्यामा सर्वमनोहरा ॥

इति वायुसंहितादिपुराणवाक्यैर्महादेव्यामुमायामपि लक्ष्मीशब्दवाच्यत्वस्य प्रसिद्धत्वात् । नापि '' ह्रीश्च ते लक्ष्मीश्च पत्न्यौ '' (तै०आ०३।१३) इत्यत्रोक्तश्रीपतित्वलिङ्गसंभवः। समानप्रकरणे शाखान्तरे 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' (तै०आ०३।१३)इति मन्त्रे हृल्लेखावाच्योमापतित्वलिङ्गस्यापि श्रवणेन वाजसनेयकशाखास्थोक्तमन्त्रगतश्रीशब्दस्योमायामेव पर्यवसानात् । न च वैपरीत्यं शङ्क्यम् । ' श्रियं लक्ष्मीमौपलामम्बिकां गां षष्ठीं जयामिन्द्रसेनेत्युदाहुः ' इत्याग्रुष्यसूत्रे श्रीशब्दस्य गौर्यां दृष्टत्वात् । हृल्लेखायाः कमलायां प्रयोगानुपलम्भात् । उपलम्भे वा तल्लिङ्गस्य शिवविष्णुसाधारण्यान्न तेन ब्रह्मशब्दस्य विष्णुमात्रपरत्वनिर्णयः । अत एव शाखाभेदभिन्नपाठाभिप्रायेण लैङ्गे ब्रह्मनारायणकृतशिवस्तोत्रे—

नमोऽस्तु लक्ष्मीपतये श्रीपते ह्रीपते नमः ।

इत्युपबृंहणं संगच्छते । नापि रुद्रे समुद्रान्तःस्थत्वलिङ्गासंभवः । ' प्रजापतिश्चरति गर्भेऽन्तः ' इत्यष्टौ ( म०ना१०।१ ) इत्यादौ समुद्रान्तःस्थत्वस्याष्टमूर्तौ रुद्रेऽपि प्रसिद्धेः । नारायणेऽपि

समुद्रान्तःस्थत्वं प्रसिद्धमिति चेत् । बाढमस्तु प्रसिद्धम् । नैतावता रुद्रव्यवच्छेदः । तस्माद्विष्णुरुद्रयोरुभयोरपि परब्रह्मश्रुतिलिङ्गादीनामुपलम्भात्तयोरभेदस्यैव श्रुतितात्पर्यविषयत्वाद्रुद्रस्यापि जिज्ञास्यब्रह्मलक्षणलक्ष्यत्वमेव रुद्रस्येश्वरत्वपक्षेऽङ्गीकरणीयम् ॥ अन्यथा श्रुतीनामनिर्णायकत्वप्रसङ्गात् । यत्तु रुद्रस्य विष्ण्वात्मकत्वे विष्णोरेव ब्रह्मत्वं सिद्धमिति विष्णुरेव जिज्ञास्यं जगत्कारणत्वलक्षणलक्ष्यं ब्रह्मेति । तत् 'विष्णो रुद्रात्मकत्वे रुद्रस्यैव ब्रह्मत्वं सिद्धमिति न तस्योक्तलक्षणालक्ष्यत्वम्' इत्यनेनोत्तरितम् । एतेन 'एको ह वै नारायण आसीत्' ( म० ना० १ ) इति श्रुतौ परमकारणे नारायणपदश्रवणात्तस्य रुद्रपरत्वे णत्वानुपपत्तेस्तदनुरोधेन सावकाशश्रुत्यन्तराणि नेयानीति न रुद्रस्योक्तलक्षणलक्ष्यजिज्ञास्यपरब्रह्मत्वमिति वाद्नोयुक्तिरपि निरस्ता । वाक्यान्तरेष्वादिरुद्रेऽत्यन्तप्रसिद्धानां शिवहरेश्वरेशानादिशब्दानां श्रवणेन वक्ष्यमाणाप्पय्यदीक्षितोक्तिरीत्या तव मते सृष्टिवाक्यानामनेकस्रष्टृपरत्वस्याप्यविरोधसंभवेन प्रसिद्ध्यतिक्रमानौचित्यात् । विरोधपरिहाराय तदैक्याभ्युपगमस्यैव युक्तत्वात् । अन्यथा नारायणशब्दस्यापि योगवृत्त्या शिवपरत्वसंभवेनानिर्णयप्रसङ्गस्य दुर्वारत्वात् । न च णत्वायोगः । नारायण्यास्येयं नारायणीत्यादिवन्नारायणस्यायं नारायण इति व्युत्पत्तौ बाधकाभावात् । अत एव हरिवंशे—

> नामानि तव गोविन्द यानि लोके भवन्ति हि ।
> तान्येव मम नामानि नात्र कार्या विचारणा ॥

इति कृष्णं प्रति शिववचनं संगच्छते । यानि च विष्ण्वपेक्षया रुद्रापकर्षव्यञ्जकानि वचनानि तानि 'विश्वाधिको रुद्रो महर्षिः' 'जनितोत विष्णोर्ब्रह्मविष्णुरुद्राः संप्रसूयन्ते' इत्यादिवचनानीव कार्यभूतावताररुद्रपरतया नेतव्यानि । तेषु हि रुद्रस्य विश्वशब्दाभिधेयाद्विष्णोराधिक्यस्य सोमशब्दवाच्याद्रुद्राद्विष्णोरुत्पत्तेश्च श्रवणात् । अत एव—

> क्वचिद्ब्रह्मा क्वचिद्विष्णुः क्वचिद्रुद्रः प्रशस्यते ।
> नानेन तेषामाधिक्यं न्यूनत्वं वा कथंचन ॥

तत्तत्कल्पीयवृत्तान्तमधिकृत्य महर्षिभिः ।
पुराणानि प्रणीतानि विद्वांस्तत्र न मुह्यति ॥

इति व्यवस्थाकार्युपबृंहणं संगच्छते । एतेनैव शैवपुराणानां तामसत्वं विष्णुपुराणानां सात्त्विकत्वमिति कल्पनमतिदरिद्राणां निरस्तम् । शिवस्य विष्णोराधिक्यप्रतिपादकश्रुतीनां दर्शितत्वात् ।

सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।
आत्मप्रमाणान्येतानि न हन्तव्यानि सूरिभिः ॥

इति भारते शिवपुराणसमानार्थकपाशुपतागमस्याध्यात्मशास्त्रत्वेन प्रामाण्योक्तेः । शंकरसंहितायां च विष्णुपुराणानां तामसत्वं शिवपुराणानामेव सात्त्विकत्वमित्युक्तत्वेनानिर्णयविपत्त्याऽवुक्तव्यवस्थाया एव शरणीकरणीयत्वात् । अधिकमानन्दमयाधिकरणे वक्ष्यमाणत्वान्नेह प्रपञ्च्यते । तस्माद्रुद्रस्य जीवत्व ईश्वरत्वे वोभयथाऽपि न तत्रातिव्याप्तिपूर्वपक्षसंभवः ।

यत्त्वेवं विकल्प्यास्मद्रीत्या पूर्वपक्षदूषणम्—त्वदभिमतेक्षत्याद्यधिकरणस्थपूर्वपक्षसमानयोगक्षेमम् । तथा हि—प्रधानादेः कारणत्वं किं ब्रह्मेतरान्तर्भावेण ब्रह्मान्तर्भावेण वा । नाऽऽद्यः । जगन्मिथ्यात्वसूचकेन त्रिविधपरिच्छेदरहितत्वार्थकब्रह्मशब्देन तस्य मिथ्यात्वेऽवधृते कारणत्वशङ्कानुदयात् । न द्वितीयः । एकमेवेत्यादिश्रुतिविरोधादित्युक्तवोक्तम्—

अजानता पामरेण चन्द्रिकामलयार्णवम् ।
जल्पितं बहुलं मोघं शल्योदाहृतकाकवत् ॥

इति । तदस्मद्रीत्येक्षत्यधिकरणपूर्वपक्षरहस्याज्ञाननिबन्धनमस्मदनभिमतोपालम्भनम् । नह्यस्मन्मते जिज्ञास्यत्वाभिमतब्रह्मलक्षणस्य प्रधानेऽतिव्याप्तिरिति पूर्वपक्षः । येनोक्तविकल्पावसरः । किंतु जिज्ञासासूत्रे भोक्त्रात्मनो यत्पारमार्थिकं रूपं ब्रह्मेति वेदान्तप्रसिद्धं तद्विचार्यमित्युक्त्वाऽग्रिमत्रिसूत्र्या तादृशमेव ब्रह्म जगत्कारणत्वादिना सकलवेदान्तप्रतिपाद्यमिति समर्थितम् । तन्न संभवति । स्वप्रकाशाद्वितीयानन्दपरमपुरुषा-

र्थरूपब्रह्मणोऽन्यस्य जडस्य प्रधानस्यैव जगत्कारणत्वादिना वेदान्तप्रतिपाद्यत्वावगमादिति सद्विद्यामालम्ब्य सांख्यरीत्या पूर्वपक्षप्रवृत्तेः । अजानतेत्यादिकम्—

> अजानता पामरेण शंकरोक्तिसुधार्णवम् ।
> चन्द्रिकाकूपगेनैवं दार्दूररुदितं कृतम् ॥

इत्यनेन समानयोगक्षेमत्वान्न खेदावहम् ।

यदपि चन्द्रिकायाम्—महीमहीधरादि नानाकर्तृकं विचित्रकार्यत्वात्प्रासादादिवत्, इत्यनुमानेन जगतो नानाकर्तृकत्वसिद्धौ सर्वजगत्कर्तृत्वं लक्षणं चेदसंभवः, स्वभिन्नकृतिसाध्यजगत्कर्तृत्वस्य स्वस्मिन्नसंभवात् । स्वयोग्यसकलजगत्कर्तृत्वं लक्षणं चेदतिव्याप्तिरिति पूर्वपक्ष्याशयवर्णनम् । तदसत् । 'एको ह वै नारायण आसीत्' (महाना० १) 'एकमेवाद्वितीयम्' (छा० ६ । २ । १) इत्यादिजगत्कारणैकत्वबोधकश्रुतिविरोधेन नानाकर्तृकत्वानुमानस्याशुचित्वबोधकश्रुतिविरोधेन 'नरशिरःकपालं शुचि प्राण्यङ्गत्वात्' इत्याद्यनुमानस्येव कालात्ययापदिष्टत्वेन, जगद्यद्यनेकस्वतन्त्रकर्तृकं स्यात्तर्हि कस्यचित्सिसृक्षायां कस्यचित्संहारेच्छायां कस्यचित्पालनेच्छायां युगपत्सृष्टिस्थितिसंहारासंभवेन परस्परवैमत्येन जगतः सृष्ट्यादिकं न स्यात् । जायमानं वाऽनियतमक्रमिकं वा स्यादिति प्रतिकूलतर्कपराहतत्वेन च तदवष्टम्भेन पूर्वपक्षानुदयात् ।

यत्त्वनकेकर्तृकानुमानानां निरवकाशत्वेनैकादिशब्दानामनेकार्थकतया सावकाशत्वेन नोक्तश्रुतिविरोधः । अत एव न नरशिरःकपालशुचित्वानुमानतुल्यत्वम् । तत्रेवात्रोपजीव्यश्रुतिविरोधाभावात् । मत्सरादिदोषशून्यनानाकर्तृकत्वानुमानं उक्तप्रतिकूलतर्कपराहतेरसंभवात् । निर्दुष्टानुमानेनैव पूर्वपक्षप्रवृत्तिरिति नियमाभावस्यासकृदावेदितत्वाच्च । किंच परमते 'जगद्व्यापारवर्जम्' (ब्र० सू० ४ । ४ । १७) इत्यधिकरणे नानाकर्तृकत्वं जगतः पूर्वपक्षिणोऽभिमतम् । सगुणब्रह्मोपासकानां निरङ्कुशमैश्वर्यमित्यादिभाष्यात् । ईश्वरनानात्वं पूर्वपक्षफलमिति टीकाग्रन्थाच्च । तत्र जगत्कारणैकत्वबोधकोक्तश्रुतिविरो-

घात्परस्परवैमत्येन सृष्ट्याद्यनुपपत्तेस्त्वदुक्तास्मद्रीत्यैतदधिकरणीयपूर्वपक्षदूषणेनैव ‘ जगद्व्यापारवर्जम् ’ ( ब्र० सू० ४ । ४ । १७ ) इत्यधिकरणीयोक्तपूर्वपक्षानुदयस्त्वन्मतेऽपीत्यादि । तदप्यसत् । एकादिपदानामनेकार्थतया सावकाशत्वेऽपि ‘ न ब्रह्मा नेशानः ’ इत्यादेः ‘ स ऐक्षत ’ ‘ तदैक्षत ’ ( छा० ६ । २ । ३ ) इत्याद्येकवचनावधृतैकत्वस्य विरोधापरिहारस्यासकृदावेदितत्वात् । सावकाशनिरवकाशन्यायस्य गृहीतप्रमाणभावोभयविषयत्वमेव । अन्यथाऽयं गौरश्व इत्यादेरपि स गौर्नाश्व इत्यादिसंकोचकत्वं प्राबल्यं वा स्यादित्यस्याद्वैतसिद्धितदीयटीकादर्शिनां स्पष्टत्वात् । निश्चितप्रमाणभावश्रुतिविरोधेन प्रतिकूलतर्कपराहतत्वबाधादिदोषदुष्टानुमानविषयगवेषणायोगात्तात्पर्यलिङ्गैरुपक्रमादिभिः कर्त्रैक्यपरत्वेऽवधृते श्रुतेरपि निरवकाशत्वात्कर्त्रैक्यबोधकोक्तप्रबलश्रुत्या ‘ सविशेषणे विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे ’ इति न्यायेन नानाकर्तृकानुमानस्य ज्ञानेच्छाकृतिरूपकर्तृत्वनानात्वविषयतया सावकाशत्वकल्पनासंभवाच्च निर्णीततात्पर्यकत्वमेवोक्तश्रुतीनां बलवत्त्वम् । अत एवेत्यादिकमपि न विचारक्षमम् ।

प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम् ।

इति स्मृत्या श्रुतीनामागमत्वेनैव प्राबल्योक्तेर्नरशुचित्वानुमानस्याशुचित्वबोधकागमत्वेनैवाऽऽगमबाध्यतायाः सर्वसंमतत्वात् । किंचाशुचित्वबोधकागमस्य शुचित्वानुमानोपजीव्यत्वं × तेन च प्राबल्यं बाधकत्वलक्षणमपि न संभवति । =तद्ध्यनुमानापेक्षितसाध्यादिग्राहकत्वरूपमेव । अन्यस्यासंभवात् । नह्यशुचित्वागमः शुचित्वानुमानापेक्षितशुचित्वरूपसाध्यादिग्राहकः । येन तदुपजीव्यः स्यात् । अथ शुचित्वबोधकागमसजातीयत्वेन तस्योपजीव्यता तर्हि साजात्यस्याऽऽगमत्व-

---

× उपजीव्यत्वमिति । ( २२३ पृष्ठे ) ‘ तत्रेवात्रोपजीव्यश्रुतिविरोधाभावात् ’ इत्यनेन यदुपजीव्यत्वमशुचित्वागमस्य दृष्टान्तत्वेनोक्तं तन्न संभवतीत्यर्थः ।

= तद्धीति । उपजीव्यत्वं हीत्यर्थः ।

रूपतयाऽऽ*गमत्वेनैव तस्य बाधकता प्राप्ता नोपजीव्यत्वेन। किंचापेक्षितार्थग्राहित्वादिमात्रेण चेदुपजीव्यता तया च बाधकत्वं तदाऽपेक्षितप्रतियोगिग्राहकत्वेन ‘ इदं रजतम् ’ इति भ्रमस्य बाधोपजीव्यत्वात् ‘ नेदं रजतम् ’ इति बाधबुद्धेरनु+दयप्रसंगात् । ×अत एव मत्सरादिदोषशून्यनानाकर्तृकानुमाने नोक्तप्रतिकूलदोषपराहतिरिति थूथू कृतम् । तस्यापि कर्त्रैक्यश्रुतिबाधितत्वात् । दृष्टान्तभूते प्रासादादौ समत्सरनानाकर्तृकत्वस्यैव दृष्टत्वेन साध्याप्रसिद्ध्या तादृशानुमानस्य दृष्टान्तविकलत्वेनासाधकत्वात् । घटादावेककर्तृक उक्तसाध्यहेत्वोर्व्यतिरेकयोर्व्याप्तिग्रह इत्यपि न संभवति । समनस्कानां जीवानां मत्सरादिदोषनैयत्येनेश्वरनानात्वस्यानुमानात्प्रागसिद्धेर्मत्सरादिदोषशून्यनानाकर्तृकत्वरूपप्रतियोग्यप्रसिद्ध्या तद्व्यतिरेकाप्रसिद्धेः । मत्सरादिदोषशून्यनानाकर्तृकत्वाभावस्य शून्यान्तव्यर्थविशेषणघटितत्वेन घटादावुक्त=साध्यहेतुव्यतिरेकयोर्व्याप्तिग्रहासंभवाच्च । तथा हि—+क्षित्यादिकं कर्तृजन्यं कार्यत्वादित्य-

---

* आगमत्वरूपतयेति । तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वरूपसाजात्यस्यात्राऽऽगमत्वरूपे पर्यवसानादागमत्वरूपतयेत्युक्तम् ।

\+ अनुदयप्रसङ्गादिति । अयं भावः—चाकचक्यादिसादृश्यसंदर्शनेन शुक्तौ ‘ इदं रजतम् ’ इत्याकारकं भ्रमज्ञानं समुत्पद्यते । ततश्च सामीप्यादिनिमित्तान्तरेण ‘ नेदं रजतम् ’ इत्याकारकं तद्भ्रमनिवर्तकं ज्ञानं जायते । यदि चापेक्षितार्थग्राहि ज्ञानमुपजीव्यं सद्बाधकं भवति तर्हि ‘ नेदं रजतम् ’ इत्यस्मिञ्ज्ञाने रजतप्रतियोगिकोऽभावो विषयतया प्रतीयतेऽतः प्रतियोगित्वेन रजतमप्यपेक्ष्यते । तद्ग्राहि ‘ इदं रजतम् ’ इत्याकारकं ज्ञानमुपजीव्यं सद्बाधकं स्यात् । एवं चोपजीव्यत्वेन बाधकं यत् ‘ इदं रजतम् ’ इत्याकारकं ज्ञानं तेन ‘ नेदं रजतम् ’ इत्याकारकं बाधज्ञानं बाधिष्यते । अतस्तदनुदयप्रसङ्ग इति ।

× अत एवेति । उपजीव्यत्वादेवेत्यर्थः ।

= साध्यहेतुव्यतिरेकयोरिति । साध्यहेत्वभावयोरित्यर्थः ।

\+ क्षित्यादिकमिति । इत आरभ्य नोपाधिरित्यन्तो ग्रन्थो दृष्टान्तत्वेनोपन्यस्तः । तस्यायं भावः—ईश्वरसत्त्वे प्रमाणभूतं ‘ क्षित्यादिकं पक्षीकृत्य

नुमाने शरीरजन्यत्वस्योपाधित्वमाशङ्क्य यद्व्यतिरेकस्य यद-
भावव्याप्यत्वं तस्यैव तद्व्यापकत्वमितरांशेऽनुकूलतर्कप्रसरा-
दिति नियममालम्ब्य क्षित्यादिकं न कर्तृजन्यं शरीराजन्यत्वा-
दिति तादृशोपाध्यभावेन साध्याभावानुमाने व्यभिचारशङ्कायां
शरीरजन्यत्वं यदि कर्तृजन्यत्वव्यापकं न स्यात्तदा कर्तृजन्य-
त्वाभावव्याप्याभावप्रतियोगि न स्यादिति तन्निवर्तकतर्को नाव-
तरति। लाघवेन जन्यत्वाभावत्वेनैव व्याप्यत्वसंभवात्। शरीर-
विशेषणवैयर्थ्यादिष्टापत्तित्वान्न शरीरजन्यत्वं कर्तृजन्यत्वव्यापकं
नोपाधिरितीश्वरवादादौ* मण्यादावुक्तदिशा मत्सरादिदोषशून्य-
नानाकर्तृकत्वं यदि विचित्रकार्यत्वव्यापकं न स्यात्तदा विचित्र-
कार्यत्वाभावव्याप्याभावप्रतियोगि न स्यादिति तर्को नावतरति।
शून्यान्तविशेषणवैयर्थ्येन नानाकर्तृकत्वाभावत्वेनैव व्याप्यत्व-
संभवेनेष्टापत्तित्वान्मत्सरादिदोषशून्यनानाकर्तृकत्वरूपप्रकृतसा-
ध्ये विचित्रकार्यत्वरूपप्रकृतहेतुव्यापकत्वासंभवेन प्रकृतहेत्वभावो

---

कर्तृजन्यत्वं साध्यते कार्यत्वाद्धेतोः ' इत्याकारकं यदनुमानं तत्र शरीरजन्य-
त्वमुपाधिः संभवतीति सोपाधिकत्वाद्व्याप्यत्वासिद्धहेत्वाभासवैशिष्ट्येनोक्तानु-
मानस्य दुष्टत्वादीश्वरसत्त्वे प्रमाणाभाव इत्याकारिका शंका समुत्पद्यते । परंतु
तत्रोपाधेः साध्यव्यापकत्वमवश्यं वक्तव्यम् । साध्यव्यापकत्वे सति साधना-
व्यापकत्वमिति तल्लक्षणात् । तच्च न संभवति । व्यापकत्वं हि ' यद्व्यतिरे-
कस्य यदभावव्याप्यत्वं तस्यैव तद्व्यापकत्वम् ' इति नियमान्निश्चीयते । अत्र
व्यतिरेको नाम, अभावः । एवं चोक्तनियमावलम्बनेन शरीरजन्यत्वस्य कर्तृजन्य-
त्वव्यापकत्वसूचके ' क्षित्यादिकं पक्षीकृत्य कर्तृजन्यत्वाभावः साध्यते शरीरज-
न्यत्वाभावात् ' इत्याकारके तादृशोपाध्यभावेन साध्याभावानुमाने कृते सति तत्र
'शरीरजन्यत्वं कर्तृजन्यत्वस्य व्यापकं न स्यादनुकूलतर्काभावात्' इत्याकारक-
व्यभिचारशङ्कायां समुत्पन्नायां तन्निवर्तकोऽनुकूलस्तर्कः 'यदि शरीरजन्यत्वं
कर्तृजन्यत्वस्य व्यापकं न स्यात्तर्हि कर्तृजन्यत्वाभावस्य यो व्याप्योऽभावस्तत्प्र-
तियोगि ( शरीरजन्यत्वम् ) न स्यात् ' इत्याकारको नावतरति । जन्यत्वा-
भावत्वेनैव कर्तृजन्यत्वाभावनिरूपितव्याप्यत्वसंभवाच्छरीरविशेषणस्य वैयर्थ्या-
च्छरीरजन्यत्वस्य कर्तृजन्यत्वव्यापकत्वाभावान्नोपाधित्वमिति ।

* मण्यादाविति । मणिनामकग्रन्थादौ इत्यर्थः ।

यदि प्रकृतसाध्य[भाव]व्यापको न स्यात्तदा * प्रकृतसाध्यात्मकप्रकृतसाध्याभावाभावनिष्ठव्यापकतानिरूपितव्याप्यताकाभावप्रतियोगी न स्यादिति + तर्कस्यापि प्रकृतसाध्ये प्रकृतहेतुव्यापकत्वस्योक्तरीत्याऽभावेनेष्टापत्त्याऽभावेन प्रकृतसाध्याभावप्रकृतहेत्वभावयो× र्व्याप्यव्यापकभावाग्रहात् । न च स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तरघटितत्वरूपव्यर्थविशेषणत्वस्यैव व्याप्यतानवच्छेदकत्वानियमात्प्रकृते च = नानाकर्तृकत्वत्वपर्याप्तावच्छेदकताकप्रतियोगिताकाभाववत्त्वसामानाधिकरण्यस्य मत्सरादिदोषशून्यत्वघटिततादृशधर्मपर्याप्तावच्छेदकताकप्रतियोगिताकाभाववत्त्वे तादृशाभावयोर्भेदेनासत्त्वान्न शून्या-

---

* प्रकृतसाध्यात्मकेति । प्रकृतसाध्यात्मको यः प्रकृतसाध्याभावाभावस्तन्निष्ठव्यापकतानिरूपिता व्याप्यता यस्य हेतुरूपाभावस्य तस्य हेत्वभावः प्रतियोगी न स्यादित्यर्थः ।

+ तर्कस्यापीति । अस्य द्वितीयेन 'अभावेन' इत्यनेन सहान्वयः ।

× व्याप्यव्यापकभावाग्रहादिति । अयं भावः—क्षित्यादिकं पक्षीकृत्य मत्सरादिदोषशून्यनानाकर्तृकत्वं साध्यते विचित्रकार्यत्वादित्यनुमाने साध्यहेत्वोर्व्याप्तिग्रहो न संभवति । प्रासादादौ समत्सरनानाकर्तृकत्वस्य दृष्टत्वात् । ननु यत्र यत्र मत्सरादिदोषशून्यनानाकर्तृकत्वाभावस्तत्र तत्र विचित्रकार्यत्वाभावो यथा घटादिरिति व्यतिरेकव्याप्तिः संभवतीति चेत् । अत्रोच्यते—मण्यादिग्रन्थेषु व्यर्थविशेषणघटितधर्मस्य धर्मान्तरेण सह व्याप्तिर्न संभवतीत्युक्तत्वात्प्रकृतसाध्ये शून्यान्तव्यर्थविशेषणघटिते मत्सरादिदोषशून्यनानाकर्तृकत्वरूपे विचित्रकार्यत्वरूपप्रकृतहेतुनिष्ठव्याप्यतानिरूपितव्यापकत्वासंभवात् । 'यदि विचित्रकार्यत्वाभावरूपः प्रकृतहेत्वभावो मत्सरादिदोषशून्यनानाकर्तृकत्वाभावरूपप्रकृतसाध्याभावनिरूपितव्यापको न स्यात्तर्हि मत्सरादिदोषशून्यनानाकर्तृकत्वरूपप्रकृतसाध्यात्मकप्रकृतसाध्याभावाभावनिष्ठव्यापकतानिरूपितव्याप्यताकविचित्रकार्यत्वरूपप्रकृतहेत्वभावाभावप्रतियोगी न स्यात्' इत्याकारकानुकूलतर्कस्याप्यभावेन प्रकृतसाध्याभावप्रकृतहेत्वभावयोर्व्याप्यव्यापकभावग्रहो न संभवतीति ।

= नानाकर्तृकत्वत्वेति । नानाकर्तृकत्वत्वं पर्याप्तावच्छेदकता यस्या एतादृशी प्रतियोगिता यस्याभावस्य तादृशाभाववत्त्वसामानाधिकरण्यस्येति विग्रहः ।

न्तविशेषणघटितोक्ताभावत्वस्य व्याप्यतानवच्छेदकत्वप्रयोजकोक्तव्यर्थविशेषणत्वमिति शङ्क्यम् । जन्यत्वसामान्याभावशरीरजन्यत्वसामान्याभावयोर्भेदेऽपि मणिकारेण शरीरजन्यत्वाभावे व्यर्थविशेषणत्वोक्त्येर्येन विशेषणेन विना व्याप्तिर्न गृह्यते तस्यैव व्याप्यतावच्छेदकत्वमिति नियमेनोक्तनियमस्य निर्मूलत्वात् । * उक्तनियमे तु व्याप्यव्यापकभावग्रहप्रतिबन्धकव्यभिचारशङ्कानिवर्तकविपक्षबाधकतर्कप्रसरानिबन्धनतद्ग्रहस्यैव बीजत्वात् । एतदभिप्रायेणैवेश्वरवादे मणौ 'धूमविशेषादौ चन्दनवह्न्यादेः कारणत्वाद्विपक्षबाधकेन विशिष्टस्य व्यापकत्वाद्विशिष्टाभावत्वेन हेत्वभावव्याप्यत्वम् । यत्र तु विपक्षबाधकं नास्ति तत्र विशिष्टव्यापकता नास्ति' इत्यादि प्रतिपादितम् । येन विनेत्याद्युक्तनियमप्रालम्ब्यैव मणिकारेण 'घ्राणं पार्थिवं रूपादिषु पञ्चसु + मध्ये गन्धस्यैव व्यञ्जकत्वात्' इत्यत्र रूपादिषु मध्य इत्यस्यासिद्धिमात्रवारकस्यापि न वैयर्थ्यम् । न वोक्तविशेषणघटितस्य हेतुतावच्छेदकस्य व्याप्यतानवच्छेदकत्वम् । तेन विना व्याप्त्यग्रहादित्युक्तं दीधितिव्याख्यायां गदाधरादिभिरपि । साध्यवद्भिन्नसाध्याभाववदवृत्तित्वमिति लक्षणवाक्ये साध्यवद्भिन्नश्चासौ साध्याभाववांश्चेति कर्मधारयसमासाश्रयणे साध्यवद्भिन्नावृत्तित्वस्यैव सम्यक्त्वेन साध्याभावांशवैयर्थ्यमित्युक्तं च संगच्छते । त्वदुक्तनियमाङ्गीकारे द्वयमप्यनुपपन्नं स्यात् । एतच्च गदाधरीव्याख्यायां न्यायरत्नाभिधायां विस्तरेण प्रतिपादितमस्माभिः ।

किंच परमतेऽपीत्यादिकं भ्रामादिकमेव । सगुणब्रह्मोपासकानां निरङ्कुशमेवैश्वर्यम् । 'आप्नोति स्वाराज्यम्' (तै० १ । ६ । २) इति फलश्रुतेरिति पूर्वपक्षे न 'एकमेवाद्वितीयम्' (छा० ६ । २ । १) इति श्रुतिविरोधस्तस्या निर्गुणा-

---

* उक्तनियमे त्विति । येन विशेषणेन विनेत्याद्यस्मदुक्तनियमे त्वित्यर्थः ।

+ मध्य इति । एतद्योगे षष्ठ्या एवौचित्येन 'रूपादीनां पञ्चानां मध्ये' इत्युचितम् ।

द्वितीयब्रह्मपरत्वात्पूर्वपक्षे विद्वदैश्वर्यस्य निरतिशयत्वादीश्वरभेदादनैकमत्येन जगदुत्पत्त्यादिव्यवस्थाया असिद्धिः । सिद्धान्ते तद्भेदाभावात्परमेश्वराधीनतया जगदुत्पत्त्यादिव्यवस्थोपपत्तिरित्यानन्दगिरावां स्पष्टमुक्तत्वात् । ईश्वरनानात्वं पूर्वपक्षफलमिति टीकाग्रन्थे तन्नानात्वे किमनिष्टमित्याकाङ्क्षायामुक्तानिष्टमिति शेषपूरणेनार्थवर्णनौचित्येनैतदधिकरणीयस्वीयपूर्वपक्षोत्थितिदूषणेन ‘जगद्व्यापारवर्जम्’ ( ब्र० सू० ४ । ४ । १७ ) इत्यधिकरणीयास्मदीयपूर्वपक्षानुदयोक्तिरस्मद्ग्रन्थार्थानवबोधविजृम्भितैवेति विदुषां स्पष्टमेव । अथवा विदुषां निरङ्कुशैश्वर्ये किं तेषां समप्रधानत्वमुत गुणप्रधानत्वम् । आद्ये समप्रधानानां नियमेनानैकमत्यदर्शनेनैकस्य सिसृक्षायामपरस्य संजिहीर्षासंभवेनापर्यायमेव सर्गसंहारौ स्याताम् । अपरथा द्वयोरपि नेश्वरत्वं कार्यविघातादिति समनस्कानां च तेषामित्यनेनाऽऽद्यपक्षं दूषयित्वैकाभिप्रायमनुवर्तिनां तेषामागन्तुकैश्वर्याणामगृह्यमाणविशेषतया कस्यचित्प्राधान्यायोगेनाऽनागन्तुकैश्वर्येश्वरानुवर्तित्वमेव वक्तव्यमिति । एतेनेत्यादिना द्वितीयपक्षस्य भाष्यकारेण सिद्धान्तभाष्ये दूषितत्वादुक्तप्रतिकूलतर्कपराहतेः सिद्धान्तयुक्तित्वेन न तथोक्तपूर्वपक्षानुपपत्तिः । अथैवं तर्हि मन्मतेऽपि श्रुतिविरोधस्योक्तनानाकर्तृकानुमाने सिद्धान्तयुक्तित्वान्न तेन पूर्वपक्षानुदयकथनं तव युक्तम् । उक्तं हि चन्द्रिकायां सिद्धान्ते—महाकल्पत्वमित्याद्यनुमानेषु श्रुतिबाधादेरित्यादीति चेत् । कथं सिद्धान्ते श्रुतिविरोधान्नानाकर्तृकानुमानबाधः । श्रुतिष्वपि विष्णुरुद्रादिनानाकर्तृप्रतिपादनस्य दृष्टत्वात् । न्यायान्तरे श्रुतेरेकविषयकत्वं निश्चिनुम इति चेत् । कथं तर्हि शास्त्रयोनित्वसिद्धान्तेन नानाकर्तृकत्वपूर्वपक्षनिरासः। एकमेवेति शास्त्रादेव तन्निषेध इति चेत् । किं तदेकमित्यनिश्चयवतो जगत्कारणत्वस्य विष्ण्वेकनिष्ठत्वासिद्धेः । कारणे ब्रह्मशब्दश्रवणात्तस्य च विष्ण्वेकनिष्ठत्वात्तन्निश्चय इति तु रुद्रेऽपि ब्रह्मशब्दश्रवणदर्शनेन प्रागेव निरस्तम् ।

अप्पैय्यदीक्षितास्तु नानाकर्तृकानुमानावष्टम्भेनोक्तपूर्वपक्षस्य

प्रकारान्तरेणानुत्थितिमाहुः । तथा हि—उक्तानुमानेन नानाकर्तृसिद्धावपि तस्य जगत्कारणैकत्वबोधकश्रुत्यनुरोधेनान्नमयप्राणमयमनोमयविज्ञानमयानन्दमयात्मकसविशेषाभिन्नरूपाणामिव नानेश्वरसिद्धौ पर्यवसानस्यागत्या वाच्यत्वेन तेषां सर्वेषामेवान्नमयादिरूपाणामिव—

एतन्नानावताराणां निदानं बीजमव्ययम् ।

इति पुराणोक्तमूलभूतसच्चिदानन्दरूपेण सर्वजगत्कर्तृत्वसंभवेनातिव्याप्त्यसंभवयोरनवकाशात् । आनन्दमयाधिकरणेऽन्नमयादीनां पञ्चानामपि ब्रह्मत्वं वदतः ' न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ' ( ब्र० सू० १ । ४ । ११ ) इत्यधिकरणे स्वगतभेदशून्यस्यापि विष्णोर्बहुरूपत्वेन बहुत्वसंख्याश्रयत्वमुपपाद्य पञ्चजनशब्दवाच्यत्वं समर्थयतस्तव मतेऽनेकेश्वरतात्पर्यनिर्णायकोपपत्तिरूपलिङ्गत्वेनोक्तानुमानस्य तदनुग्राहकतया सिद्धान्तेऽपि प्रत्याख्यातुमशक्यत्वेनोक्तरीत्यैव तत्पर्यवसानस्यावश्यं वाच्यत्वेनोक्तपूर्वपक्षस्य सिद्धान्ताविरुद्धत्वाच्च । न संख्योपसंग्रहाधिकरणे हि ' यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः ' ( बृ० ४ । ४ । १७ ) इति वाक्ये पञ्चजनशब्दवाच्यो न विष्णुः । तच्छब्दस्य बहुसंख्याविशिष्टवस्तुवाचित्वाद्बहुत्वस्य च ' एकमेवाद्वितीयम् ' ( छा० ६ । २ । १ ) इति श्रुतेरीश्वरत्वविरुद्धत्वाद्यस्मिन्निति यच्छब्दवाच्यस्य प्रकरणाद्विष्णुवाचित्वेन तदाधेयानां न विष्णुत्वम् । एकस्याऽऽधाराधेयभावविरोधादिति न समन्वयसिद्धिरिति पूर्वपक्षे—पञ्चजनशब्दवाच्यो विष्णुरेव । स्वगतभेदशून्यस्यापि नानारूपत्वेन बहुत्वसंख्योपसंग्रहाविरोधात् । न च प्रतिशरीरे परमात्मनो बहुरूपत्वमप्रामाणिकम् । शरीरान्तर्गताकाशप्राणादिनियामकत्वेन तेषु भगवद्रूपेषु नानाभावस्य न्यायप्राप्तत्वादाकाशादिरूपेभ्योऽतिरिक्तस्य शरीरनियामकस्यात्रोक्तेर्यस्मिन्नित्यस्य विष्णुवाचित्वेऽपि न क्षतिः । शरीरनियामकेश्वराकाशादिषु भगवतोऽवस्थानमात्रेणाऽऽधाराधेयभावोपपत्तेरिति त्वया सिद्धान्तितम् । न च

नानेश्वरसिद्धौ तेषां स्वतन्त्राणां परस्परमीर्ष्यादिना वैमत्येन सृष्ट्याद्यनुपपत्तिरूपप्रतिकूलतर्कपराहतिरुक्तानुमानस्येति कथं तेन नानेश्वरसिद्धिः सिद्धान्ताविरुद्धेत्युच्यत इति शङ्क्यम् । त्वन्मते मुक्तानामिव तेषां निर्दोषाणामेव कल्प्यतयेर्ष्यानुदयाद्वैमत्याभावोपपत्तेः । इत्थं हि तव मतम्—सायुज्यमुक्तिभाजो हि देवाः स्वोत्तमदेवताप्रवेशानुक्रमेण भगवद्देहमनुप्रविश्य ग्रहावेशन्यायेन भगवद्देहेन्द्रियैस्तद्भुक्तानेव भोगान्कदाचिद्बहिर्निर्गत्याऽऽत्मस्वरूपाभिन्नैश्चिन्मात्रदेहेन्द्रियैः स्वसंकल्पोपनीतांश्च भोगान्भुञ्जाना आनंन्दवल्ल्युक्तक्रमेण स्वरूपानन्दज्ञानैश्वर्यभोगेषु चोत्तरोत्तरं शतगुणोत्कृष्टाः पूर्ववदेव मुक्तावपि यथास्वं ब्रह्मेन्द्रवरुणचन्द्रसूर्यादितत्तदधिकारिकदेवतापदं तदनुसारिणमुत्तमाधमभावं पूज्यपूजकभावं चानुभवन्तो विहरन्ति । देवव्यतिरिक्तास्तु सालोक्यादिमुक्तिभाजो यथाधिकारं भूरादिसप्तलोकेषु भगवल्लोकेषु च स्थितानि भगवत्स्थानानि प्राप्य स्वेच्छागृहीतबाह्यदेहैश्चिन्मात्रदेहैर्वा संकल्पोपनतान्भोगान्भुञ्जानाः पूर्ववद्वर्णाश्रमादिभेदं तदनुसारिपूज्यपूजकभावादिव्यवस्थां ज्ञानानन्दादिकैश्वर्यतारतम्यं च प्राप्ता विहरन्ति । न चैवं मुक्तानां तारतम्ये तद्दर्शनकृतद्वेषदुःखेर्ष्यादिभिर्मुक्तावपुरुषार्थत्वप्रसङ्गः । निर्दोषाणां तेषां गुरुशिष्यवत्तदप्रसक्तेरिति । तथा च यदा स्वाधिकज्ञानानन्दाद्यैश्वर्यवतः पश्यतां स्वयं तत्सेवकत्वादिना ततो निकर्षमनुभवतामपि द्वेषदुःखेर्ष्याद्यभावस्तदा किमु वक्तव्यं नित्यनिर्दोषसकलकल्याणगुणपरिपूर्णब्रह्मरूपाणामवाप्तसकलकामानां स्वाधिकानन्दादिकं क्वचिदप्यपश्यतां कुतोऽपि निकर्षमननुभवतामीश्वराणां वैमत्यादिकं न भवतीति । यदि चेर्ष्यादीनामन्तःकरणधर्मत्वान्मुक्तात्मनामन्तःकरणाभावात्तदभावः समर्थ्यते तदेश्वराणामपि तथाभूतमन्तःकरणमनङ्गीकृत्यैव तदभावः समर्थनीयः ।

यत्तु महीमहीधरादि परस्परमत्यन्तविभिन्नकर्तृकमित्यनुमानस्य सविशेषाभिन्ननानाकर्तृसिद्धौ पर्यवसानस्याशक्यतयेदृशानुमानावष्टम्भेनांतिव्याप्त्यादिपूर्वपक्षप्रवृत्तिसंभवः । एतेनानेकेश्वरतात्प-

र्थनिर्णायकोपपत्तिरूपतोक्तिर्निरस्ता । उक्तानुमान उपपत्तिरूपत्वस्यानुग्राहकत्वस्य चासंभवात् । प्रत्युत सर्वस्य ब्रह्मत्वं वदतस्तवैव महेश्वरप्रधानपरमाण्वादीनां ब्रह्मत्वेन जगत्कारणत्वावश्यकतया तेषां च जगत्कारणत्वपूर्वपक्षा ईक्षत्याद्यधिकरणोक्ताः सिद्धान्ताविरोधिन इत्युक्त्वा—

श्रीराघवेन्द्रविजयीन्द्रयतीश्वराभ्यां
संदूषितानि नितरामधरीकृतानि ।
थूथूकृतानि नितरां वनमालमिश्रै-
रप्पय्यदीक्षितवचांसि गुहां गतानि ॥

तानीदानीं समालम्भ्य निबद्धानि स्ववाक्यतः ।
तेषां निराकृतिर्व्यर्था न ह्यर्थो मृतमारणे ॥

इत्युपसंहृतं वाक्पारुष्यैकशस्त्रशूरेण तत्स्थस्य स्वीयाचार्याणां च स्वकीयपरकीयग्रन्थार्थानवबोधप्रकटीकरणायैवेति स्पष्टं दर्शयितुम् । तत्रोच्यते—राघवेन्द्रविजयीन्द्रयतिभ्यां न्यायदुर्गगमनेऽनिपुणाभ्यां न्यायकेसरिवचस्तु यदुक्तं तत्सुधीभिरनादरणीयम् ।

तदादाय मृतप्रायं चन्द्रिकाभूषणोद्यतः ।
वाक्पारुष्यास्त्रविच्छूरो ब्रह्मास्त्रं जेतुमिच्छति ॥

तथाहि—महीमहीधरादि परस्परमत्यन्तविभिन्नकर्तृकमित्यनुमानं तावन्मत्सरादिदोषशून्यनानाकर्तृकानुमाननिराकरणायोक्तदोषैरेव थूथूकृतं लज्जाम्बुधिनिमग्नं नोन्मज्जनमर्हतीति तदालम्भ्य पूर्वपक्षप्रवृत्त्यसंभवः स्पष्ट एव । केवलनानाकर्तृकानुमानस्य दीक्षितोक्तिरीत्या त्वत्संमतसविशेषाभिन्नानेकेश्वरतात्पर्यनिर्णायकोपपत्तिरूपलिङ्गत्वेन सिद्धान्तेऽपि प्रत्याख्यानासंभवः स्पष्ट एव । प्रत्युतेत्यादिकं त्वस्मत्सिद्धान्ताज्ञानमूलकं स्वकीयचन्द्रिकाग्रन्थाध्ययनाभावनिबन्धनमेव । न ह्यस्मन्मतेऽनृतस्य जडदुःखात्मकस्य जगतः सर्वस्य ब्रह्मत्वम् । किंतु ब्रह्मस्वरूपरूपसत्तातिरिक्तताश्विकसत्ताशून्यत्वान्मिथ्यात्वमेव । अन्यथाद्वैतब्रह्मात्मैक्यासिद्धिप्रसङ्गात् । तथाहि—आरम्भणाधिकरणे 'तदनन्यत्वमिति जगतो नाभेदं ब्रूमः, किंतु भेदं व्यासेधामः' इति

वाचस्पतिभामतीग्रन्थः। तत्राभेदमैक्यं भेदं तदन्यतात्त्विकरूपवत्तामित्यर्थः। आरम्भणाधिकरणीयास्मद्रीत्याऽधिकरणयोजनादूषणे त्वदीयचन्द्रिकाकारोऽपि न तावद्ब्रह्माभेदस्तदनन्यत्वम्। अनृतस्य विश्वस्य ब्रह्माभेदायोगादनङ्गीकाराच्चेत्याह। तथा चाद्वितीयस्वप्रकाशानन्दरूपपरमपुरुषार्थरूपं ब्रह्मैव वेदान्तैर्जिज्ञास्यमित्युक्तम्। तन्न संभवति, उक्तब्रह्मभिन्नस्य जडस्य प्रधानस्यैव जगत्कारणत्वेन सद्विद्यादिवेदान्तप्रतिपाद्यत्वावगमादित्यादिरीत्या सांख्यादिरीत्या पूर्वपक्षाः कथं सिद्धान्ताविरुद्धाः।

नानाकर्तृकानुमानावष्टम्भेनैतदधिकरणीयपूर्वपक्षस्य सर्वथाऽनुत्थानदर्शनाय तदुपपादकसंभावितटस्थाशङ्कामुत्थाप्य तन्निराकरणेन तद्रीत्या तस्य सिद्धान्ताविरुद्धत्वं बहुप्रकारैर्दीक्षितैर्वर्णितम्। तदपि परोक्तदूषणनिराकरणेन परकीयाधिकरणयोजनाया विद्वद्ग्राह्यतार्थं लिख्यते—ननु परब्रह्मस्वरूपा जगत्कर्तारो बहवश्चेत् 'तेषां परास्यशक्तिर्विविधैव श्रूयते' इत्यादिश्रुतिबलात्प्रत्येकं तेषामचिन्त्याद्भुतापरिमितशक्तिमत्त्वमेवाङ्गीकरणीयम्। तथा चान्योन्यानपेक्षया निखिलजगत्सृष्ट्यादि कर्तुं शक्तानां तेषां संभूय सृष्ट्यादिकर्तृत्वमयुक्तम्। लोके विचित्रगोपुरप्रासादादिष्वनेकेषां शिल्पिनां संभूयकारित्वस्य प्रत्येकैकशक्तिनिबन्धनत्वात्। अतोऽनुमानस्य तत्सहकृतसृष्टिवाक्यानां चैकस्मिन्नेव कर्तरि पर्यवसानाभावे विशेषवचनबलान्नारायण एव पर्यवसानं स्यादिति कथं पूर्वपक्षः सिद्धान्ताविरुद्ध इति चेन्नैवम्। 'एक एव नारायण आसीत्' इत्यादेरिव 'यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः' 'एक एव रुद्रो नद्वितीयाय तस्थौ' (तै० सं० १।८।९) इत्यादीनां विशेषवचनानां श्रुतिषु दर्शनात्सृष्टिवाक्यानां नारायण एव कर्तरि पर्यवसानस्यासंभवाच्चत्सहकृतनानाकर्तृकानुमानेन नानाकर्तॄणां सिद्धावपि प्रत्येकमखिलजगत्सर्जनादिकं कर्तुं शक्तानामचिन्त्याद्भुतशक्तिमतां प्रत्येकमपि तेषां तन्मत आरम्भणाधिकरणन्यायेन केवलं लीलया संभूयकर्तृत्वस्यैव वक्तुं शक्यत्वात्। आरम्भणाधिकरणे परेणेश्वरस्य

जगत्स्रष्टौ नियमेन प्रकृत्यादिक्रमपेक्षमाणस्य तत्रापि प्रकृति-मुपादानत्वेनैव कालादिकं निमित्तत्वेनापेक्ष्य प्रकृत्यैव महान्तं महतैवाहंकारमित्यादिक्रमनियमं चापेक्ष्य सृजतः किं नाम स्वातन्त्र्यम् । स्वातन्त्र्ये सति कदाचित्प्रकृत्यादिक्रमनपेक्ष्यैव निमित्तोपादानकार्यक्रमादिकं वा व्यत्यस्य सृष्टिप्रसङ्गादित्या-शङ्क्य साधनान्तरतद्व्यवस्थाक्रमनियमापेक्षणेऽपि युक्तमेव तस्य स्वातन्त्र्यम् । तदभावस्य शक्त्यभावनिबन्धनत्वाभावात् । लोके स्वयमेव गन्तुं शक्तस्यापि गमनसमये लीलया दण्डावष्टम्भव-त्तदपेक्षणस्य स्वेच्छामात्रनिबन्धनत्वादिति सिद्धान्तितम् ।

यत्तु त्वया कल्पिता अनेके परमेश्वराः केवलं लीलया संभूय सृजन्तीति निश्चीयन्ते संभाव्यन्ते वा । नाऽऽद्यः । निश्चा-यकाभावात् । अनुमानानां चाप्रमाणत्वात् । नहि क्वचिद्दृष्टा-न्तमात्रेणार्थनिश्चयः । अतिप्रसङ्गात् । न द्वितीयः । असाधक-त्वात् । अल्पज्ञेन हि किं किं न संभाव्यते । प्रत्युत त्वन्मत एवेदं दूषणम् । 'जगद्व्यापारवर्जम्' (ब्र० सू० ४।४।१७) इत्यधिकरणेऽनेकेषां ज्ञानिनां निरङ्कुशमैश्वर्यमाशङ्क्य नैवमि-त्यादिना सर्जनाद्यैश्वर्यासंभवप्रतिपादनात् । तेषां च मायाया इवाघटितघटनाशक्तिमङ्गीकृत्य निर्गुणब्रह्मचैतन्यवद्वैभवत्यादिकिं-चिद्धर्माभावं प्रकल्प्य सर्जनाद्युपपादनसंभवेन तादृशाधिकरणा-संगत्यापत्तेः । यदि च सृष्टिवाक्येषु नानेकेषां प्रतिपादनं किंत्वेकस्यैवेत्येक एव स्रष्टेत्युच्यते । तर्हि मयाऽपि वक्तुं शक्य-मिति स्वयमेवोन्मत्तवदुक्त्वोक्ततटस्थशङ्कादूषणे स्वयमेवोन्मत्त-विक्षिप्तवदुत्प्रेक्ष्य दूषितमित्युक्तं तद्वाक्यपारुष्याभ्यस्तशस्त्रस्वभा-वनिबन्धनत्वान्न खेदावहम् । तत्रोच्यते—यदुक्तं त्वया कल्पिता इत्यादि । तत्तुच्छम् । स्वोचितकतिपयजगत्कर्तृत्वलक्षणं चेत् । अतिव्याप्तिः । निखिलजगत्कर्तृत्वलक्षणं चेत् । असंभवः, इतिरीत्यैतदधिकरणीयपूर्वपक्षप्रवृत्तये त्वत्पूर्वपक्षिणैवानुमानेन नानाकर्तृणां साधनात् । तस्य च विष्णुरुद्राद्यनेककर्तृप्रतिपादक-श्रुतिसंवादेन निश्चितप्रामाण्यकस्यार्थनिश्चायकत्वात्त्वत्सिद्धान्तं उक्तरीत्या तत्प्रत्याख्यानायोगे सिद्ध उक्ततटस्थाशङ्कानिराक-

रणायोक्तरीत्या सर्वतो बलीयस्यान्यथाऽनुपपत्त्याऽनेके कर्तारो लीलया संभूय सृजन्तीति त्वद्रीत्यैव निश्चये बाधकाभावादुक्तपूर्वपक्षस्य सिद्धान्ताविरुद्धत्वोपपादनं विद्वन्मतिरमणीयमेव। सत्युतेत्यादिकमसदेव। मायायामघटितघटनाशक्तिमत्त्वाङ्गीकारे ब्रह्मणो निर्गुणत्वाद्यङ्गीकारे 'जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति' ( इत्यादीनामघटितकार्यान्यथानुपपत्त्यादीनां ) निर्गुणत्वादिबोधकश्रुतीनामिव समनस्कानां सगुणब्रह्मविदां वैमत्याभावकल्पनायां मानानुपलम्भात्। शिवविष्णवादीनामभेदं स्वीकुर्वता मयेवान्नमयादीनामनेकेषां ब्रह्मत्वं वदता शिवविष्णवादीनां भेदं च वदता त्वया सृष्टिवाक्येष्वेकस्यैव स्रष्टुः प्रतिपादनमिति वक्तुमशक्यमित्यस्य बालेनापि सुबोधत्वात्। नन्वेवमपि 'द्यावाभूमी जनयन्देव एकः' ( ऋ० सं० १०। ८१। ३ ) एकमेवाद्वितीयम्' ( छा० ६। २। १ ) इत्यादिकर्त्रैक्यश्रुतिविरुद्धं कथं जगत्कर्तृनानात्वं तन्मते सिध्येदिति चेत्। न तन्मते जगत्कर्तृनानात्वेऽपि नोक्तश्रुतिविरोधः। तन्मते 'नेह नानाऽस्ति किंचन' ( का० २। ४। ११ ) 'एकधैवानुद्रष्टव्यम्' ( बृ० ६। ४। २३ ) इत्यादिश्रुतीनां विष्णोरन्नमयादिस्वरूपाणि शिरःपुच्छाद्यवयवा ज्ञानानन्दादिगुणाः सृष्टिसंहारादिक्रियाः सर्वगतत्वादयो भावधर्मा अदृश्यत्वादयोऽभावधर्मा विष्णोः सकाशात्परस्परस्माच्च न भिद्यन्त इत्यर्थकत्वमिव कर्त्रैक्यबोधकोक्तश्रुतीनां ब्रह्मविष्णुरुद्राणां मध्य एकैकस्यैव कर्तुः 'तदैक्षत बहु स्यां प्रजायेय' ( छा० ६। २। ३ ) इत्यादिश्रुतिषु श्रुतैर्बहुभवनमुखैरवतार्यवतारस्वरूपैर्वोपस्थितभेदनिषेधपरत्वस्य वक्तुं शक्यत्वेन तद्विरोधाभावात्।

यत्तु 'नेह नाना' ( का० २। ४। ११ ) इत्यादेः सर्वनिषेधपरत्वे 'इह' इत्युक्तधर्मिणः, निषेधस्य च निषेधापत्त्या व्याघातेन प्रकरणवशाच्च 'एकधा' इत्यस्यापि एकप्रकारतात्पर्यकधाप्रत्ययबलात्तथाऽर्थवर्णनेऽपि एकशब्देन समभिव्याहृतपदार्थसंसर्गिनिष्ठभेदाप्रतियोगित्वस्य स्वरसतः

प्रतीतस्य सर्वतान्त्रिकसिद्धस्य परित्यक्तुमशक्यतया कथं तादृ-शश्रुतिविरुद्धं जगत्कर्तॄणां नानात्वं सिध्येत् । प्रत्युत 'एक-मेवाद्वितीयम्' (छा० ६ । २ । १) इत्यत्रैकशब्दस्य 'वृक्षस्य स्वगतो भेदः पत्रमूलफलादिभिः' इत्यादिना स्वग-तभेदशून्यार्थकत्ववर्णनात्तन्न्यायेन नानेश्वराङ्गीकारे 'द्यावा-भूमी जनयन्देव एकः' (ऋ० सं० १० । ८१ । ३) इत्या-द्येकशब्दस्य स्वगतभेदशून्यार्थकत्वेन विरोधाभावे सति नाने-श्वरपक्षस्त्वयाऽपि कुतस्त्यज्यते । एकपदविरोधाभावेऽप्यद्विती-यपदबलेनेतिचेत् । समं ममापि । लाघवादित्यपि समम् । त्वयाऽन्नमयादिनानेश्वराङ्गीकारान्न साम्यमिति चेत् । न । त्वयाऽपि ब्रह्मविष्णुशिवत्रिपुरसुन्दरीशक्तिसुराप्रियसूर्यादिना-नेश्वराङ्गीकारात् । साम्यं भेदस्य कल्पितत्वमितिचेत् । अभे-दस्यैव कुतो न कल्पितत्वमिति । तदतितुच्छम् । मदीयानभि-मतोपालम्भनं च । 'सदेव सौम्येदमग्र आसीत्' (छा० ६ । २) इत्यादिकेषु जगत्कर्तृबोधकेषु वाक्येषु एकपदेन सम-भिव्याहृतपदार्थसंसर्गिनिष्ठभेदाप्रतियोगित्वस्य स्वरसतः प्रती-तस्यापि अन्नमयादिपञ्चस्वेव शिवविष्ण्वाद्यनेककर्तृबोधकश्रुति-संवादप्राप्तप्रमाणभावनानाकर्तृकानुमानसिद्धेषु समभिव्याहृतप-दार्थप्रलयकालसंबन्धिषु परस्परनिष्ठभेदप्रतियोगितया बाधेन प्रत्याययितुमशक्यतयोक्तरीत्यैकस्यैव कर्तुः बहुभवनमुखैः प्राप्तस्वगतभेदनिषेधपरत्वस्यैवैकपदे वक्तव्यतया त्वद्रीत्या नाना-कर्तृसिद्धेरपरिहार्यत्वात् । प्रत्युतेत्यादिकमस्मत्सिद्धान्ताज्ञानमूलं स्वमतिपरिपाकमात्रम् । 'वृक्षस्य स्वगतो भेदः' इत्यस्य यथा वृक्षे सजातीयाद्वृक्षान्तराद्विजातीयाच्छिलादितः पत्रमूलादिभिश्च सजातीयविजातीयस्वगतं भेदत्रयं प्राप्तं तथा स्वसजातीयवि-जातीयस्वगतभेदत्रयं परमात्मनि जगत्कारणे चेतनाचेतनधर्म-धर्मिभावकृतं प्राप्तमेकपदावधारणाद्वितीयपदैः क्रमेण निषिध्यत इति प्रतिपादनायोक्तभेदत्रयदृष्टान्तत्वार्थत्वेनैकपदस्य सजाती-यभेदनिषेधार्थकत्वेन स्वगतभेदनिषेधार्थकत्वाभावात् । तथा चोक्तमद्वैतसिद्धौ—विजातीयं किंचिदपेक्ष्य द्वितीयत्वावच्छि-

त्रानिषेधस्याद्वितीयशब्दार्थत्वात् । अयं चात्र संकोचो बलीवर्द-पदसंनिधानाद्गोपद इव सजातीयस्वगतभेदनिषेधकैकपदावधार-णपदसंनिधिप्रयुक्त एव । तदुक्तं वृक्षस्येति । 'जगव्द्यापारवर्जम्' ( ब्र० सू० ४ । ४ । १७ ) इत्यधिकरणे नानेश्वरपूर्वपक्षो नास्मदीयाभिमत इत्यस्य पूर्वमेवाऽऽवेदितत्वात् । तत्पक्षाङ्गी-कारे प्रतिकूलतर्कस्योक्तत्वाच्चतुर्विधाभावाप्रतियोगित्वरूपापरि-च्छिन्नत्वरूपब्रह्मत्वस्य जगत्कारणे बाधाच्च न तत्पक्षाङ्गीकारोऽ-स्मत्सिद्धान्ताविरुद्धः । त्वत्सिद्धान्ताविरुद्ध इति तु प्रतिपादित-मेव दीक्षितैः । त्वयाऽपीत्यादिकमपि स्वमतिपरिपाकमात्रमेव । मन्मते ब्रह्मविष्णुशिवानामभेदस्यैव स्वीकारेण तेषां नानात्व-स्यास्मदनभिमतत्वात् । एकस्यैव परब्रह्मणस्तत्तद्गुणसंबन्धोपा-धिकसंज्ञाभेदमात्रत्वस्यैव तार्किकमत इव स्वीकारात् । उक्तता-तार्किकसिद्धान्तः—

> ॐनमः सर्वभूतानि विष्टभ्य परितिष्ठते ।
> अखण्डानन्दबोधाय पूर्णाय परमात्मने ॥

इति दीधितिकारोक्तमङ्गलश्लोकव्याख्यानेऽनुमितिग्रन्थे गदा-धरभट्टाचार्यैः स्फुटीकृतः । विष्णुसहस्रनामभाष्येऽपि श्रीमच्छं-कराचार्यैः—'किमेकं दैवतं लोके' इतियुधिष्ठिरप्रश्नोत्तरे ।

> पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् ।
> दैवतं देवतानां च भूतानां योऽव्ययः पिता ॥

इति श्लोके भूतानां व्ययरहितः पिता जनको यो देवः स एकं दैवतमिति वाक्यार्थमभिधाय कथमेको देव इत्या-शङ्क्य—

> सृष्टिस्थित्यन्तकरिणीं ब्रह्मविष्णुशिवात्मिकाम् ।
> स संज्ञां याति भगवानेक एव जनार्दनः ॥ इति ।
> भवानहं च विश्वात्मन्नेक एव हि कारणम् ।
> जगतोऽस्य जगत्यर्थे भेदेनाऽऽवां व्यवस्थितौ ॥
> त्वया यदभयं दत्तं तद्दत्तमखिलं मया ।
> मत्तो विभिन्नं नाऽऽत्मानं द्रष्टुमर्हसि शंकर ॥

योऽहं सत्त्वं जगच्चेदं सदेवासुरमानुषम् ।
अविद्यामोहितात्मानः पुरुषा भिन्नदर्शनाः ॥

इति विष्णुपुराणवाक्यैः, तथा—

विष्णोरन्यं तु पश्यन्ति ये मां ब्रह्माणमेव च ।
कुतर्कमतयो मूढाः पच्यन्ते नरकेष्वधः ॥
ये च मूढा दुरात्मानो भिन्नं पश्यन्ति मां हरेः ।
ब्रह्माणं च तथा तेषां भ्रूणहत्या समं त्वघम् ॥

इति भविष्यपुराणवाक्यैर्विष्णुशिववचनाभ्यां हरिहरब्रह्मणां संज्ञाभेदमात्रं न स्वरूपभेद इति प्रतिपादितम् । अज्ञानकृतावरणेनाज्ञैर्भेदं प्रकल्प्य तथा व्यवहारेऽपि अभेदस्याकल्पनात्तथाऽज्ञव्यवहाराभावाच्च भेद एव काल्पनिको नाभेद इत्यस्य बालेनापि सुगमत्वात् ।

अथवोक्तरीत्या नानाजगत्कर्तृसिद्धौ तेषां मध्ये यदुपासने यस्य पुरुषस्यानादियोग्यता तस्य पुरुषस्य स एव जगत्कर्ता नान्य इति तस्य स्फुरति । तत्तदधिकारिबुद्धिविषयं तं तमेवार्थं तस्य तस्याधिकारिणः श्रवणकर्तुर्बुद्धिभेदेन भिन्नं भिन्नं कर्तारं कर्त्रैक्यश्रुतिर्बोधयतीति कर्त्रैक्यश्रुतिनिर्वाहोऽस्तु । न च श्रुतीनामनेकार्थप्रतिपादकत्वमदृष्टचरं वक्तुमशक्यमिति त्वया वक्तुं शक्यम् । 'ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके' ( ब्र० सू० १।४।९ ) इत्यधिकरणे कृत्स्नकर्मकाण्डस्य कर्मब्रह्मोभयपरत्वं वर्णयतस्तव श्रुतीनामधिकारिभेदेन नानार्थबोधकत्वस्य संमतत्वात् । स्थालीपुलाकन्यायेन कर्मकाण्डस्थेषु केषुचिद्वाक्येषु ब्रह्मपरत्वं त्वयोपपादितं किंचिदुदाहरणार्थं लिख्यते— 'वसंते वसंते ब्राह्मणो यजेत' इत्यत्र वसतीति वसः, पचाद्यच्, तनोतीति तिः, औणादिको डिप्रत्ययः, पूर्वपदस्य नकारागमः । वसंश्चासौ तिश्चेति वसंतिः । सर्वत्र व्याप्तो वर्तमानो जगत्कर्ता चेत्यर्थः । तत्संबुद्धौ हे वसंते । द्विरुक्तिरादरार्था । जि जातं पूर्ववज्जनेर्डिप्रत्ययः । ओति ओतम्, अवतेः क्विः । जातं जगत्, ओतं प्रविष्टं यस्मिन्स ज्योतिः । षः प्राणः चेष्टकत्वात्, 'षकारः प्राण आत्मा' इति श्रुतिः । ज्योति-

श्रासौ षश्चेति ज्योतिषः, तस्य संबुद्धौ ज्योतिषेति । आयजेते-त्यपि संबुद्धिः । आसमंताद्यजैर्ऋत्विग्भिः, इत प्राप्तेत्यर्थः । यजेः 'घञर्थे कविधानम्' इति कप्रत्ययः । संप्रसारणाभावश्छान्दसः । इन्द्रागच्छेत्यत्र 'इन्द्र' इति 'अ' इति 'गच्छ' इच्छेति संबोधनानि । गमेश्छन्देश्च डप्रत्यये सति गं गतं छं छादनं यस्मादसौ गच्छः, निरवद्य इत्यर्थः । स्वाहाशब्दे स्वमात्मीयं यज्ञादिषु दत्तं हविरादि आहरति स्वीकुरुत इति स्वाहा । हृञो डप्रत्ययः । तदनन्तरम्—इति 'अ' विष्णुनाम, तयोः समासे संबुद्धिः । नमःशब्दे नमतेरधिकरणार्थेऽसुन्प्रत्ययः । नमन्ते नियमेनास्मिन्वर्तन्ते कल्याणगुणा इत्यर्थः । एवं बहुपु स्थलेषूदाहृतानि तानि विस्तरभयान्नेह लिख्यन्ते ।

एवमुपनिषत्स्वपि अब्रह्मवाचिशब्दानां ब्रह्मस्वार्थोभयार्थकत्वं त्वन्मते व्याख्यातम् । दिङ्मात्रेणोदाह्रियते—इन्द्रियदेवतातद्युत्कर्षप्रकरणे 'प्राणो वा आशाया भूयान्' (छा० ७ । १५ । १) इतिवाक्यस्थप्राणशब्दो भूमाधिकरणे परब्रह्मपरतया व्यतिहाराधिकरणे च मुख्यप्राणपरतया त्वन्मते व्याख्यातः । तथाहि 'भूमा संप्रसादादध्युपदेशात्' (ब्र० सू० १ । ३ । ८) इत्यधिकरणे 'यो वै भूमा तत्सुखम्' (छा० ७ । २३ )इत्यत्रोक्तो भूमा मुख्यप्राण एव न विष्णुः । 'प्राणो वा आशाया भूयान्' (छा० ७ । १५ । १) इति वाक्ये नामवागादितारतम्यमाशान्तमुक्त्वा प्राणस्याऽऽशोत्तमत्वमभिधाय तदुत्तरं कस्यचिदुत्तमत्वमनभिधाय भूम्न एवाऽऽम्नानादिति पूर्वपक्षयित्वा विष्णुरेवायं भूमा 'यो वै भूमा तत्सुखं नाल्पे सुखमस्ति' (छा० ७ । २३) इति निरुपपदसुखपदेन भूम्नः परिपूर्णसुखत्वोक्तेरिति भाष्यानुयायी सिद्धान्तः कृतः । अस्तु वाऽयं प्राणो वायुरेव तथाऽपि न तस्य भूमत्वप्राप्तिः 'अस्ति भगवः प्राणाद्भूयः' इति 'प्राणाद्वाव भूयोऽस्ति' इति तन्मे भगवान्ब्रवीतु इति 'सत्यं वाव प्राणाद्भूयः' इति प्रकरणान्तरवत्प्रश्नप्रतिवचनाध्याहारेण 'एष तु वा अतिवदति यः सत्येनातिवदति' इति प्राणाद्विष्णोर्भूयस्त्वमुक्त्वा तस्य

भूम्न आम्नानात् । न चैतदर्थद्वयं विरुद्धम् । अन्तर्यामिविवक्षया प्राणशब्देन विष्णूक्तेरिति अर्थद्वयपरमिदं प्रकरणमिति टीकायां जयतीर्थेनोक्तम् । व्यतिहाराधिकरणे भगवदुपासकाः प्रकृतास्त एव च्छान्दोग्ये नामादिप्राणपर्यन्तं तारतम्येनोक्ताः । प्राणादुत्तमो नोक्तः । तत्राधिकारिणः प्राणावसाना न भवन्ति । 'प्राणः स्वोत्तमाधिकारियुक्तः, अधिकारित्वान्नामादिवत्' इत्यनुमानेन प्राणादुत्तमाधिकारिसिद्धेः । हिरण्यगर्भ एव सर्वगुणोपास्तियोग्य इत्युक्तमयुक्तमिति पूर्वपक्षे—उपासकानामधिकारिणां प्राणावसानत्वमेव प्राणादुत्तमाधिकार्यभावस्य 'प्राणो वाव सर्वेभ्यो भूयान्' इति च्छान्दोग्यश्रुत्योक्तत्वादिति प्राणशब्दितहिरण्यगर्भ एव सर्वगुणोपासनायोग्यः सर्वापेक्षयोत्तमाधिकारीति त्वया सिद्धान्तितत्वात् । 'एवमिन्द्रियेभ्यः परा ह्यर्थाः' ( का० १ । ३ ) इत्यादीनामिन्द्रियशब्दप्रवृत्तिनिमित्तस्येन्द्रियत्वस्य ब्रह्माधीनत्वात् 'प्रवृत्तिनिमित्ततादधीन्य' न्यायेन परब्रह्मपर इन्द्रियशब्द इति इन्द्रियशब्दस्य समन्वयो ब्रह्मण्युक्तः । इन्द्रियगतपरत्वावधित्वस्य पञ्चम्यर्थस्य ब्रह्माधीनत्वात्पञ्चम्यपि ब्रह्मपरेति प्रकारेणेन्द्रियदेवतातदुत्कर्षक्रमप्रतिपादकत्वं च तेषामङ्गीकृतम् । एवम् 'वाङ्मनसि दर्शनाच्छब्दाच्च' ( ब्र० सू० ४ । २ । १ ) इत्यधिकरणे 'वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि इत्यादिवाक्ये वाङ्मनःप्राणशब्दानामुत्तरोत्तरस्मिँल्लीयमानोमारुद्रहिरण्यगर्भपरता देहोत्क्रान्त्युत्तरमुत्तरोत्तरस्मिँल्लीयमानवागिन्द्रियादिपरता चेत्यनेकार्थपरतोक्ता । तथा हि—देहोत्क्रमणानन्तरं ज्ञानिनामन्तर्गता वाङ्मनसि न लीयते । वाक् पूर्वरूपं मन उत्तररूपम्, मनः पूर्वरूपं वागुत्तररूपमिति वाङ्मनसयोर्व्यामिश्रोक्तेर्वाचो मनोनियम्यत्वानिश्चयात् । तथा च मोक्षाभावादनियम इति पूर्वपक्षे—व्यामिश्रोक्तेर्वाङ्मनसयोः पूर्वोत्तरवर्णदेवतात्वे गुणप्रधानभावे च विशेषादर्शनासाम्यविषयकत्वान्मनसा वाऽग्रे संकल्पयति अथ वाचा वदतीति युक्त्या वाचो मनःपूर्वकत्वविशेषश्रवणान्मनोधीनत्वम् । अचेतनस्या-

न्योन्यवशत्वस्य चेतनदेवतानिमित्तत्वाच्च देवतयोरपि नियम्य-नियामकभाव इत्यस्त्येव वाचो मनसि लयः । वाङ्मनः-शब्दाभ्यामुमारुद्रयोर्विवक्षितत्वाद्रुद्र उमालयः । एवं प्राणश-ब्दिते हिरण्यगर्भे च मनोलयो भवत्येवेति न ज्ञानिनां मोक्षा-नियम इति त्वया सिद्धान्तितत्वात् । एवमङ्गावबद्धाधिकरणे वह्न्यादिदेवताप्रतिपादकमन्त्रास्तदुत्तमसकलदेवताविषयकत्वेन स्वाभिमतार्थपरतया त्वया व्याख्याताः । तथाहि—तदधिक-रणे ब्रह्मोपासनमङ्गभूतदेवतोपासनसहितमेव कार्यमिति सिद्धा-न्तमुक्त्वा, उपसंहारे विशेषोऽस्ति । सर्वदेवतानां सर्वशाखा-सूक्तं यद्ब्रह्माद्यङ्गदेवतासंबन्धि गुणजातं तत्सर्वं रुद्रादिषु नोपसं-हार्यं किंतु योग्यमेवोपास्यम् । सर्वदेवतानां साम्याभावात् । केषांचित्समानत्वात्केषांचिदुत्तमत्वात् । अथवोपसंहारमभ्युपग-म्य 'मन्त्रादिवद्वा' ( ब्र० सू० ३ । ३ । ५६ ) इति सूत्रम-वतार्य यथाऽग्न्याद्यधमदेवताविषयमन्त्रसूक्तादिकं ब्रह्माद्युत्तम-देवताविषयकत्वेनाधीयतेऽध्येतृभिः । उत्तमानां तत्प्रतिपाद्य-त्वात् । एवमधमगुणानामुत्तमेषूपसंहारे न कश्चिद्विरोध इति प्रतिपादनात् ।

यत्त्वेवं श्रुतीनामनेकार्थबोधकत्वसंप्रतिपत्तावपि श्रोतृभेदेन भिन्नार्थकत्वं न संप्रतिपन्नम् । तथा सति कर्तृनानात्वस्य प्रमा-णसिद्धत्वे कर्त्रैक्यश्रुतेस्तत्तदधिकारिणं प्रति तत्तत्कर्तृबोधकत्व-सिद्धिस्तस्यां च सिद्धौ विरोधाभावेन ( नानाकर्तृ )सिद्धिरि-त्यन्योन्याश्रयादिति । तदसत् । 'स्तुतयेऽनुमतिर्वा' ( ब्र० सू० ३ । ४ । १४ ) इत्यधिकरणे 'केन स्याद्येन स्यात्तेनेदृश-एव' इतिवाक्यस्य श्रोतृभेदेनार्थत्रयपरतायास्त्वदीयैरुक्तत्वात् । तथाहि—'ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्, बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः, मौनं च निर्विद्याथ स ब्राह्मणः, केन स्याद्येन स्यात्तेनैतादृश एव' इति बृहदारण्यक-वाक्यम् । तत्रायमर्थः—यो ब्रह्मप्राप्तियोग्योऽसावागमजन्यं ज्ञानं लब्ध्वा युक्तिजं ज्ञानं संपादयेत् । तदुभयलाभानन्तरं ध्यानी भवेत् । तेन चापरोक्षज्ञानं प्राप्नोति अथ जीवन्मुक्त उच्यते । स

सता वाऽसता वा केनापि प्रकारेण वर्तेत स मुक्तियोग्य एवेति। एतद्वाक्यं हिरण्यगर्भरूपज्ञानिनो विषये विहितनिषिद्धसाधारण्येन निर्यन्त्रणं यथेष्टाचारविधिपरम्। तदितरदेवतारूपज्ञानिविषये विहितमध्य एव केषांचिदाचरणं केषांचित्परित्याग इत्येतदनुज्ञापरम्। मनुष्यात्मकज्ञानिविषये सर्वमपि विहितमेव कर्मविधिनिर्बन्धं विना स्वेच्छयाकार्यमितित्वदीयैर्व्याख्यातम्। एवम्। 'आत्मेत्येवोपासीत' इतिविधिवाक्येऽपि कर्तृभेदभिन्नार्थकत्वं तवाभिमतम्। इत्थं हि तव मतम्—ब्रह्मोपासनायामधिकारिणस्तावदुपास्यगुणभेदेन त्रिविधाः। सत्यज्ञानादिभिरल्पैर्गुणैर्मर्त्याः। संभूतिद्युव्याप्त्यादिभिः सहितैर्भूयो गुणैरिन्द्रादिदेवताः। अखिलैर्गुणैश्चतुर्मुखादयः। देवेषु मर्त्येषु चोपासनीयगुणविशेषोपसंहारानुपसंहाराभ्यां गुणभूयस्त्वाल्पत्वाद्यवान्तरभेदैः सन्ति बहवोऽधिकारिणः। सर्वान्प्रति तत्तद्योग्यगुणविशिष्टब्रह्मोपासनाभेदविधायकम्। 'आत्मेत्येवोपासीत' इति वाक्यम्। तत्र देवेषु मर्त्येषु च यस्य यावद्गुणोपासने योग्यता तं प्रति तावद्गुणविशिष्टं ब्रह्मात्मशब्दोऽभिधत्ते। एवकारस्तदयोग्यगुणव्यवच्छेदकः। चतुर्मुखादीन्प्रति सकलगुणविशिष्टं ब्रह्मात्मशब्दोऽभिधत्ते। एवकारस्तु अयोग्यगुणव्यवच्छेदक इति। अन्योन्याश्रयोक्तिरप्यसंभवी। स किमुत्पत्त्यन्योन्याश्रयो वा ज्ञप्त्यन्योन्याश्रयो वा स्थित्यन्योन्याश्रयो वा। नाऽऽद्यः। पूर्वपक्षिणा ब्रह्मविष्णुशिवात्मकनानाकर्तॄणां प्रत्येकं तत्तदुपासकानां तत्तदधिकारिणं प्रति तत्तत्कर्तृबोधकतायाश्चानादित्वस्य प्रतिशाखमग्निहोत्रविधेरनधिगतार्थबोधकत्वरूपप्रामाण्याय तत्तच्छाखीयं प्रत्यपूर्वार्थबोधकत्वरूपापूर्वविधित्वमिव बीजाङ्कुरन्यायेन वक्तव्यत्वात्। अवश्यं चेदं पुराणेषु रामकृष्णाद्यवताराणां भेदश्रवणं लौकिकैर्भ्रान्त्या गृहीतस्य भेदस्यानुवादकमिति 'सर्वथाऽपि त एव' (ब्र० सू० ३।४।३४) इत्यधिकरणे सिद्धान्तयता त्वया वक्तव्यम्। अन्यथाऽवताराणां प्रमाणसिद्ध ऐक्ये भेदश्रवणस्योक्तानुवादत्वासिद्धेः। तत्सिद्धौ च प्रत्यक्षादिसहकृतपुराणादिविरोधपरिहारेणैक्यसिद्धिरिति त्वदुक्तरीत्यैवान्यो-

न्याश्रयस्य दुर्वारत्वात् । एवम् 'आत्मेत्येवोपासीत' इत्यादावपि सिद्धेऽधिकारिभेद आत्मशब्दस्य तत्तदधिकारिणं प्रति तत्तद्योग्यगुणविशिष्टब्रह्मात्मबोधकत्वसिद्धिस्तत्सिद्धौ चावधारणाविरोधपरिहारेणोपासनाभेदसिद्ध्याऽधिकारिभेदसिद्धिरित्यन्योन्याश्रयोऽपि दुर्वारः । न द्वितीयः । कर्तृनानात्वबोधस्योक्तप्रमाणजन्यत्वाच्छ्रवणकर्तृभेदभिन्नतत्तत्कर्तृबोधस्य च तत्तत्पुरुषीयानादितत्तदुपासनयोग्यतासहकृतकर्त्रैक्यश्रुतिजन्यत्वेनोभयविधज्ञानयोः परस्परापेक्षाभावात् । अत एव न तृतीयोऽपि ।

यदप्यनेकेश्वरेषु तत्तदुपासकस्य स एव कर्तेत्येकतन्मात्रस्फुरणे न किंचिद्दृढं प्रमाणम् । प्रामाणिकानेकार्थस्यैव प्रमाणबलेन ग्राह्यत्वात् । सिद्धान्ते तूपासनापादे बहुप्रमाणानुरोधेन तत्र तत्र तथा तथाऽर्थकल्पनम् । न च तत्र बाधकम् । नहि जगत्कर्तारः प्रामाणिकाः । दुरागमानुमानादीनां चाप्रमाणत्वादित्यादि रोदनमपि न सत् । नानाकर्तृषु शिवविष्ण्वादिनानाकर्तृबोधकश्रुतिसहकृतोक्तानुमानादीनां प्रमाणानां दर्शितत्वात् । सिद्धान्ते 'आत्मेत्येवोपासीत' इति श्रुतिबलात्तथाकल्पनमिव कर्त्रैक्यश्रुतिबलात्तथाकल्पनायां बाधकाभावात् । यदि चोक्तप्रमाणानां सिद्धान्तरीत्याऽऽभासत्वमिति न कर्तृनानात्वादिसिद्धिस्तर्ह्युपासनापादोक्तोक्तप्रमाणानामप्यद्वैतरीत्याऽऽभासत्वमिति वक्तुं शक्यत्वात् ।

यत्तु पुरुषभेदेनानुष्ठानभेदादुपासनाविधिवाक्यस्य तत्तत्पुरुषं प्रति तत्तद्योग्यगुणविशिष्टं ब्रह्मोपासनीयं नायोग्यगुणविशिष्टमिति पुरुषभेदेन विरुद्धनानार्थबोधकत्वेऽपि प्रामाण्यं न हीयते । 'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्' ( छा० ६ । २ ) इति जगत्कारणवस्तुबोधकस्य वाक्यस्य तत्तत्पुरुषं प्रति शिव एव जगत्कारणं नान्यः, विष्णुरेव जगत्कारणं नान्य इति विरुद्धनानार्थबोधकत्वे प्रामाण्यं हीयेत । उपासनावद्वस्तुस्वरूपस्य भेदाभावादिति । तदपि न सत् । त्वन्मते पुराणादिषु रामकृष्णाद्यवतारस्वरूपाणां भेदश्रवणं लौकिकैर्भ्रान्त्या गृहीतस्य भेदस्यानुवादकमिति । 'सर्वेषामपि त एवोभयलि-

१ क. ख. °म तत्र ।

ङ्गात्' ( ब्र० सू० ३ । ४ । ३४ ) इत्यधिकरणेऽनुव्याख्यानन्यायसुधयोरुक्तत्वेन तथैव कर्त्रैक्यश्रुतेरनुवादकत्वोपपत्तेः ।

यत्तु अवतारेषु तत्तत्कालवर्तिनां लौकिकानां केषांचिद्भेददृष्टिः संभवति । अन्येषां तु बहुत्वलिङ्गानुमानाभासेनेति युक्तस्तत्रानुवादः । जगत्कर्त्रैक्यस्य तु श्रुतिं विना प्रत्येतुमशक्यतया नानुवादः संभवतीति । तदपि न सत् । त्वन्मते पुरुषाणां योग्यतातारतम्यज्ञानपूर्वकस्नेहरूपा भक्तिरप्यनादिरिति 'स्थानविशेषात्प्रकाशादिवत्' ( ब्र० सू० ३।२।३४ ) 'अनुबन्धादिभ्यः' ( ब्र० सू० ३ । ३ । ५० ) इत्यधिकरणयोरुक्तत्वेन शिवादिभक्तान्तर्गतस्य शिव एव जगत्कर्ता नान्यः, विष्णुभक्तान्तर्गतस्य विष्णुरेव जगत्कर्ता नान्य इत्येवंरूपेण तत्तन्माहात्म्यज्ञानस्याप्यनादित्वसंभवात् । त्वन्मते सर्वेषां मतानामनादित्वस्योक्तत्वेन तत्तन्मताहितमाहात्म्यज्ञानपरम्परानादित्वसंभवाच्च ।

यत्तु सत्यं शिवादीनां जगत्कर्तृत्वादिमाहात्म्यज्ञानस्यानादित्वं परंतु तमोयोग्यानां जीवानामेव । एवं तेषां श्रुत्यर्थावभासोऽप्यस्त्येव । तत्फलं च तदनुरूपमेव । त्वमपि तदन्तर्गतश्चेदनुमन्यामहे न निवारयामः । एतच्च पद्मपुराणादिषु स्फुटमभिहितं विस्तरभयान्न लिख्यत इति तद्दधीचिगौतमादिशप्तविष्णुपाखण्डिब्राह्मणाधमकुलीनानुयायिवंशोत्पन्नस्य स्वकुलपरम्पराधर्मयोग्यम् । परस्परनिन्दकशैववैष्णवान्तर्गतस्य शिवविष्णोर्भेदमुत्कर्षापकर्षादिकं चामन्वानस्य शुद्धवैदिकस्याद्वैतिनो मे न मनसो विकारायालम् । स्पष्टश्चायमर्थः शैवग्रन्थेषु विस्तरतः । संक्षेपेणात्र लिख्यते—विष्ण्वादीनां ज्ञानवतां गुरुः शिवः । तथोक्तं पातञ्जलसूत्र ईश्वरं प्रस्तुत्य—'स पूर्वेषामपि गुरुः कालेनानवच्छेदात्' ( यो० सू० १ । १ । २६ ) उक्तं च शिवपुराणे—

प्रतिसर्गं प्रसूतानां ब्रह्मणां शास्त्रविस्तरम् ।
उपदेष्टा स एवाऽऽदौ कालावच्छेदवर्तिनाम् ॥
कालावच्छेदयुक्तानां गुरूणामप्यसौ गुरुः ।

सर्वेषामेव सर्वज्ञः कालावच्छेदवर्जितः ।
ईशानः सर्वविद्यानां स एवाऽऽदिगुरुर्बुधः ।
तस्य शिष्यो महाविष्णुः सर्वज्ञानमहोदधिः ।

ब्रह्माणमित्युपलक्षणं विष्णोः । 'सोमः पवते' इति उमासहितं शिवं प्रक्रम्य 'इन्द्रस्य जनिता जनितोत विष्णुः' इति मन्त्रवर्णात् । श्वेताश्वतराणां मन्त्रोपनिषदि च 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै त९ ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये' इति मन्त्रश्च शिवस्य ब्रह्मादिगुरुत्वं तदादिमुमुक्षुशरणत्वं च प्रतिपादयति । यद्यप्ययं मन्त्रः स्पष्टं शिवपर इति न प्रतीयते तथाऽपि कौर्मे शिवपूजायाम्—

निवेदयीत चाऽऽत्मानं यो ब्रह्माणमितीश्वरम् । इति

अस्याऽऽत्मार्पणे विनियोगाच्छिवपरताऽवसीयते ।

'योऽग्रे मां विदधे पुत्रं ज्ञानं च प्रहिणोति मे ।
यत्प्रसादान्मया प्राप्तं प्राजापत्यमिदं पदम् ॥
ब्रह्माणं मुनयः पूर्वं सृष्ट्वा तस्मै महेश्वरः ।
दत्तवानखिलान्वेदान्विप्रा आत्मनि संस्थितान् ॥

इति शिवपुराण उपबृंहणाच्चास्य शिवपरत्वमेव सिध्यतीति ब्रह्मादिगुरुत्वं शिवस्य । एवम् 'विश्वाधिको रुद्रो महर्षिः' ( याज्ञिकोपनि० ) इति श्रुतिरपि विश्वशब्दवाच्याद्विष्णोराधिक्यं शिवस्य बोधयति । विष्णोर्विश्वशब्दवाच्यत्वं च 'विश्वं विष्णुर्वषट्कारः' इतिस्मृतिसिद्धम् । तच्चाऽऽधिक्यं तद्गुरुत्वादिकमेव । एवमन्तर्यामिब्राह्मणोक्तं सर्वान्तर्यामित्वं परब्रह्मत्वाविनाभूतं शिवस्यैव । तथा च श्रुतिः—अन्तरिच्छन्ति तं जने रुद्रं परो मनीषया गृह्णन्ति जिह्वया ससमिति । अस्यार्थः—जनेषु अन्तर्यामिभावेनावस्थितं परः परमुत्कृष्टं रुद्रं ये मनीषयाऽन्तर्ध्यायन्ति ते ससं सस्यविकारभूतमन्नं जिह्वया गृह्णन्ति इति वाच्योऽर्थः । येऽतिकुतर्कव्यसनिनः पाखण्डास्तमन्तर्यामिणं नेच्छन्ति ते जिह्वया पुरीषमेव गृह्णन्ति ।

धन्याः खलु वने वाता ये पश्यन्ति ममाऽऽत्मजम् । इति

दशरथाद्युक्ताविवाप्रस्तुतप्रशंसागम्येऽर्थे कटाक्षः । तथाह्युपबृंहितं पराशरेण—

अन्तरिच्छति यो रुद्रं सदा वन्द्यं मनीषया ।
गृह्णाति जिह्वया सोऽयं रसं पूर्णामृतोपमम् ॥
अन्तर्नेच्छन्ति ये रुद्रं भवानीसहितं भवम् ।
पुरीषमेव गृह्णन्ति जिह्वया ते न संशयः ॥

अत्राऽऽद्यश्लोके मन्त्रवाच्योऽर्थः । द्वितीये गम्योऽर्थो दर्शितः । स च स्वयमिह बाधितत्वाच्छिवद्वेषिणामतिगर्हितवृत्तित्वं स्पष्ट-यति । तथा चोक्तं भारते—

धिक् तेषां धिक् तेषां धिक्तेषां जन्म धिगस्तु तेषाम् ।
येषां न वसति हृदये कुमतिपथविमोचको रुद्रः ॥

अयमेवार्थो श्रीमद्भागवते शिवं प्रस्तुत्याभिहितः—हसन्ति यस्याऽऽचरितं हि दुर्भगा इति । तत्र दुर्भगा इति दुष्टभगोत्पन्नाः । संकीर्णभगोत्पन्ना इति यावत् । तेषां च गर्हितवृत्तित्वं प्रसिद्ध-मेव शिवद्वेषिणाम् । उक्तं गर्हितवृत्तित्वमभिसंधायैवोक्तं नागर-खण्डे—

मा भूत्तत्र कुले जन्म यत्र शंभुर्न दैवतम् ।

इति शिवद्वेषिणामुक्तगर्हितवृत्तित्वमेव केवलं न, अपि तु सद्भिर्बहिष्कार्यत्वमपि। तथा च स्कान्दे शंकरसंहितायां शिवपूजा-विधौ—

नेक्षेत पूजावेलायां नरं वत्स बहिष्कृतम् ।

इत्युक्त्वा कोऽसौ बहिष्कृत इत्याकाङ्क्षायामुक्तम्—

दधीचिना गौतमेन ये शप्ता ब्राह्मणाधमाः ।
कलाववतरिष्यन्ति निन्दकास्ते बहिष्कृताः ॥ इति ।

दधीचिशापः कौर्मे दर्शितः—

एवमुक्त्वा तु विप्रर्षिः शशापेश्वरविद्विषः ।
समागतान्ब्राह्मणांस्तान्दक्षसाहाय्यकारिणः ॥
यस्माद्बहिष्कृतो देवः शंकरो लोकवन्दितः ।

भविष्यध्वं त्रयीबाह्याः सर्वेऽपीश्वरविद्विषः ।
निन्दन्तो ह्यैश्वरं मार्गं कुशास्त्रासक्तमानसाः ॥
मिथ्याधीतसमाचारा मिथ्याज्ञानप्रलोभिनः ।
प्राप्य घोरं कलियुगं कलहैः परिपीडिताः ॥
त्यक्त्वा तपोवनं कृत्स्नं गच्छध्वं नरकान्पुनः ।
भविष्यति हृषीकेशः स्वाश्रितोऽपि पराङ्मुखः ॥ इति ।

तत्रैव कलिदोषप्रकरणे—

कुर्वन्ति चावताराणि ब्राह्मणानां कुलेषु वै ।
दधीचिशापनिर्दग्धाः पुरा दक्षाध्वरे द्विजाः ।
निन्दन्ति च महादेवं तमसाऽऽविष्टचेतसः ॥ इति ।

तानेवाभिप्रेत्य सौरपुराणे—

पुरुषोत्तममाश्रित्य शिवनिन्दापरा द्विजाः ।
कलौ युगे भविष्यन्ति त्राता तेषां न माधवः ॥ इति ।

एवं च—

कलौ रुद्रो महादेवो देवानामीश्वरः प्रभुः ।
न देवता भवेन्नृणां देवतानां च दैवतम् ॥

इति कलिदोषप्रदर्शकवचनं दधीच्यादिशप्तविषयमेव । शिवनिन्दकस्य बहिष्कार्यत्वं श्रीमद्भागवतवचनेनाप्यवगम्यते । तथाहि—कर्णौ पिधाय निरगाद्यदकल्प ईशे
धर्मावितर्यसृणिभिर्नृभिरस्यमाने ।
छिन्द्यात्प्रसह्य रुशतीमसतां प्रभुश्चे—
जिह्वामसूनपि ततो विसृजेत्स धर्मः ॥ इति ।

अस्यार्थः—धर्मगोप्तरीशे शिवे निरङ्कुशैर्लङ्घितमर्यादैर्नरैर्दूष्यमाणे यथैकस्यापि दूषणवाक्यस्य श्रवणं न भवति तथा कर्णौ पिधाय सत्वरं निर्गच्छेद्यदि तन्निग्रहेऽशक्तः । शक्तश्चेत्तेषां दूषणनिरतानामसतां रसनां जिह्वां प्रसह्य बलाच्छिन्द्यात् । बुद्धिपूर्वं शिवदूषणश्रवणशीलस्तु प्राणानपि त्यजेत् । स च प्राणत्यागः सुरापानादिदोषनिमित्तकप्रायश्चित्तरूपप्राणत्यागवद्धर्म एव । एवं च शिवदूषणश्रोतॄणां मरणान्तं प्रायश्चित्तमिति स्थिते स्वयं

शिवदूषणरतानां कैमुतिकन्यायेन प्रायश्चित्तं नैवास्तीति ते सद्भि-र्बहिष्कार्या एवेत्युक्तं भवति । तथा चोक्तः कौर्मे ब्रह्महत्यादि-सकलपापानां प्रायश्चित्तविधानप्रकरणे देवतान्तरनिन्दकानां प्रायश्चित्तविधानानन्तरं शिवनिन्दायां प्रायश्चित्ताभावः—

यः सर्वभूतविनुतं विश्वेशं तु विनिन्दति ।
न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि इति ॥

यद्यप्यनेन शिवदूषणे मरणान्तमेव प्रायश्चित्तम् ।
कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते ॥

इत्यादौ स्मृतिकाराणां मरणान्तप्रायश्चित्त एव निष्कृत्यभाव-व्यवहारात्तथाऽपि शिवदूषणश्रवणे मरणान्तं प्रायश्चित्तं चेत्त-द्दूषणकर्तॄणां ततोऽधिकं न्याय्यमिति तेषां प्रायश्चित्ताभाव एव पर्यवस्यति । उक्तं शिवस्य विष्ण्वादिशरण्यत्वं च विष्ण्वादीनां भक्तिजन्यप्रसादद्वारा सकलवांछितार्थप्रदातृत्वाद्विष्ण्वादिप्राप्य-त्वाच्च । विष्णोः शिवभक्तिश्च कौर्मे प्रतिपादिता—

नार्जुनेन समः शंभोर्भक्त्या भूतो भविष्यति ।
मुक्त्वा सत्यवतीसूनुं कृष्णं वा देवकीसुतम् ॥ इति ।

भक्तिजन्यप्रसादश्च सौप्तिके भारते श्रूयते शिववचनेन—

अहं यथावदाराध्यः कृष्णेनाक्लिष्टकारिणा ।
तस्मादिष्टतमः कृष्णादन्यो मम न विद्यते ॥ इति ।

द्रोणपर्वणि च—

देवदेवस्त्वचिन्त्यात्मा अजय्यो विष्णुरव्ययः ।
सर्वरूपं भवं ज्ञात्वा लिङ्गेऽर्चयति तं प्रभुम् ॥
तस्मिन्नप्यधिकां प्रीतिं करोति वृषभध्वजः ।

इति व्यासवचनात् । अवतारिविष्णोरपि शिवप्रसादः श्रूय-तेऽरण्यपर्वणि तीर्थयात्राविधौ—

ततो गच्छेत्सुपर्णाक्षं त्रिषु लोकेषु विश्रुतम् ।
यत्रविष्णुप्रसादार्थं रुद्रमाराधयत्पुरा ।
वरांश्च सुबहूँल्लेभे दैवतैरपि दुर्लभान् ॥
उक्तं च त्रिपुरघ्नेन परितुष्टेन भारत ।

अपि चान्यैः प्रियतमो लोके कृष्ण भविष्यसि ॥
त्वन्मुखं च जगत्सर्वं भविष्यति न संशयः । इति ।

द्रोणपर्वणि च तपोध्याये मैनाके षष्टिवर्षसहस्राणि तपश्चर्यया लब्धप्रसादाय नारायणाय भगवता शिवेन लोकोत्तरशौर्यादिकं दत्तमिति विस्तरेण प्रपञ्चितम् । हरिवंशे च पारिजातसंहितायाम्—

इति संस्तूयमानस्तु भगवान्वृषभध्वजः ।
प्रसार्य दक्षिणं हस्तं नारायणमथाब्रवीत् ॥
मनीषितानामर्थानां प्राप्तिस्तेऽस्तु सुरोत्तम ।
पारिजातस्य हर्ताऽसि मा भूत्ते मनसो व्यथा ॥
पुरा मैनाकमाश्रित्य तपस्त्वमकरोर्यदा ।
तदा मम वचः कृष्ण संस्मृत्य स्थैर्यमाप्नुहि ॥
अवध्यस्त्वमजय्यश्च मत्तः शूरतरस्तथा ।
भवितासीत्यवोचं यत्तत्तथा न तदन्यथा ॥

इति शिवप्रसादो विष्णोरुक्तः । शिवस्य विष्णुप्राप्यत्वं च 'तव श्रिये मरुतो मर्जयन्त रुद्र यत्ते जनिम चारु चित्रम्' इति । शिवाभिव्यक्तिस्थानं लिङ्गं प्रकृत्य तद्विशेषयन् 'पदं यद्विष्णोरुपमं निधायि' इति मन्त्रवर्णो दर्शयति । तन्मन्त्रार्थस्तु पुराणे पराशरेण दर्शितः—

रौद्रं लिङ्गं महाविष्णुर्भक्त्या लिङ्गं शिलामयम् ।
चारु चित्रं समभ्यर्च्य लब्धवान्परमं पदम् ॥ इति ।

परमं पदं च शिव एव । प्राप्यते गम्यत इति पदमिति व्युत्पत्तेः । प्राप्त्यर्थकस्य ज्ञानार्थकत्वात् । 'शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा विज्ञेयः' इति श्रुत्या शिवस्यैव मुमुक्षुज्ञेयब्रह्मतोक्तेः । अत एव ज्ञानसाध्यमोक्षार्थिनं प्रति ज्ञेयं वक्तुम् । 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीमि (का० १ । १ । ५२) इति ज्ञेयशिवाख्यं ब्रह्म प्रकृत्य 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इति कठवल्लीषु श्रूयते ।

तत्र विष्णोरपि पदं प्राप्यं शिवाख्यं ज्ञेयं ब्रह्मेत्यर्थः, न तु विष्णोः पदं स्थानं वैकुण्ठादिकमित्यर्थः ।

'महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः'
(का० ३ । १ । ११) ।

इति निर्दिष्टस्य पुरुषस्यैव स्थानप्रमाणतः पदशब्दनिर्दिश्यत्वावगमात् । स्थानप्रमाणस्य विष्णोरिति समाख्यातो बलवत्त्वात् । पुरुषश्चात्र न विष्णुः । तस्यैव तत्प्राप्यत्वाभावात् ।

शिवो रुद्रो महादेवः शंकरो ब्रह्म सत्पदम् ।
एवमादीनि नामानि विशिष्टानि शिवस्य तु ॥

इति स्कन्दपुराणवचनाच्च पदशब्दः शिवाभिधाय्येव । एवं च 'सर्वे वेदा यत्पदमामनन्ति' (का० १।१।५२) इत्युपक्रम्योक्तसर्ववेदतात्पर्यविषयज्ञेयं ब्रह्म शिव एवेति सिध्यति । प्रतिपादयति च 'इमा रुद्राय स्थिरधन्वने गिरः' इति मन्त्रः शिवस्य सर्ववेदतात्पर्यविषयत्वम् । पराशरोऽप्येवमेवाऽऽह—

स्मृतयश्च पुराणानि भारतादीनि सत्तम ।
शिवमेव सदा साम्बं हृदि कृत्वा ब्रुवन्ति हि ॥ इति ।

अयमेवार्थः स्कान्दे स्पष्टीकृतः—

कानिचिद्वेदवाक्यानि ब्राह्मणा वेदवित्तमाः ।
रुद्रमूर्तिं समाश्रित्य शिवे परमकारणे ॥
पर्यवस्यन्ति विप्रेन्द्रास्तथा वाक्यानि कानिचित् ।
विष्णुमूर्तिं समाश्रित्य ब्रह्ममूर्तिं च कानिचित् ॥
आग्नेयीं मूर्तिमाश्रित्य श्रुतिवाक्यानि कानिचित् ।
सूर्यमूर्तिं मुनिश्रेष्ठास्तथैवान्यानि कानिचित् ॥
एवं मूर्त्यभिधानेन द्वारेणैव मुनीश्वराः ।
प्रतिपाद्यो महादेवः स्थितः सर्वासु मूर्तिषु ॥ इति ।

अधिकमानन्दमयाधिकरणे परोक्तानां विष्णोर्ब्रह्मत्वसाधकानां श्रौतलिङ्गानां शिवसाधारण्येन न विष्णोरेव ब्रह्मत्वनिर्णायकत्वमिति न विष्णौ परोक्तश्रुतिसमन्वयसिद्धिरितिविप्रतिपादनावसरे वक्ष्यामः । तदेवं शैवोक्तरीत्योक्तार्थसिद्धौ

शिवस्य जगत्कर्तृत्वादिमाहात्म्यज्ञानं तमोयोग्यानामेवेति त्वदु-क्तिस्त्वदुपास्यस्य शैवोत्तमस्य विष्णोरेव तामसत्वेनोपालम्भ-रूपतया तदुपालम्भफलकामस्त्वमेव चेन्न त्वां वयं तदुपाल-म्भान्निवारयाम इत्यलं त्वदीयानुभूतवाक्पारुष्ये घट्टकुट्यां प्रभातायितन्यायेन ।

यो ब्रह्माणमचीक्लृपत्प्रथमतो वेदानमुष्मै स्वतो
निर्मायोपदिदेश चान्तरगतः साक्षीति यो गीयते ।
यः संक्रान्ततया समग्रमतिषु प्राप्तोऽपि जीवाभिधाम्
वस्तुत्वे निरुपाधिकः स भगवान्भूयाच्चिरं भूतये ॥ १ ॥

इति शास्त्रयोनित्वाधिकरणं समाप्तम् ।

## अथ समन्वयाधिकरणम् ।

एकं ब्रह्म निरामयं हरिहरब्रह्माभिधानं दध—
त्सृष्ट्यादौ क्वचिदीयते भ्रमजुषां नानाविधं चेत्तदा ॥
सूर्यादिः प्रतिबिम्बतोऽपि च पुनस्तैः किं न नानेष्यते ।
तस्मादद्वयमन्तरङ्गविलसत्सत्ताप्रकाशं नुमः ॥ १ ॥
योऽयं शास्त्रसमन्वयः स न हरिब्रह्मादिषु प्रोच्यते ।
नार्वाग्देवगणेषु किंतु परमानन्दे जगद्व्यापके ॥
कस्मिंश्चित्परवस्तुनीति भगवत्पादाशयाज्ञा यदि ।
व्यावल्गन्ति परस्परं किमधुना व्याकोशितो नः क्षुरः॥२॥

### तत्तु समन्वयात् ॥ ४ ॥

पूर्वाधिकरणे वेदान्तरूपशास्त्रस्य ब्रह्मणि प्रामाण्यमभिहितं तदिहाऽऽक्षिप्य समर्थ्यत इति शास्त्राध्यायादिसंगतिः । अत्र वेदान्ता ब्रह्मणि प्रमाणं भवन्ति न वा, तदर्थं वेदान्ताः प्राधा-न्येन ब्रह्म प्रतिपादयन्ति उतान्यशेषतयेति तदर्थं वेदा-न्तानां स्वप्राधान्येन ब्रह्मप्रतिपादने फलमस्ति न वेति पूर्वो-त्तरपक्षयुक्तिभ्यां संशये—वेदान्तशास्त्रं नोक्तब्रह्मणि प्रमाणम् । अनधिगताबाधितप्रयोजनवदर्थपराणामेव शब्दानां प्रामाण्यस्य 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमु-च्यते' (जै० सू० १ । २ । १) इति जैमिनिनोक्तत्वात् ।

सिद्धवस्तुब्रह्मणः प्रवृत्तिनिवृत्त्यविषयत्वेन निष्फलत्वेन तत्र वेदान्तानां तात्पर्याभावाच्च तेषां ब्रह्मणि प्रामाण्यम् । किं च सिद्धवस्तुत्वावच्छेदेन प्रमाणान्तरवेद्यत्वं दृष्टम् । ब्रह्म च सिद्ध-मिति तत्र प्रमाणान्तरवेद्यत्वावश्यकत्वेन वेदान्तानां स्वार्थपरत्वे सापेक्षत्वेनानधिगतार्थपरत्वाभावादपि न तेषां ब्रह्मणि प्रमाण-त्वमिति वेदान्तगतजीवप्रकाशकानि वाक्यानि कर्तृपराणि, पर-ब्रह्मप्रकाशकानि देवतापराणि, सृष्ट्यादिप्रतिपादकानि वाक्या-नि साधनपराणीति रीत्या निरपेक्षक्रियापरत्वमेव वेदान्तानां न परब्रह्मपरत्वम् । यदि तु कर्मप्रतिपादकविधिभ्यो दूरपठिततया तत्समभिव्याहाराभावात्प्रकरणविच्छेदकानां भूयसामुपलम्भाच्च न कर्मपरत्वं वेदान्तानामिति मन्यते तदाऽपि वेदान्तपठितोपा-सनारूपकर्मविध्येकवाक्यतया तत्परत्वमेवास्तु । अथैवं सत्यन्य-परेभ्योऽपि वेदान्तेभ्यो ब्रह्मसिद्धिर्देवताधिकरणन्यायेनैव वक्त-व्या । स च न्यायः—प्रमाणान्तरविरुद्धेऽर्थे न प्रवर्तत इति तत्त्वमस्यादिवाक्यानां प्रत्यक्षादिप्रमाणविरुद्धजीवब्रह्मैक्यार्थ-कत्वेन कथं तत उपास्यब्रह्मसिद्धिरिति चेत् । वाचं धेनुमुपासी-सीतेत्यादिवदारोपिताभेदमादायाप्युपासनाविधिपर्यवसानाऽङ्गी-कारादिति पूर्वपक्षे सिद्धान्तः—तत्तु समन्वयादिति ।

यत्तु चन्द्रिकायाम्—'अत्र परैर्वेदान्ता ब्रह्मणि न प्रमाणम् । सिद्धवस्तुबोधने प्रवृत्त्याद्यभावेन फलाभावात्सापेक्षत्वप्रसङ्गा-च्चेति प्राप्ते' इत्यनेनोक्तपूर्वपक्षमनूद्य पूर्वपक्षो + निर्दलः । निष्प-

+ निर्दल इति । अयं भावः—पूर्वपक्षो हि द्विविधः । सिद्धवस्तुबोधने प्रवृत्त्याद्यभावेन फलभावादित्येकः । सिद्धार्थत्वे च प्रत्यक्षादिभिः समानविषय-तया लौकिकवाक्यवत्तदर्थानुवादकत्वेन प्रत्यक्षादिसापेक्षत्वेनाप्रामाण्यप्रसङ्गादिति द्वितीयः । तत्राऽऽद्यस्तावन्न संभवतीत्याह—निष्प्रयोजनत्वेति । तस्यायं भावः—जिज्ञासाशब्दस्य मुख्यवृत्त्या ज्ञानेच्छापरत्वं स्वीकृत्य 'ज्ञातुमिच्छा हि संदिग्धे विषये निर्णयाय भवति' इत्यनया रीत्या विषयप्रयोजनसूचनस्या-भ्युपगमादिति । नापि द्वितीय इत्याह—लौकिकेति । संकेतग्रहणादिसापेक्षत्वेन सिद्धार्थकवत्कार्यपरवाक्यस्याप्यप्रामाण्यं स्यात् । पौरुषेयस्य तु वक्तृज्ञान-

योजनत्वशङ्कायास्त्वन्मत आद्यसूत्र एव जिज्ञासाशब्देन परिहृत-त्वात् । लौकिककार्यपरवाक्येऽपि सापेक्षत्वदर्शनेन पौरुषेयत्व-स्यैव सापेक्षत्वप्रयोजकत्वाच्चेति दूषणमुक्तम् । तदापातरमणीयम् । प्रबलप्रत्यक्षविरोधेन कर्तृत्वभोक्तृत्वविधुरप्रत्यगभिन्नब्रह्मरूप-विषयप्रतिपादकत्वं न वेदान्तानां संभवतीत्यादिकया प्रथमसूत्रे दर्शितविवरणरीत्या नाप्यहमितिप्रत्यक्षसिद्धात्मप्रतिपादकत्वं वेदान्तानां संभवति । संशयप्रयोजनयोरभावात् । न च वाच्य-महंप्रत्ययः स्थूलोऽहं दुःखीति गृह्णाति तद्विपरीतश्च वेदान्तप्रति-पाद्यः स च संदिग्ध इति विषयादिसिद्धिः । वेदान्तानामध्य-यनविध्यापादितप्रयोजनवदर्थपराणामपि प्रबलाहंप्रत्ययबाधित-त्वेन जपमात्रोपयोगित्वेनाविवक्षितार्थत्वादुपचरितार्थत्वाद्वेत्या-दिना दर्शितवाचस्पतिरित्या वा विषयाभावनिबन्धनः फला-भावनिबन्धनश्च शास्त्रानारम्भपूर्वपक्षः प्रत्यक्षापेक्षया श्रुतिबली-यस्त्वादिरूपार्थसूचकेन ब्रह्मजिज्ञासापदेन निरस्तः । तथा चोक्तं वाचस्पतिमिश्रैः——न च क्रियासमभिव्याहारेणैतादृगात्मतत्त्व-मभिदधति तत्पराणि सन्ति शक्यमुपचरितार्थानि कर्तुमिति । प्रत्यक्षाच्छ्रुतेः प्राबल्ययुक्तिश्चैतदधिकरणनिर्णेयश्रुतेरुक्तार्थपरत्व-सिद्ध्यधीनैव । निर्णीततात्पर्यकायाः श्रुतेरेव स्वतात्पर्यविषय-विरोधिप्रत्यक्षप्राबल्यस्यास्मन्मते स्वीकारात् । अन्यथा सूर्य-प्रादेशिकत्वादौ दृष्टविसंवादस्य तत्प्रत्यक्षस्य ‘ आदित्यो यूपः ’ इत्यागमादपि दौर्बल्यापत्तेः । एवं चैतदधिकरणे निर्णेष्यमाण-स्यैव विषयप्रयोजनाद्यर्थस्य शिष्यहितैषिणाऽऽचार्येण शास्त्रा-रम्भोपयोगितया प्रथमसूत्रे जिज्ञासाशब्देन सूचनेऽपि एतद-धिकरणवैयर्थ्यानवकाशात्त्वयाऽपि ह्यानन्दमयाधिकरणे ‘ प्रा-दुर्भावो हरेर्जनिः ’ इति अनुव्याख्यानोक्तजन्यत्वस्य विष्णौ

---

पूर्वकत्वेन तत्सापेक्षत्वात्पौरुषेयत्वमेव प्रयोजकं न तु सिद्धार्थपरत्वम् । व्यभि-चारात् । वेदे तु तन्नास्ति । एतदेवाभिप्रेत्य मामत्याम्——‘ किं पुंवाक्यानां सापेक्षता भूतार्थत्वेनाऽऽहोस्वित्पौरुषेयत्वेन ’ इति विकल्प्य तत्राऽऽद्यं दूषयित्वा द्वितीय एव स्थापित इति ।

सावकाशत्वोक्तिरत्रत्यसिद्धान्तसिद्धजन्यत्वाभिप्रायेति प्रतिपाद्यै- व त्वदीयभाष्योक्तद्युभ्वाद्यधिकरणपूर्वपक्षसमर्थनादुक्तास्मद्रीत्या पूर्वपक्षदूषणं स्वशिरसि पाषाणप्रक्षेपसमत्वात्तुल्यपरिहारमेव । तथा हि द्युभ्वाद्यधिकरणे त्वद्रीत्या पूर्वपक्षः—'यस्मिन्द्यौः पृथिवी चा- न्तरिक्षमोतं सह प्राणैश्च सर्वैः । तमेवैकं जानथाऽऽत्मानम् ' (मु० २ । २ । ५ ) इत्यत्र द्युभ्वाद्यायतनत्वेन श्रुतो रुद्रादि- रेव । ' रुद्रो वाव लोकाधारः प्राणानां ग्रन्थिरसि रुद्रोऽष्टावि- शान्तकः प्राणेश्वरः कृत्तिवासाः पिनाकी ' इति रुद्रसमाख्याना- द्रुद्रस्यैव प्राणाद्याधारत्वप्रतीतेः । ' स एषोऽन्तश्चरति बहुधा जायमानः ' ( आथ० उ० २ । २ । ६ ) इति जायमानत्वरू- पजीवलिङ्गाच्चेति रुद्रादिसमाख्याजायमानत्वलिङ्गयोर्द्युभ्वाद्या- यतनं रुद्रादिरेवेत्यस्मिन्पूर्वपक्षे हेतुत्वेन प्रदर्शनोत्तरं चन्द्रिकाया- मुक्तम्—ननु तथाऽपि ' द्वे विद्ये वेदितव्ये ' इति विष्णुप्रकर- णेन ' ' अमृतस्यैष सेतुः ' ( आ० उ० २ । २ । ५ ) इति मुक्तोपसृप्यत्वस्य ' तन्निष्ठस्य मोक्षोपदेशात् ' ( ब्र० सू० १ । १ । ७ ) ' अस्मिन्नस्य च तद्योगं शास्ति ' ( ब्र० सू० १ । १ । १९ ) इतिसूत्रसिद्धविष्णुलिङ्गेन रुद्रसमाख्याया बाध एव । समाख्यातः प्रकरणलिङ्गयोर्बलवत्त्वात् । रुद्रादिसमा- ख्याया अन्तरधिकरणन्यायेन शास्त्रदृष्ट्येति न्यायेन पिनाकि- त्वादिलिङ्गानां विष्णौ सावकाशत्वान्न तेषां निरवकाशत्वम् । न च ' स एषोऽन्तश्चरति बहुधा जायमानः ' ( आ० उ० २ । २ । ६ ) इति जायमानत्वलिङ्गविरोधः । गौणश्चेन्नाऽऽत्म- शब्दात् ' ( ब्र० सू० १ । १ । ६ ) इतिसूत्रसिद्धविष्णुमात्रनि- ष्ठताकेन ' तमेवैकं जानथाऽऽत्मानम् ' ( मु० २ । २ । ५ ) इत्यात्मशब्देन तद्बाधात् । जायमानत्वस्य च सावकाशत्वम् ।

क्रियाप्रवर्तकत्वेन प्रादुर्भावो हरेर्जनिः ।

इत्यनुव्याख्यान आनन्दमयाधिकरण उक्तमिति पूर्वपक्षमा- क्षिप्य समाहितम् । अनुव्याख्यान उक्तिरत्रत्यसिद्धान्तसिद्धज- न्यत्वाभिप्राया । न त्वेतत्पूर्वपक्षदशायां जायमानत्वस्य साव- काशतेति । तत्रत्यासिद्धान्तस्तु चन्द्रिकायाम्—

अचेतनजनेरन्या चेतनस्य जनिर्यथा ।
तथोभयजनेरन्या ब्रह्मणोऽपि जनिर्मता ॥

'अजायमानो बहुधा विजायते'। इति ब्रह्मणोऽपि जनेः प्रमितत्वात् । प्रसिद्धाच्च चेतनाचेतनजननादन्यैव प्रादुर्भावरूपा ब्रह्मणोऽस्तु जनिः ।

किंतु निर्दोषचैतन्यसुखां नित्यां स्वकां तनुम् ।
प्रकाशयति सैवेयं जनिर्विष्णोर्न चापरा ॥ इति स्मृतेः ।

एवं चाऽऽत्मश्रुत्याद्यनुसाराज्जायमानत्वं लिङ्गमेव गौणं नेयम् । रुद्रादिशब्दानां विष्णावेव मुख्यत्वात्समाख्याऽपि सावकाशा मुक्तोपसृप्यत्वं तु निरवकाशं भाष्य एवोक्तमिति ।

किं च त्वदभिमतसिद्धवेदप्रामाण्यादिपरामर्शकातःशब्देनैव प्रथमसूत्रस्थेन शास्त्रयोनित्वसमन्वयपरामर्शादुक्तसूत्रद्वयीयपूर्वपक्षस्यापि निराकरणसंभवादेतत्सूत्रद्वयारम्भो व्यर्थः स्यात् । अशब्दस्य सिद्धवेदप्रामाण्यपरामर्शकत्वं च चन्द्रिकायामेवोक्तम् । अनुव्याख्याने तु—

अतो यथार्थबन्धस्य विना विष्णुप्रसादतः ।
अनिवृत्तेस्तदर्थं हि जिज्ञासाऽत्र विधीयते ॥
अतः संशयसंपत्तौ वाक्यं प्रत्यक्षवत्प्रमा ।
प्रत्यक्षवच्च प्रामाण्यं स्वत एवाऽऽगमस्य हि ॥
व्युत्पत्तिः प्रथमात्तस्माद्वर्तमाने गते ततः ।

इत्यादिना बन्धस्य मिथ्यात्वात्तन्निवृत्तेः प्रसादनैरपेक्ष्याच्च भगवत्प्रसादार्थं जिज्ञासा मुमुक्षुणा कर्तव्येत्याशङ्कानिरासाय प्रयोजनसाधकं जगत्सत्यत्वादिकमप्यतःशब्देनोक्तम् । विषयसिद्धिहेतुयुक्तिष्वपि स्वप्रकाशप्रत्यगर्थाभिन्नत्वाच्च विषयत्वमिति प्रमेय आरोपिताकारशङ्कानिरासकृद्ब्रह्मपदसूचिता युक्तिः । तदतिरिक्ताशब्दस्य न प्रामाण्यम् । प्रामाण्येऽपि सिद्धे न प्रामाण्यमित्यादिका प्रमाण आरोपिताकारशङ्कानिरासकृद्युक्तिरतःशब्देन सूचितेति । तथा चाग्रे निर्णेष्यमाणस्यैवार्थस्यातःशब्देन परामर्श इति त्वयाऽप्युक्तत्वैवाधिकरणद्वयसार्थक्यं समर्थनीयम् । एवं लौकिकेत्याद्यपि एतदधिकरणपूर्वपक्षदूषणं न सत् । नहि

पूर्वपक्षे कार्यपरवाक्यानां प्रमाणान्तरासिद्धार्थपरत्वनियमोऽस्मा-भिरुक्तः। किंतु सिद्धवस्तुत्वावच्छेदेन प्रमाणान्तरवेद्यत्वनियम एवेति पूर्वपक्षो न निर्दलः।

तत्तु समन्वयादिति सूत्रे तच्छब्दः प्रकृतब्रह्मपरामर्शकः। शास्त्रयोनित्वादितिसूत्राद्विभक्तिविपरिणामेन शास्त्रयोनीति पद-मध्याहार्यम्। तुशब्द उक्तपूर्वपक्षव्यावृत्त्यर्थः। तथा च तद्ब्रह्म कर्मोपासनादिशेषतां विनैव शास्त्रयोनि शास्त्रप्रमाणकं प्राधान्येन वेदान्तेभ्योऽवगम्यत इति यावदिति प्रतिज्ञा लभ्यते। तत्र हेतुः समन्वयादिति। तत्र संशब्दस्तात्पर्यार्थकः। तात्पर्यं च संबन्ध-विशेषरूपं द्विविधम्। अस्माच्छब्दादेतदर्थबोधो भवत्विति वक्तृ-विवक्षारूपं गुणप्रधानसाधारणम्। अपरं तु तत्प्रतीत्युद्देश्यकत्वरूपं प्रधानासाधारणम्। तत्राऽऽद्यस्यान्वयादित्यनेनैव लाभात्सं-शब्दो व्यर्थः स्यादिति द्वितीयमेव संशब्देन विवक्षितम्। सम्य-क्तात्पर्येणान्वयः समन्वयः। स च द्वितीयतात्पर्यनिरूपितः संबन्धविशेषः। तादृशतात्पर्यनिर्वाहकोपक्रमोपसंहारापूर्वत्व-फलवत्त्वादिलिङ्गरूप एव। तस्मादिति हेतुभागार्थः। यद्वाऽन्व-यात्तात्पर्यविषयत्वादित्येव हेतुः। तत्रासिद्धिवारणाय संशब्दसू-चितं सम्यक्त्वं तात्पर्यनिर्वाहकोपक्रमोपसंहारापूर्वत्वफलवत्त्वरूपं पक्षविशेषणम्। तानि च लिङ्गानि—

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥

इत्यभियुक्तोक्तानि षट्। तथाहि—छान्दोग्ये षष्ठे प्रपाठके 'सदेव सोम्येदमग्र आसीत्' (छा० ६।२।१) इत्युपक्रम्य 'ऐतदात्म्यमिदँ सर्वं तत्सत्यँ स आत्मा तत्त्वमसि' (छा० ६।८।७) इत्युपसंहारः। ऐतदात्म्यमित्यादेस्तत्त्वमसी-त्यन्तस्य नवकृत्वो वचनमभ्यासः। 'आचार्यवान्पुरुषो वेद' (छा० ६।१४।२) इत्यनेन मानान्तराविषयत्वरूपमपूर्व-त्वकथनम्। 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' (छा० ६।१४।२) इति फलकथनम्। 'उत तमादेश-मप्राक्ष्यः येनाश्रुतँ श्रुतं भवति' (छा० ६।१।३) इत्यर्थ-

वादः। 'यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्। वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' (छा० ६।१।४) इत्याद्युपपत्तिः। यथा चोक्तसद्विद्यागतोपक्रमादेरद्वैतब्रह्मात्मपरत्वमेव न भिन्नात्मपरत्वं तथोपपादितं युक्तिभिर्जन्माधिकरणे। एवं बृहदारण्यके 'आत्मेत्येवोपासीत, अत्र ह्येते सर्व एकीभवन्ति' (बृ० १।४।७) इत्युपक्रम्य 'एष नेति नेति' इत्यादिनाऽभ्यस्य 'तं त्वौपनिषदं पुरुषं पृच्छामि' इत्यपूर्वयित्वा 'अभयं वै जनक प्राप्तोऽसि ब्रह्मैव सन्ब्रह्माप्येति' इति सफलीकृत्य 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्' (बृ० १।४।१०) इत्यर्थवादमुक्त्वा 'यथा दुन्दुभेर्हन्यमानस्य बाह्याञ्शब्दाञ्शक्नुयाद्ग्रहणाय, दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः' इत्यादिनोपपाद्य 'पूर्णमेवावशिष्यते' इत्युपसंहृतम्।

यत्तु बृहदारण्यकेऽन्तर्यामिब्राह्मणे भेदप्रमापकान्येवोपक्रमोपसंहारादितात्पर्यलिङ्गानि दृश्यन्ते। तथाहि—'वेत्थ नु त्वं काप्य तमन्तर्यामिणम्' (बृ० ३।७।१) इत्युपक्रमः। 'एष त आत्माऽन्तर्यामी' (बृ०३।७।३) इत्युपसंहारः। एष त आत्मेत्येकविंशतिकृत्वोऽभ्यासः। अन्तर्यामित्वस्याप्राप्ततयाऽपूर्वता। 'स वै ब्रह्मवित्' (बृ० ३।७।१) इत्यादि फलम्। 'तच्चेत्त्वं याज्ञवल्क्य सूत्रमविद्वांस्तं चान्तर्यामिणं ब्रह्मगवीरुदजसे मूर्धा ते विपतिष्य (बृ० ३।७।१) इति निन्दारूपोऽर्थवादः। 'यस्य पृथिवी शरीरं यं पृथिवी न वेद' (बृ० ३।७।३) इत्याद्युपपत्तिः। स वै सूत्रात्मान्तर्यामिणो वेत्ता ब्रह्मगवीः ब्रह्मनिष्ठार्थस्थापिता गाः, उदजसे गृहीतासीत्यर्थः। तथा चोक्तलिङ्गैर्भेदपरत्वे कथमद्वैतात्मपरत्वमिति परेणोक्तम्। तदसत्। 'आत्मेत्येवोपासीत' इति सूत्रितब्रह्मात्मविद्याविवरणरूपायां तृतीयाध्यायादिचतुरध्याय्याम् 'अनेन ह्येतत्सर्वं वेद' इत्यनेनाऽऽत्मन एकस्य विज्ञानेन सर्वविज्ञानप्रतिज्ञापूर्वकम्। 'ब्रह्म वा इदमग्र आसीत्, तदात्मानमेवावेदहं ब्रह्मास्मीति, तस्मात्सर्वमभवत्' (वाज० ब्रा० उ० १।४।१०) इत्य-

नेनोपक्रम्य, सर्वमभवदिति अपरिच्छिन्नमभवदित्यर्थकम्, षष्ठा-ध्यायान्ते मैत्रेयीब्राह्मणे निगमनरूपे यत्र त्वस्य सर्वमात्मैवाभूत्त-त्केन कं पश्येत् ( बृ० २ । ४ । १३ ) इत्यादिनाऽभेदेनोपसं-हाराद्ध्यायचतुष्टयस्याप्यभेदपरत्वे स्थिते तदन्तर्गतस्य 'कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्च ' ( बृ० ३ । ६ । १ ) इति ब्रह्माण्डारम्भकभूतरूपब्रह्मलोकानामान्तरस्य पृष्टत्वेन ता-दृशो यः सूत्रात्मा तस्याप्यान्तरोऽन्तर्यामीत्येवं प्रतिपादनपर-स्यान्तर्यामिब्राह्मणस्योत्तरब्राह्मणप्रतिपाद्यनिरुपाधिकसर्वान्तर-ब्रह्मप्रतिपत्त्यनुकूलस्योक्तलिङ्गैरवधृताद्वैतात्मतात्पर्यवन्महाप्रक-रणप्रतिपाद्याभेदविरोधेन तद्विरोधिभेदपरत्वाभावात् । त्वदुप-न्यस्तलिङ्गानां भेदपरतानिर्णायकत्वेऽपि कल्पितभेदपरतया तात्त्विकाभेदाविरोधित्वात् । अत एव न 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' ( ब्र० सू० १ । २ । २० ) इति सूत्रतद्भाष्य-योर्विरोधः । न च ' अहं ब्रह्मास्मीति ' ( वाज० ब्रा० उ० १ । ४ । १० ) इत्यस्य ' नाम ब्रह्मेत्युपासीत ' ( छा० ७ । १ । ५ ) ' आदित्यो ब्रह्मेत्यादेशः ' इत्यादिवदितिशब्दशिर-स्कतया न ब्रह्माभेदपरता । अन्यथा नामादावपि ब्रह्माभेदसि-ध्यापत्तेरिति वाच्यम् । नाम ब्रह्मेत्यादेरुपासनाप्रकरणस्थत्वेना-भेदपरत्वाभावेऽपि ' आत्मानमेवावेदहं ब्रह्मास्मीति ' इत्यस्या-नुपासनाप्रकरणस्थत्वेनाभेदविवक्षोपपत्तेः । न च तथा सतीति-पदवैयर्थ्यं शङ्क्यम् । आत्मेत्येवोपासीत ' इत्यादौ शब्दज्ञान-योः स्वाभाविकसकर्मकत्वेनाऽऽत्मन उपासिधातुरूपशब्दकर्म-स्वरूपोपासनात्मकज्ञानकर्मत्वस्य च प्राप्तौ शब्दकर्मत्वनिराक-रणपरतयेतिशब्दसार्थक्यस्य भाष्य उक्तत्वात्तद्वदत्रापि सार्थ-क्यस्य वक्तुं शक्यत्वात् । दृष्टान्तदार्ष्टान्तिकयोरात्मस्वरूपमा-त्रस्य प्रतिपाद्यतालाभायेतिशब्द इत्यस्यापि वक्तुं सुवचत्वात् । न च ' तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम् ' ( बृ० १ । ४ । १० ) इति देवर्षिमनुष्या-दिरूपभेदपरदृष्टान्तवाक्यशेषस्याऽऽत्मस्वरूपमात्रप्रतिपादनपरत्व-मसिद्धमिति वाच्यम् । तत्रापि देवादिषु कल्पितभेदेषु प्रबुद्धं

पुरुषं निर्धार्य 'स एव तदभवत्' इति ब्रह्मात्मस्वरूपमात्रप्रतिपादनेन तस्य भेदपरत्वाभावात्। न च 'ब्रह्म वा इदमग्र आसीत्' इत्यादौ ब्रह्मण एव प्रकृतत्वान्न तस्य जीवब्रह्मैक्यपरत्वमिति वाच्यम्। 'यो यो देवानाम्' (बृ० १।४।१०) इत्यादिजीवपरामर्शिवाक्यशेषानुसारेण ब्रह्मपदस्य कार्यब्रह्मपरत्वात्। शुद्धब्रह्मपरत्वे च बोधनिमित्तस्य 'तस्मात्सर्वमभवत्' (वाज० ब्रा० उ० १।४।१०) इति सर्वात्मभावलक्षणफलकीर्तनस्यायुक्तत्वापत्तेः।

यच्चोक्तवाक्येऽहंशब्दो जीवान्तर्यामिणि मुख्यः। 'अहं मनुरभवं सूर्यश्च' इत्यन्तर्यामिण्यहंशब्दप्रयोगात्।

> सर्वान्तर्यामिको विष्णुः सर्वनाम्नाऽभिधीयते।
> एषोऽहं त्वमसौ वेति न तु सर्वस्वरूपतः॥

इति वचनाच्चेति परेणोक्तम्। तदसत्। 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' (ब्र० सू० १।१।३०) इति न्यायेन वामदेवजीवचैतन्यस्य वस्तुतो ब्रह्माभेदेन सूर्यादिभावस्योक्ततयाऽन्तर्यामिपरत्वाभावात्। 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्' (बृ० १।४।१०) इति पूर्ववाक्ये तत्त्वबोधनिमित्तकब्रह्मभावस्य प्रकृततया 'पश्यन्प्रतिपेदे' (बृ० १।४) इत्यादेरपि बोधनिमित्तकब्रह्मभावपरतयाऽन्तर्यामिपरत्वाभावात्। अहंशब्दस्यासाधारणतत्तदात्मनि शक्तेरावश्यकतया तत्साहचर्येणान्तर्यामिणि एषोऽहमिति प्रयोगः। 'न तु सर्वस्वरूपतः' इति निषेधस्य तूपहितयोरभेदाभावनिबन्धनत्वान्नोक्तस्मृतेरपि विरोधः। विस्तरेण स्मृत्यभिप्रायप[त]स्तद्धर्माधिकरणे प्रतिपादयिष्यामः। अत एव विशिष्टचैतन्यरूपे वामदेवे विशिष्टचैतन्यरूपमनुसूर्यादिभावो न संभवतीति निरस्तम्। तस्य शास्त्रदृष्ट्योक्तत्वात्। न चैवं सति शुद्धचित्यभवमित्युत्तमपुरुषप्रयोगायोगः शङ्क्यः। तस्य बाधितानुवृत्त्या द्वारीभूतबोधस्याहंत्वप्रकारकस्याखण्डाकारबोधपूर्वत्वरूपभूतपूर्वगत्या वोक्तत्वात्। न चाहमाचार्याय भूमिमददामित्यादिप्रयोगानुपपत्तिश्छिन्नमात्रस्य भूमिदातृत्वाभावादिति शङ्क्यम्। उपहितचितो

दावृत्वेन तदुपस्थितिद्वाराऽखण्डार्थत्वमादाय तेषामुपपत्तेर्नोक्त-श्रुतिरन्तर्याम्यभेदपरा। अन्तर्यामिणि भेदाप्रसक्तेश्च नोक्तश्रुते-रन्तर्याम्यभेदपरता। न च नियम्यानन्त्यादिना तत्प्रसक्तिः। एकस्मिन्नपि जीवेऽनेकावयवनियामकत्वस्यैकस्मिन्नपि राजन्य-नेकदेहनियामकत्वस्य च दर्शनात्। 'स यश्चायं पुरुषे यश्चा-सावादित्ये स एकः' (तै० २।८) इत्यस्या अपि नान्त-र्याम्यैक्यपरता। 'ब्रह्मविदाप्नोति परम्' (तै० २।१।१) इत्यादिना शुद्धस्य ब्रह्मणः प्रकृततया तस्मिन्नुपाधिकृतभेदस्य तात्त्विकत्वप्रसक्तौ तन्निराकरणार्थत्वेनैक्योपदेशोपपत्तेः। न चैवं सति छान्दोग्ये 'य एष आदित्ये पुरुषो दृश्यते सोऽह-मस्मि' इत्यत्रापि तात्त्विकभेदनिराकरणपरत्वस्य वक्तव्यता-पत्तिः, इष्टापत्तौ 'तत्पुरुषोऽमानवः स एनांस्तान्ब्रह्म गमयति, एष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नाऽऽवर्तन्ते' इत्युत्तरत्र भेदपरवाक्यविरोध इति वाच्यम्। तस्योपासनाप्रकरणस्थत्वेनाहंग्रहोपासनापरतया भेदपरत्वाभा-वेन विरोधाभावात्। न चोपासनाप्रकरणस्थोक्तच्छान्दोग्यवा-क्यादैक्यासिद्धावपि बृहदारण्यकस्थानुपासनाप्रकरणस्थोक्ताहं-ब्रह्मेति वाक्याद्ब्रह्मात्मैक्यसिद्धिः शङ्क्या। बृहदारण्यकस्थो-क्तवाक्ये छान्दोग्यस्थवाक्य इव भेदप्रयोजकस्यान्यशेषत्वस्या-भावात्। अथ 'योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरित्युत्तरवाक्यस्य भेदज्ञाननिन्दापरतया तद्विरोधेन बृहदारण्यकस्थस्य 'अहं ब्रह्मास्मि' (वाज० ब्रा० उ० १४।१०। इति तत्पूर्ववाक्यस्योपासनापरत्वाभावात्।

यत्तु 'अहं ब्रह्मास्मि' इति बृहदारण्यकवाक्ये ब्रह्मशब्दो बृंहणार्थ इति न तेन ब्रह्मात्मैक्यसिद्धिः। अन्यथा तत्पूर्ववाक्ये 'आत्मानमेवावेत्' इत्यनेनैव ब्रह्मास्मीति ज्ञानस्य सिद्धत्वा-द्ब्रह्मास्मीति व्यर्थं स्यादिति परेणोक्तम्। तन्न। आत्मशब्देन जीवचैतन्यमनूद्य ब्रह्मत्वाद्युपलक्षितब्रह्मचैतन्याभेदविधिपरत्वेन तत्सार्थक्यात्। तथा च स्मृतिः—'अहं हरिः सर्वमिदं जना-र्दनः' इत्यादिका।

यत्तु 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मि' इति वाक्येऽन्तर्यामिभेदज्ञाननिन्दनमिति परोक्तम्। तदभिप्रायस्तु तद्वाक्यस्यासौ मदन्यस्यान्तर्याम्यन्यो मदन्तर्यामी तु तदन्य इत्यर्थः। तथा च नियम्यभेदेनान्तर्यामी नानेति भेदप्रसक्तौ तन्निषेधपरस्य 'अहं ब्रह्मास्मि' इत्यस्य भेदनिन्दोपकारकत्वान्न जीवेशाभेदपरत्वमिति। तन्न। तत्रान्तर्यामिणोऽप्रकृतत्वात्।

यदपि तद्वाक्यस्यान्यो जीवोऽन्यां विलक्षणां देवतामुपास्तेऽन्योऽसौ परमात्माऽहमस्मीति न स वेद यथा पशुरित्यर्थ इति तत्तुच्छम्। व्यवहितान्वयदोषात्। अहंशब्दसंनिहितान्य इत्यस्य य इत्यत्र नयनात्। न च यस्य येनार्थसंबन्ध इतिन्यायेन संनिधानाद्योग्यताया बलवत्त्वेन नोक्तदोष इति वाच्यम्। यथास्थितार्थसंबन्धेऽप्युक्तक्रमेण योग्यतासत्त्वात्। नापीयं श्रुतिः स्वातन्त्र्येणान्यसद्भावनिषेधिकेति परोक्तं साधु। प्रतियोगिस्वातन्त्र्योपस्थापकपदाभावात्।

यदपि 'योऽन्यां देवतामुपास्ते' इत्युपास्तिश्रवणात्प्रयत्नसाध्यज्ञानविजातीयवृत्त्यन्तररूपोपासनाया एव निषेधो न तु ज्ञानस्येति कैश्चिदुक्तम्। तदपि न सत् 'तद्यो यो देवानां प्रत्यबुध्यत' (बृ० १।४।१०) इति पूर्ववाक्ये 'न स वेद' इति निन्दावाक्ये च वेदनात्मकज्ञानस्यैव निर्देशाज्ज्ञानबोधकपूर्वापरवाक्यैकवाक्यत्वानुरोधेनोपास्त इत्यत्रोपासेरुपासनाफलज्ञानलक्षकत्वमुपेयमन्यथा पूर्वापरवाक्यस्थबहुतरेषु ज्ञानार्थकपदेषूपासनायां लक्षणापत्तेः।

यत्तु 'ब्रह्म वा इदमग्र आसीत्' इत्यत्र ब्रह्मपदस्य कार्यब्रह्मपरत्वे 'तदाहुर्यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मन्यन्ते किं तद्ब्रह्म' इति पूर्ववाक्यासंगतिः। कार्यब्रह्मविद्यया सार्वात्म्यप्राप्तिरूपफलासंभवात्। तथा च तस्य कारणब्रह्मपरत्वमेव। एवं च 'तत्सर्वमभवत्' इति न फलोक्तिः। किंतु ब्रह्मणः पूर्णस्वरूपानुभवप्रयुक्तानन्दोद्रेकात्सार्वात्म्योक्तिरिति परेणोक्तम्। तत्तुच्छमेव। नहि कारणब्रह्मणः स्वरूपानुभव आनन्दोद्रेको वा

कादाचित्कः। येन तथोक्तिः संगच्छेत। अस्मन्मते तु ज्ञानेनाज्ञाननिवृत्त्या तत्प्रयुक्तपरिच्छेदनिवृत्तिरूपं सार्वात्म्यं हिरण्यगर्भरूपकार्यब्रह्मण एवेति युक्तम्। 'किमु तद्ब्रह्म' इत्यादिकस्तु न विरोधः। 'आत्मानमेव' इत्यादिनाऽऽत्मस्वरूपब्रह्मज्ञानात्सार्वात्म्योक्तेरेव सदुत्तरत्वेन 'ब्रह्म वा इदमग्र आसीत्' इत्यत्र ब्रह्मपदस्य कार्यब्रह्मपरत्वेऽपि क्षत्यभावात्। न च 'ब्रह्मैव सन्ब्रह्माप्येति' इत्यत्र प्रथमब्रह्मशब्दस्य जीवपरत्वमवश्यमेव वक्तव्यम्। अन्यथा * कर्तृकर्मभावविरोध इति वाच्यम्। ब्रह्मैव सन्नित्यादिना ब्रह्मतादात्म्यापन्नस्यैव कर्तृत्वप्रतीतेस्तस्य च कर्मीभूतशुद्धब्रह्मभिन्नत्वमौपाधिकमित्यौपाधिकं साक्षात्कारप्राक्कालीनभेदमादाय कर्तृकर्मभावनिर्देशोपपत्तेः। एवमैतरेयोपनिषद्यपि 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्' (ऐ० १।१) इत्यात्मैक्यमुपक्रम्याम्भःप्रभृतीनां लोकानां लोकपालानां वाग्न्यादीनां सृष्टिं शिष्ट्वा करणानि करणायतनं च शरीरमुपदिश्य 'स एव स्रष्टा कथं न्विदं मदृते स्यात्' ( ऐ० १ । ३ ) इति वीक्ष्येदं शरीरं प्रविवेशेति स्रष्टुरेव शरीरे जीवभावेन प्रवेशं दर्शयति—'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत' ( ऐ० १ । ३ ) इति। पुनश्च 'यदि वाचाऽभिव्याहृतं यदि प्राणेनाभिप्राणितम्' ( ऐ० १। ३ ) इत्येवमादिना करणव्यापारविवेचनपूर्वकम् 'अथ कोऽहम्' ( ऐ० १ । ३ ) इति वीक्ष्य 'स एतमेव पुरुषं ब्रह्म ततममपश्यत्' ( ऐ० १। ३ ) इति जीवस्यैव ब्रह्मात्मत्वमुपसंहारेऽवधारितम्। तथोपरिष्टादपि 'एष ब्रह्मैष इन्द्रः' ( ऐ० ३ । १ ) इत्यादिना समस्तं भेदजातं महाभूतैरनुक्रम्य 'सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म' ( ऐ० ३ । १ ) इति ब्रह्मात्मैक्यमेवावधारितम्। ननु नेदं निर्विशेषप्रत्यगभिन्नप-

---

* कर्तृकर्मभावविरोध इति। प्रकृतधातूपात्तप्रधानीभूतव्यापाराश्रयत्वं कर्तृत्वम्। प्रकृतधातूपात्तप्रधानीभूतव्यापारजन्यव्यापारव्यधिकरणफलाश्रयत्वं कर्मत्वम्। प्रकृते चैकस्यैव ब्रह्मणः फलव्यापाराश्रयत्वेन कर्तृत्वकर्मत्वयोर्युगपद्वक्तुमशक्यत्वात्तद्विरोधः स्पष्ट एवेति भावः।

रमात्मप्रकरणं परमात्मनः स्रष्टुरिहाऽऽत्मशब्देन ग्रहणे महाभूतसृष्टिरेवाऽऽदौ वक्तव्या स्यात् । लोकसृष्टिस्त्विहाऽऽदावुच्यते 'स ईक्षत लोकान्नु सृजा इति । स इमाँल्लोकानसृजत । अम्भो मरीचीर्मरमापोऽदोऽम्भः परेण दिवं द्यौः प्रतिष्ठाऽन्तरिक्षं मरीचयः पृथिवी मरो या अधस्तात्ता आपः' (ऐ० १ । १) इति । ईक्षत ऐक्षत । अम्भोमरीचीर्मरमाप इति लोकनामानि । अम्भःपदार्थं श्रुतिरेव व्याचष्टे—अदोऽम्भ इति । विप्रकृष्टा आपश्चान्द्रमस्योऽम्भः पदार्थः । ता दिवं परेण द्युलोकात्परतः । तासां द्यौः प्रतिष्ठाऽऽश्रयः । मरीचिपदार्थमाह—अन्तरिक्षमिति । अन्तरिक्षलोकः सूर्यकिरणव्याप्ततया मरीचिः । पृथिवीलोको मरणयुक्ततया मरपदार्थ इत्याह—पृथिवी मरः । पातालानि अप्पदार्थमाह—या अधस्तादिति । लोकाश्च महाभूतसंनिवेशविशेषाः । तांश्चाम्भःप्रभृतीँल्लोकत्वेनैव ब्रवीति श्रुतिः—अदोऽम्भः परेण दिवमित्यादिना । लोकसृष्टिश्च परमेश्वराधिष्ठितेनापरेण केनचिदीश्वरेण क्रियत इति श्रुतिस्मृत्योरुपलभ्यते । तथाहि श्रुतिर्भवति—'आत्मैवेदमग्र आसीत्पुरुषविधः' इत्याद्या । तत्र पुरुषविध इत्यस्य मनुष्याकार इत्यर्थः । स्मृतिरपि—

स वै शरीरी प्रथमः स वै पुरुष उच्यते ।
आदिकर्ता स भूतानां ब्रह्माऽग्रे समवर्तत इति ।

ऐतरेयिणोऽपि 'अथातो रेतसः सृष्टिः प्रजापते रेतो देवाः' इत्यत्र पूर्वस्मिन्प्रकरणे प्रजापतिकर्तृकां विचित्रां सृष्टिमामनन्ति । तत्र 'प्रजापते रेतो देवाः' इत्यनेन रेतःशब्दार्थकथनम् । तथा च प्रजापतिजन्या देवा रेतःशब्देन पूर्ववाक्ये निर्दिष्टाः । आत्मशब्दोऽपि तस्मिन्प्रयुज्यमानो दृश्यते । 'आत्मैवेदमग्र आसीत्पुरुषविधः' इत्यत्र एकत्वावधारणमपि प्रागुत्पत्तेः स्वविकारापेक्षमुपपद्यते । ईक्षणमपि तस्य चेतनत्वाभ्युपगमादुपपन्नम् । अपि च 'ताभ्यो गामानयत्, ताभ्योऽश्वमानयत्, ताभ्यः पुरुषमानयत्, ता अब्रवीत्, (ऐ० १ । २) इति देवतासहितेष्विन्द्रियेषु सृष्टेषु तैश्चास्माकं भोगसिद्ध्यर्थमायतनं संपाद-

येति स्रष्टुः प्रार्थनायां कृतायां तेन च गवाश्वयोः शरीरे समानीते नेदमस्माकं भोगायालमिति तैः प्रत्याख्याते पुनस्तेन मनुष्यशरीरे समानीतेऽलमिदमस्मद्भोगायेति तैरङ्गीकृतमित्येवंजातीयको भूयान्व्यापारविशेषो लौकिकेषु शरीरादिविशेषयुक्तविशेषवत्स्वात्मसु प्रसिद्ध इहोपाख्यायते । अशरीरस्य निर्विशेषस्य परमात्मन इह स्रष्टृत्वेनोपक्रान्तत्वे नायं व्यापारस्तस्य संभवतीति विशेषवानेवाऽऽत्मा कश्चित्प्रतिपाद्यते न निर्विशेषः प्रत्यगभिन्नः परमात्मेति चेन्न । यथा 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तै० २ । १ । २) इत्येवमादिसृष्टिवाक्येषु निर्विशेषपरमात्मन एव ग्रहणं तथेहापि तस्यैव ग्रहणं युक्तम् । यद्यपि —

आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि ।

इति कोशानुसारेणाऽऽत्मपदं प्रमात्रादिसाधारणं तथाऽपि अत सातत्यगमने इति धातोर्मन्प्रत्ययेन निष्पन्नस्याऽऽत्मशब्दस्य व्याप्तिवाचकतया योगरूढिभ्यामात्मपदं प्रत्यक्चैतन्यवाचकमेव न तु देहधृतिजीवस्वभावानाम् । तेषु परिच्छिन्नेषु योगासंभवात् । यत्र तु 'आत्मैवेदमग्र आसीत्' (ऐ० १ । १) इत्येवमादौ 'पुरुषविधः' इत्येवमादिविशेषणान्तरं श्रूयते भवेत्तत्र विशेषवदात्मनो ग्रहणम् । अत्र पुनः परमात्मग्रहणानुगुणमेव विशेषणं पृथुतरमुपलभ्यते—'स ईक्षत लोकानुत्सृजा इति स इमाँल्लोकानसृजत' (ऐ० १ । १) इत्येवमादीति परमात्मन एवग्रहणं न्याय्यम् । यद्यप्युक्तस्थ्ले 'पुरुषविधः' इति शिरःपाण्यादिमत्त्वम्, 'स यत्पूर्वस्मात्सर्वस्मात्सर्वान्पाप्मन औषत्तस्मात्पुरुषः' इति पुरुषपदनिर्वचनेन विद्यमानानां पापानां दाहप्रतिपादनेन पापसंबन्धः, 'सोऽबिभेत्' इति भयसंबन्धः, 'स वै नैव रेमे' इति रत्यभावश्चेति जीवलिङ्गानां श्रवणादात्मपदस्येश्वरासाधारणस्यापि हिरण्यगर्भादिसविशेषजीवपरत्वशङ्का संभवति तथाऽपि परमात्मग्रहणमेव न्याय्यम् । तथा सति प्रागुत्पत्तेरात्मैकत्वावधारणमाञ्जस्येनोपपद्यते, न जीवग्रहणे । लोकसृष्टिवचनं तु श्रुत्यन्तरप्रसिद्धमहाभूतसृष्ट्यनन्तरमिति संगमनीयम् । यथा—

'तत्तेजोऽसृजत' इत्येतच्छ्रुत्यन्तरप्रसिद्धवियद्वाय्वसृष्ट्यनन्तरमित्य-
युयुजम् । योऽप्ययं व्यापारविशेषानुगमः 'ताभ्यो गामानयत्'
इत्येवमादिः सोऽपि विवक्षितार्थानुगुण्येनैव ग्रहीतव्यः । न
ह्ययं सकलः कथाप्रबन्धो विवक्षित इति शक्यते वक्तुम् ।
तत्प्रतिपत्तौ पुरुषार्थाभावात् । विवक्षितो ह्यत्रायमर्थः—उप-
क्रमे 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्'
(ऐ० १ । १) इत्यद्वैतप्रतिपादनात्, मध्ये च 'स एत-
मेव सीमानं विदार्यैतया द्वारा प्रापद्यत' (ऐ० १ । ३)
इति स्रष्टुरेव जीवरूपेण प्रवेशश्रवणात्, 'स एतमेव
पुरुषं ब्रह्म ततममपश्यत्' (ऐ० १ । ३) इति च जीवस्य ब्रह्म-
त्वप्रतिपादनात्, अन्तःकरणसाक्षिणं च प्रज्ञानशब्देनोपक्रम्य
प्रज्ञानं ब्रह्मेति तस्य ब्रह्मत्वेनोपसंहाराच्च निर्विशेषं प्रत्यगभिन्नं
ब्रह्मेति प्रकरणार्थः प्रतीयते । तदानुगुण्यं चेन्द्रियादिसृष्टिप्रति-
पादनस्य तदुपाधिकमेव जीवस्य द्रष्टृत्वादिकं न तु स्वाभावि-
कमिति तात्पर्यकत्व उपपद्यते । तथा चोत्तरत्र श्रुतिर्दर्शयति—
'यदि वाचाऽभिव्याहृतम्' (ऐ० १ । ३) इत्यादि । अतो
गवाद्यानयनादिव्यवहारप्रतिपादनस्य त्वंपदार्थशोधनोपयोगि-
तया न ब्रह्मपरत्वविरोधिता । किं चासदर्थकतयाऽपि न सकलः
कथाप्रबन्धो विवक्षितार्थः । तथाहि—न हीन्द्रियादिप्रवेशात्प्राक्के-
वलमेव गवादिशरीरं सृष्ट्वा समानीतमिति संभवति । इन्द्रिय-
विशिष्टस्यैव शरीरस्योत्पत्तेः । नापि गवाश्वयोः शरीरमिन्द्रियै-
रस्वीकृतमिति संभवति । तथा सति गवादीनां भोग एव न
स्यात् । अतो यथाश्रुतार्थकत्वेऽसदर्थत्वनिष्प्रयोजनत्वे मा भूता-
मिति देहेन्द्रियविलक्षणस्त्वंपदार्थ इति बोधयितुं कल्प्यत इय-
माख्यायिका । तत्र शरीरस्येन्द्रियायतनत्वप्रतिपादनेन शरीरवि-
वेको दर्शितः । 'यस्मिन्प्रतिष्ठिता अन्नमदाम्' (ऐ० १ । २)
इति इन्द्रियवचोभङ्ग्या भोक्तृत्वं तेषां शिरसि निक्षिप्तम् ।
तत्प्रसङ्गाच्च साधिष्ठातृकाणामिन्द्रियाणां विराडवयवेभ्यः सृष्टिः
प्रतिपादिता—'मुखाद्वाग्वाचोऽग्निः' (ऐ० १ । २)
इत्यादिना । 'कथं न्विदं मदृते स्यात्' (ऐ० १ । ३) इति

वाक्येन शरीरेन्द्रियादिकं स्रष्टारं चेतनं विना स्वकार्यसमर्थं न भवेदिति प्रतिपाद्य तदनुग्राहकतया तद्विलक्षणस्य स्रष्टुस्तत्र प्रवेशः प्रतिपादितः—'स एतमेव सीमानम्' ( ऐ० १ । ३ ) इतिवाक्येन । एतं ब्रह्मरन्ध्रप्रदेशे विद्यमानं द्वयोः कपालयोः सीमानं विदार्यैतया द्वारा प्रापद्यत प्राप्तवान् । स जीवरूपेण प्रविष्टः परमात्मा, एतमेव जीवाख्यं पुरुषम्, ततमं तनोतीति तः 'अन्येभ्योऽपि दृश्यते' इति डः । व्याप्ततममित्यर्थः । ब्रह्मापश्यत् । प्रज्ञा नेत्रं चक्षुः प्रकाशकं यस्य तत्प्रज्ञानेत्रमित्यर्थः । एवमाथर्वणेऽपि 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' ( मु० ३ । २ । ९ ) इत्यादिवाक्यादप्यद्वैतब्रह्मात्मनि समन्वयः सिध्यति ।

अथाऽऽथर्वणे जीवब्रह्मणोर्भेदेऽपि उपक्रमादिषड्विधतात्पर्यलिङ्गानां दर्शनात्कथमद्वैतब्रह्मात्मतत्त्वमेव तद्गतोक्तवाक्यप्रतिपाद्यमितिनिर्णयः तथाहि परे वर्णयन्ति—आथर्वणे 'द्वा सुपर्णा' ( मु० ३ । १ । १ ) इत्युपक्रमः । 'परमं साम्यमुपैति' ( मु० ३ । १ । ३ ) इत्युपसंहारः । 'तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यः' ( मु० ३ । १ । १ ) 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' ( मु० ३ । १ । २ ) इत्यभ्यासः । शास्त्रैकसमधिगम्येश्वरप्रतियोगिकस्य कालत्रयाबाध्यभेदस्य शास्त्रं विनाऽप्राप्तेरपूर्वता । 'पुण्यपापे विधूय' ( मु० ३ । १ । ३ ) इति फलम् । 'अस्य महिमानम्' ( मु० ३ । १ । २ ) इति स्तुतिरूपोऽर्थवादः । अत्ति अनश्नन् ( मु० ३ । १ । १ ) इत्युपपत्तिः । न च भेदवाचकशब्दाभावात्कथमुपक्रमो भेदविषयक इति वाच्यम् ।

मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥

इतिगौडपादीयोक्तश्रुतौ यथा द्वैतपदं भेदसामान्यार्थकम् । मायामात्रपदमीश्वरेच्छाधीनतया सत्यमित्यर्थकम् । तथा च सर्वोऽपि भेदः सत्यः, अद्वैतं तु परमार्थतः स्वतन्त्रतः । स्वतन्त्रमीशमादायाद्वैतमित्यर्थः । एक एव हि स्वतन्त्र इति यावत् ।

'परमार्थः स्वतन्त्रः स्यात्' इति स्मृतेरिति उक्तश्रुतेरद्वैतार्थकत्वखण्डनपरेण द्वैतशब्दस्य भेदार्थकत्वमुक्तं तथाऽत्र द्विशब्दस्य भेदार्थकत्वमित्यभिमानेनोक्तोपक्रमस्य भेदविषयकत्वशङ्कासंभवाद्विरोधिद्वित्वसंख्यया भेदाक्षेपाद्वा तत्संभवात् । तद्भिन्नत्वविशेषितमेव तद्गतबहुधर्मयोगित्वं तत्सादृश्यम् । न तु विशेष्यमात्रम् । नायं सः किंतु तत्सदृशः, नायं तत्सदृशः किंतु स एवेति सादृश्यैक्ययोरेकतरविधानायान्यतरनिषेधात् । गगनं गगनाकारमित्यादि तु तत्सदृशवस्त्वन्तरनिषेधपरं गगनाद्यैकदेशस्य तदेकदेशसादृश्यपरं वेत्युपसंहारोऽपि भेदविषय एव । अभ्यासत्वेऽप्यर्थत एवैकप्रकारत्वं तन्त्रं न तु शब्दतः तथा सति ज्योतिरादिपदेन तत्समानार्थकपदान्तरेण वा ज्योतिष्टोमाद्यभ्यासस्यानुपपत्तेः । अन्यमीशमित्यत्रेशगतान्यत्वं प्रतियोग्याकाङ्क्षायां पश्यतीत्यनेनोपस्थितो जीव एव संबध्यते । + 'सप्तमं पदमध्वर्युरञ्जलिना गृह्णाति' इत्यादौ श्रुतपदस्य सबन्ध्याकाङ्क्षायाम् 'एकहायन्या सोमं क्रीणाति' इत्यनेनोपस्थितैकहायनीवेत्यभ्यासोऽपि जीवब्रह्मभेदविषयः संभवतीति चेत् । अत्र वदन्ति । आथर्वणे प्रथममुण्डके 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' (मु० १ । १ । ३ ) इतिशौनकप्रश्नानन्तरम् 'द्वे विद्ये वेदितव्ये' (मु० १ । १ । ४ ) इति विद्याद्वयमवतार्य ऋग्वेदादिलक्षणामपरामुक्त्वा 'अथ परा यया तदक्षरमधिगम्यते (मु० १ । १ । ५ ) यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णम्' (मु० १ । १ । ६ ) इत्यादिना परविद्याविषयमक्षरं प्रतिपादयताऽभेदस्यैवोपक्रान्तत्वात् । अन्यथा तदुत्तरत्वानुपपत्तेः । द्वितीयमुण्डके 'पुरुष

---

+ सप्तमं पदमध्वर्युरिति । ज्योतिष्टोमे हि 'एकहायन्या सोमं क्रीणाति' इत्यनेन सोमक्रयो विहितः । सा चैकहायनी गौर्यदा सोमं क्रेतुमानीयते तदाऽध्वर्युस्तस्याः पृष्ठतः षट्पदान्यनुगच्छति । ततः सप्तमे पदे हिरण्यं निधाय हुत्वा तत्पदगतं रजो गृह्णीयादिति 'सप्तमं पदमध्वर्युरञ्जलिना गृह्णाति' इत्यनेन विधीयते । तद्रजो गृहीत्वा हविर्धानयोः शकटयोरक्षे तेन रजसा संयुक्तमञ्जनं प्रक्षिपेदित्युक्तम् । तत्र पदशब्दार्थसंबन्ध्याकाङ्क्षयां संशयो बोध्यः ।

एवेदं विश्वम्' (मु० २।१।१०) 'ब्रह्मैवेदं विश्वम्' (मु० २।२।११) इति मध्येऽपि तस्यैव परामर्शात्। तृतीयमुण्डकान्ते च 'परेऽव्यये सर्व एकी भवन्ति' (मु० ३। २।७) इति 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' (मु० ३।२।९) इत्यैक्यलक्षणेन फलेनोपसंहाराच्च मुण्डकत्रयात्मिकाया उपनिषद ऐक्यपरत्वे तन्मध्यस्थितस्य 'द्वा सुपर्णा' (मु० ३।१।१) इत्यादिवाक्यस्यापि 'असंयुक्तं प्रकरणादितिकर्तव्यतार्थित्वात्' (जै० सू० ३।३।११) इतिन्यायेनाभिक्रमणन्यायेन च तदनुकूलत्वेनैव जिज्ञासाधिकरणोक्तरीत्या व्याख्येयतया तस्य भेदोपक्रमत्वाभावात्। असंयुक्तमित्यादिन्यायश्चेत्थम्—दर्शपूर्णमासादिकं प्रकृत्य 'समिधो यजति' इत्यादि श्रूयते। तस्य दर्शादौ समिदाद्यङ्गत्वबोधकत्वमस्ति न वेति संशये साध्यसाधनाकाङ्क्षयोः स्वर्गयागाद्यन्वयेन विच्छेदान्न तद्बोधकत्वमिति प्राप्ते। तयोर्विच्छेदेऽपीतिकर्तव्यताकाङ्क्षया 'समिधो यजति' इत्याद्युत्तरम् 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादिपूर्वमित्थमिति पदकल्पनया समिदाद्यन्वयेनोक्तबोधकत्वमावश्यकम्। इतिकर्तव्यतात्वं चाऽऽख्यातपदात्सामान्यतो ज्ञातभावनाया विशेषरूपत्वम्। तथा च यागसाधनव्यापारविशेषजिज्ञासायामदृष्टद्वारा समिदादीनां द्रव्यदेवतादिसंस्कारद्वाराऽवघातादीनामुक्तवाक्येन साधनत्वबोधनात्तन्निवृत्तिरिति केचित्। यागादिरूपकारणनिष्ठापूर्वजनकशक्तिसाधनत्वमितिकर्तव्यतात्वम्। यो यत्र शक्तः स तज्जनक इति मीमांसकाः। एवं च कारणतत्त्वावच्छेदिका शक्तिरुभयथाऽपि। तज्जनकाकाङ्क्षया समिदादिजन्यशक्तिमद्भ्यां दर्शपूर्णमासाभ्यां यजेतेत्युक्तवाक्यार्थबोधः। मीमांसकमते शक्तेरनित्यत्वादखण्डकारणतारूपत्वेऽपि तद्विशिष्टस्यैव फलोपधायकतया तज्जनकापेक्षाया आवश्यकत्वादित्यन्ये। तथा च नियोजकश्रुत्याद्यसंयुक्तमपि समिदादिप्रकरणादुभयाकाङ्क्षारूपाद्दर्शाद्यङ्गम् 'इतिकर्तव्यतार्थित्वात्' उक्तेतिकर्तव्यतात्वेन तदपेक्षितत्वादिति 'असंयुक्तम्'। (जै० सू० ३।३।११)

इति सूत्रार्थः । तथा दर्शपूर्णमासौ प्रकृत्य प्रयाजसमीपे श्रूयते— 'अभिक्रामं जुहोति' इति । तत्राभिक्रामामित्यस्य णमुलन्तत्वेनाभिक्रम्येत्यर्थकत्वाज्जुहोतिना प्राकरणिकसर्वहोमानुवादात्तदुद्देशेनाभिक्रमणं विधीयते । प्रयाजानां संनिहितत्वेऽपि तदपेक्षया प्रकरणस्य बलवत्त्वात् । अन्यथा संनिहितोत्तमप्रयाजाद्यङ्गं स्यादिति प्राप्ते—प्रयाजान्विधाय 'त्रीन्प्रयाजानिष्ट्वा समानयत उपभृतः' इत्यनेनोपभृत्स्थाज्यस्यार्धं जुह्वां स्थाप्यमित्येवं समानयनं विधाय 'अभिक्रामं जुहोति' इत्युक्त्वा 'यो वै प्रयाजानां मिथुनं वेद समिधो बह्वीरिव यजति तनूनपातमेकमिव' इत्यादि 'प्रयाजानिष्ट्वा हवींष्यभिघारयति' इत्यन्तेन प्रयाजपरामर्शात्तावत्संदर्भस्य प्रयाजप्रकरणत्वनिश्चयात्तन्मध्ये यद्विहितं तत्प्रयाजाङ्गमितिनिश्चयात् । अयमेव संदंशन्यायः । तथा च समिदादिवाक्यार्थस्य यथा दर्शाद्युपकारकत्वं निर्णीयते तन्न्यायेन पूर्वापरवाक्यार्थयोरैक्यबुध्द्युपकारकत्वात्तन्मध्यस्थितस्य 'द्वा सुपर्णा' ( मु० ३ । १ । १ ) इत्यस्यार्थस्यापि तदुपकारकत्वमेव निर्णेयम् । ननु 'यद्भूतयोनिम्' ( मु० १ । १ । ६ ) इति प्रथममुण्डके प्राणादिकारणत्वस्य द्वितीये 'द्वा सुपर्णा' ( मु० ३ । १ । १ ) इत्यादेस्तृतीयेऽपि सखण्डस्य प्रतिपादनादभिक्रमणादिवदेव तन्मध्यस्थ 'पुरुष एवेदम्' ( मु० २ । १ । १० ) इत्यादेरपि तदनुकूलत्वमेवेति चेत् । न । प्रथममुण्डक उक्तरीत्यैकविज्ञानेन सर्वविज्ञानाद्युपक्रमस्य 'परेऽव्यये सर्व एकी भवन्ति' ( मु० ३ । २ । ७ ) 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' ( मु० ३ । २ । ९ ) इत्युपसंहारस्य मध्येऽपि 'पुरुष एवेदम्' ( मु० २ । १ । १० ) इत्यादिपरामर्शस्याद्वैतनिष्ठत्वादद्वैतस्यैव महाप्रकरणित्वेन भूतयोनिवाक्यादीनां तद्विरुद्धतात्पर्यस्य सखण्डे वक्तुमशक्यत्वात् । अभिक्रमणादेः प्रयाजाद्युपकारकत्वं तु न महाप्रकरणविरुद्धमिति विशेषात् । तृतीयमुण्डकान्ते 'परेऽव्यये सर्व एकी भवन्ति स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' ( मु० ३ । २ । ९ ) इत्यैक्यलक्षणेन फलेनोपसंहाराच्च मध्यवर्तिनः 'परमं साम्यमु-

पैति ' ( मु० ३ । १ । ३ ) इत्यस्यापि पूर्वोक्तसंदंशन्यायेनाभे-
दरूपसादृश्यपरतया न भेदोपसंहारताऽपि । अत एव परमामिति
साम्यविशेषणम् । संसारिव्यावृत्तस्य निर्दुःखत्वादिना सादृश्यस्य
'निरञ्जनः' ( मु० ३ । १ । ३ ) इति तत्पूर्वतनवाक्येनापि लब्ध-
तया पुनः सादृश्यप्रतिपादनेऽनुपयोगात्परमत्वविशेषितं सादृश्य-
मभेदरूपमेव । न च ' स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव
भवति ' ( मु० ३ । २ । ९ ) इतिवाक्ये द्वितीयब्रह्मशब्दो
जीवपर एव । तस्य जीवजातिकमलासनशब्दराशिरूपानेकार्थ-
त्वस्य कोशप्रसिद्धत्वात् । तथा च यः परमं ब्रह्म वेद स जीव
एव भवति, न परमं ब्रह्मेत्यर्थः । अत एवाऽऽद्यो ब्रह्मशब्दः पर-
मत्वेन विशेषितः । एवम् ' सायं गावो गोष्ठ एकी भवन्ति '
' एकी भूता नृपाः सर्वे ववर्षुः पाण्डवं शरैः ' ' कीटो भ्रमरेणै-
कीभूतः ' इति स्थानैक्यमत्यैक्यसादृश्यनिबन्धनैकीभावस्य गो-
नृपकीटभ्रमरादौ दर्शनादत्रापि तदन्यतमनिमित्तेन गौणैकी-
भावव्यपदेशोपपत्तिरित्युपसंहारो भेदविषय एव । अत एव
' परेऽव्यये ' ( मु० ३ । २ । ७ ) इति सप्तम्युपपत्तिः । अन्य-
थाऽश्रुततृतीयाकल्पनापत्तिरितिवाच्यम् । जीवे ब्रह्मपदप्रयोगसं-
भवेऽपि प्रकृते ब्रह्मोपादानमेवोचितम् । अन्यथा जीवभावस्या-
ब्रह्मभावस्य च प्रागेव सिद्धतया तस्य ब्रह्मज्ञानसाध्यत्वाभा-
वात् । ' परमं ब्रह्म वेद ब्रह्मैव भवति ' ( मु० ३ । २ । ९ )
इति तस्य ब्रह्मज्ञानफलत्वोक्तेरसङ्गत्यापत्तेः । एवं सत्यर्थाद्-
द्वितीयब्रह्मभवनमपि परमत्वविशेषितमेव । एवं चोपक्रमोपसंहा-
रयोरैक्यविषयत्वे पूर्वोक्तन्यायेन मध्यस्थितस्य ' परेऽव्यये सर्व
एकी भवन्ति ' ( मु० ३ । २ । ७ ) इत्यस्य तदनुकूल्येन
मुक्तस्य ब्रह्मणा तद्भेदाग्रहविषयत्वरूपैक्यप्रतिपादकत्वमेव युक्त-
म् । एवं सति परेऽव्यय इति सप्तम्यपि युज्यते । भेदग्रहान्वित-
विषयतायास्तदर्थत्वात् । सायं गावो गोष्ठ एकी भवन्तीत्यत्र च
भेदग्रहसत्त्वेनोक्तरूपेणैक्योपपादनायोगाद्युक्तमेकस्थानस्थितत्वा-
दिना तादृशव्यवहारोपपादनम् । न च विनिगमकाभाव उभय-
थाऽपि व्यवहारसंभवादितिवाच्यम् । अस्मदुक्तरीतावुपक्रमोप-

संहारैक्यानुगुण्यस्य विनिगमकत्वात् । जीवपरयोः स्थानैक्यस्य नित्यसिद्धतया च्विप्रत्ययास्वारस्यप्रसङ्गाच्च । कर्मणां वैकुण्ठगमनासंभवेन 'कर्माणि विज्ञानमयश्च' (मु० ३ । २) इत्याद्यसंगत्यापत्त्यैकस्थानस्थितत्वादिना प्रकृते तादृशव्यवहारस्य समर्थयितुमशक्यत्वात् । अत एव मत्यैक्येन तादृशव्यवहारोपपादनमपि प्रत्युक्तम् । कर्मणां मत्यैक्यासंभवेन 'कर्माणि विज्ञानमयश्च' (मु० ३ । २) इत्यस्यासंगत्यापत्तेः । कीटो भ्रमरेणैकीभूत इत्यादेरिव सादृश्यनिबन्धन एव एकीभूतव्यवहारोऽस्त्वितिशङ्का तु सादृश्यपरत्वे सप्तम्यनुपपत्त्या निरस्ता । मन्मते तु ब्रह्मणि लीनस्य कर्मणस्ततो भेदग्रहाभावेन जलेन लवणमेकीभूतमित्यादिवत्स्वीयरूपहानेन तद्धर्मिकभेदाग्रहविषयस्वरूपैकत्वस्यैवोक्तवाक्यार्थस्य संभवेनासंगत्यभावात् । अनुरूपश्चात्र नदीसमुद्रदृष्टान्तः । यथा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्तीति पूर्वरूपहानोक्त्याऽग्रहप्रमाणभेदत्वोक्तेः । अयं तु विशेषः—परस्परावयवभेदेन परस्परमैक्यासंभवात्तत्र सत एव भेदस्याग्रहणमत्र तु भेदाभावादेवेति भेदाग्रहणांश एव दृष्टान्तसंप्रतिपत्तेः । नहि दृष्टान्ते सर्वसाम्यापेक्षाऽस्तीति । यद्यपि मुक्तिकाले सतोऽपि भेदस्याग्रहणेनोक्तश्रुत्युपपत्तिस्तथाऽपि 'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता' 'न ह्यस्ति द्वैतसिद्धिरात्मैव सिद्धः' 'नैव काचनात्र भिदाऽस्ति' 'स ह यो वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' (मु० ३ । २ । ९)

> यावन्मोहं तु भेदः स्याज्जीवस्य च परस्य च ।
> ततः परं न भेदोऽस्ति भेदहेतोरभावतः ॥
> विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
> आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥

इत्यादिश्रुतिस्मृतिपर्यालोचनया भेदाभावादेव न तथा ग्रहणमित्येव कल्पयितुं युक्तम् । यथा च 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुतेर्जीवेशभेदनिषेध एव स्वारस्यं न पराभिमतार्थे

तथाऽऽनन्दमयाधिकरणे विस्तरेण प्रतिपादयिष्यामः । युक्तं च मुक्तिकाले भेदस्यैवासत्त्वकल्पनया तदग्रहणम् । अन्यथा तदग्रहणकारणदोषकल्पनापत्त्या मुक्तेरेवानुपपत्तेः । निरस्तसमस्तदोषात्मलाभस्यैव मुक्तित्वश्रवणात् ।

यत्तु 'ब्रह्मैव भवति' ( मु० ३ । २ । ९ ) इत्यस्य बृंहितत्वरूपब्रह्मत्वाक्रान्तो भवतीत्यर्थः 'संपूज्य ब्राह्मणं भक्त्या शूद्रोऽपि ब्राह्मणो भवेत्', इतिवत् । नहि शूद्रोऽपि पूजितब्राह्मणव्यक्तिर्भवति । किंतु ब्राह्मणत्वजात्याक्रान्तो भवतीति परेणोक्तं तदेतेनापास्तम् । उक्तयुक्त्यादिना प्रकृते व्यक्त्यभेदस्यैव संभवेन दृष्टान्तवैषम्यात् ।

यत्तु भोक्त्रापत्त्यधिकरणे 'एकी भवन्ति' ( मु० ३ । २ । ७ ) इति श्रुत्या न मुक्तिकाले जीवपरयोरभेदासिद्धिः । लोक उदकान्तरमिलितस्योदकस्यैकीभावव्यवहारेऽप्यन्तर्भेददर्शनेन व्यभिचारादैक्यव्यपदेशस्य स्थानैक्यादिनाऽपि जलैक्यवदुपपत्त्यर्थत्वात् । श्रुतितदुपबृंहणैस्तथैव बोधितत्वाच्च । तथा च श्रुतिः—

> यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।
> एवं मुनेर्विजानत आत्मा भवति गौतम ॥

इति । स्कान्दे च—

> उदके तूदकं सिक्तं मिश्रमेव यथा भवेत् ।
> न चैतदेव भवति यतो वृद्धिः प्रदृश्यते ॥
> एवमेव हि जीवोऽपि तादात्म्यं परमात्मना ।
> प्राप्तोऽपि नासौ भवति स्वातन्त्र्यादिविवर्जनात् ॥

इति आनन्दतीर्थीयैरुक्तं तदप्युक्तयुक्त्यादिना परास्तम् । किं चोक्तश्रुतौ दृष्टान्ते शुद्धत्वेन सादृश्यमात्रं यदि विवक्षितं तदाऽनासिक्तस्यापि जलस्य शुद्धस्य शुद्धत्वादिना सादृश्यानपायाच्छ्रुतिगतासिक्तान्तभागस्य वैयर्थ्यमिति तद्भेदग्रहाविषयत्वादिना सादृश्यं वाच्यम् । तथा सति जलद्वयमेलनस्य भेदग्रहविरोधित्वेनोक्तसादृश्यप्रयोजकत्वलाभेन तद्भागस्यार्थवत्त्वम् ।

एवं च तादृग्जलस्य दृष्टान्तत्वं वदता मुक्तस्य ब्रह्मणाऽपि तद्भेदग्रहाविषयत्वादिनैव सादृश्यं तदभिन्नत्वपर्यवसितमत्र प्रतिपाद्यत इत्येव वक्तव्यम् । स्कान्दवचनं तूक्तश्रुतिस्मृतिवाक्याविरोधेनावान्तरमुक्त्यभिप्रायम् । अत एव ब्रह्मलोकगतस्य ।

परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ।

इति तस्यैक्यरूपपरपदप्राप्तिरुच्यते । एतेन माण्डूक्यगतम् । ' परात्परं पुरुषमुपैति दिव्यम् ' इति वाक्यमपि व्याख्यातम् । तस्यापरब्रह्मप्राप्तिरूपसगुणोपासनाफलबोधकतया देशान्तरप्राप्तिरूपब्रह्मविद्याफलत्वबोधकत्वाभावात् । ' अनश्नन् ' ( मु० ३ । १ । १ ) इत्यादिना न तात्त्विकभेदाभ्यासः । नापीशस्य शास्त्रगम्यतया तत्प्रतियोगिकस्तद्धर्मिको वा भेदोऽपूर्वः । प्रत्यक्षेण तत्समकक्षयाऽनेन च तयोः प्राप्तत्वात् । त्वदुक्तफलार्थवादयोरैक्यपक्षेऽपि संभवेन न भेदासाधारणलिङ्गता । ' अनश्नन् ' इत्यादेः काल्पनिकभेदेनोपपत्त्या तात्त्विकभेदोपपत्तित्वाभावात् । न चाद्वैतिमते नित्यं ब्रह्मभूतस्यापूर्वब्रह्मभावोक्तिरयुक्तेति वाच्यम् । कण्ठगतचामीकरादावप्राप्तत्वभ्रान्तिनिवृत्तिमात्रेण प्राप्तप्राप्तिरूपतया फलत्वदर्शनात् । न चाऽऽरोपनिवृत्तेरशाब्दत्वम् । श्रुतार्थापत्तिगम्यतया शाब्दत्वोपपत्तेः । एतेनैक्यस्य प्रागेव सिद्धतया ' एकीभवन्ति ' ( मु० ३ । २ । ७ ) इत्यभूततद्भावार्थच्विप्रत्ययायोग इति निरस्तम् । गृहनिक्षिप्ताज्ञातनिधिवत्कण्ठचामीकरवद्वा सतोऽप्यावृतत्वेनाभूतसमतया तदुपपत्तेः ।

यच्च सिद्धवस्तुनः प्रमाणान्तरवेद्यत्वनियमेन सिद्धवस्तुब्रह्मबोधने वेदान्तानां नानधिगतार्थविषयकत्वरूपप्रामाण्यं संभवतीति पूर्वपक्षिणोक्तम् । तन्न सम्यक् । भाष्याद्युक्तरीत्या वेदान्तानां क्रियोपासनादिशेषतां विनैव प्राधान्येन ब्रह्मप्रतिपादकत्वसिद्धौ तत्र प्रमाणान्तराविषयत्वसिद्धौ चौपनिषदब्रह्मणि तादृशनियमव्यभिचारात् । तादृशनियमे मानाभावाच्च । लौकिककार्ये प्रमाणान्तरवेद्यताया अपि सत्त्वेन सिद्धपराणामेव सापेक्षत्वं न कार्यपराणामित्यस्याप्रयोजकत्वात् । ' आम्नायस्य-

( जै० सू० १ । २ । १ ) इत्यादिजैमिन्यादिवचनं च भाष्योक्तरीत्या पुरुषार्थानुपयोगिनिष्फलोपाख्यानपरमेव । नापि सिद्धवस्तुप्रतिपादने फलाभावः पूर्वपक्षोक्तः सङ्गच्छते । यत ईप्सितं फलं द्विविधम् । किंचिदप्राप्तं यथा ग्रामादि । किंचिच्च प्राप्तमपि भ्रमवशादप्राप्तमित्यवगतं यथाकण्ठमण्यादिकम् । एवं जिहासितमपि द्विविधम् । किंचिदहीनं जिहासति यथा वलयितचरणं फणिनम्, किंचिच्च हीनमेव यथा चरणाभरणनूपुर आरोपितं फणिनम् । तत्र वेदान्तजन्यब्रह्मात्मैक्यज्ञानात्प्राप्तब्रह्मप्राप्तिः कल्पितत्वेन नित्यहीनसंसारहानिश्च संभवतीति सिद्धब्रह्मबोधनेऽपि फलवत्त्वमस्त्येव । भाष्येऽप्युक्तं रज्जुरियं नायं सर्प इति सिद्धवस्तुबोधनेऽपि फलवत्ता दृष्टेति ।

यत्तु चन्द्रिकायां सिद्धवस्तुप्रतिपादनस्य निरुक्तफलवत्तामनूद्य कण्ठमण्युपदेशस्य प्राप्तमणिप्राप्तिर्न फलं किंतु प्राप्तिज्ञानजन्यसुखस्य वस्तुतः प्रागप्राप्तस्य प्राप्तिः, मण्यप्राप्तिभ्रमादिजन्यदुःखस्य वस्तुतः प्रागनिवृत्तस्य निवृत्तिर्वा फलम् । एवं चरणाभरणमिदं न सर्प इत्युपदेशस्यापि न निवृत्तसर्पनिवृत्तिः फलं किंत्वाभरणत्वज्ञानजन्यसुखस्य वस्तुतः प्रागप्राप्तस्य प्राप्तिः सर्पभ्रमजन्यदुःखस्य वस्तुतः प्रागनिवृत्तस्य निवृत्तिर्वा । न ह्युपदेशेन मणिः प्राप्तः सर्पो वा निवृत्त इत्यनुभवः । किंतु प्राप्तिज्ञानाद्भ्रमो निवृत्त इति । न च प्रकृते प्राप्तस्वरूपसुखादन्यत्प्राप्यसुखं नित्यनिवृत्ताविद्याभ्रमदुःखादेरन्यन्निवर्त्यं वाऽस्ति । येन सप्रयोजनता स्यादिति दूषणमुक्तम् । तदसत् । प्राप्तमणिप्राप्तिर्न फलमित्यत्र प्राप्तेर्मणिनिष्ठस्वत्वादिरूपत्व इष्टापत्तिः । तत्साक्षात्काररूपत्वे च कण्ठे मणिरस्तीत्युपदेशस्य सा कथं न फलं स्वत्वादिवत् । तद्विशिष्टसाक्षात्कारोऽपि प्राप्तिशब्दार्थः । उपदेशानन्तरं साक्षात्कृतमणीनां व्युत्पन्नानामपि मणिः प्राप्त इति प्रयोगदर्शनात् । प्राप्तिज्ञानजन्यसुखस्य वस्तुतः प्रागप्राप्तस्येत्यसदेव । अस्मन्मते सुखमात्मैव चन्दनादियोगजन्यवृत्तेस्तत्राभिव्यञ्जकत्वमात्रमिति तस्य नित्यप्राप्तत्वेन वस्तुतः प्रागप्राप्तेरभावात् । त्वयाऽपि हि चन्द्रिकायाम्—

जिज्ञासाधिकरणे नापीहामुत्रार्थभोगविरागः परमते संभवति । विवरणे विषयैरपि नित्यमात्मरूपमेव सुखमभिव्यज्यते, न तु जन्यं सुखमस्तीत्युक्तत्वेन तद्विस्मरणेन प्राप्तिज्ञानजन्यसुखस्य वस्तुतः प्रागप्राप्तस्येत्यस्य वक्तुमशक्यत्वात् । मण्यप्राप्तिभ्रमजन्यदुःखस्य वस्तुतः प्रागनिवृत्तस्य निवृत्तिर्वा फलमित्यपि न सत् । तादृशदुःखनिवृत्तेः पूर्वसिद्धाधिष्ठानात्मरूपत्वेन तादृशदुःखस्य वस्तुतः प्रागनिवृत्तत्वासिद्धेः कथं तन्निवृत्तेः फलत्वम् । यदि च तन्निवृत्तित्वेन तस्य फलत्वं तर्हि ब्रह्माप्राप्तिभ्रमजन्यदुःखनिवृत्तेरपि तत्त्वेन वेदान्तज्ञानजन्यब्रह्मज्ञानफलता किं न स्यात् । किं च नित्यनिवृत्तेत्यत्र निवृत्तत्वमपारमार्थिकत्वमेव, न विद्यमानध्वंसप्रतियोगित्वम् । आरोपिताविद्यारोगादिध्वंसस्याऽऽरोपदशायामसत्त्वात् । अधिष्ठानस्यैव ध्वंसत्वेन कथं तदा स नास्तीति चेत् । तदाऽपि तद्ध्वंसत्वोपहितस्य प्रागसत्त्वेन तेन रूपेण तस्योपदेशसाध्यताया इष्यमाणतायाश्चाबाधात्कथं न तस्य फलत्वम् । किं च प्रतियोगिनि द्वेषोऽपि तद्ध्वंसेच्छायां हेतुः । एवं फले द्वेषोऽपि तत्साधनद्वेषहेतुः । एवं च दुःखे द्वेषात्तत्साधनत्वेनावगत आरोपितानारोपितसाधारणे फणिनि द्वेषात्तद्ध्वंसस्येष्यमाणत्वं निष्प्रत्यूहमिति तत्साधननूपुरसाक्षात्कारहेतोरुपदेशस्य कथमसौ फलं न स्यात् । यद्यपीच्छान्तराजन्येच्छाविषयत्वरूपं मुख्यमुपदेशफलत्वं न मणिसाक्षात्कारादौ संभवति तथाऽपि गौणमुख्यसाधारणमिष्यमाणत्वलक्षणं तत्संभवत्येव । तत्साध्यत्वे सति, इष्यमाणत्वस्यैव फलसामान्यलक्षणत्वात् । इष्यते हि मण्यादिसाक्षात्कार इष्यमाणसुखादिसाधनत्वादुपदेशसाध्यश्चेति तत्फलमेव । प्रकृते तु सिद्धत्वाग्रहदशायामिच्छान्तरानधीनेच्छाविषयत्वात्परमानन्दरूपब्रह्मणो मुख्यपुरुषार्थत्वम् । नित्यसिद्धत्वग्रहदशायां तददर्शनात्मकाविद्यायां द्विष्टतमदुःखहेतुत्वेनावगतायां द्वेषात्तन्निवृत्ताविच्छा, ततश्च तद्धेतावात्मसाक्षात्कारे चेच्छासंभवतीत्यविद्यानिवृत्त्यात्मसाक्षात्कारादेश्च फलत्वं निर्विवादमेव । एतावानेवात्र विशेषः—मण्या-

ध्युपदेशस्य मण्यादिसाक्षात्कारो न मुख्यं फलं किंतु गौणम् । वेदान्तानां तु परमानन्दस्वरूपब्रह्मसाक्षात्कारः स्वतो दुःखनिवर्तकतया मुख्यं फलं मुख्यफलहेतुश्चेति न किंचिदप्यनुपपन्नम् ।

यदपि चन्द्रिकायाम्—पूर्ववादिना फलाभावादिना तात्पर्य आक्षिप्ते सिद्धान्तसूत्रे फलादिकं तात्पर्यं चानुपपाद्य प्रामाण्ये तात्पर्यं हेतूकर्तुमयुक्तमिति दूषणमुक्तम् । तत्पूर्वोत्तरपक्षयोर्व्यामोहनिबन्धनमेव । पूर्ववादिना हि 'वेदान्ता न ब्रह्मणि प्रमाणमतत्परत्वात् । ते च न तत्पराः, फलाभावात्' इत्याक्षिप्ते तद्ब्रह्म शास्त्रप्रमाणकमन्वयात्तात्पर्यात्, तदेवासिद्धमिति शङ्कायां संशब्दसूचितं तात्पर्यनिर्वाहकफलवत्त्वापूर्वत्वादिरूपलिङ्गादितिरीत्या यद्वेतिहेतुविवरणे फलस्य तात्पर्यस्य चोपपादनेन तादृशहेतूकरणस्य सुयुक्तत्वात् । समन्वयात्सम्यक्तात्पर्यनिरूपितसंबन्धविशेषात् । स च तन्निर्वाहकोपक्रमादिलिङ्गवत्त्वमेवेति प्रथमहेतुपरिष्कारेऽपि शास्त्रप्रामाण्ये न तात्पर्यं हेतूकृतम् । अपि तु फलवत्त्वापूर्वत्वादिरूपतात्पर्यनिर्वाहकलिङ्गमेव । तेन च तात्पर्यस्याप्यर्थतो लाभादतत्परत्वशङ्काया अपि निवृत्तेः ।

यदपि चन्द्रिकायां लक्षणाया अमुख्यत्वेन सौत्रसंशब्दार्थत्वायोगश्च । तदुक्तमनुव्याख्याने—

> कथं च लक्षणावादी ब्रूयाद्ब्रह्मसमन्वयम् ।
> योऽसौ शब्दस्य मुख्यार्थस्तत्रैव स्यात्समन्वयः ॥

इति दूषणमुक्तम् । तदप्यसत् । तत्प्रतीत्युद्देश्यकत्वरूपमुख्यतात्पर्यलाभार्थकतया संशब्दस्य प्रयोजनोक्तेर्यत्परः शब्दः स शब्दार्थ इति न्यायेन तात्पर्यविषयीभूतार्थस्यैव मुख्यार्थत्वेन वेदान्तानामुपक्रमादिलिङ्गैरुक्तरीत्याऽद्वैतचिन्मात्र एव तात्पर्यावगमात्तदेव तेषां मुख्योऽर्थ इति न किंचिदेतत् ।

यदपि चन्द्रिकायाम्—

> स्वप्रभत्वादसंदिग्धेऽवाच्यत्वाच्छ्रुत्यगोचरे ।
> निर्विशेषे च चिन्मात्रे कथं श्रुतिसमन्वयः ॥

इत्युक्तम् । तदपि जिज्ञासासूत्रे विस्तरतः प्रत्युक्तमीक्षत्य-धिकरणे च निरसिष्यामः ।

यदपि चन्द्रिकायाम्—

अपि च—आद्यसूत्रेऽहमर्थे हि प्रसिद्धिरुपपादिता ।
जिज्ञासार्थे द्वितीये च जगज्जन्मादिहेतुता ॥
अविद्यमानाहमर्थे लक्षणत्वेन कीर्तिता ।
ईश्वरस्य तृतीये तु निर्विशेषे प्रमाणता ॥
शास्त्रस्योक्ता चतुर्थे तु तस्मिन्नेव समन्वयः ।
प्रतिज्ञातोऽन्तरित्यादौ सविशेषं तु कथ्यते ॥
ब्रह्मेति मायिनां पक्षस्तत्र किं केन संगतम् ।
तत्त्वविद्वेषमात्रेण श्रुतिसूत्रे कदर्थिते ॥

इति विरोधोद्भावनम् । तद्विरोधाभावेऽपि स्वस्यैवाद्वैतवादद्वेष-मूलकम् । तथा हि—श्रीमद्भगवत्पादभाष्ये कथं पुनः प्रत्यगात्म-न्यविषयेऽध्यासो विषयतद्धर्माणामिति ब्रह्मणि निरुक्तलक्षणा-ध्यासो न संभवति । तस्याविषयतयाऽधिष्ठानत्वासंभवात् । सामान्यविशेषरूपाभ्यां ज्ञानाज्ञानविषयत्वस्यैव तत्त्वादिति शङ्का-यां तुष्यतु दुर्जन इति न्यायेन न तावदयमेकान्तेनाविषयोऽस्मत्प्र-त्ययविषयत्वादित्यनेनाऽऽत्मनि देहेन्द्रियाध्यासोपयोग्यौपाधिक-रूपेणास्मत्प्रत्ययविषयत्वरूपप्रसिद्ध्यभिधानेऽपि नह्यारोपेऽधिष्ठा-नस्य विषयतया भानमपेक्षितं गौरवात्, किं तु भानमात्रम्, तच्च स्वप्रकाशस्य स्वत एव जडस्य तु विषयतयेत्यन्यदेतादित्य-भिप्रायेणापरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेः, अस्ति तावद्ब्रह्म नित्य-शुद्धबुद्धमुक्तस्वभावमित्युपक्रम्य, 'आत्मा स भोक्तुरित्यपरे' इत्यन्तविप्रतिपत्तिप्रदर्शनेन जीवस्य यत्पारमार्थिकं रूपं ब्रह्म तस्यैवानौपाधिकरूपेण जिज्ञास्यत्वायाहमर्थावृत्तिलक्षणस्यौपाधि-नजैवरूपव्यावृत्तत्वेन जिज्ञास्यत्वायाहमर्थावृत्तिलक्षणस्यौपाधि-कस्योपलक्षणतया व्यावर्तकस्याभिधानेनौपाधिकरूपेण जगत्का-रणत्वाद्युपलक्षित एव शास्त्रप्रामाण्यं पूर्वाधिकरणे प्रदर्शितमस्मि-न्नधिकरणे समर्थ्यते । ईक्षत्यधिकरणे चोक्तलक्षणाविन्यासिता-

रणायोक्तं गतिसामान्यमानन्दमयाधिकरणमारभ्य स्फुटीक्रियते अन्तस्तद्धर्माधिकरणादौ च प्रसङ्गात्प्रकृतब्रह्माश्रितोपासना निरूप्यत इति क्वाप्यसंगत्यभावाच्चदुद्भावनं चन्द्रिकायामद्वैतात्मविद्वेषमात्रेणैवावशिष्यत इति सुधियां स्पष्टमेवेति दिक् ।

समन्वयनये भूयाद्रघुनाथस्य सन्मुदे ।
कृतिरेषा भगवतः पादमूले समर्पिता ॥ १ ॥

इति समन्वयाधिकरणं समाप्तम् ॥

---

## अथ ईक्षत्यधिकरणम् ।

———:०:———

सांख्येष्टं जगतो न हेतुरपि तु ब्रह्मेति सिद्धान्तितं
यैर्वाच्यत्वसमर्थने प्रयतितं चावाच्यताखण्डनैः ॥
अस्मिँस्तद्द्वयसाक्षिणं नतमनःपङ्केरूहालीमहा-
हंसं कंसरिपुं सदैव परमानन्देन वन्दामहे ॥ १ ॥
अस्मिन्नीक्षणसंज्ञकेऽधिकरणे सद्देशिकैर्योजिते
वादिव्याहृतदोषचूषणपुरस्कारेण तद्दूषणैः ॥
एतद्वै रघुनाथसूरिरचितं विद्वन्मनस्तोषदं
श्रीमच्छंकरपादभूषणमिदं जीयाज्जगत्यां चिरम् ॥ २ ॥

### ईक्षतेर्नाशब्दम् ॥ ५ ॥

'अथातो ब्रह्मजिज्ञासा' ( ब्र० सू० १ । १ । १ ) इत्यत्र भोक्त्रात्मनो यत्पारमार्थिकं रूपं ब्रह्मेति निखिलवेदान्तेषु प्रसिद्धं तद्विचार्यमित्युक्तम् । तदेव च स्वरूपतटस्थलक्षणाभ्यां 'जन्माद्यस्य यतः' ( ब्र० सू० १ । १ । २ ) इति सूत्रेण प्रतिपादितम् । तत्रैव च तृतीयसूत्रेण शास्त्रैकसमधिगम्यत्वमुक्तम् । 'तत्तु समन्वयात्' ( ब्र० सू० । १ । १ । ४ ) इत्यत्र च शास्त्रतात्पर्यगोचरत्वरूपं शास्त्रैकसमधिगम्यत्वं सिद्धस्य वस्तुन प्रमाणान्तरगोचरत्वान्निष्फलत्वनैयत्यान्न संभवतीत्याक्षिप्य समाहितम् । इदानीं स एव प्रागुक्तः समन्वयः परपक्षप्रतिक्षेपपू-

वैकमनेनाधिकरणेन दृढीक्रियते । अत एवाध्यायसंगतिः । स्पष्टब्रह्मलिङ्गानां सद्विद्यादीनां प्रधानादिपरत्वं व्युदस्य ब्रह्मपरत्वव्यवस्थापनात्पादसंगतिश्च । अनन्तरा तु—जिज्ञास्यं सर्वज्ञं परमप्रयोजनरूपं ब्रह्म जगत्कारणत्वादिना वेदान्तप्रतिपाद्यमिति यदुक्तं तन्न संभवति, स्वप्रकाशानन्दरूपपरमपुरुषार्थरूपब्रह्मणो भिन्नस्य जडस्य प्रधानस्यैव जगत्कारणत्वादिना वेदान्तप्रतिपाद्यत्वावगमादिति सद्विद्यामालम्ब्य सांख्यरीत्या प्रागुक्तसमन्वयाक्षेपेण पूर्वपक्षप्रवृत्तेराक्षेपिकी । अत्र च ‘ सदेव सौम्येदमग्र आसीत् ’ ( छा० ६ । २ । १ ) इत्यादिवेदान्तवाक्यानि जगत्कारणत्वेन प्रधानमेव प्रतिपादयन्त्युत ब्रह्मेति तदर्थं चोक्तविधं जगत्कारणत्वं प्रधानादावेव संभवत्यथ ब्रह्मण्येवेति संशयः । तद्बीजं च वादिविप्रतिपत्तिः ।

पूर्वपक्षस्तु—कारणत्वेन वेदान्तप्रतिपाद्यं प्रधानमेव । तत्रैव कारणत्वोपपत्तेः । न ब्रह्म, तस्य कर्तृत्वोपयोगिज्ञानाश्रयत्वाभावात् । तथा हि—न तावदुपलब्धिमात्रस्य ब्रह्मणः कर्तृत्वोपयोगिज्ञानाश्रयत्वम् । यतो ज्ञानं यद्ब्रह्मण्यभ्युपगम्यते तन्नित्यमनित्यं वा स्यात् । नाऽऽद्यः । त्वया ब्रह्मातिरिक्तनित्यज्ञानानभ्युपगमात् । अत्यन्ताभेद आश्रयाश्रयिभावानुपपत्तेश्च । न द्वितीयः । सत्त्वगुणपरिणामविशेषस्य तस्य निर्गुणे निर्विकारे च परमात्मन्यसंभवात् । गुणाभिमानिषु च जीवेषु तादृशज्ञानप्रतिबिम्बाश्रयत्वाज्ज्ञानवत्त्वम् । निरतिशयसर्वोत्कर्षे च तादृशसर्वविषयकसत्त्वगुणपरिणामात्मकज्ञानप्रतिबिम्बवत्त्वेन योगिनां सर्वज्ञत्वं च भवेत् । प्रतिबिम्बश्च यस्यां बुद्धिव्यक्तौ यस्य पुरुषस्य विजातीयसंयोगादिर्विलक्षणः पुरुषान्तरव्यावृत्तः संबन्धविशेषस्तद्बुद्धिधर्माणामेव ज्ञानसुखदुःखादीनां तत्पुरुषे प्रतिबिम्बः । अन्यथा मुक्तस्यापि संसरद्बुद्धिधर्मदुःखादिप्रतिबिम्बवत्त्वप्रसङ्गेनानिर्मोक्षप्रसङ्गात् । स्पष्टश्चायमर्थः सांख्यप्रवचनभाष्ये । तथा च नित्यमुक्ते परमात्मनि तादृशप्रतिबिम्बवत्ता दूरनिरस्तैव । यद्यपि प्रधानेऽपि न तदिति तस्यापि सर्वविषयकज्ञानाश्रयत्वं दुर्घटं तथाऽपि ज्ञानाकारेण परिणममानसत्त्वगु-

णात्मकत्वादुच्यते तत्र सर्वज्ञत्वव्यवहारः। परमात्मनि तु तादृशज्ञानानुकूलशक्तिमद्गुणाभेदशून्यत्वादुक्तरीत्याऽपि सर्वज्ञत्वं दुरुपपादम्। यदाऽप्यनिर्वचनीयं मायावृत्तिरूपं ज्ञानं ब्रह्मणि संभवतीति तदादाय ब्रह्मण्यपि सर्वज्ञत्वव्यवहार इति स्वगोष्ठ्यां परितुष्यसि तदाऽपि प्रधानस्य स्वविकारभूतसत्त्वपरिणामाश्रयत्वं धर्मिज्ञानाबाध्यम्। ब्रह्मणि तु तद्बाध्यमिति सर्वज्ञशब्देन मुख्यज्ञानाश्रयग्रहणसंभव औपचारिकतदाश्रयपरिग्रहोऽयुक्त एव। न ह्यारोपितसर्पत्वसंसर्गवती रज्जुः स्वरसतः सर्पशब्देन व्यवह्रियते। किं चानित्यज्ञानस्य शरीरेन्द्रियनिष्पाद्यतया कार्यकारणे ब्रह्मणि कथं तत्संभवः। प्रधानेऽपि कथमिति चेत्। न। कथंचिदौपचारिकत्वाविशेषे प्रधानपक्षपातो न युक्त इति चेत्। सत्यम्। प्रधानस्य मुख्यकर्तृत्वासंभवेऽप्यौपचारिकं तदुपपद्यते। उपादानत्वं च मुख्यमेव। सांशत्वान्मृदादिवत्। परार्थत्वाच्च संघातस्य। ब्रह्म तु निरंशमभ्युपगम्यते भवता। तस्मात्प्रधानमेव कारणवाक्यप्रतिपाद्यम्। यदि च प्रधानस्य जगत्कारणता 'सृष्ट्याद्यकार्यं सुखदुःखमोहात्मकस्वसदृशजडप्रकृतिकं स्वसदृशप्रकृतिकं वा कार्यत्वात्संमतवत्' इत्याद्यनुमानसमधिगम्या प्रमाणान्तराधिगते च नाऽऽगमतात्पर्यं तदा माऽस्तु तत्र वेदान्ततात्पर्यम्। तथाऽपि प्रमाणान्तरप्राप्तप्रधानानुवादश्च जीवे तदैक्यसंपत्तिविधानायेति न निरर्थकानुवादत्वप्रसङ्गः। एतदभिसंधायैवोक्तं कल्पतरौ—प्रयोजनं तु 'तत्त्वमसि' (छां० ६।८।७) इति चेतने तच्छब्दवाच्यप्रधानैक्यसंपत्तिः पूर्वपक्षे। सिद्धान्ते तु तस्य ब्रह्मैक्यमिति तिरिति। तस्मादुक्ते ब्रह्मणि न वेदान्तसमन्वय इति।

सिद्धान्तस्तु—जगत्कारणतया वेदान्तप्रतिपाद्यं नाशब्दशङ्कितं प्रधानम्। ईक्षतेः, ईक्षणात्। न चेक्षणं ब्रह्मण्यनुपपन्नमिति वाच्यम्। मायापरिणामवृत्तिविशेषस्य तस्य ब्रह्मण्यपि संभवात्। ननु सत्त्वगुणपरिणामविशेषरूपमीक्षणं प्रधानेऽपि संभावितं मुख्यं चेत्युक्तमिति चेत्। न। संकल्पादीनां स्वसमानविषयकज्ञानपूर्वकत्वनियमदर्शनेन चेतनानधिष्ठितप्रधाने तद-

भ्युपगमायोगात् । मन्मते च परमात्मनः स्वरूपभूतज्ञानेन सर्वज्ञतया संकल्पाद्युपपत्तिः । न च स्वरूपभूतज्ञानस्येशाश्रितत्वानुपपत्तिरभेद आश्रयाश्रयिभावायोगादिति वाच्यम् । आविद्यकभेदोपगमेन तदुपपत्तेः । यथोक्तं पञ्चपादिकायाम्—

आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति तद्धर्माः ।
अपृथक्त्वेऽपि चैतन्यात्पृथगिवावभासन्ते ॥ इति ।

अभिमतश्चायमर्थो भाष्यकृतामपि । यदाहुः—यस्य सर्वविषयावभासनक्षमं ज्ञानं नित्यमस्ति सोऽसर्वज्ञ इति विप्रतिषिद्धमिति ( ब्र० सू० १ । १ । ५ ) । नन्वेवमप्यास्तां नित्यः सर्वज्ञस्तदधीनसंकल्पादिकं तु प्रधानस्यास्त्विति चेत् । न । संकल्पादेः स्वनिर्वाहकज्ञानसामानाधिकरण्यसंभवे तद्वैयधिकरण्यकल्पनाया अयुक्तत्वात् । अत एव च ' श्रुतत्वात् ' ( ब्र० सू० १ । १ । ११ ) इति सूत्रमपि स्वरसतः संगच्छते । अत्र सूत्रे संकल्पात्मकेक्षणाक्षिप्तज्ञानेन प्रधानव्युदास उक्तस्तत्र कण्ठोक्तेनैव तेनेति विशेषात् । उक्तं च तत्र सूत्रभाष्ये—स्वशब्देनैव सर्वज्ञ ईश्वरो जगतः कारणमिति श्रूयत इति । ईक्षणं ज्ञानमेवेत्युक्तौ तु तादृशसूत्रप्रयोजनं वक्ष्यते ॥ ५ ॥

ननु ' तत्तेज ऐक्षत ' ( छा० ६ । २ । ३ ) इत्यादावीक्षतिर्गौण इत्यवश्यं वाच्यम् । तेजःप्रभृतीनामीक्षितृत्वस्य सिद्धान्तिनाऽप्यनुपगमात् । तथा च तत्प्रायपाठात् ' तदैक्षत ' ( छा० ६ । २ । ३ ) इत्यादावपीक्षतिर्गौण इति युक्तमिति शङ्कां प्रत्याह—

## गौणश्चेन्नाऽऽत्मशब्दात् ॥ ६ ॥

ईक्षतिर्गौण इति चेत् । न । ' अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य ' ( छा० ६ । ३ । २ ) ' स आत्मा तत्त्वमसि ' (छा० ६ । ८ । ७) इत्यादावात्मशब्दस्याऽऽत्मतादात्म्यबोधकतृतीयायाश्च सत्त्वात् । अयं भावः—आत्मशब्दः स्वरूपपरश्चेतनपरश्च दृष्टः । तत्र ' जीवेनाऽऽत्मना ' ( छा० ६ । ३ । २ )

इत्यत्र स्वरूपपर एव ग्राह्यः। अन्यथा जीवशब्देनैव चेतनलाभेनाऽऽत्मपदवैयर्थ्यापत्तेः। स्वरूपस्य च ससंबन्धिकत्वात्संबन्ध्याकाङ्क्षायाम् ‘सेयं देवतैक्षत’ (छा० ६। ३) इति समभिव्याहृता परदेवतैव संबन्धितयाऽन्वेति। तथा च यदीयं देवता जीवादत्यन्तभिन्ना तदा जीवस्य तत्स्वरूपत्वमनुपपन्नं स्यात्। ‘स आत्मा’ (छा० ६। ८। ७) इत्यत्र चेतनपरोऽप्यात्मशब्दः परदेवतापरामर्शितच्छब्दसमानाधिकरणो दृश्यत इति न प्रधानस्य तेजःप्रभृतिस्रष्टृदेवतात्मकत्वमिति ॥ ६ ॥

मन्वयमात्मशब्दोऽपि प्रधाने गौण एव। आत्मनः सर्वार्थकारित्वात्। यथा राज्ञः सर्वार्थकारिणि भृत्ये भवत्यात्मशब्दो ममाऽऽत्मा भद्रसेन इति शङ्कां निराकरोति। यद्वा ‘स आत्मा’ (छा० ६। ८। ७) इत्यादावात्मशब्दः स्वरूपबोधकः ‘जीवेनाऽऽत्मना’ (छा० ६। ३। २) इत्यत्रापि ममाऽऽत्मा मित्रमित्यादाविवाऽऽत्मशब्दो गौण इति शङ्कां निराकरोति—

## तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥

‘अनेन जीवेनाऽऽत्मना’ इत्यत्र यद्यपि नैतादृशार्थसंभवः प्रधानस्य जीवभोगापवर्गसाधकत्वेऽपि जीवस्य प्रधानार्थत्वाभावात्तथाऽपि चेतनपरत्वमभिप्रेत्येयं शङ्का। इयं च संभवदुक्तिकतामात्रेण भाष्य उपदर्शिता। अस्याऽऽत्मशब्दस्य चेतनपरत्वे वैयर्थ्यस्य दर्शितत्वात्। अत एव भाष्य एतत्सूत्रस्य स्वतन्त्रहेतुपरतायामेव निर्भरो दर्शितः। अत एव मिश्रैरप्युक्तम्—तन्निष्ठशब्दस्य मोक्षोपदेशादिति शङ्कोत्तरत्वेन वा स्वातन्त्र्येण वा प्रधाननिराकरणार्थं सूत्रमिति। ‘आचार्यवान्पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये’ (छा० ६। १४। २) इति। तस्मिञ्जगत्कारणे सदात्मनि निष्ठा स्वैक्यधीर्यस्य तादृशस्य पुरुषस्य स्वरूपाच्छादकाविद्यानिवृत्तिरूपमोक्षोपदेशादिति च सूत्रार्थः। तथा च ‘तत्त्वमसि’ (छा० ६। ८। ७) इति जीवे प्रधानैक्यसंपत्त्युपदेश इति न युक्तम्।

संपत्तेर्मोक्षफलकत्वासंभवात् । 'नान्यः पन्थाः' इत्यादिश्रुतेरिति सूचितम् । विस्तरेण चायमर्थो भाष्य एवोपपादितः ॥ ७ ॥

ननु सदात्मनिष्ठस्यापि मोक्षोपदेशो नायुक्तः। स्थूलारुन्धतीप्रदर्शनन्यायेन देहेन्द्रियादिव्यावृत्तिप्रदर्शनस्याचेतने प्रधानतादात्म्योपदेशस्यापीतरव्यावृत्तस्वरूपनिश्चयद्वारा मोक्षसाधनीभूतात्मज्ञानोपायतया प्रधाननिष्ठाया अपि मोक्षप्रयोजकतासंभवादिति शङ्कानिरासायाऽऽह —

## हेयत्वावचनाच्च ॥ ८ ॥

भवेदेतदेवं यद्यरुन्धतीदृष्टयै दर्शितस्य तारान्तरस्येव सदात्मातिरिक्तं ज्ञेयमत्रोपदिष्टं स्यात् । न चैतदस्ति । तथा च सदात्मानमुपदिश्यैवोपक्रान्तविद्योपदेशपरिसमापनात्सदात्मनिष्ठैव मोक्षहेतुरित्यवगमेनोक्तानुपपत्तिर्दुर्धरैवेति । अत्र चशब्देनैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधः समुच्चीयते । कार्यकारणयोरभेदेन प्रधानविज्ञानान्महदादिविशेषान्तविज्ञानसंभवेऽपि चेतनस्य प्रधानकार्यत्वविरहात्तद्विज्ञानेन सर्वविज्ञानं न संभवतीति प्रतिज्ञाविरोधः स्वतन्त्रप्रधानवादे सुस्थः ॥ ८ ॥

अर्थाद्धेयताऽस्त्वित्यत आह—

## स्वाप्ययात् ॥ ९ ॥

इतश्च प्रधानं नात्र प्रतिपाद्यते । 'यत्रैतत्पुरुषः स्वपिति नाम' ( छा० ६ । ८ ) इत्यादिना सदात्मनि जीवस्याप्ययप्रतिपादनात् । लयो हि स्थूलरूपप्रहाणेन कारणे सूक्ष्मरूपेणावस्थानम् । न चैतज्जीवस्य प्रधाने संभवति । न च 'यत्रैतत्पुरुषः स्वपिति नाम सता सौम्य तदा संपन्नो भवति स्वं ह्यपीतो भवति तस्मात्स्वपितीत्याचक्षते' ( छा० ६ । ८ ) इत्यत्र स्वशब्देन जगत्कारणं सन्नोक्तं किंतु ब्रह्मैव । तथा च जगत्कारणस्य प्रधानत्वेऽपि ब्रह्मणि जीवस्यौपाधिकस्वरूपलयरूपाप्ययबोधकत्वमुक्तवाक्यस्य नानुपपन्नमिति शङ्क्यम् ।

स्वाप्ययस्य सत्संपत्तिहेतुत्वेन निर्देशे सत एव सत्त्वलाभात् । अन्यत्र सत्संपत्तावन्यत्राप्ययस्य हेतुत्वासंभवात् ॥ ९ ॥

कस्मिंश्चिद्वेदान्ते प्रधानं तथा भविष्यतीति तत्राऽऽह—

गतिसामान्यात् ॥ १० ॥

सर्वेषु कारणवाक्येषु चेतनकारणत्वावगतेः । एकरूपत्वान्न किमपि वेदान्तवाक्यं प्रधानकारणतापरमित्यर्थः ॥ १० ॥

श्रुतत्वाच्च ॥ ११ ॥

ब्रह्म प्रकृत्य 'स कारणं करणाधिपाधिपः' ( श्वे० ६।९ ) इत्यादौ चेतनस्यैव जगत्कारणतायाः श्रुतत्वादपि न प्रधानं जगत्कारणतया वेदान्तप्रतिपाद्यमिति तदर्थः ।

यत्तु चन्द्रिकायाम्—अन्ये तु 'सदेव सौम्येदमग्र आसीत्' ( छां० ६ । २ ) इत्यादिकारणवाक्यं सांख्यादिसिद्धाचेतनकारणानुवादीतिप्राप्त ईक्षणेन चेतनकारणताप्रापकमिति सिद्धान्त इत्याहुरित्यनेनास्मन्मतमनूद्य—तत्र किं विशिष्टपरिणामित्वमेव तद्वाक्यबोध्यमिति सिद्धान्त्यते यद्वा कर्तृत्वं बोध्यमिति किंवा शुद्धस्य भ्रमाधिष्ठानत्वं बोध्यत इति । नाऽऽद्यद्वितीयौ । विशिष्टे सदादिवाक्योक्त×सत्त्वाद्ययोगात् । पूर्वसूत्रेऽखण्डसमन्वयस्यैव प्रतिज्ञातत्वेनात्राखण्डस्यैव वक्तव्यत्वाच्च । द्वितीये वैयधिकरण्यं च । नहि प्रधानं परिणामीति प्राप्ते ब्रह्मकार्त्रीति सिद्धान्तो युक्तः । अत एव न तृतीयः । प्रधानं परिणामीति प्राप्ते ब्रह्माधिष्ठानमित्यस्य व्यधिकरणत्वात् । कथंचिद्वैयधिकरण्येऽपि 'तदैक्षत' 'सेयं देवतैक्षत' 'नामरूपे व्याकरोत्' इत्यादिकमयुक्तं स्यात् । तस्य लक्षणया चिन्मात्रपरत्वे च सर्वमपि लक्षणया प्रधानपरं स्यात् । सूत्र ईक्षतिरिति हेतूक्तिश्च न स्यात् । न च तात्पर्याविषयेणेक्षणेन प्रधानस्य निरास

× सत्त्वाद्येति । विशिष्टस्य मिथ्यात्वेन सत्त्वाद्वितीयत्वादेरयोगादिति भावः । नन्वत्र सत्त्वं न पारमार्थिकमिति चेत् । न । लयकालिकत्वेन व्यावहारिकस्य सर्वस्य तदानीं विलयात् ।

इत्युक्तम् । अत्रेदं वक्तव्यम्—न केवलस्याकार्यकारणस्य पुरुषस्योपलब्धिमात्रस्य सर्वज्ञत्वं किंचिज्ज्ञत्वं वा कल्पयितुं शक्यमिति । अपि च प्रधानस्यानेकात्मकस्य परिणामसंभवात्कारणत्वोपपत्तिर्मृदादिवन्नासंहतस्यैकात्मकस्य ब्रह्मण इति च पूर्वपक्षभाष्ये कर्तृत्वोपयोगिज्ञानवत्तायाः परिणामित्वोपयोगिसांशतायाश्च ब्रह्मण्यसंभवप्रदर्शनेन तस्य कर्तृत्वमुपादानत्वं च द्वयमपि न संभवति । प्रधाने तु तदुभयमप्युपपद्यत इति व्युत्पाद्यत इति व्युत्पाद्य कारणतया वेदान्तप्रतिपाद्यं प्रधानमिति पूर्वपक्षपर्यवसाने कृते प्रधानं न कारणतया वेदान्तप्रतिपाद्यमशब्दत्वादिति सिद्धान्तः श्रीमद्भाष्यटीकादौ प्रदर्शितः । कथमत्रैतेषां भावत्कविकल्पानां स्वबुद्धिकल्पितानामवकाशः । न च कारणतया वेदान्तप्रतिपाद्यमुपहितं शुद्धं वा तवाभिमतमिति विकल्पो नायुक्त इति वाच्यम् । उपहितशुद्धयोस्तादात्म्येनोपहिते शुद्धधर्मसत्त्वाद्युपपत्त्या त्वदीयदूषणानवकाशात् । न चोपहितमात्रं मन्मते मिथ्येति भ्रमितव्यम् । वाक्यान्वयाधिकरणकल्पतरावुपहितसत्यताया विस्पष्टमुपपादनात् । तथाहि—एवं परमात्मनः शुद्धस्वभावाज्जीवानामात्यन्तिकाभेदेऽप्यनिर्वचनीयानाद्यविद्योपाधिभेदात्काल्पनिको जीवानां भेद इतिटीकाविवरणावसर उपहितस्य जीवतापक्षे—

यद्युपाधिविशिष्टस्य संसारो नाशितात्मनः ।
तल्लक्षितस्य चेद्ब्रह्मामुक्त्या तद्रूपमुच्यताम् । इति ॥

केशवोक्तं दूषणमनूद्य समाहितम्—यतो न विशेषणमविद्या नाप्युपलक्षणं किंतूपाधिः । कः पुनरेषां भेदः । उच्यते—कार्यान्वयित्वेन भेदकं विशेषणं नैल्यमिवोत्पलस्य । कार्यानन्वयित्वेन भेदकानामुपाधितोपलक्षणता च सिद्धा । तत्र चायं विशेषः—

यावत्कार्यमवस्थाय भेदहेतोरुपाधिता ।
कादाचित्कतया भेदधीहेतुरुपलक्षणम् । इति ॥

नीलोत्पलमानयेत्यत्र हि नैल्यं व्यावृत्तिप्रयुक्तानयनकार्यान्वयि

सदुत्पलं रक्ताद्व्यावर्तयति। अलक्तककाकौ तु स्फटिकग्रहकार्य-योर्नान्वीयेते। अलक्तकं तु यावत्स्फटिकानयनमनुवर्तते। काक-स्तु न चैत्रग्रहगमनं यावदनुवर्तते। तदिहाविद्या न विशेषणमिति न तन्नाशे जीवनाशः। न चोपलक्षणमिति ब्रह्मणि न संसा-रः। यावत्संसारं त्वनुवर्तिष्यते तन्निवृत्तौ जीवः स्वं ब्रह्मभावमे-ष्यतीति। अत्र यद्युपहित उपाधिप्रयुक्तो ब्रह्मणोऽन्यो मिथ्यैव वि-शिष्टवत्तदैतस्याप्यविद्यानाशे नाश एव स्यादित्यविद्यायां विशेष-णव्यावृत्तमुपाधित्वमङ्गीकृतमप्यकिंचित्करं स्यात्ततो नोपहितस्य मिथ्यात्वं भेदमात्रं तु तत्र कल्पितमित्येव सिद्धान्तः। एवं चोपहितस्य जगत्कारणत्वावलम्बनेन सिद्धान्ते न कोऽपि दोषः। पूर्वसूत्रेऽपि जगत्कारणत्वाद्युपलक्षितेऽविद्याद्युपाधिवि-विक्तजैवपारमार्थिकरूपे ब्रह्मशब्दमुख्यार्थे वेदान्तसमन्वय उप-पादितः। उक्ते जीवस्य पारमार्थिकरूपे किंचिदुपहितेऽपि न जगत्कारणता संभवति किंतु प्रधान एव। तथा चोक्तसमन्वयो न संभवतीत्याशङ्कानिरासाय सोपाधिके तस्मिञ्जगत्कारणताऽत्र निर्णीयते। तथा च सति जगत्कारणत्वोपलक्षित उक्तजीवरूपे पूर्वसूत्रोक्तः समन्वयः सिद्धो भवति। इत्थमेव चोपहिते जगत्का-रणतानिर्णायकन्यायान्तराणामपि प्रकृतोपयोग इति न किंचि-दनुपपन्नम्। एतेनेक्षणादिरूपहेत्वसिद्धिशङ्काऽपि चन्द्रिकोक्ता निरस्ता। शुद्धाभिन्ने कल्पिततद्भेदवत्युपहिते तत्संभवात्। नन्वेवं भाषान्तरेण शुद्धे ब्रह्मण्येवोपाध्यवच्छेदेन जगत्कारणता स्वी-कृता, परं सा न व्याप्यवृत्तिरित्येतावदेव पर्यवसितमिति चेत्। किंचातः। शुद्धं ब्रह्म न जगत्कारणमिति भावत्कप्रवादविरोध इति चेत्। न ब्रह्मणि जगत्कारणता, नानवच्छिन्नवृत्तिकेति तदर्थात्। न च तात्पर्याविषयत्वमीक्षणस्य चन्द्रिकोक्तं साधु, तत्रावान्तरतात्पर्योपगमात्। न चात्र 'सदेव' (छा० ६।२) इत्यादिवाक्यसमन्वयोक्तिश्चेन् 'आनन्दमयोऽभ्यासात्' (ब्र० सू० १।१।१२) इतिवत् 'सदीक्षतेः' इति सूत्रं स्यात्। प्रधानस्य शाब्दत्वनिरासमात्रं चेत्। इदमधिकरणं तन्निरासके चतुर्थपादे स्यादिति चन्द्रिकोक्तं दूषणमपि न साधु। 'अशब्द-

शब्दितं प्रधानं न जगत्कारणतया वेदान्तप्रतिपाद्यम्, अशब्दत्वाकारणत्वज्ञानाबाध्यत्वरूपसत्त्वस्वातन्त्र्यादिधर्मिनिर्देशकवैदिकसद्विद्यादिगतसदादिशब्दप्रतिपाद्यत्वाभाववत्त्वात्' इत्येकानुमानेनाभिहिते—तदसिद्धम्, सद्विद्यायामेव जगत्कारणतया प्रतिपाद्यं प्रधानमित्यवगमादिति शङ्कानिरासाय 'सद्विद्यायां जगत्कारणतया प्रतिपाद्यमानं न प्रधानम्, 'ईक्षतेः' इति *पूर्वानुमानोक्तसामान्याभावसाधकविशेषाभावरूपहेतुसाधकमनुमानमित्येतादृशानुमानद्वयस्य विवक्षितस्य 'सदीक्षतेः' इति विन्यासेनालाभात्। न च सद्विद्यागततदादिशब्दाप्रतिपाद्यत्वरूपयत्किंचिद्विशेषाभावहेतुना कथं कारणतया वेदान्तप्रतिपाद्यत्वाभावरूपसामान्याभावसिद्धिः, प्रधानस्य सद्विद्यागततदादिशब्दाप्रतिशाखान्तरे कारणबोधकशब्दप्रतिपाद्यत्वस्य प्रधाने संभवादितिपाद्यत्वेऽपि शङ्क्यम्। उक्तशङ्कानिराकरणायैव 'गतिसामान्यात्' (ब्र० सू० १।१।१०) इत्यनेन पूर्वनिरुक्तार्थकेण सामान्याभावसाधकविशेषाभावकूटपर्यवसानस्याऽऽवेदितत्वात्। ननु प्रधानं जगत्कारणतया न वेदान्तप्रतिपाद्यमशब्दत्वादित्यस्य प्रथमानुमानस्याविवक्षायामपि न क्षतिः। सदेवेत्यादिवाक्यप्रतिपाद्यं न प्रधानमिति प्रत्येकं समर्थनेनापि समन्वयविरोधिबाधशङ्कानिराकरणेन समन्वयसिद्धेरिति चेत्। न। यतो लक्षणस्य त्रयो दोषाः। अव्याप्तिरसंभवोऽतिव्याप्तिश्च। न च तन्निरासं विना लक्षणपरिशुद्धिरित्यतिव्याप्तिनिरासाय क्वापि वेदान्ते प्रधानस्य न जगत्कारणतया प्रतिपाद्यत्वमित्येषोऽर्थो वर्णनीयः। स च सदीक्षतेरिति विन्यासमात्रेण न निर्वहतीत्युक्तविन्यासादरः।

---

* पूर्वानुमानोक्तेति। पूर्वानुमानेनोक्तो यः सामान्याभावस्तत्साधको यो विशेषाभावरूपो हेतुस्तत्साधकमनुमानमित्यर्थः। अयं भावः—'अशब्दशब्दितं प्रधानं न जगत्कारणतया वेदान्तप्रतिपाद्यमशब्दत्वात्' इत्यनेन पूर्वानुमानेन यः सामान्यवेदान्तप्रतिपाद्यत्वाभावः साधितस्तस्यैव साधकः सद्विद्याप्रतिपाद्यत्वाभावरूपो विशेषाभावस्तत्साधकम् 'सद्विद्यायां जगत्कारणतया प्रतिपाद्यमानं न प्रधानमीक्षतेः' इत्यनुमानं भवति। एवं चोक्तानुमानद्वयस्य 'सदीक्षतेः' इति न्यासेन सिद्धिर्न स्यादिति।

तत्र च सद्विद्यादीनां जगत्कारणतया प्रधानप्रतिपादकत्वसंभवादुक्तसाध्यस्य बाध इति शङ्का 'सद्विद्यायां जगत्कारणतया प्रतिपाद्यं न प्रधानमीक्षतेः' इत्यादिना निरस्यते । सद्विद्यादिना तदप्रतिपादनेऽपि शाखान्तरे तथा प्रतिपादनं स्यादिति शङ्का तु 'गतिसामान्यात्' ( ब्र० सू० १ । १ । १० ) इतिसूत्रेण । नन्वेवं सद्विद्यादिना प्रधानं न जगत्कारणतया प्रतिपाद्यमिति शङ्कानिरासेनैवातिव्याप्तिनिरासः संभवति, शाखान्तरे तत्प्रतिपादनस्यापि 'गतिसामान्यात्' ( ब्र० सू० १ । १ । १० ) इत्यनेन निरासादिति 'प्रधानं न तथा प्रतिपाद्यमशब्दत्वात्' इति सामान्यप्रतिज्ञादिकं नानुसरणीयमिति चेत् । न । अत्रैवातिव्याप्तिशङ्काऽपि निरसनीयेति द्योतनाय तदावश्यकत्वात् । अन्यथाऽसंभवशङ्कैवात्र निरस्यत इति भ्रमापत्तेः । यथा चात्रातिव्याप्तिनिरासेऽपि स्वारस्यं तथोपरिष्टाद्वक्ष्यामः । अतिव्याप्तिनिरासकयुक्तिभिरेव फलतोऽसंभवनिरासान्न तत्र पृथग्यत्नान्तरेण भाव्यमिति यत्किंचिदेतत् । यद्यपीक्षतेरित्यनेन बाधनिरासवदसिद्धिनिरासोऽपि भवति, तथाऽपि समन्वयविरोधिनो बाधस्येदानीमवश्यनिरसनीयतया तन्निरसनहेतुतया साक्षात्पादत्रयीसंगततया च सद्विद्याविचारोऽत्रैव युक्तः । प्रधानस्य क्वचिद्वैदिकशब्दप्रतिपाद्यत्वेऽपि समन्वयाविरोधात्साक्षात्पादत्रय्याः संगत्यभावाच्चाऽऽनुमानिकाद्यधिकरणत्रयस्य तुरीये निवेशः । अस्मिन्नधिकरणेऽनुमानसिद्धसावयवप्रधानपरत्वमेव वेदान्तानां न निरवयवब्रह्मपरत्वमिति सद्विद्यामालम्ब्य समन्वयविरोधिजन्मादिसूत्रोक्तजगत्कारणत्वबाधशङ्का वेदान्तानां प्रधाने सद्विद्यास्वारस्यं निरस्य ब्रह्मणि तव्द्यवस्थाप्य निराकृता । तदुपोद्बलतया च गतिसामान्यं प्रतिज्ञातम् । तदेव 'आनन्दमयोऽभ्यासात्' ( ब्र० सू० १ । १ । १२ ) इत्यादिभिः 'पत्यादिशब्देभ्यः' ( ब्र० सू० १ । ३ । ४३ ) इत्यन्तैः सूत्रैस्तत्तच्छङ्कानिराकरणेन त्रिपाद्यां व्यवस्थापितम् । पुनरपि दर्शितसामान्याभावसाधकप्रशब्दत्वलिङ्गमाक्षिप्य व्यवस्थाप्यते चतुर्थपादे । तेन च प्रधानस्यापि क्वचित्कार-

णत्वप्रतिपादने जन्मादिसूत्रोक्तलक्षणातिव्याप्तिशङ्काऽपि निराकृता भवतीति नास्मिन्नधिकरणे प्रधानस्याशब्दत्वनिरासमात्रमभिप्रेतमिति नैतस्य चतुर्थपादे निवेशापत्तिरिति दूषणावकाशः। अथ 'ईक्षतेर्नाशब्दम्' (ब्र०सू०१।१।५) इति सूत्रविन्यासेन कथमुक्तानुमानद्वयलाभ इति चेदित्थम्—'तत्तु समन्वयात्' (ब्र० सू० १।१।४) इति सूत्रे तच्छब्दो जन्मादिसूत्रे यादृशं ब्रह्म निरूपितं तादृशब्रह्मपरः । ततश्च जगत्कारणप्रतिपादकोऽपि भवति । तावन्मात्रार्थतयेहानुषज्यते । यद्वा तत्रैव साध्यसमर्पकतया विभक्तिविपरिणामेनानुषक्तस्य शास्त्रयोनिपदस्येहानुषङ्गः । प्रधानमिति च पदमध्याहार्यम् । यद्वाऽशब्दमिति पदमेव पक्षसमर्पकं सत्, आवृत्त्या विपरिणामेन हेतुसमर्पकम् । अशब्दमिति सांख्यपरिकल्पितानुमानगम्यमित्यर्थकं प्रधानस्यैव बोधकम् । तथा च प्रधानं न कारणं न वा शास्त्रयोनि कारणतया न वेदप्रतिपाद्यमशब्दत्वादिति प्रथमानुमानलाभः । सूत्राणामावृत्त्या विपरिणामादिनाऽनेकार्थत्वस्यालंकाररूपतया विश्वतोमुखत्वादिसूत्रलक्षणविदामनुमतत्वात् । द्वितीयानुमाने शास्त्रयोनिपदाद्विभक्तिविपरिणामेन सद्विद्यादिविशेषार्थकं शास्त्रपदमनुषञ्जनीयम् । तथा च शास्त्रमशब्दं प्रधानबोधकशब्दशून्यमीक्षतेः, कारणस्येक्षणात्मकचेतनत्वबोधकेक्षधातुसमभिव्याहारविशेषादिति द्वितीयानुमानलाभः । यद्वाऽशब्दं न शास्त्रयोनि, अशब्दत्वादिति प्रथमानुमाने बाधशङ्कानिरासायोक्तरीत्या शास्त्रयोनि कारणत्वेन सद्विद्याप्रतिपाद्यं नाशब्दं न प्रधानमीक्षतेरीक्षणादिति द्वितीयानुमानमाश्रयणीयम् ।

एतेनास्मन्मते 'आनन्दमयोऽभ्यासात्' (ब्र० सू० १। १। १२) इत्यादावानन्दमयस्तद्ब्रह्मैवेत्यादिरूपेण विधेयसमर्पणायानुषञ्जनीयस्य तत्पदस्येह तदशब्दं नेक्षतेरित्युद्देश्यसमर्पकतयाऽन्वयः। हेतुसाध्ययोः सामानाधिकरण्यं च । तव त्वशब्दं प्रधानं कारणस्येक्षितृत्वादिति वदतो हेतुविभक्त्यभावेन साध्यत्वयोग्यश्रुताशब्दत्वरूपसाध्यत्यागेन साध्यकल्पनार्थमध्याहृतकारणपदस्य विभक्तिविपरिणामेनाऽऽवृत्तिवैयधिक-

रण्यं च । कारणमशब्दं प्रधानं नेति कारणस्योद्देश्यत्वे च 'अशब्दं हि तत्' इति हेतूकृतस्याशब्दत्वस्य कारणेऽसिद्धिरिति चन्द्रिकोक्तं दूषणं निरस्तम् । तन्मत उद्देश्यसमर्पकतयाऽनुषञ्जनीयस्य तत्पदस्यान्वयवन्मन्मतेऽपि 'तत्तु समन्वयात्' (ब्र० सू० १ । १ । ४) इत्यत्र साध्यसमर्पकतयाऽनुषक्तस्य शास्त्रयोनिपदस्यैवात्रानुषङ्गेणाशब्दं न शास्त्रयोनि, अशब्दत्वादिति योजनायामस्वारस्याभावात् । अत्रानुमाने बाधशङ्कानिरासायाऽऽश्रयणीये शास्त्रयोनि नाशब्दमीक्षतेरिति योजनान्तरेऽप्येवम् । अत एव न वैयधिकरण्यमपि शङ्कास्पदम् । परं तु पूर्वपक्षानुरोधेन द्वितीययोजनायां सामान्यवाचि शास्त्रपदं सद्विद्यादिरूपशास्त्रविशेषपरमादर्तव्यमिति विशेषः । + श्रीमद्भाष्यमप्यत्रार्थे स्वरसम् । तथा हि—सांख्यपरिकल्पितं सांख्योक्तीतानुमानगम्यमित्यशब्दपदलभ्यार्थकथनम् । जगत्कारणं शक्यं वेदान्तेष्वाश्रयितुमिति शास्त्रयोनिपदार्थकथनम् । अशब्दं हि तदित्यावृत्त्या वैदिकशब्दाप्रतिपाद्यत्वरूपहेतुकथनम् । कथमशब्दत्वमिति च हेतुसाध्ययोर्द्वयोरप्याक्षेपः । सद्विद्यायां प्रधानस्य कारणत्वेन प्रतिपाद्यमानत्वादिति हेत्वभिप्रायकः । तत्रोत्तरमीक्षितृत्वश्रवणात्कारणस्येति । अत्रापि कारणस्येत्यस्य सद्विद्यया कारणत्वेन प्रतिपाद्यस्येत्यर्थः । एवं च शास्त्रयोनिपदमेवात्रोद्देश्यसमर्पकं भवतीति न शब्दान्तराध्याहारगौरवम् । सम्प्रयोजनत्वाच्च न योजनान्तरानुसरणं दोषाय । सूत्राणां हि विश्वतोमुखत्वं गुण इति सूत्रलक्षणविदः । पठन्ति च—सारवद्विश्वतोमुखमिति ।

यदपि चन्द्रिकायाम्—हेतूकृतमशब्दत्वमवाच्यत्वं वा शब्दवृत्तिमात्राविषयत्वं वा वेदासिद्धत्वं वा करणत्वेन वेदासिद्धत्वं वा चतुष्टयमपि ब्रह्मण एव । त्वन्मते शास्त्रप्रतिपाद्यस्य शुद्धस्यावा-

---

+ श्रीमद्भाष्येति । तथा च भाष्यम्—न सांख्यपरिकल्पितमचेतनं प्रधानं जगतः कारणं शक्यं वेदान्तेष्वाश्रयितुम् । अशब्दं हि तत् । कथमशब्दत्वम् । ईक्षतेः, ईक्षितृत्वश्रवणात्कारणस्येति ।

च्यत्वात् । अवाच्ये च वृत्त्यन्तरायोगात् । न तु प्रधानस्य । सांख्य-मते तस्य वाच्यत्वात् । कारणत्वेनैव 'अजाम्' (श्वे० ४।५) इति श्रुतिसिद्धत्वाच्च । त्वयाऽपि त्रिगुणस्योपादानतया 'मायां तु प्रकृतिं विद्यात्' (श्वे० ४ । १० ) इति श्रुतिसिद्धत्वाङ्गीकारा-राच्च । त्रिगुणस्य पारमार्थिकत्वादावेव तव परं विवादः । सांख्यानुमानगम्यत्वपर्यवसितमशब्दत्वं च न वेदान्तवेद्यत्वा-भावसाधकम् । तथा सति तार्किकोत्प्रेक्षितानुमानगम्यत्वादीश्व-रस्यापि तथात्वापातात् । किंच त्वयाऽत्रोक्तस्य प्रधानशब्दत्व-स्यैव साधनायैवैतदध्यायस्य तुरीये पादेऽव्यक्ताजादिशब्दानां प्रधानपरत्वनिषेधेन सूक्ष्मशरीरादिपरत्वकथनपरमाद्याधिकरण-त्रयमित्युद्धोष्यते । तेनावगम्यते प्रधानस्य सर्वथा वेदाप्रतिपाद्य-त्वं तवानुमतमिति । [ तच्चाशक्यमित्युक्तम् ]। एतेन स्वप्रधान-तया वेदाप्रतिपाद्यत्वमशब्दत्वमिति निरस्तम् । एतदभिप्रेत्यैव भाष्ये न चाशब्दत्वमितरासिद्धमित्युक्तम् । अनुव्याख्याने च न ह्यशब्दत्वं प्रधानेऽङ्गीकरोत्यसाविति । किंचाऽऽत्मन ईक्षा-रूपस्य न स्वरूपेणेक्षितृत्वम् । अव्यक्तादिजडविशिष्टस्य तस्य तत्संभवेऽव्यक्तस्याप्यात्माविवेकेनाऽऽत्मविशिष्टस्य तत्स्यात् । 'तन्निष्ठस्य०' ( ब्र० सू० १ । १ । ७ ) इत्याद्युत्तरसूत्रविरो-धश्चेति दूषणमुक्तम् । तदप्यसत् । ईशपरतन्त्रस्याव्याकृतस्य तत्त्वज्ञाननाश्यस्य वैदिकशब्दवाच्यतया मन्मतसिद्धत्वेऽपि स्वातन्त्र्यतत्त्वज्ञानानिवर्त्यत्वादिधर्मविशिष्टस्य तदुपलक्षितस्य वा त्रिगुणात्मकतत्त्वस्य वैदिकशब्दवाच्यत्वासिद्ध्या त्वयाऽ-पीत्युक्तदोषानवकाशात् । परेण तादृशमवाच्यत्वं प्रधाने नाङ्गी-क्रियत इति परं प्रत्यसिद्धो हेतुरिति चेत् । अत एवाङ्गीकार-यिष्यते । प्रसाध्याङ्गकेनापि हेतुना न्यायप्रयोगस्य बहुधा दर्शनात् । ईक्षारूपस्याप्यात्मन ईक्षणाश्रयकल्पिताविद्यकभेदव-दुपहिताभिन्नत्वेनेक्षितृत्वमुक्तं प्राङ् न विस्मर्तव्यम् । अविद्या-विषयत्वोपाहितस्यापि सत्यतया शुद्धब्रह्मैक्यस्य प्रागुक्तत्वान्न तन्निष्ठस्य मोक्षोपदेशानुपपत्तिः । वाच्यवृत्त्या वैदिकशब्दप्र-तिपाद्यतापर्याप्त्यनधिकरणत्वरूपावाच्यतावाशालिनोऽपि ब्रह्मणो

लक्षणया वैदिकशब्दप्रतिपाद्यत्वमुपहितरूपेण वाच्यवृत्त्या तत्प्रतिपाद्यत्वं च संभवत्येवेति न तत्रोक्तमशब्दत्वम् । अवाच्यस्य लक्ष्यत्वं न संभवतीत्यत्र यद्यवाच्यत्वं वाच्यवृत्तिविषयान्योन्याभाववत्त्वं तदा ब्रह्मण्यसिद्धिः । तादृशोपहितान्योन्याभावशून्यत्वात् । यथाकथंचिद्वाच्यत्वोपहितभेदश्चोपहितशुद्धयोर्भेदाभेदमतेऽनैकान्तिकः । लक्ष्यतयाऽभिमते घटत्वोपहिते वाच्यत्वोपहितभेदस्य तन्मतेऽभ्युपगमादप्रयोजकश्च । विपक्षे बाधकाभावात् । ब्रह्मण्यवाच्यतासिद्धान्तश्च तन्मात्रविषयकज्ञाने वाच्यवृत्तेः साक्षादपेक्षाराहित्यमात्रेण । यद्वा शुद्धस्यावाच्यत्वमनौपाधिकवाच्यताराहित्यमेव । न च तदौपाधिकवाच्यत्वाभ्युपगमे विरुध्यत इति नाशब्दत्वं ब्रह्मण इति चतुष्टयमपि ब्रह्मण एवेति यदुक्तं तदसदेव ।

एतेन 'गौणश्चेन्नाऽऽत्मशब्दात्' (ब्र० सू० १ । १ । ६) इत्यत्राऽऽत्मशब्दवाच्यत्वं हेतुश्चेदसिद्धिः । तल्लक्ष्यत्वतत्प्रतिपाद्यत्वादिकं च प्रधानस्यापि । किंच किमसावात्मशब्दश्चेतनपरः स्वरूपपरो वा । नाऽऽद्यः । चेतनत्वस्य ज्ञातृतारूपत्वे शुद्धे ब्रह्मणि तदभावात् । विशिष्टे तत्संभवे तु प्रधानस्यापि तत्संभवात् । ज्ञानत्वरूपत्वे त्वात्मशब्दस्येक्षितृत्वं गौणमित्यत्रैव हेतुत्वेन गौणत्वाभावे हेतुत्वायोगात् । नान्त्यः । सर्वज्ञत्वासर्वज्ञत्वादिरूपविरुद्धांशत्यागेन चिद्रूपेण जीवैक्यवज्जडत्वादिविरुद्धांशत्यागेन सद्रूपेण प्रधानैक्यस्यापि संभवात् । 'तन्निष्ठस्य०' (ब्र० सू० १ । १ । ७) इति सूत्रेऽपि तच्छब्दार्थः शुद्धो विशिष्टो वा । नाऽऽद्यः । तस्येक्षितृत्वायोगात् । न द्वितीयः । विशिष्टनिष्ठस्य साक्षान्मोक्षायोगात् । पारम्पर्ये तस्य प्रधाननिष्ठेऽप्यबाधादित्यादिकं चन्द्रिकोक्तं दूषणं निरस्तम् । शुद्धब्रह्मणोऽप्युपहितात्मना वाच्यत्वाङ्गीकारादवाच्यत्वसिद्धान्तोपपत्तेरुक्तत्वात् । प्रधानस्याऽऽत्मशब्दलक्ष्यत्वप्रतिपाद्यत्वेऽपि जीवैक्याभावात् । आत्मशब्दादित्यनेनाऽऽत्मशब्दात्मतादात्म्ययोर्द्वयोरेव प्रधानव्यावर्तकताया अभिप्रेतत्वात् । तथा चोक्तमधिकरणमालायाम्— आत्मशब्दात्मतादात्म्ये प्रधानस्य विरो-

धिनीति । उपहितब्रह्मणीक्षितृत्वाद्युपपत्तेरुक्तत्वात् । तन्निष्ठस्याप्युपहितस्यैव तच्छब्देन परामर्शः । तन्निष्ठा च तदीयकेवलरूपसाक्षात्कारवत्त्वमिति न कोऽपि दोषः । नहि स्वतन्त्रप्रधानीयशुद्धरूपसाक्षात्कारस्य साक्षान्मोक्षान्वयित्वम् । 'नान्यः पन्था विद्यतेऽयनाय' (श्वे० ६ । १५) इत्यादिश्रुतिविरोधात् । प्रधानत्वविशिष्टेन तदुपलक्षितेन वा न जीवैक्यं संभवति । जडस्वभावस्य प्रधानस्य जाड्यहानायोगात् । तद्धाने वा चेतनस्वभावतैव स्यात् । चैतन्यहाने चाऽऽत्मस्वरूपस्य मोक्षस्यापुरुषार्थत्वापत्तिः । परमार्थतः प्रधानस्य ज्ञानानन्दादिरूपत्वे भाषान्तरेण परं ब्रह्मैव सद्विद्यादिनिखिलवेदान्तवेद्यमित्यायातमिति दिक् ।

यत्तु पूर्वपक्षे गौणेक्षणप्रायपाठादाद्यमीक्षणं गौणमिति शङ्का नोपपन्ना । तेजोबन्नानामपि देवतात्वेन चेतनत्वादिति परोक्तदूषणम् । तदप्यसत् । पूर्वतन्त्रे शब्दस्यापि देवतात्वाभ्युपगमेन देवताशब्दस्य न चेतनैकत्राचित्वमिति तदभिप्रायात् ।

यदप्यात्मानात्मविवेकस्य मोक्षहेतुत्वादनात्मज्ञानमपि मोक्षहेतुरिति जयतीर्थोक्तम् । तदप्यसत् । 'तमेव' (आथ० उ० ४) इति श्रुत्या तदन्याविषयकसाक्षात्कारस्यैव मोक्षसाधनत्वोक्तेः । 'तमेवैकं जानथाऽऽत्मानमन्या वाचो विमुञ्चथ' (आथ० उ० ४) इत्यादिकाः श्रुतयोऽप्यत्र द्रष्टव्याः । एतेन 'हेयत्वावचनादित्यप्यसंगतम् । सांख्येनाद्वैतज्ञानार्थं प्रधानोपदेशानभ्युपगमात् । हेयत्वावचनमन्नमयादावनैकान्तिकं च । उत्तरोत्तरब्रह्मवचनं तत्र ज्ञापकमिति चेत् । अत्रापि तथाविधज्ञापकसौलभ्यात् । प्रतिज्ञाविरोधस्तु ब्रह्मवाद एव । प्रधानस्य महदादिविशेषान्तसर्वकार्यात्मकत्वात् । भोक्तृवर्गो न प्रधानात्मक इति चेत् । न । ब्रह्मणो जडात्मत्वसंसार्यात्मत्वयोर्द्वयोरप्यभावात् ।

स्वाप्ययोऽपि ब्रह्मण्यासिद्धः । स्वापकाले जीवानां ब्रह्मैक्याभावात् । परिष्वङ्गस्य प्रधानाव्यावर्तकत्वाच्च । ब्रह्मविषयं गतिसामान्यं परस्यासिद्धमेव । ईक्षणादिना तज्ज्ञापने प्रथमसूत्रेणैव गतार्थता । अत एव 'श्रुतत्वादित्यसिद्धं गतार्थं च गतिसामा-

न्येनेति ' तदुक्तं निरभिप्रायमेव । शुद्धात्मप्रतिपत्तये स्थूलारुन्धती-न्यायेन प्रधानोपदेश इति परो यद्याशङ्केत तदा हेयत्वावचनं तन्निरासायोपन्यस्यत इत्युक्तौ संदर्भविरोधाभावात् । अन्यथाऽद्वैतिभिर्गौणस्याऽऽत्मनो मोक्षहेतुज्ञानविषयत्वानभ्युपगमेन गौणश्चेदिति शङ्कायास्तन्निरासस्य च तत्राप्यसंगतेः । ' जगद्वाचित्वात् ' ( ब्र० सू० १ । ४ । १६ ) ' वाक्यान्वयात् ' ( ब्र० सू० १ । ४ । १९ ) इत्यधिकरणयोर्यत्नेन जीवस्य मोक्षहेतुज्ञानविषयतायास्तैर्निराकृतत्वाज्जैवं तात्त्विकं रूपं तु ब्रह्मैवेति । अत्रापि तथैव ज्ञापकसौलभ्यादिति तु स्वशिष्यान्प्रत्येव वक्तुमुचितम् । परं प्रति तादृशज्ञापकमप्रदर्श्य वक्तुमनौचित्यस्य स्पष्टत्वात् ।

यत्त्वत्रापि चरमदृष्टान्तेऽभिहिते ' तद्धास्य विजिज्ञौ ' इति ब्रह्मज्ञानवचनमेव पूर्वोक्तस्याब्रह्मत्वज्ञापकं सुलभमिति जयतीर्थाभिप्रायवर्णनम् । तदयुक्तम् । चरमदृष्टान्तेऽपि ' स आत्मा तत्त्वमसि ' ( छा० ६ । ८ । ७ ) इति पूर्वोक्तस्यैवाभिधानेन तद्धानासूचनात् । प्रतिज्ञाविरोधस्तु न ब्रह्मवादे । ब्रह्मण एव निखिलजगत्तात्त्विकरूपतया तस्मिन्विज्ञाते जगतस्तत्त्वतो विज्ञातत्वस्य विज्ञातस्वीयतात्त्विकरूपकत्वरूपस्य निरन्तरायत्तत्वात् । यथा चैतत्तथाऽऽरम्भणाधिकरणे निरूपयिष्यते ।

स्वाप्ययोऽपि प्रागुपपन्नः । स्थूलावस्थाप्रहाणेन सूक्ष्मरूपतयाऽवस्थानं हि द्रव्यस्य लय इत्युच्यते । भवति च जीवस्यापि जाग्रद्दशायां स्थूलरूपेण परिणतमनोरूपोपाधिवशाद्विश्वात्मना स्थितस्य स्वापदशायां तत्प्रहाणेन स्वरूपे ब्रह्मणि प्राज्ञरूपेणावस्थानम् । ' गतिसामान्यात् ' ( ब्र० सू० १ । १ । १० ) इत्यस्य वैयर्थ्यं तु न शक्यशङ्कम् । प्रसिद्धशाखास्थकारणवाक्यानाम् ' आत्मादिश्रुतीक्षणादि 'लिङ्गैरेतदध्याये वक्ष्यमाणन्यायैश्च प्रधानपरत्वस्य वक्तुमशक्यत्वेऽप्यप्रसिद्धशाखासु केषांचिद्वाक्यानामुक्तश्रुतिलिङ्गशून्यानामचेतनप्रधानादिश्रुतिलिङ्गवतां च संभावितत्वेन ततः प्रधानस्यापि कारणतासिद्धिः कुतो न स्यादिति शङ्कायां तदनुपपद्यते । क्वचिदद्वैतब्रह्मणो

जगत्कारणतां क्वचिच्च स्वतन्त्रप्रधानकारणतां चाभिदधतः शास्त्र-स्य विप्रतिषेधेनाप्रामाण्यापाताद् । न चाप्रसिद्धसंभावनामात्रेण प्रसिद्धस्यान्यथानयनं युक्तमिति प्रयोजनस्यातिस्फुटत्वात् । भाष्यमप्येतमेवार्थमनुगृह्णाति । भगवता भाष्यकारेण—यदि तार्किकसमय इव वेदान्तेष्वपि विभिन्नकारणावगतिरभविष्य-दित्यादिना प्रसिद्धशाखासु न क्वापि स्वतन्त्रप्रधानकारणतोक्ति-रित्युपपाद्य मद्वच प्रामाण्यकारणमेतद्वेदान्तवाक्यानामित्यादिना प्रसिद्धासु स्वतन्त्रप्रधानकारणतोक्तिसंभावना निरस्ता । गति-सामान्यस्य प्रामाण्यव्यापकत्वात्तद्विप्रतिषेधेऽप्रामाण्यापत्तेरिति सूच-नायैव हि गतिसामान्यस्य प्रामाण्यव्यापकतारूपं प्रामाण्यकारण-त्वमुक्तमिति नापि श्रुतत्वाच्चेत्यस्य वैयर्थ्यम् । संभाव्येतान्य-साधारणश्रुत्याद्यभावात्तद्विद्यायाः प्रधानादिपरत्वम् । श्वेताश्व-तरनारायणाद्युपनिषत्स्वीशाननारायणादिशब्दानामुपहिते ब्रह्म-णि रूढानामात्मादिश्रुतिवदनाशङ्क्यान्यपरताकानां तथावि-धानां कालकालत्वादिलिङ्गानां च सत्त्वेन सर्वथा तस्य शङ्-कितुमशक्यत्वादिति कैमुतिकन्यायेनाचेतनकारणतानिरासार्थ-त्वात् ।

तमीशानं वरदं देवमीड्यं निचाय्येमं शान्तिमत्यन्तमेति ।
क्षरं प्रधानममृताक्षरं हरः क्षराक्षरावीशते देव एकः ॥

इति मन्त्रोपात्तस्यैव परब्रह्मणः 'सकारणम्' (श्वे० ६ । ९) इति मन्त्रे प्रतिपादनात् । 'एको ह वै नारायण आसीत्' (महाना०) इत्यत्र हि नारायणशब्दः संज्ञायां निष्पन्नः श्रूयते । किंच जगत्कारणं परिणामि प्रकृत्याख्यम् । मूलका-रणस्य श्रुत्यन्तरे चेतनेशितव्यत्वश्रवणादपि न स्वतन्त्रप्रधानस्य जगत्कारणत्वमित्यप्यत्र विवक्षितम् । अत एव भाष्ये स्वश-ब्देनैव सर्वज्ञ ईश्वरो जगत्कारणमित्यत्रेश्वरशब्दः संकोचका-भावेन निखिलचिदचिदीश्वरत्वबोधक उपात्तः । एवं प्रधानका-रणतानिरासवज्जन्मादिसूत्रे सामान्यतो निरस्तं जीवस्य जग-त्कारणत्वमपि प्रधानकारणतानिरासप्रसङ्गे लक्षणदोषतासामा-न्यान्निरसनीयमित्येतदर्थमप्येतत्सूत्रम् । अत एव भगवता भाष्य-

कारेण 'सकारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' (श्वे० ६ । ९) इति मन्त्रांशः 'तमीशानं ज्ञः कालकालः क्षराक्षरावीशते' इत्यादिकं सर्वज्ञेश्वरं प्रकृत्येत्यनेनाभिधायोदाहृतमिति न किंचिदेतत् ।

आनन्दतीर्थीयास्तु—अस्मिन्नधिकरणे पूर्वसूत्रस्थशब्दार्थस्य वचनवृत्त्या कृत्स्नवैदिकशब्दप्रतिपाद्यत्वस्य समर्थनाच्छास्त्रेण पूर्वाधिकरणेन च संगतिः । तत्र 'अशब्दमस्पर्शम्' (आथ० उ० ३ । १५) 'यतो वाचो निवर्तन्ते' (तै० २ । ४) इति श्रुत्या ब्रह्मणो वाच्यत्वनिषेधात्कथमुक्तलक्षणः समन्वय इति प्राप्ते 'स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते' (प्र० ५ । ५) इत्यादौ ब्रह्मण ईक्षणकर्मत्वश्रवणादीक्षणस्य प्रत्यक्षादिना संभवेऽपि ब्रह्मण औपनिषदत्वात्प्रत्यक्षाद्यवेद्यतया श्रुतेक्षणीयत्वान्यथानुपपत्त्या तस्य वाच्यत्वमावश्यकम् । तथा च तद्ब्रह्म नाशब्दमवाच्यं न, किंतु वाच्यमीक्षणकर्मत्वादिति सूत्रार्थः । उक्तश्रुतावावाच्यत्वव्यपदेशश्च साकल्येनागोचरताविषयः, अप्रसिद्धत्वविषयो वा । स प्राणोपासको जीवो जीवोत्तमाद्धिरण्यगर्भात्तदुपदेशादित्यर्थः । परमं पुरुषं पश्यति परोक्षतया ब्रह्म विज्ञायापरोक्षतो जानीयादिति ब्रह्मण ईक्षणकर्मत्वबोधकोक्तश्रुतेरर्थः । न च गौण आत्मा जीव एवोक्तश्रुतावीक्षणीयत्वेनोक्त इति शङ्क्यम् । निर्गुणवाच्यात्मशब्दस्य 'आत्मन्येवाऽऽत्मानं पश्येत्' (बृ० ६ । ४ । २३) इत्यत्रेक्षणीये श्रवणात् । आत्मशब्दस्य निर्गुणवाचिता च 'द्वे वाव ब्रह्मणो रूपे आत्मा चैवानात्मा च तत्र य आत्मा स नित्यः शुद्धः केवलो निर्गुणश्च, अथ योऽनीदृशः स नाऽऽत्मा' इति [1]तवल्कारब्राह्मणसिद्धा । नापि गौणात्मनिष्ठस्य मोक्षोपदेशो युक्तः ।

यस्यानुवित्तः प्रतिबुद्ध आत्माऽस्मिन्संदोघे गहने प्रविष्टः ।
स विश्वकृत्स हि सर्वस्य कर्ता तस्य लोकः स उ लोक एव ॥



[1] तलवकार इति पाठान्तरम् ।

इति श्रुत्या निर्गुणात्मज्ञानादेव मोक्षोक्तेः । निर्गुणत्वं च प्राकृतसत्त्वादिगुणशून्यत्वम् । सर्वकर्तृत्वात्स वायु कर्ता सर्वज्ञोऽस्मिन्देहगुहास्थाने प्रविष्ट आत्मा येनोपासकेन ज्ञातो भवति तस्योपासकस्य स एव विष्णुलोको भवतीत्युक्तश्रुतेरर्थः । तथा चोक्तश्रुतिबोधितगुणनिवृत्तिरूपमोक्षस्य गुणवद्गौणात्मविज्ञानादुपदेशो न युक्त इति भावः । 'तमेवैकं जानथाऽऽत्मानम्' (आथ० उ०२ ।२।५) इति श्रुतावस्याऽऽत्मनो हेयत्ववचनाच्च नाऽऽत्मशब्दो गौणात्मपरः । तथा सति तस्य हेयत्वप्रसङ्गात् । 'अन्या वाचो विमुञ्चथ' ( आथ० २ । २। ५ ) इति गौणात्मनो हेयत्वोक्तेः । 'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते' ( बृ०५ । ५ । १ ) इति श्रुत्या निर्गुणस्य पूर्णस्यैवाऽऽत्मनः स्वात्मनि लयप्रतिपादनाच्च निर्गुणस्यैवाऽऽत्मशब्दवाच्यत्वम् । अदो मूलरूपं पूर्णमिदमवताररूपं च पूर्णं सृष्टिकाले पूर्णान्मूलरूपादुद्रिच्यते, प्रलये च पूर्णस्य स्वस्य पूर्णमवताररूपं स्वीकृत्यैकीभूय मूलरूपमन्यत्रालीनं स्वयमवशिष्यत इत्युक्तश्रुतेरर्थः। नन्वस्त्वेवं निर्गुणस्य वाच्यत्वोपपत्त्या युक्तं तस्य कारणत्वेन शास्त्रयोनित्वम् । तच्च प्रसिद्धशाखासूपक्रमादिविचारैरस्तु ब्रह्मणः कारणत्वेन प्रतिपाद्यत्वम् । अप्रसिद्धशाखासु पुनरन्योऽपि कारणतयोच्यताम् । तासामानन्त्यादिति शङ्क्यम् । 'सर्वे वेदा युक्तयः सप्रमाणा ब्राह्मज्ञानं परमं त्वेकमेव प्रकाशयन्ते न विरोधः कुतश्चित्' इत्यादिश्रुतावेव गतिसामान्योक्तेः ।

एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वलोकाधिवासः साक्षी चेता केवलो निर्गुणश्च ॥
( श्वे० ६ । ११ )

इति श्रुतौ निर्गुणस्य श्रुतत्वाच्च ब्रह्म नावाच्यं किंतु वाच्यम् । एकः प्रधानः सर्वभूतेषु गुप्ततयाऽवस्थितः, न केवलं भूतेषु सर्वव्यापी च न सर्वेषु भूतेषु स्थितिमात्रं सर्वभूतान्तर्यामी चाध्यक्षोऽधिपतिः सर्वभूतानामाश्रयः सर्वं साक्षादीक्षत इति सर्वसाक्षी चेता ज्ञानरूपः केवलो जडामिश्रः, निर्गुणः

सत्त्वादिगुणहीन इति श्रुतेरर्थ इति रीत्याऽधिकरणयोजनामाहुः ।

तत्रेदं चिन्त्यते—यतो जातिगुणादिप्रवृत्तिनिमित्तशून्यत्वात्केवल आत्मा शब्दावाच्य इति ह्यद्वैतिभिर्ब्रह्मादिभिरुच्यते, न तु गुणवतोऽपि तथात्वम् । तथा चोक्तम्—

> दृष्टा गुणक्रियाजातिसंबन्धाः शब्दहेतवः ।
> नाऽऽत्मन्यन्यतमो ह्येषां तेनाऽऽत्मा नाभिधीयते ॥ इति ।

त्वया तु जिज्ञास्यत्वेन प्रतिज्ञातं गुणपूर्णं ब्रह्म । गुणपूर्तिश्च जन्मादिसूत्रेण व्यवस्थापिता । तत्र शास्त्रयोनित्वसूत्रेण शास्त्रं प्रमाणमुक्तं शिवादावतिव्याप्तिश्च निराकृता । निर्धर्मकस्याऽऽत्मनो वार्ताऽपि न त्वया प्रस्तुता । प्रत्युत तस्याऽऽद्यसूत्र एव जिज्ञास्यत्वासंभवो वर्णितः । तदिदं सर्वं चन्द्रिकायामनूदितमस्मिन्नेवाधिकरणे । प्रथमतः—आद्यसूत्रे ब्रह्मशब्देन जीवादिव्यावर्तकगुणपूर्तिं सूचयित्वा द्वितीये तस्य गुणपूर्तिसिद्धये जीवपरतानिरासाय कारणता जिज्ञास्यब्रह्मलक्षणत्वेनोक्ता, तृतीये गुणपूर्तिकारणतयोरतिव्याप्तिपरिहाराय तत्र शास्त्रं प्रमाणीकृत्य तयोश्चतुर्थे विष्णुमात्रनिष्ठत्वाय शास्त्रस्यान्यपरतां निषिध्य सर्वशास्त्रस्य सर्वशब्दप्रवृत्तिनिमित्तगुणपूर्तिसिद्धये वचनव्यक्त्या सर्वशास्त्रतात्पर्यविषयतां च संशब्दार्थस्य वाच्यत्वस्य कार्त्स्न्यस्य चेहाऽऽक्षिप्य समाधानादनन्तरसंगतिरिति । एवं सति कथमकस्मात्सिद्धान्त्यनभिमतार्थेऽवाच्यत्वशङ्कया समन्वय आक्षिप्यत इत्युक्तं सर्वमयुक्तमिति । ननु जिज्ञास्यस्यावाच्यत्वात्, न हि सविशेषत्वे 'अशब्दम्' ( आथ० उ० ३।१५ ) इत्यादिका श्रुतिरुपपद्यत इत्याक्षेपसंगतिरिति चेत् । न । तथा सति निर्विशेषत्वनिषेध एव ब्रह्मणि व्यवस्थापनीयः । न तु तदुपजीवकावाच्यत्वादिनिषेधः । सन्ति च 'अशब्दमस्पर्शम् ।' ( आथ० उ० ३।१५ ) 'यतो वाचो निवर्तन्ते' ( तै० २ । ४ ) इत्यवाच्यत्वप्रतिपाद(दि)का इव 'साक्षी चेता केवलो निर्गुणश्च' (श्वे० ६ । ११) इत्यादिकाः श्रुतयो निर्विशेषत्वबोधकतया संभाव्यमानाः । तुल्यश्च निर्विशेषे विचाराक्षेपः । तत्र ज्ञाताज्ञातरूपद्वयाभावात् ।

किंच त्वत्पूर्वपक्षी शास्त्रं जगत्कारणत्वेन किंचित्प्रतिपादयतीति मन्यते न वा। आद्येऽपि 'यतो वाचो निवर्तन्ते' इत्यादिश्रुतयस्तत्परा इति मन्यत आहोस्विदन्यपरा इति मन्यते। तत्र नाऽऽद्य आद्यः। परस्परविरोधेन श्रुत्योरन्यतराप्रामाण्यप्रसङ्गात्। प्रवृत्तिनिमित्तसद्भावेऽवाच्यत्वशङ्कया अनुदयात्। नाऽऽद्ये द्वितीयः। कारणादन्यस्या×वाच्यत्वेऽपि कारणजिज्ञासासमन्वयादेराक्षेपायोगात्। न द्वितीयः। 'यतो वै' (तै०३।१।१) इत्यादिप्रत्यक्षश्रुतिविरोधात्। यदि च शास्त्रप्रामाण्यमपि पूर्वपक्षिणो नानुमतम्, किंत्वशब्दत्वश्रुत्यादेरे कारणत्वानुपपत्तिः, कारणत्वश्रुत्यादेरशब्दत्वानुपपत्तिरिति कथंचित्सिद्धान्ताक्षेप एव पूर्वपक्षशरीरमभिमतमित्युच्यते तदाऽपि शास्त्रारम्भस्य शास्त्रप्रामाण्योपजीव्यत्वात्तद्विरोधेन पूर्वपक्षानौचित्यं दुर्वारम्। अभिहितं चैतच्छास्त्रयोनित्वाधिकरणे त्वदीयतदधिकरणीयपूर्वपक्षानौचित्यप्रतिपादनप्रसङ्गविस्तरेणास्माभिः। तथोक्तावपीक्षणीयत्वेन तादृशपूर्वपक्षनिरासासंभवश्च दुर्वारः। ईक्षणीयत्वश्रुत्यादेरादरेऽशब्दत्वानुपपत्तितादवस्थ्यात्। ईक्षणीयत्वं बलवत्, बलवता च दुर्बलमशब्दत्वमन्यथा नेयमित्यभिप्राय इति चेत्। बलवताऽशब्दत्वेन दुर्बलमीक्षणीयत्वं लक्षणादिनाऽन्यथा नेयमित्यस्यापि वक्तुं शक्यत्वात्। किंचेक्षणीयत्वमेव बलवदिति वदता किं तद्बलमिति वक्तव्यम्। वाच्यत्वाविनाभाव इति चेत्। उक्तप्रकारेणेक्षणीयत्वादेरन्यथाऽप्युपपत्तेस्तत्र वाच्यत्वाविनाभावानिर्णयात्। कारणत्वादेरपि वाच्यत्वाविनाभावेन 'यतो वै' (तै० ३।१।१) इत्यादिश्रुतिप्रमाणकेनावश्यमुपन्यस्येन बलवता स्वोत्थानसमय एवावाच्यत्वशङ्कानिरासेन काशब्दमित्यवाच्यत्वशङ्कया कारणत्वप्रतिक्षेपावकाशः। नहि कारणमप्यवाच्यमिति शङ्कितुं शक्यम्। तथा सत्यवाच्यत्वेन कार-

---

× अन्यस्यावाच्यत्वेऽपीति। 'यतो वाचो निवर्तन्ते' इतिश्रुतेर्जगत्कारणभिन्नपरत्वेन कारणादन्यस्यावाच्यत्वेऽपीत्यर्थः। अन्यस्माद्वाचो निवर्तनात्तस्यावाच्यत्वं सिध्यतीति भावः।

णत्वाक्षेपायोगात् । उक्तं च तत्त्वप्रकाशिकायां पूर्वपक्षावसरे— न ब्रह्मणः शास्त्रमुख्यार्थत्वमुपपद्यते । यतस्तत् 'यतो वाचः' ( तै० २ । ४ ) इति श्रुतेः शब्दावाच्यम् । नह्यवाच्यस्य शास्त्रमुख्यार्थता संभवति । अतो न कारणत्वं शास्त्रोक्तं तस्येति भाव इति । कारणत्वस्योक्तरीत्या वाच्यत्वाविनाभावे स्थिते शास्त्रमुख्यार्थस्यैव कारणताध्रौव्यात् ।

अथोच्येतामुख्यार्थस्यापि कारणत्वमस्तु व्यभिचारशङ्कायामविनाभावानिर्णयान्न कारणत्वेनावाच्यत्वशङ्कानिरासः । ईक्षणीयत्वस्य वाच्यत्वव्यभिचारित्वशङ्का न संभवति । विपक्षे हेतूच्छित्तिप्रसङ्गरूपप्रतिकूलतर्कसंभवादिति शास्त्रमुख्यार्थस्य न कारणतासंभव इति समन्वयाद्याक्षेपो निराबाध इति । तदपि न । यद्यदीक्षणीयं तत्तद्वाच्यमिति सहचारदर्शनवत् 'यद्यत्कारणं तत्तद्वाच्यम्' इत्यदृष्टव्यभिचारे सहचारदर्शने सतीक्षणीयत्वे वाच्यत्वाविनाभावो निर्णीयते न कारणत्व इत्यस्य वक्तुमशक्यत्वात् । ननूक्तस्तर्कसद्भावः । सत्यमुक्तः, विमृश्य तु नोक्तः । अवाच्यत्वोपगम ईक्षणीयत्वोच्छेदहेत्वभावात् । व्याप्यव्यापकभावस्याद्याप्यसिद्धेः । नन्वौपनिषदस्य ब्रह्मण ईक्षणीयत्वं न प्रत्यक्षादिमानान्तरप्राप्तम् । शब्दश्च शक्त्यभावान्न प्रत्यायनक्षमः । तथा चावाच्यत्वोपगमे सामग्र्यभावपर्यवसानात्तेन तत्कार्यमीक्षणमुच्छिद्यत इत्यस्ति तर्को न तथा कारणत्वपक्ष इति चेत् । न । अवाच्यत्वस्य परैः प्रवृत्तिनिमित्ताभावप्रयुक्तस्यैवाभ्युपगमात् । सति कारणत्वेऽवाच्यत्वाभ्युपगमायोगाद्विपक्षे कारणत्वोच्छित्तिरूपतर्कस्य तत्रापि साम्राज्यात् । नहि कारणमवाच्यमिति कश्चिदभ्युपैति । तस्मात्कारणतया प्रतिपन्ने ब्रह्मण्यवाच्यत्वमशक्यशङ्कम् । परमुक्तश्रुतेर्गतिरेव वाच्येत्यवशिष्यते । सा च सूत्रकृता नैव सूत्रितेति यदवश्यं सूत्रणीयं तन्न सूत्रितं यस्यासूत्रणेऽपि प्रकृतनिर्वाहस्तत्सूत्रितमिति स्पष्टीकृतं परेण स्वस्यापूर्वमीमांसकत्वम् । भगवतो ब्रह्मणोऽनन्तगुणत्वेन साकल्येनागोचरत्वरूपाप्रसिद्धत्वपरतयोक्तश्रुतेर्गतिरिति परोक्तं चिन्त्यमेव । अशब्दमित्यत्र समवायेन वाच्यत्वसंबन्धेन

या शब्दशून्यमशब्दपदार्थः । तथा च श्रूयमाणशब्दवाच्यत्वरूपपर्यवसितार्थे बाधकाभावेन तं परित्यज्योक्ताश्रुतार्थपरत्वकल्पनाया अन्याय्यत्वात् । न चास्पर्शमरूपमित्यादौ समवायेन स्पर्शरूपाद्यभावस्यैव प्रतीतेस्तत्समभिव्याहृतादशब्दमित्यस्मात्समवायेन शब्दशून्यमेवाशब्दशब्दार्थः; न तु वाच्यतासंबन्धेन शब्दशून्यं शब्दावाच्यत्वपर्यवसितमिति शङ्क्यम् । अस्पर्शमित्यादौ वाच्यत्वसंबन्धेन स्पर्शवत्त्वाद्यप्रसक्त्या समवायेनैव वाच्यतासंबन्धेन स्पर्शाद्यनिषेधेऽपि येन येन संबन्धेन यत्र यद्यत्प्रसक्तं तेन तेन संबन्धेन तत्र तत्तन्निषेधस्याऽऽकाङ्क्षितत्वेनोपहितरूपेण शुद्धब्रह्मणि समवायेनैव वाच्यतयाऽपि शब्दवत्त्वप्रसक्त्या तेन संबन्धेन शब्दाभावस्यापि विनिगमकाभावेनाशब्दशब्दार्थतायाः सुवचत्वात् । न चाशब्दमिति शब्दबोध्ये ब्रह्मणि शब्दनिषेधे व्याघात इति शङ्क्यम् । शक्त्या शब्दनिषेधेऽपि लक्षणयाऽवाच्यशब्दबोध्यत्ववदशब्दशब्दबोध्यत्वाङ्गीकारेण व्याघाताभावात् । नन्ववाच्यशब्देनोच्यते चेद्वाच्यत्वप्रसङ्गः; लक्ष्यते चेदवाच्यपदस्य समासतयाऽवयवशक्त्यतिरिक्तत्तच्छक्तेरभावेन तन्मुख्यार्थाभावान्न लक्षणा संभवतीति चेत् । न । वाच्यभेदरूपतन्मुख्यार्थाभावेऽपि नञ्समभिव्याहृतवाच्यशब्देन वाच्यभेदोपहितब्रह्मोपस्थित्या तद्द्वाराऽवाच्यशब्दस्य शुद्धस्वरूपे लक्षणयैव पर्यवसानात् । नहि स्वशक्यसंबन्ध एव लक्षणा । अर्थवादवाक्येषु तदसंभवात् । किंतु स्वबोध्यसंबन्ध एव । तथा सत्यवाच्यपदबोध्यब्रह्मस्वरूपवाच्यभेदोपहितसंबन्धस्य शुद्धब्रह्मण्यपि सत्त्वात्तल्लक्ष्यत्वोपपत्तिः । न च वाच्यभेदोपहितं नावाच्यशब्दप्रतिपाद्यम् । तस्य तदादिपदवाच्यत्वादिति शङ्क्यम् । तदादिशब्दस्य बुद्धिविषयतावच्छेदकत्वोपलक्षितघटत्वादिविशिष्ट एव शक्तत्वात् । वाच्यभेदस्वरूपस्यापि ब्रह्मणो वाच्यभेदत्वविशिष्टरूपेणावाच्यत्वोपपत्तेः । एवं निर्विशेषपदेऽपि बोध्यम् । वाचकाखण्डगङ्गादिपदेष्वेव मुख्यार्थस्मृतेरेव लक्ष्यार्थस्मारकत्वात्तेष्वेव लक्षणायां मुख्यार्थावश्यंभावो न समासादिपदेष्वपीत्यादिकमाकरे स्पष्टम् ।

यत्तु चन्द्रिकायाम्—अशब्दमिति श्रुतावशब्दमिति शब्दवाच्यताऽपि निषिध्यते चेत्। गङ्गाशब्दावाच्यस्य गङ्गात्वाभाववदशब्दशब्दावाच्यस्याशब्दत्वाभावः स्यात्। न निषिध्यते चेत्। अशब्दमिति शब्दवाच्यं स्यादिति 'अशब्दम्' (आथ०उ० ३।१५) इति श्रुतेरवाच्यत्वरूपशून्यप्रमाणार्थपरत्वे बाधकमुक्तम्। तदसत्। गङ्गात्वरूपप्रवृत्तिनिमित्ताभाववति तीरादौ गङ्गाशब्दावाच्ये बाधकाभावेनागङ्गात्वेऽपि शब्दवाच्यत्वत्वावच्छिन्नप्रतियोगिताकशब्दवाच्यत्वसामान्याभावप्रवृत्तिनिमित्तकस्य स्ववाच्यत्वाभावमपि निमित्ततयोपजीव्य प्रवर्तमानस्याशब्दमिति शब्दस्यावाच्य उपजीव्यविरोधरूपबाधकसत्त्वादवाच्यत्वरूपाशब्दत्वाभावापादनासंभवात्। पटपदावाच्यस्य च्छिद्रेतरघटस्य घटत्वाभावादर्शनेन च्छत्रिणो गच्छन्तीत्यादावेकसार्थगन्तृत्वावच्छिन्नस्य च्छत्रिपदावाच्यस्य च्छत्रित्वाभावादर्शनेन व्यभिचाराच्च तत्पदावाच्यस्य तत्पदप्रवृत्तिनिमित्ताभाववत्त्वमिति नियमस्यासिद्धेश्च। नापि साकल्येनागोचरत्वपरतयोक्तश्रुत्युपपत्तिः सुवचा। ब्रह्मणोऽनन्तगुणवत्त्वेऽपि सकलगुणवदनन्तगुणवदिति वाग्विषयत्वानपायात्। विशिष्यसकलगुणवत्त्वेन वागविषयत्वमेव साकल्येनागोचरत्वमित्यपि विशिष्येत्यस्यार्थविचारेण शिथिलमेव। यतो विशिष्येति स्ववृत्तिगुणनिष्ठसकलविशेषवद्गुणवत्त्वेनेत्यर्थकं चेत्तथा सति तेनैव शब्देन बोधनादुक्तानुपपत्तिर्दुर्वारैव। स्ववृत्तिगुणनिष्ठयावद्विशेषनिष्ठानवच्छिन्नप्रकारताशालिबोधाविषयत्वरूपमियत्तापरिच्छेदकवागविषयत्वमेव तदित्यपि न सुवचम्। तस्य जीवादिसाधारण्यात्। नहि जीवगताः सकला गुणा अपि स्वेतरतत्तद्गुणव्यावृत्तिलक्षणा विशिष्य केनापि वाचा प्रतिपादयितुं शक्याः। तथाऽपि संकुचितार्थत्वं दुर्वारं 'निवर्तन्ते' इतिपदास्वारस्यं च परमते। यतो ग्रामं गन्तुं प्रवृत्तो हि कतिपयमध्वानं कतिचित्पदानि गत्वा वा निवृत्तो गमनान्निवृत्त इति व्यपदिश्यते न तु सर्वथैवाप्रवृत्तः। नहीयत्तापरिच्छेदकवाचां प्रवृत्तिस्तव मते कथमपि वक्तुं शक्यते। मन्मते तु लक्षणया प्रवृत्तानां सक-

लवाचां शक्तिप्रयोजकप्रवृत्तिनिमित्तधर्माद्यभावेन शक्या निवृ-त्तिरुच्यते । यद्वा—उपहितरूपेण ब्रह्मबोधने शक्त्या प्रवृत्तानां सकलवाचां शुद्धस्वरूपेण शक्त्या निवृत्तिरुच्यत इति निवर्तन्त इति स्वरसम् । न च तर्हि शुद्धबोधो न स्यादिति वाच्यम् । लक्षणयैव तद्बोधोपपत्तेः । न चानेकपदामुख्यार्थत्वस्यानौचि-त्येन निवर्तन्त इत्येकपदामुख्यार्थत्वमेव युक्तम् । ब्रह्मणो निर्ध-र्मकतया तत्र शक्त्यभावेन लक्षणयैव शुद्धबोधस्य वक्तव्यत्वेन न्यायप्राप्तार्थानौचित्याभावेन बहुत्वस्याप्रयोजकत्वात् । अत एव विधिवाक्यस्थयागादिप्राशस्त्यार्थं ततोऽधिकतरार्थवाक्यानां लक्षणामभ्युपगच्छन्ति न्यायविदः । एतेनैव ब्रह्मणोऽवाच्यत्वे 'सर्वे वेदा यत्पदमामनन्ति' (का० १ । १ । ५२) 'अथ कस्मादुच्यते ब्रह्मेति तत्सत्यमित्याचक्षते तस्मादुच्यते परं ब्रह्मेति (अथर्वशिरःश्रु०) । 'वचसां वाच्यमुत्तमम् । ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' । इति श्रुति-स्मृतिविरोधोऽपि परोक्तो निरस्तः । तादृशश्रुतिस्मृतिषु तत्तच्छब्दबोध्यत्वमात्रेणोपहितरूपेण वा शुद्धस्य ब्रह्मणो वाच्य-त्वाभिलापो न शक्यत्वाभिप्रायेणेति विरोधाभावात् । न च ब्रह्मणो निर्धर्मकत्वे ब्रह्मादिपदलक्ष्यत्वं तस्मिंश्च सति निर्धर्मक-त्वमित्यन्योन्याश्रयश्चन्द्रिकायुक्तः साधुः । निर्विशेषवाक्येन 'नेति न' इत्यनेनैव प्रवृत्तिनिमित्ताभावस्य सिद्धत्वात् ।

यत्तु निर्विशेषवाक्यं न निर्धर्मकब्रह्मपरम् । निर्विशेषत्वरू-पधर्मबोधकत्वात् । यदि च निर्विशेषत्वरूपधर्मनिषेधोऽप्यनेनै-वेत्युच्यते, तर्हि मूकोऽहमिति वाक्यतुल्यता । मूकोऽहमितीयं वच-नक्रिया मूकोऽहमित्यनेनैव निषिध्यत इति तत्रापि वक्तुं शक्य-त्वादिति परकीयग्रन्थ उक्तम् । तदपि न सत् । निर्विशेषवा-क्यस्य विशेषाभावसाधारणविशेषत्वरूपसामान्यधर्मेण निषे-धबोधकत्वाद्विशेषाभावरूपविशेषे तात्पर्यासंभवात्तदुपलक्षिताख-ण्डब्रह्मण्येव तात्पर्यम् । मूकोऽहमित्यत्र तु यद्यपि मूकशब्देन वक्तृशून्यं बोध्यते तादृशशब्दोच्चारणेन चार्थादवक्तृत्वाभावो बोध्यते तथाऽपि वक्तृत्वतदभावसाधारणरूपेण तदुभयनिषेधो

न ताभ्यां बोध्यते । अतो वक्तृत्वाभावोपलक्षितस्वरूपे तात्पर्यकल्पकाभावाद्व्याघात एवेति तत्साम्यापादनस्यायुक्तत्वात् । किंच 'साक्षी चेता केवलो निर्गुणश्च' (श्वे० ६ । ११) इति श्रुत्या शुद्धात्मनो निर्गुणत्वोक्तेस्तद्विरोधेन ब्रह्मण्यनन्तगुणवत्त्वेन साकल्येन वागविषयत्वेनोक्तश्रुतेर्नेतिरिति वक्तुमशक्यम् । न च 'बृहन्तो ह्यस्मिन्गुणाः' इति श्रुतिविरोधान्निर्गुणत्वश्रुतिः प्राकृतगुणशून्यत्वपरेति वक्तुं युक्तम् । प्राकृतगुणानां ब्रह्मण्यप्रसक्त्या तन्निषेधायोगात्सगुणप्रकरणस्थायाः सगुणश्रुतेरुपासनाविधिविषयविशेषणसमर्पकतया निर्गुणप्रकरणस्थायास्त्वद्वितीयब्रह्मप्रतिपत्त्यनुकूलनिषेधापेक्षितप्रतियोगिरूपविषयसमर्पकतयाऽन्यथासिद्धेर्गुणबोधने तात्पर्याभावेन दुर्बलतयाऽद्वितीयब्रह्मप्रतिपिपादयिषया प्रवृत्तनिर्गुणश्रुतेर्गुणनिषेधांशे तात्पर्यवत्त्वेन प्रबलतया तदनुरोधेन सगुणश्रुतेरुपहितब्रह्मविषयत्वस्यैवावश्यं वक्तव्यत्वात् । अधिकमन्तस्तद्धर्माधिकरणे वक्ष्यामः । किंचेक्षणीयत्वेन वाच्यत्वसमर्थनस्यैवास्मिन्सूत्रेऽभिप्रेतत्वे 'वाच्यमीक्षतेः' इति सूत्रविन्यासेनापि तत्सिद्धेः 'ईक्षतेर्नाशब्दम्' इति गुरुतरसूत्रविन्यासः परमते निरभिप्राय एव ।

यत्तु 'विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणम्०' (गौ० सू० १ । १ । ४२) इत्युक्तेः प्रतिपक्षनिराकरणस्यापि कर्तव्यत्वेनोक्तविन्यासादर इति । तदसत् । वाच्यत्वस्योपपादनेऽपि प्रतिपक्षावाच्यत्वस्य प्रतिक्षेपलाभात्स्वपक्षसाधनमुखेन परपक्षप्रतिक्षेपसंभवे तद्विपरीतरीत्यनुसरणस्यायुक्तत्वाच्च । किंचात्रावाच्यत्वव्यवच्छेद एव विवक्षितश्चेत्तर्हि संदेहाय 'यतो वाचो निवर्तन्ते' इति श्रुत्यैकार्थ्याय च 'नावाच्यम्' इत्येव सूत्रकारो ब्रूयात् । न च तथा सूत्रणे 'अशब्दम्' इति श्रुत्यैकार्थ्यलाभ इत्येकतरानुगमे कर्तव्ये विनिगमकाभावात् 'नाशब्दम्' इति विन्यासः शुंशुपाचोद्यन्यायान्न दुष्यतीति वाच्यम् । 'अशब्दमस्पर्शमरूपमव्ययम्' इत्यादिश्रुतौ स्पर्शादिगुणप्रायपाठात् 'अशब्दम्' इत्यस्य शब्दरूपगुणनिषेधपरतया एव स्वरसतः प्रतीतेः ... तत्प्रतिपादकत्वाभावात्तदनुग-

धानावश्यकत्वात् । नास्ति शब्दो वाच्यतया यस्मिन्निति व्युत्प-त्त्या शब्दावाच्यत्वस्यापि फलतस्तदर्थता संभवतीति चेत् । तथाऽपि श्रुतिसूत्रयोरशब्दमित्यनेन शब्दगुणशून्यं शब्दावाच्यं वोक्तमिति संशयात् 'नाशब्दम्' इति सूत्रणेऽपि न ततो वाच्य-त्वनिर्णय इत्यसंदेहाय 'नावाच्यम्' इति सूत्रण एव विनि-गमकसौलभ्यात् । अशब्दमिति साधारणादपि शब्दाद्व्याख्या-नतोऽवाच्यत्वरूपविशेषार्थप्रतिपत्तिरिति चेत् ; किमनेन व्याख्या-नसापेक्षेण तथाविधसूत्रणेन, कण्ठतोऽवाच्यशब्द एव कुतो न प्रयु-क्त इति न किंचिदेतत् । किंच 'यतो वाचो निवर्तन्ते' (तै० २।४) इत्यवाच्यत्वबोधकश्रुतिहेतुकावाच्यत्वपूर्वपक्षोऽयुक्त एव । तथा सतीक्षणीयत्वेन सिद्धान्तानुपपत्तेर्लिङ्गस्य श्रुतितो दुर्बलत्वात् । 'अथ कस्मादुच्यते ब्रह्मेति तस्मादुच्यते ब्रह्म' (अथर्वशिरःश्रु०) इत्यादिश्रुत्युपष्टम्भेन न लिङ्गस्य दुर्बलता । किंतु केवलश्रुत्यपेक्ष-या श्रुत्युपष्टम्भाल्लिङ्गस्यैव प्रबलतैवेति न तेन सिद्धान्तानुपप-त्तिरिति चेत् । तर्हि श्रुतेरित्येव वक्तुं युक्तत्वात् । यदि चावा-च्यार्थकश्रुतिविप्रतिषेधाद्वाच्यत्वार्थकश्रुत्या न निर्णय इति चेत् । तर्हीक्षणीयत्वस्यापि 'यत्तदद्रेश्यम्' (आथ० उ० १) इति श्रुत्युक्तानीक्षणीयत्वेन विप्रतिषेधादनिर्णयस्तुल्यः ।

यत्तु चन्द्रिकायाम्—न तावच्छुद्धस्याऽऽत्मनो ज्ञेयत्वमेव नेति युक्तम् । सूत्र आत्मशब्दतन्निष्ठमोक्षोपदेशादिभिः शुद्धस्याऽऽ-त्मनो ज्ञेयत्वोपपादनात् । त्वयाऽपि शुद्धात्मज्ञानेनैव मोक्षस्वी-काराच्च । अद्रेश्यत्वादिश्रुतिरप्रसिद्धत्वाभिप्रायेतीक्षणीयत्वस्या-ज्ञेयत्वेन प्रतिषेधाभावाच्चेन सिद्धान्तो युक्त इति प्रतिपादितम् । तदसत् । शुद्धात्मनि प्रवृत्तिनिमित्तजातिगुणक्रियाद्यभावादवा-च्यत्ववादिभिस्तस्य लक्षणयैव ज्ञेयत्वाङ्गीकारादुपपत्तेश्च न ततो वाच्यत्वसिद्धान्तसिद्धिः ।

यदपि चन्द्रिकायाम्—निर्गुणावाच्यादिपदानां सगुणं न वाच्यमिति शुद्धस्यैव तद्वाच्यत्वसिद्धिरित्युक्तम् । तदपि शुद्धा-त्मनि जातिगुणक्रियादिप्रवृत्तिनिमित्ताभावादवाच्यत्वार्थकोक्त्या-

शब्दादिश्रुतिप्रतिबाधाच्च वाच्यत्वासंभवादुपक्रमादिभिर्लिङ्गैर-संसृष्टात्मन्येव तात्पर्यावधारणान्निर्गुणावाच्यलक्ष्यादिपदलक्ष्य-त्वस्यैव शुद्धात्मनि स्वीकारस्याऽऽवश्यकत्वादुपपत्तेश्च प्रत्युक्तम्। एतेनैव—श्रुतिषु तावदीक्षणीयत्वं ब्रह्मणः श्रूयते। ईक्षणं च प्रमाणेन भवेत्। प्रसक्तप्रमाणेषु च न ब्रह्मणो वचनेतरप्रमाणे-नेक्षणम्। तस्यौपनिषदत्वात्। वचनेनेक्षणं चावाच्ये वृत्त्य-न्तरायोगात्परिशेषेण वाच्यत्वमेव साधयतीति जयतीर्थाद्युक्तं निरस्तम्। अवाच्यस्य शुद्धब्रह्मणो लक्षणयेक्षणी[य]त्वस्य ज्ञेय-त्वस्य चोक्तत्वात्।

यदपि चन्द्रिकायाम्—ब्रह्मणो लक्षणया ज्ञेयत्वाङ्गीकार-सिद्धान्ते सत्यादिपदानां किं लक्ष्यमिति प्रश्ने वाचकब्रह्मादि-पदेनैव तत्प्रतिवक्तव्यम्। प्रतिवचनेऽपि तस्य किं लक्ष्यमिति लक्षकब्रह्मादिपदोपादानेऽनवस्थेति तथा ब्रह्मणोऽवाच्यत्वे लक्ष्य-त्वानुपपत्तिः। वाच्यार्थसंबन्धित्वेन ज्ञातस्यैव लक्ष्यत्वात्। तज्ज्ञानं च न शब्दभिन्नेन प्रमाणेन। ब्रह्मण उपनिषन्मात्रगम्य-त्वात्। नापि स्वप्रकाशतया। नित्यसिद्धे शास्त्रवैयर्थ्यात्। *अवाच्यशब्दस्य लक्षकस्यैव वक्तव्यत्वात्। तत्रापि वाच्य-संबन्धित्वेन ज्ञेयत्वेऽनवस्थेति दूषणमुक्तम्। तदपि न सत्। ब्रह्मादिपदेनैव ब्रह्मत्वादेरुपलक्षणत्वाविवक्षया सत्यादिपदानां किं लक्ष्यमिति प्रश्नप्रतिवचनोपपत्तेः प्रथमानवस्थाया अयोगात्। नापि द्वितीयाऽनवस्था। वाच्यसंबन्धित्वेन ज्ञानं हि शक्यज्ञाना-धीनलक्ष्योपस्थितावेवोपयोगि तदभावेऽपि सत्यत्वादिविशिष्टश-क्तसत्यादिपदेभ्य एव शुद्धोपस्थितेरखण्डवाक्यार्थबोधहेतुभू-तायाः संभवेन तदपेक्षाया अभावेन नोक्ताऽनवस्था। तथा हि—अद्वितीयशुद्धब्रह्मविजिज्ञापयिषया तत्प्रमार्थं प्रवृत्तानां सत्या-दिपदानां सत्यत्वादिविशिष्टे शक्तत्वेन तेभ्यः प्रथमतो विशिष्ट-

---

* अवाच्यशब्दस्येति। अवाच्यं यद्ब्रह्म तद्बोधकस्य शब्दस्येत्यर्थः। स च शब्दो वाच्यसंबन्धिबोधकश्चेत्तस्य लक्षकत्वं वक्तव्यमिति भावः।



1 वाच्ये च श° इति पाठान्तरम्।

स्यैवानुभूतत्वेन विशिष्टस्यैव संस्कारसत्त्वेऽपि सत्यादिपदज्ञान- सहकृतस्य तस्य संस्कारस्य तात्पर्यानुरोधेन शुद्धस्मृतिहेतुत्वं कल्प्यते । न चैवं कल्पना न प्राज्ञसंमतेति वाच्यम् । शक्तिवाद आकाशदशरथादिपदस्थलीयशाब्दबोध एवंविधकल्पनायास्ता- र्किकसंमतत्वात् । शक्तिवादे हि मणावुक्तम्—आकाशादिपदस्य शब्दाश्रयत्वादिविशिष्टे न शक्तिः । कदाचिदष्टद्रव्यान्यद्रव्यत्वा- दिनाऽप्याकाशपदाच्छाब्दबोधोत्पत्तेस्तद्विशिष्टेऽपि शक्त्यापत्तेः । एकस्यामाकाशव्यक्तौ केवलायामपि शक्तिसंभवाच्छक्यानुगमा- र्थमेव किंचिद्धर्मविशिष्टे शक्तिस्वीकारात् । न च शुद्धे शक्तिज्ञा- नात्स्मृतौ सत्यां शुद्धस्यैव शाब्दबोधः स्यान्न तु शब्दाश्रयत्वा- दिविशिष्टस्येति वाच्यम् । यद्यपि शब्दाश्रयत्वाद्यंशे न शक्ति- र्गृह्यते तथाऽपि शब्दाश्रयत्वादिनोपस्थिताकाशव्यक्तावेव शब्दा- श्रयत्वादिविशिष्टविषयकस्मृतिहेतुत्वसंभवेन विशिष्टविषयकस्मृ- तिशाब्दबोधसंभवात् । अथवाऽऽकाशादिपदान्निर्विकल्पकमेव स्म- रणमास्ताम् । ततः शुद्धाकाशस्यैव सुवर्थोपरागेण शाब्दबोधे भानम् । निर्धर्मितावच्छेदकशाब्दबोधास्वीकारेऽप्याकाशम- स्तीति वाक्यादेकमस्तीत्याकारकशाब्दबोधे बाधकाभावादिति । तदत्र कल्पद्वये मणिकारोक्त आद्ये शब्दाश्रयत्वांशे शक्त्यग्रहा- त्तद्विशिष्टस्य स्मृतिशाब्दबोधयोरसंभवः । यदंशे वृत्तिः पूर्वं ज्ञायते तत्स्मृतेरेव शाब्दबोधप्रयोजकत्वात् । द्वितीये शुद्धस्य शक्त्या पूर्वाननुभूतत्वेन तत्स्मृत्यसंभवस्तथाऽपि तात्पर्यनिर्वा- हाय सर्वपदानां लक्ष्यतावच्छेदके लक्षणाया इव शक्यतावच्छे- दकेऽपि शक्तिग्रहानुपयोग इति नवीनमतरीत्या लाघवेन प्रथम- कल्परीत्या तत्कल्पने प्रमेयवदनुभवजन्यसंस्कारस्य शुद्धदशर- थत्वादिजातिविशिष्टांश एवोद्बोधकं प्रकल्प्य स्मृते तस्मिन्दशर- थादिपदशक्तिग्रहः । अन्यथा शुद्धदशरथत्वादिजातेर्दशरथादि- पदेनानुपस्थित्या तात्पर्यविषयशाब्दबोधे तद्विशिष्टभानासंभवा- दिति शक्तिवादाद्युक्तप्रकारेण द्वितीयकल्परीत्या तात्पर्यानुरो- धेन विशिष्टविषयकशक्यानुभवजन्यसंस्कारस्य पदज्ञानसहकृ- तस्य शुद्धविषयकस्मृतिहेतुत्वकल्पने चास्मन्मतेऽपि पूर्वोक्तक-

रूपनस्य निरपवादत्वात् । न चैवं सति लक्षणया शुद्धब्रह्मबोध इति सिद्धान्तविरोध इति वाच्यम् । विशिष्टशक्तेर्विशिष्टशाब्दबोधप्रयोजकत्वस्यौत्सर्गिकस्य त्यागेन विशेष्यमात्रशाब्दबोधप्रयोजकतया लक्षणाशब्देन गौण्या वृत्त्या शास्त्रे व्यवहारात् ।

अथवा प्राचीनतार्किकमीमांसकमतयोरिवास्मन्मते शक्यसंबन्धरूपलक्षणाज्ञानस्य शाब्दबोधाहेतुत्वेन शक्योपस्थितिजन्यसंबन्ध्युपस्थितेर्लक्षणात्वेन स्वरूपसत्या एव तस्याः शाब्दबोधहेतुत्वेन नोक्तविरोध इति दिक् । किंच ज्ञानकर्मत्वेनैव त्वन्मते वाच्यत्वसिद्धिसंभवेनापरोक्षज्ञानात्मकतद्विशेषेक्षणकर्मत्वस्य हेतुत्वाभिधानवैयर्थ्यम् । स प्राणोपासको जीवोत्तमहिरण्यगर्भोपदेशेन परमं पुरुषं पश्यति, परोक्षतया ब्रह्म विज्ञायापरोक्षतया जानीयादिति तत्त्वप्रकाशिकायाम् ' स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते ' ( प्र० ५ । ५ ) इति श्रुतिव्याख्यानेन तव मते शाब्दापरोक्षानङ्गीकारासिद्धेः शाब्दापरोक्षज्ञानात्मकेक्षणकर्मत्वस्य परमात्मन्यसिद्ध्या तस्य हेतूकरणायोगेन सामान्यतोऽपरोक्षज्ञानविषयत्वात्मकस्य तस्य वाच्यावाच्यसाधारणस्य वाच्यत्वाव्याप्यतया तस्यावाच्यत्वनिषेधेन वाच्यत्वसाधकत्वासंभवश्च । न चेक्षणीयत्वमित्यनेन ज्ञानकर्मत्वमेव विवक्षणीयम् । तच्चौपनिषदस्य शब्दप्रमाणजन्यज्ञानेनैवेति परिशेषाद्वाच्यत्वं साधयेदिति वक्तुं सुवचम् । तथा सति लक्षणाप्रसङ्गेनेक्षतिपदास्वारस्यात् । औपनिषदस्यापि लक्षणया शब्दबोध्यत्वप्रतिपादनेन ज्ञानकर्मत्वस्य वाच्यत्वासाधकत्वाच्च । अस्मन्मते समन्वेतव्यसद्विद्यानुगतेक्षतिधात्वनुकरणरूपत्वेन स्वारस्यात् । एवं तावदाद्यसूत्रे पूर्वभागो न स्वरसः । तथाऽशब्दमित्युत्तरभागोऽपि । नहि ब्रह्माशब्दमित्युक्तम् । येन नाशब्दमित्युक्तिर्युक्ता स्यात् । नहि वेदान्तप्रमाणकं ब्रह्मेति ब्रुवाणः पूर्वपक्षी तथा ब्रूते । किंतु ब्रह्म न वाच्यमिति तं प्रति नावाच्यमित्येव वक्तुं युक्तमित्यपि पूर्वं प्रतिपादितमेवेत्यपि वदन्ति । किंच ब्रह्मणोऽवाच्यत्व ईक्षणीयत्वं श्रुत्युक्तमनुपपन्नमिति तेन वाच्यत्वसिद्धिरिति वदन्मध्वः कथमवाच्य ईक्षणी-

यत्वमनुपपन्नम् । पूर्वपक्षिणा ब्रह्मवादिना हि शुद्धस्य ब्रह्मण एवावाच्यत्वमुच्यते नोपहितस्यापि । बृहतेर्धातोरर्थानुगमादित्याद्यसूत्रे भाष्ये ब्रह्मणि ब्रह्मशब्दव्युत्पादनात् । उपहितस्य च शुद्धाभेदेन शुद्धेऽप्युपाध्यवच्छेदेन वाच्यत्वानपायात् । न चैवमवाच्यताभ्युपगमविरोधः शङ्क्यः । यतः शुद्धस्यावाच्यत्वमनौपाधिकवाच्यताराहित्यम् । न च तदौपाधिकवाच्यत्वाभ्युपगमेन विरुध्यते । यथा ह्यज्ञेयत्वमविद्यानिवर्तकज्ञानविषयस्याप्यङ्गीक्रियते । न चेयं व्यवस्था त्वदीयप्राचीनाचार्याननुमतेति वाच्यम् । आद्यसूत्रे ब्रह्मणो मनोवृत्तिविषयत्वे स्वप्रकाशत्वानुपपत्तिमाशङ्क्योक्तं भामत्याम्—न चैतावता ब्रह्मणः पराधीनप्रकाशता । न हि शाब्दज्ञानप्रकाश्यं ब्रह्म स्वप्रकाशं न भवति । सर्वोपाधिविहीनं हि ब्रह्म स्वप्रकाशतया गीयते, न तूपाहितमपि । यदाह भगवान्भाष्यकारः—न तावदयमात्मैकान्तेनाविषय इति । न चान्तःकरणवृत्तावप्यस्य साक्षात्कारे सर्वोपाधिविनिर्मोकः । तस्यैव तदुपाधेर्विनश्यदवस्थस्यस्वपरविरोधिनो विद्यमानत्वादिति । तथा च ब्रह्मणः स्वप्रकाशता स्वाभाविकी ज्ञेयता चौपाधिकीत्यर्थपर्यवसानेन निरुपाधिकज्ञेयताशून्यत्वमेव स्वप्रकाशत्वमदृश्यत्वरूपं पर्यवसितमुक्तं भवति । स चायं न्यायोऽवाच्यत्वनिर्विशेषत्वादावपि तुल्यः । सर्वोपाधिविनिर्मोके सत्येव जातिगुणादिप्रवृत्तिनिमित्तशून्यतयाऽवाच्यत्वसंभवात् । वाच्यतायाश्चोपाधिसापेक्षाया औपाधिकत्वात् । न चोपहितमिथ्यात्वपरतया भामतीग्रन्थो योजयितुं शक्य इति वाच्यम् । उपहितमात्रमिथ्यात्वस्य वाक्यान्वयाधिकरणस्थकल्पतरुग्रन्थविरोधेन वक्तुमशक्यत्वात् । तद्ग्रन्थोपपादनं च कृतं प्राक्चन्द्रिकोक्तदूषणनिराकरणे । अस्तु वा क्वचिदुपहितस्यानन्यगत्या मिथ्यात्वम् । तथाऽपि न प्रकृतभामतीग्रन्थस्य तदभिप्रायकता युक्ता । यतोऽत्र न चायमेकान्तेनाविषय इति भाष्यं स्वोक्तार्थोपष्टम्भकत्वेनोदाहृतम् । तत्र चायमित्यविषय आत्मा परामृष्टः । कथं पुनः प्रत्यगात्मन्यविषयेऽध्यासो विषयतद्धर्माणामिति युष्मत्प्रत्ययापेतस्य प्रत्यगात्मनोऽविषयत्वं ब्रवीषीति चाविषयात्मन एव ततः

प्राक्तनभाष्ये प्रस्तुतत्वात् । यदि चेदंशब्देनोपहितस्यैव परामर्शस्तदा न चायमेकान्तेनेत्यत्रैकान्तपदोपादानमनर्थकमेव स्यात् ।

नन्वेवमपि तैत्तिरीयभाष्ये महता प्रबन्धेन ब्रह्मणः शब्दावाच्यत्वं समर्थितम् । त्वदुक्तरीतौ तद्विरुध्येत । तथा हि—तत्र 'सत्यं ज्ञानमनन्तम्' (तै० २ । १) इत्यत्र ज्ञप्तिस्वरूपत्वं ब्रह्मणः प्रतिपाद्यत इति न युक्तम् । ज्ञानस्य धात्वर्थत्वे कारकापेक्षत्वे च नित्यत्वपारतन्त्र्ययोरापत्तेरित्याशङ्क्य वृत्तिप्रतिबिम्बितचैतन्यात्मना साध्यतामापन्नस्य तस्य धात्वर्थत्वेऽपि स्वरूपतो नित्यत्वमनपवादमिति समाधाय चोक्तम् । तस्मादेव च न ज्ञानशब्दवाच्यमिति । एवं सत्यशब्दावाच्यत्वमप्युपपाद्योपसंहृतम् । अतः सिद्धम् 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह' (तै० २ । ४) 'अनिरुक्तेऽनिलयने' (तै० २ । ७) इति चावाच्यत्वं नीलोत्पलादिपदवाक्यार्थत्वं च ब्रह्मण इतीति चेत् । न । ज्ञानशब्देन तल्लक्ष्यते न तूच्यते । शब्दप्रवृत्तिहेतुजात्यादिरहितत्वात् । तथा सत्यशब्देनापि सर्वविशेषप्रत्यस्तमितस्वरूपत्वादिति हेतूक्त्या सर्वोपाधिविनिर्मोके सत्येवावाच्यतेति पर्यवसानेनानौपाधिकवाच्यताराहित्यसिद्धावप्यौपाधिकवाच्यताया अनिराकरणात् । अत एवाद्वैतसिद्धौ—न चाऽऽरोपितगुणाश्रयतया वाच्यता । तस्य तात्पर्याविषयतया तात्पर्यविषयेऽवाच्यत्वसिद्धेरित्युक्तम् । तात्पर्यविषयश्च सर्वोपाधिविनिर्मुक्तं ब्रह्मैव । एवं च निरुपाधिकवाच्यताविरहेऽपि किंचिदुपाधिं पुरस्कृत्य वाच्यस्य ब्रह्मणः कथमीक्षणीयत्वमनुपपन्नमिति ।

केचित्तु परमतरीत्यैव ब्रह्मणो वाच्यत्वं न संभवतीति प्रतिपादयन्ति । तथा हि—यदुक्तमीक्षणीयत्वाद्वाच्यं ब्रह्मेति । तत्रेदं वक्तव्यम्—किमुपासनाविधिप्रकरणे पठितानामुपास्यसमर्पकश्रुतिवाक्यानां तद्वाच्यं भवेत्, किंवा सृष्टिप्रकरणपठितानां श्रुतिवाक्यानां वा । नाऽऽद्यः । अव्यक्तत्वेनानुपास्यं ब्रह्म, किंतु तत्प्रतिबिम्बमेव चित्तगमुपास्यमित्यङ्गीकुर्वता स्वयोपासनाविधिप्रकरणपूपास्यसमर्पकश्रुति-

वाक्यानां तद्वाच्यं न भवतीत्यवश्यमङ्गीकरणीयम् । तद्वाच्यत्वाङ्गीकारे कथं तदनुपास्यमिति शङ्काया अनिराकरणात् । नहि संभवदुपासनाविधिषूपास्यसमर्पकैः पदैर्ब्रह्मोपास्यतया विधीयते। उपास्यं च न भवतीति वक्तुं सुशकम् । एतच्छङ्कानिराकरणार्थैव च 'यन्मनसा न मनुते' (तल० १) इति ब्रह्मण उपास्यत्वनिषेधकमन्त्रसंनिधावाम्नायमानम् 'यद्वाचाऽनभ्युदितं येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' (तलव० उ० १) इति मन्त्रान्तरं ब्रह्मणो वाच्यत्वं निषेधति । तेन हि सर्ववागविषयं ब्रह्मोपासनाप्रकरणपठितानाम् 'सर्वं खल्विदं ब्रह्म' (छा० ३ । १४) इत्यादिवाक्यस्थब्रह्मादिपदानामपि वाच्यं न भवतीति प्रतिपाद्यते । तेन चोक्तशङ्कानिरासलाभः । त्वया हि 'तदव्यक्तमाह हि' (ब्र० सू० ३ । २ । २३) इत्यधिकरणे ब्रह्मणोऽव्यक्तत्वं प्रसाध्याव्यक्तत्वेन ब्रह्मणोऽनुपास्यत्वं तत्प्रतिविम्बस्य चोपास्यत्वं समर्थितम् 'तथाऽन्यप्रतिषेधात्' (ब्र० सू० ३ । २ । ३६) इत्यधिकरणे । तथा हि त्वदीयं भाष्यम्—परमात्मापरोक्ष्यं च तत्प्रसादादेव न जीवशक्त्येति वक्तुमुच्यते—तदव्यक्तमाह हीति । अव्यक्तमेव हि तद्ब्रह्म स्वतः । 'अरूपमक्षरं सदाऽव्यक्तं च निष्कलं यज्ज्ञात्वा मुच्यते जन्तुरानन्दश्चाक्षयो भवेत्' इति कौठरव्यश्रुतेः । तत्त्वप्रकाशिकायामपि—भगवत्प्राप्तिसाधनभक्त्यर्थं तस्योपलब्ध्ययोग्यत्वसमर्थनाच्छास्त्रसंगतिमुक्त्वा भगवद्भक्तिर्न कर्तव्या। प्रयोजनाभावात् । न च तदापरोक्ष्यं प्रयोजनं स्तम्भादिवत् । पुरुषप्रयत्नेनैव तत्संभवात् । तस्याव्यक्तत्वं चेत् । व्यर्थैव भक्तिः। अव्यक्तस्वभावस्य साधनशतैरपि दर्शनायोगात्। भक्तेर्व्यर्थत्वेऽयुक्तं तन्माहात्म्यवर्णनमिति पूर्वपक्षमुक्त्वा कर्तव्यैव भगवद्भक्तिः । तस्याव्यक्तस्वभावत्वेन पुरुषप्रयत्नेन द्रष्टुमशक्यत्वात् । अव्यक्तत्वं च तस्य श्रुतिराह । तादृशस्यापि भक्तिजन्यप्रसादादापरोक्ष्यमिति सिद्धान्तितम् ।

ध्यानकाले यच्चित्ते प्रदृश्यते तदेव हि ब्रह्मरूपम् । अतः कथमव्यक्तत्वं तस्येत्यत आह—तथा, इति भाष्ये सूत्रमवतार्य यथा

जीवानन्दादेरन्यद्ब्रह्म तथोपासनाविषयादपि । ' यन्मनसा न मनुते येनाऽऽहुर्मनो मतं तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ' ( तलव० १ ) इति तत्प्रतिषेधात् ।

पश्यन्ति परमं ब्रह्म चित्ते यत्प्रतिबिम्बितम् ।
ब्रह्मैव प्रतिबिम्बे यदतस्तेषां फलप्रदम् ॥
तदुपासनं च भवति प्रतिमोपासनं यथा ।
दृश्यते त्वपरोक्षेण ज्ञानेनैव परं पदम् ॥

इति च ब्रह्मतर्के इति ' तथाऽन्यप्रतिषेधात् ' ( ब्र० सू० ३ । २ । ३६ ) इत्यधिकरणे भाष्यम् । तत्त्वप्रकाशिकायाम्—भगवत्प्राप्तिसाधनभक्त्यर्थं पुनस्तस्याव्यक्तत्वसमर्थनेन शास्त्रसंगतिमुक्त्वा प्रकृतं ब्रह्म नाव्यक्तम् । तस्य ध्यानकाले चित्ते प्रतीयमानत्वात् । ध्यानकाले तस्य प्रतीतत्वे ध्यातृबाहुल्येन तस्य बहुत्वापत्तिरिति चेत्स्वरूपभेदाभावेऽपि ब्रह्मरूपाणां नानात्वेन तदुपपत्तेरिति पूर्वपक्षयित्वा न ध्यानकाले प्रतीतत्वेन ब्रह्मणो व्यक्तत्वं मन्तव्यम् । ध्यानप्रतीतस्याब्रह्मत्वात् । तत्कुतः । यथा खलु जीवानन्दादीनामल्पत्वादिकारणेन ब्रह्मानन्दादितद्विलक्षणमेव तथोपासाकृतस्य व्यक्तत्वादिना कारणेन ब्रह्मणस्ततो वैलक्षण्यात् । निर्दोषदोषिणोर्ब्रह्मोपासाकृतयोरैक्यानुपपत्तेरेव हि ' यन्मनसा ' इत्यादिका श्रुतिस्तस्य ब्रह्मत्वं निषेधति । ध्यानकाले प्रतीतस्याब्रह्मत्वे कथं फलं ददातीत्यत आह—पश्यन्तीति । स्थितिमात्रेण कथं फलप्रदमनुपासितत्वादत आह—तदिति । ब्रह्मैव तत्कुतो नेत्यत उक्तम्—दृश्यत इति । तज्ज्ञानायैव तर्हि नियम्यतां किमुपासनयेत्यत उक्तम्—उपासनेति । अतो ध्याने प्रतीतं न ब्रह्मेति सिद्धान्तितम् । तेनोपासनाविधिगतब्रह्मादिशब्दवाच्यं न तदित्यर्थसिद्धमेव । उपास्यपरपदवाच्यत्व उपास्यत्वापत्तेः ।

नापि सृष्टिप्रकरणस्थश्रुतिगतशब्दवाच्यं ब्रह्मेति द्वितीयः पक्षः संभवति । सर्वत्रैव सृष्ट्यादिवाक्यगतकारणत्वादिगुणवर्णनस्योपासनार्थत्वेन ' आध्यानाय ' ( ब्र० सू० ३ । ३ । १४ ) इत्यधिकरणे वर्णयतस्तव मतेऽनुपास्यस्य ब्रह्मणः सृष्टिवाक्य-

स्थनारायणादिपदवाच्यत्वासंभवात् । 'आध्यानाय प्रयोजनान्तराभावात्' (ब्र० सू० ३ । ३ । १४) इत्यधिकरणे हि त्वदीयभाष्ये—उपसंहारानुपसंहारे प्रमाणमाहेति सूत्रमवतार्योक्तम्—आध्यानार्थं हि सर्वे गुणा उच्यन्ते । प्रयोजनान्तराभावात् ।

ज्ञानार्थमथ ध्यानार्थं गुणानां समुदीरणा ।
ज्ञातव्याश्चैव ध्यातव्या गुणाः सर्वेऽप्यतो हरेः ॥
नान्यत्प्रयोजनं ज्ञानाद्ध्यानात्कर्मकृतेरपि ।
श्रवणाच्चापि पाठाद्वा विद्याभिः किंचिदिष्यते ॥ इति ।

परमसंहितायाम्—

गुणाः सर्वेऽपि वेत्तव्या ध्यातव्याश्च न संशयः ।
नान्यत्प्रयोजनं मुख्यं गुणानां कथने भवेत् ॥
ज्ञानध्यानसमायोगाद्गुणानां सर्वशः फलम् ।
मुख्यं भवेन्न चान्येन फलं मुख्यं भवेत्कचित् ॥

इति बृहत्तन्त्रे। इति तत्त्वप्रकाशिकायां परमात्मज्ञानसाधनोपासने गुणोपसंहारसमर्थनाच्छास्त्रसंगतिमभिधाय गुणोपसंहारो न कर्तव्यः। प्रमाणाभावात्। न च सर्वगुणोपसंहारे विधिरस्तीत्युक्तमिति शङ्क्यम् । अनुपसंहारेऽपि मोक्षमात्रेरुक्तत्वाद्व्यर्थविधेरनवधेयत्वात् । न च सद्विद्याभूमविद्यादहरविद्यादिषु तत्तद्गुणवर्णनमेव सर्वविद्योक्तगुणोपसंहारेणोपासना कर्तव्येत्यत्र प्रमाणम्, अन्यथा तद्वैयर्थ्यादिति साधु । तासु तत्तद्गुणवर्णनस्य तत्तद्गुणकश्रवणद्वारा जनलोकादिफलविशेषार्थत्वोपपत्तेः । तस्योपासनायां तेषामुपसंहारार्थत्वे सर्वेऽप्येकत्रैवोच्येरन्निति प्रकरणभेदायोग इति पूर्वपक्षयित्वा कर्तव्यस्तावदुपसंहारः । सर्वविद्यानां भगवन्नामत्वेन तद्गुणाभिधायकत्वात् । गुणाभिधानस्य चाशेषगुणोपसंहारपूर्वकध्यानार्थत्वान्नत्रोपसंहारो निष्फलः । विप्रकीर्णगुणानुपसंहृत्योपासकस्य मुक्तावानन्दातिशयलक्षणफलसद्भावात् ।

यावत्सेवा परे तत्त्वे तावत्सुखविशेषता । इति स्मृतेः ।

१ °नामा° इति पाठान्तरम् ।

अत एव विशेषफलदौर्लभ्याय नानास्थानेषूक्तिरुपपन्ना। श्रवणादेर्जनलोकप्राप्तिफलस्य प्रयोजनत्वसंभवेऽपि महाफलज्ञानसाधनत्वेन विहितस्य न तत्फलत्वमिति सिद्धान्तितम् । तस्मात्स्रष्टृत्वादिप्रतिपादकानां श्रुतिपुराणेतिहासागमादीनां सर्वेषामप्युपास्यत्वेन त्वदभिमतब्रह्मप्रतिबिम्बपर्यवसानं स्यादिति तत्रैव वाक्यशेषादिभिर्यूपाहवनीयन्यायेन ग्राह्यव्युत्पत्तिकानां ब्रह्मनारायणादिपदानां शक्तिः स्यादिति न ब्रह्मणो वाच्यत्वसिद्धिः । एवं चोक्तरीत्या ब्रह्मनारायणादिशब्दानां प्रतिबिम्बवाचित्वेन 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' (तलव० उ० १ । १) इत्यादौ ब्रह्मादिशब्दानां लक्षणयैव बिम्बभूतब्रह्मविषयत्वं त्वन्मतेऽङ्गीकरणीयमिति भङ्ग्यन्तरेणाद्वैतमेव त्वया शरणीकृतमिति सुधियां स्पष्टमेव । न च बिम्बविषयाणि ब्रह्मादिपदानि मुख्यानि प्रतिबिम्बविषयाणि लाक्षणिकानीति वैपरीत्यं वक्तुं युक्तम् । प्रायः सर्वेषां श्रुतिपुराणादीनामुपास्यगतस्रष्टृत्वपालकत्वसंहर्तृत्वान्तर्यामित्वशौर्यौदार्याद्यनेककल्याणगुणवर्णनपरतयोपास्यप्रतिबिम्बविषयत्वावश्यकतया तेषां भूयसां लक्षकत्वकल्पनापेक्षया 'यन्मनसा न मनुते' (तलव० उ० १ । १) 'यतो वाचो निवर्तन्ते' (तै० २ । ४) 'स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते' (प्र० ५ । ५) इत्यादीनां त्वदभिमतवीक्षणीयबिम्बभूतब्रह्मविषयकतिपयवचनानां लक्षकत्वकल्पनस्यैव न्याय्यत्वात् । तेनैव च वासनामयस्य मानसावलोकनरूपध्यानगतप्रतिबिम्बजनकवासनापरपर्यायसंस्कारहेत्वनुभवोत्पादनसंभवात् । तथा च वाङ्मनसपथातीतं नित्याव्यक्तमुपासनानन्तरं मुच्यमानानां च भक्तानां साक्षात्कारस्यैव विषयभूतं परं ब्रह्म 'तदेव ब्रह्म त्वं विद्धि' (तलव० उ० १ । १) इत्यादिभिः कैश्चिदेव वचनैर्लक्षणया प्रतिपाद्यते । तत्प्रतिबिम्बश्चोपासकहृदयेषूपास्यरूपेणाभिव्यक्तिशाली सृष्टिप्रकरणस्थश्रुत्यादिभिस्तदनुसारिपुराणादिभिश्च शक्त्या प्रतिपाद्यत इति तव मतनिष्कर्षे ब्रह्मणि शक्त्या श्रुत्यादिप्रोक्तं निराकरणमेव ।

यदपि द्वितीयसूत्र ईक्षणीयो गौण आत्मेत्याशङ्क्याऽऽत्मश-ब्दादिहेतुना निराकरणम् । तदपि न विचारसहम् । अद्वैतिभि-र्गौणशब्दप्रतिपाद्यगुणविशिष्टात्मज्ञानान्मोक्ष इत्यनभ्युपगमात् । ईक्षणीये तस्मिन्नुक्तस्य जीवघनात्परात्परत्वस्यासंभवाच्चोक्तश-ङ्कया असंगतेः । एतेन गौणजीवाख्यात्मग्रहणे बाधकाभावा-दन्यज्ञापकस्य चाभावादिति जयतीर्थोक्तमयुक्तमिति स्पष्टमेव । जीवात्मनि जीवघनात्परात्परत्वासंभवस्य बाधकत्वात् । अत एव परानभिमतमपि संभवमात्रेण दूष्यत इत्यपि निरस्तम् । अस्मद्रीत्या पराभिमतार्थमाशङ्क्य तद्दूषणपरतया सूत्रार्थ-वर्णनसंभवे परानभिमतार्थशङ्कादूषणपरिहारपरतया सूत्रार्थ-वर्णनस्यात्यन्तमयुक्तत्वाच्च । अत एव 'तन्निष्ठस्य मोक्षो-पदेशाच्च' ( ब्र० सू० १ । १ । ७ ) इति तृतीयसूत्रमपि नि-र्दलितप्रयोजनम् ।

यदपि गौणात्मन्यात्मशब्दमुख्यत्वव्यवच्छेदार्थमिदं सूत्रद्व-यम् । पूर्वत्र हीक्षणीयत्वेनोक्तः सत्त्वादिगुणको जीव एव, न निर्गुणः । तस्य 'यत्तदद्रेश्यम्' ( आथ० उ० १ ) इति दृश्यत्वनिषेधात् । अत उक्तेक्षणीयत्वहेतुरसिद्ध इति शङ्कया-मात्मशब्दो हेतुत्वेनोक्तः । स च—

> यो गुणैः सर्वतो हीनो यश्च दोषविवर्जितः ।
> हेयोपादेयरहितः स आत्मेत्यभिधीयते ।

इति वामनवचनात् 'द्वे वाव ब्रह्मणो रूपे आत्मा चैवाना-त्मा चेति । तत्र य आत्मा स नित्यः केवलो निर्गुणश्च । अथ ह योऽनीदृशः सोऽनात्मा' इति तवल्कारब्राह्मणाच्चाऽऽत्मश-ब्दस्य निर्गुणवाचकत्वावधारणादीक्षणीयत्वहेतोर्नासिद्धिरित्यु-क्ते गौणात्मन्यात्मशब्दो मुख्यः किं न स्यात् । वामनवचन आत्मशब्दस्य गौणेष्वमुख्यत्वानुक्तेः । [1]तवल्कारश्रुतिस्थात्माना-त्मशब्दयोश्चेतनाचेतनविषयत्वादित्याशङ्क्य तन्निष्ठस्य मोक्षो-पदेशादित्युच्यते । 'यस्यानुवित्तः प्रतिबुद्ध आत्मा' इत्युप-

---

१ तलवकार° इति पाठान्तरम् ।

क्रम्य ' तस्य लोकः स उ लोक एव ' इत्यादिनाऽऽत्मनिष्ठस्य मोक्ष उपदिश्यते । न चायं गौणपरः । सत्त्वादिगुणवदात्मज्ञानात्तन्निवृत्तिरूपमुक्त्यसंभवात् ।

> चेतनस्तु द्विधा प्रोक्तो जीव आत्मेति च प्रभो ।
> जीवा ब्रह्मादयः प्रोक्ता आत्मैकस्तु जनार्दनः ॥
> इतरेष्वात्मशब्दस्तु सोपचारो विधीयते ।
> तस्याऽऽत्मनो निर्गुणस्य ज्ञानान्मोक्ष उदाहृतः ॥
> सगुणास्त्वपरे प्रोक्तास्तज्ज्ञानान्नैव मुच्यते ।
> परो हि पुरुषः प्रोक्तस्तस्मान्मोक्षस्ततः स्मृतः ॥

इति पाद्मवचनाच्च । सगुणनिष्ठस्यापि परम्परया मोक्षः स्यादिति शङ्कायां तन्निरासाय ' हेयत्वावचनाच्च ' ( ब्र० सू० १ । १ । ८ ) इति सूत्रान्तरम् । न गौणात्मपर आत्मशब्दः । ' तमेवैकं जानथाऽऽत्मानमन्या वाचो विमुञ्चथ ' ( आथ० उ० २.२.५ ) इत्यात्मशब्दस्य सावधारणमुमुक्षूपादेयत्वरूपाहेयत्ववचनात् । गौणात्मनस्तु ' अन्या वाचो विमुञ्चथ ' ( आथ० उ० २ । २ । ५ ) इति हेयत्ववचनाच्चेति जयतीर्थीयसूत्रयोजनम् । तदसत् । शुद्धे ज्ञानविषयत्वस्यावाच्यत्ववादिभिरद्वैतिभिरपि स्वीकारेणासिद्धिशङ्काया असंभवदुक्तिकत्वात् । अत एव चन्द्रिकायां *सिद्धान्तोपक्रमे ' न तावदशुद्धस्याऽऽत्मनो ज्ञेयत्वमेव न ' इत्युप-

---

* सिद्धान्तोपक्रम इति । अत्रायं संदर्भः—अत्र ब्रह्मणि समन्वयो युक्तो न वेति चिन्ता । तदर्थं शुद्धं ब्रह्म वाच्यमवाच्यं वा स्वीकार्यम् । तदर्थं चावाच्यत्वबोधिका श्रुतिः किं वाच्यत्वाभावाभिप्राया वर्णनीयाऽऽहोस्विदप्रसिद्धत्वाभिप्राया । तदर्थं च वाच्यत्वाभावाभिप्रायकत्वे स्वीकृते बाधकं किंचिदस्ति न वेति विचारणीयम् । तदर्थं च शुद्धं ब्रह्म किमीक्षणीयं वाऽनीक्षणीयमिति वक्तव्यम् । तदर्थं च ' तमेवैकं जानथाऽऽत्मानम् ' आत्मन्येवाऽऽत्मानं पश्येत् ' इत्यादावीक्षणीयत्वेन श्रुत आत्मा सगुणो निर्गुणो वेति विचारः कर्तव्यः । तदर्थं च तत्रत्यात्मशब्दो गौणात्मनि मुख्यो वा निर्गुणे परमात्मन्येवेति विचारः । तदर्थं च ' यस्यानुवित्तः ' इत्यादिश्रुत्युक्तमात्मनिष्ठस्य मोक्षोपदेशादिकं गौणात्मनि युक्तं न वेति पूर्वोक्तरीत्या संशये संप्राप्ते पूर्वपक्षस्तावत्—ब्रह्मणि समन्वयो न युक्तः । ' यतो वाचो निवर्तन्ते ' इत्यादिश्रुतिभिस्तस्यावाच्य-

कश्च 'त्वयाऽपि शुद्धात्मज्ञानेन मोक्षस्य स्वीकृतत्वाच्च' इत्यनेन शुद्धात्मनि ज्ञेयत्वस्याद्वैत्यभिमतत्वं स्फुटीकृतम्। कथमन्यथा 'यतो वाचो निवर्तन्ते' इति प्रमाणमुखेनावाच्यत्वं पूर्वपक्षी साधयेत्। 'शुद्धात्मनो वृत्तिव्याप्यत्वेऽपि नेक्षणकर्मत्वम्' इत्याशङ्कायां 'वृत्तिव्याप्यत्वेनैव वाच्यत्वसिद्धिः' इति चन्द्रिकोक्तेस्त्वयाऽसिद्धिशङ्कायाः कर्तुमशक्यत्वाच्च । गौणशब्दस्य वृत्तिविशेषयुक्तशब्द एव स्वरसतः प्रयोगादर्थान्तरपरत्वे स्वारस्यहानाच्च । अस्मन्मतरीत्या पूर्वसूत्रस्थपञ्चम्यन्तेक्षतिपदस्य विभक्तिविपरिणाममात्रेणेक्षतिर्गौण इति प्रतिज्ञयोपपत्तावीक्षणीयत्वेनोक्तो गौण इति प्रतिज्ञायामध्याहारस्यायुक्तत्वाच्च। अतः पूर्वभागस्तावदनुपपन्नः। नाप्युत्तरभाग उपपद्यते। अप्रयोजकत्वादुक्तहेतुद्वयस्य । तथा हि—मोक्षहेतुभूतनिष्ठाविषयत्वोपादेयत्वयोर्निर्गुणात्मविषयत्वनिश्चयेऽपि तस्मिन्नात्मशब्दस्य मुख्यत्वासिद्धेः । नहि मुख्यार्थगोचरादेवोपायात्फलसिद्धिरित्यस्ति नियमः। दर्शपूर्णमासपदयोः कर्मण्यमुख्यत्वेऽपि तदनुष्ठानात्फ-

---

त्वस्य प्रतीतत्वात्। ननु 'पुरिशयं पुरुषमीक्षते' इति ब्रह्मण ईक्षणीयत्वं श्रूयते। तच्च शब्देतरेण प्रमाणेन न संभवति। ब्रह्मण औपनिषदत्वात्। शब्देन चेक्षणं वाच्यत्वं विना न संभवतीति चेत्। मैवम्। तत्र हीक्षणीयत्वेनोक्त आत्मा सगुण एव ग्राह्यः। स च वाच्य एव वर्तत इति न कश्चिद्दोषः। यश्च शुद्धोऽवाच्यो भवति न तस्येक्षणीयत्वम्। 'यत्तदद्रेश्यम्' इत्यादिश्रुत्या तस्यादृश्यत्वात्। अथवा भवतु शुद्धस्यापीक्षणीयत्वम्। तथाऽपि न तस्य वाच्यत्वसिद्धिः। लक्षणया बोध्यत्वात्। ननु तस्यावाच्यत्वे लक्षणाऽपि न संभवति। यो हि सकलशब्दावाच्यस्तत्र लक्षणया बोध्यत्वेऽनवस्थापातात्। तथा हि—अवाच्यबोधके कस्मिंश्चिच्छब्दे गृहीते तत्यस्य शब्दस्य किं लक्ष्यमिति प्रश्ने क्रियमाणे केनचिच्छब्देनैवैतल्लक्ष्यमिति वक्तव्यम् । सोऽपि शब्दो लक्षक एव। तत्रापि किमस्य लक्ष्यमिति प्रश्ने पुनर्लक्षकशब्देनैव बोधनीयमित्यनवस्था प्राप्नोतीत्यवाच्ये ब्रह्मणि लक्षणाया असंभवो बोध्य इति चेत्। न। वाचकपदविषयेऽपि किमस्य वाच्यमिति प्रश्नापर्यवसानेन 'यश्चोभयोः समो दोषः' इति न्यायेन पर्यनुयोज्यत्वाभावाल्लक्षणया बोध्यत्वं ब्रह्मणः सिद्धमिति पूर्वपक्षे प्राप्ते सिद्धान्तमाह—न तावच्छुद्धस्याऽऽत्मन इति।

लसिद्धिदर्शनात् । वस्तुस्वभावायत्तयोर्हेयत्वोपादेयत्वयोः शब्द-मुख्यत्वतदभावाप्रयोजकत्वाच्च । तथा चाऽऽत्मशब्दस्य गौणेऽपि वृत्तिसंभवान्मुख्यत्वाभावेन परिहारस्यावाच्यत्ववादिनं प्रत्य-सिद्धेः । अथोदाहृतप्रमाणबलेन निर्गुणस्यैवाऽऽत्मशब्दमुख्यत्व-निश्चय इति चेत् । कथमुक्तयोर्हेत्वोस्तद्धेतुत्वम् । नन्वीक्षणीय-त्वाद्वाच्यत्वमुच्यते तच्च नोपेक्षणीयस्य नापि हेयस्य किंतूपादे-यस्यैवेति तस्यैव वाच्यत्वसिद्धेः । सगुणस्य वाच्यत्वाभावादा-त्मशब्दोऽपि न तद्वाचक इति रीत्या प्रसाध्याङ्गक एव हेतुरय-मिति चेत् । तर्हि साक्षात्तस्य वाच्यत्वं एव हेतुत्वसंभवेन पूर्व-सूत्रवैयर्थ्यात् । अस्मन्मते त्वीक्षतेरगौणतायामेवाऽऽत्मशब्दो हेतुः, न प्रधानपरतानिरास इति न वैयर्थ्यम् । किंच 'परात्परं पुरिशयं पुरुषमीक्षते' (प्र० ५।५) इत्युक्तस्य पुरुषस्येक्षणीयत्व उक्ते तस्य गौणात्मविषयकत्वशङ्कायां पुरुषशब्दस्य हेतूकर्त-व्यत्व आत्मशब्दस्य तत्राश्रुतस्य हेतूकरणं चायुक्तम् । स चाऽऽ-त्मशब्दो गौणविषयः किं न स्यादिति शङ्कानिरासार्थम् 'य-स्यानुवित्तः' इति वाक्यान्तरगतात्मनिष्ठमोक्षोपदेशः । 'तमेवैकं जानथ' ( आथ० उ० २ । २ । ५ ) इति वाक्यान्तरगतं हेयत्वावचनं हेतुरित्यभिधानं व्यधिकरणम् ।

यच्च चन्द्रिकायामुक्तवैयधिकरण्यमाशङ्क्येक्षतेरित्यनेन शब्द-मात्रस्यासाधकतया ज्ञानकर्मत्वस्यैव विवक्षणीयत्वात् । तस्य च 'स एतस्मात्' ( प्र० ५ । ५ ) इति वाक्य इव 'आत्म-न्येवाऽऽत्मानं पश्येत्' ( बृ० ६ । ४ । २३ ) इत्यादिवाक्ये-ष्वपि सत्त्वेन तेषामपि भाष्यकृतेक्षतिसूत्र उदाहृतत्वात् । तेषां च वाक्यानामेकार्थत्वादात्मशब्दादिमत एकस्य वाक्यस्य निर्गु-णपरत्वेऽन्यस्यापि तत्परताया अपरिहार्यत्वात् । एकस्य निर्गुणपरत्वमात्रेण तस्य वाच्यत्वसिद्धेश्च न वैयधिकरण्यमिति समाहितम् । तन्मन्दमेव । उक्तहेतुबलादात्मशब्दस्य गौणविष-यकत्वनिरासेऽपि पुरुषशब्दस्य गौणविषयकत्वानिरासेन तद्वा-क्यगतेक्षणीयत्वस्य गौणविषयकत्वानिरासात् । न च गुणवदी-क्षणाद्गुणनिवृत्तिरूपमोक्षासंभवात्तत्तेक्षणीयत्वस्य निर्गुणमात्रनि-

ष्ठत्वनिर्णयेऽत्रापि तन्निश्चयः सुकर इति वाच्यम् । तर्हि मोक्षोपदेशस्यैवेक्षणीयत्वस्य गौणव्यावृत्तिसाधकत्वेन तत्राऽऽत्मोपदेशवैयर्थ्यात् । भाष्योदाहृतश्रुतिस्मृतिभिरात्मशब्दमात्रस्य निर्गुणासाधारण्यनिर्णयेऽपि पुरुषशब्दस्य तदनिर्णयेन तदुभयोरेकविषयकत्वनिर्णयासंभवाच्च । किंचेक्षणीयत्वात्मशब्दतन्निष्ठमोक्षोपदेशहेयत्वावचनानां 'तमेवैकम्' इति वाक्यस्थतया तद्वाक्यस्यैवोदाहर्तव्यत्वे 'पुरुषमीक्षते' इति वाक्योदाहरणमनुचितम् । सूत्रोपात्तेक्षत्यनुगमाय तदुदाहरणमिति चन्द्रिकोक्तं तु न सम्यक् । बह्वनुगमाय 'तमेवैकम्' इति वाक्यस्यैवोदाहरणौचित्यात् । अर्थपरतामङ्गीकुर्वता त्वया शब्दानुगमावश्यकताया वक्तुमशक्यत्वाच्च ।

यदपि चन्द्रिकायाम्—सौत्रात्मशब्दस्य पुरुषश्रुतिपरात्परत्वादिलिङ्गोपलक्षकत्वमुक्तम् । तदसत् । ईक्षतिवाक्यावृत्त्याऽऽत्मशब्दस्य तद्वाक्यगतश्रुतिलिङ्गोपलक्षकत्वायोगात् । हेयत्वावचनाच्चेत्यपि न सूत्रणीयम् । यद्यात्मशब्दो गौणात्मपरस्तर्हि 'तमेवैकं जानथाऽऽत्मानम्' इतिश्रुत्युक्तात्माऽपि गौणः स्यात् । न चास्त्विति वाच्यम् । तथा सति तस्य हेयत्वप्रसङ्गात् । न चास्य हेयत्वमुच्यते । प्रत्युत जानथेत्यस्याहेयत्ववचनात् । न च गौणस्याप्यहेयता । 'अन्या वाचो विमुञ्चथ' इति गौणात्मनो हेयत्ववचनादिति तत्त्वप्रकाशिकायां दर्शितशङ्कानिराकरणस्याहेयत्वाच्चेत्यनेनैव निर्वाहात् । अस्मन्मतरीत्या स्थूलारुन्धतेर्हेयत्वावचनवत् 'तत्त्वमसि' इत्यत्र हेयत्ववचनाभावादित्यर्थस्याहेयत्वादित्यनेन सिद्धेर्यथाविन्यासः सप्रयोजनः ।

निरुक्तस्वाप्ययशब्दोदितपरमात्मनो निर्गुणस्य स्वात्मनि लयोऽप्ययुक्त एव । सर्वेषामेव पारमेश्वररूपाणां लयासंभवात् । नहि नाशो वा रूपान्तरहानेन स्वरूपावस्थानमनभिव्यक्तिर्वा तत्र संभवति । ननु महासरसि मत्स्यानामिव मूलरूपे रूपान्तराणामनुप्रवेश एवात्र लयो विवक्षित इति चेत् । न । 'पूर्णमेवावशिष्यते' ( बृ० ५ । ५ । १ ) इत्यस्य विरोधात् । न ह्यन्तर्लीनतामात्रेणांशः प्राग्रूपमात्रपरिशेषो वक्तुं शक्यते । संकल्प-

कल्याणगुणार्णवानां भागवतरूपाणामपि सत्त्वात् । 'स आत्मन आत्मानमुद्धृत्याऽऽत्मन्येव प्रविलापयत्यथाऽऽत्मैव भवति '

स देवो बहुधा भूत्वा निर्गुणः पुरुषोत्तमः ।
एकीभूय पुनः शेते निर्दोषो हरिरादिकृत् ॥

इति श्रुतिस्मृत्योरपि पारमेश्वररूपाणां कथमपि निरुक्तलयासंभवात् । स ज्ञान्यात्मनो देहाद्युपाधिकमात्मानमुद्धृत्य मुञ्जादीषिकामिव पृथक्कृत्याऽऽत्मनि परमात्मन्येव प्रविलापयत्यारोपितरूपशून्यं करोत्यथाऽऽत्मा शुद्धं ब्रह्मैव भवति । स देवो बहुधा भूत्वाऽनेककार्यात्मना भूत्वा पश्चादेकीभूय तादृशकार्यशून्यः सन्पुनः शेत इत्यर्थपरतया 'पूर्णमदः' इत्यस्यार्थस्य भाष्य एव दर्शितत्वान्न कयाचिदपि श्रुत्या स्मृत्या वा परमात्मनः पारमेश्वररूपेण स्वस्मिँल्लयो दर्शितः। 'गतिसामान्यात्' ( ब्र० सू० १।१।१० ) इति सूत्रं तु प्रक्रान्तवाच्यत्वसमर्थनमपरिसमाप्य न मध्ये निवेशयितुमुचितमिति स्पष्टमेव । 'श्रुतत्वाच्च' ( ब्र० सू० १ । १ । ११ ) इति सूत्रमीक्षणीयत्वेन गतार्थमिति स्पष्टमेवेत्यलम् ।

मीमांसान्यायपञ्चास्यराघवार्यप्रसादजा ।
श्रीमच्छंकरपादाब्जभूषणे परदूषणे ।
कृतिः स्यादीक्षतिनये रघुनाथस्य सन्मुदे ।
अनया प्रीतिमायातु श्रीपतिर्द्वीपतिः स्वराट् ।

इतीक्षत्यधिकरणं समाप्तम् ।

---

## अथाऽऽनन्दमयाधिकरणम् ।

—:०:—

उमारमालिङ्गितदिव्यविग्रहौ स्वतेजसा नित्यनिरस्तविग्रहौ ।
नीलार्जुनौ विक्रमपालितार्जुनौ पातां कृपातः स्मरकंसवैरिणौ ॥
ब्रह्मानन्दमयं भवेदुपहितं शुद्धं तदन्यत्त्विति
व्याख्यातं गुरुभिः परैस्त्वभिहितं पञ्चापि कोशा इमे ।
ब्रह्माणीति न युक्तमेव तदिति व्याधूय दोषान्बहू-
न्भूषायै गुरुपादयोर्विरचितं दोषज्ञतोषाय तत् ॥

## आनन्दमयोऽभ्यासात् ॥ १२ ॥

सर्वेषां वेदान्तानां जिज्ञास्यचेतनब्रह्मकारणतावादित्वरूपं प्रतिपादितं गतिसामान्यमेव। चेतनब्रह्मकारणतावादिषु वेदान्तेषु वाक्यानि किमाम्नातगुणविवक्षापूर्वकमुपास्यसगुणसविशेषब्रह्मपराणि गुणाद्यविवक्षया ज्ञेयनिर्गुणनिर्विशेषब्रह्मपराणि वेति संशये तद्व्यवस्थाया एतदधिकरणमारभ्योत्तरत्र प्रथमाध्यायशेषेण प्रपञ्च्यते । तत्प्रकारश्च श्रीमद्भाष्यतदीयटीकादौ विशेषेण प्रपञ्चितः । नन्वस्मिञ्छास्त्रे सगुणब्रह्मतदुपासनादिवाक्यविचारः किमर्थः । न च शास्त्रस्य वेदान्तविचारात्मकत्वात्तस्यापि वेदान्तान्तर्गततया विचार्यत्वमिति वाच्यम् । नहि वेदान्ता इत्यस्मिञ्छास्त्रे विचार्यन्ते किंतु जिज्ञास्यनिर्विशेषब्रह्मप्रमाणत्वात् । ततश्च निर्विशेषवाक्यविचार एव प्राप्नोतीति चेत् । सत्यम् । सगुणोपासनानां चित्तैकाग्र्यसंपादनद्वारा निर्विशेषब्रह्मात्मप्रतिपत्त्युपयोगित्वात्तद्वाक्यविचारोऽप्यपवादसंगत्या सफलः । विशेषत इदमन्तस्तद्धर्माधिकरणे चन्द्रिकोक्तदूषणनिराकरणप्रसङ्गे प्रतिपादयिष्यामः । एवं सविशेषवाक्यमुदाहृत्य प्रतिपादितो न्यायो निर्विशेषवाक्येऽप्युपयुक्तो भविष्यतीत्यादिसंगतिभिः सोऽपि विचारोऽस्मिञ्छास्त्रे युक्त एव । तत्र ब्रह्मणि पूर्वोक्तसंशयनिरासकोपक्रमादिलिङ्गप्रमाणकवेदान्ततात्पर्यलक्षणसंबन्धरूपसमन्वयपरप्रथमाध्याये स्पष्टब्रह्मलिङ्गानां वाक्यानां प्रथमे पादे समन्वयः । द्वितीयतृतीययोस्त्वस्पष्टब्रह्मलिङ्गानां वाक्यानां समन्वयः । तत्रापि प्रायः सविशेषवाक्यानां द्वितीये प्रायो निर्विशेषवाक्यानां तृतीय इति विशेषः । चतुर्थे त्रिपाद्युक्तसमन्वयहेतुगतिसामान्यसमर्थनद्वारोक्तसमन्वयस्यैव प्रतिपादनम् । स्पष्टं चेदमग्रे करिष्यामः । इति पादोपाधिभेद इति श्रीमद्भाष्यतदीयटीकादौ स्पष्टम् ।

यत्तु चन्द्रिकायाम्—अन्ये त्वित्यादिनाऽऽहुरित्यन्तेनोक्तपादोपाधिभेदाननूद्य तत्र यथा प्रथमे ‘अन्तस्तद्धर्मोपदेशात्’ (ब्र० सू० १।१।२०) इत्यादौ ‘सैवर्क् तत्साम तदुक्थं तद्यजुः’ (छां० १।७।५) इति सर्वात्मत्वस्य ‘सर्वेभ्यः पाप्मभ्य

उदितः ’ ( छा० १ । ६।७ ) इति सर्वपापराहित्यस्य च ब्रह्म-लिङ्गस्य स्पष्टता तथा द्वितीये ‘ सर्वत्र प्रसिद्धोपदेशात् ’ ( ब्र० सू० १।२।१ ) इत्यत्र ‘ सर्वं खल्विदं ब्रह्म ’ ( छा० ३।१४।१) इति जीवेष्वयुक्तस्य सार्वात्म्यादेः ‘ अत्ता चराचर० ’ ( ब्र० सू० १।२।९ ) इत्यत्र ‘ अन्यत्र धर्मादन्यत्राधर्मात् ’ ( का० १ २ १४ ) इति पुण्यपापराहित्यादेः ‘ अन्तरः ’ ( ब्र० सू० १ । २ १३ ) इत्यत्र ‘ एतदमृतमभयमेतद्ब्रह्म ’ ( छा० ४ । १५ । १ ) इत्यमृतत्वादेः ‘ अन्तर्यामि ’ ( ब्र० सू० १ । २ । १८ ) इत्यत्र ‘ एष त आत्माऽन्तर्याम्यमृतः ’ ( बृ० ५ । ७ । ३ ) इत्यमृतत्वादेः ‘ अदृश्यत्वादिगुणकः ’ ( ब्र० सू० १ । २ । २१ ) इत्यादौ ‘ यः सर्वज्ञः ’ ( मु० १।१।९ ) सार्वज्ञ्यादेर्ब्रह्म-लिङ्गस्य स्पष्टत्वात् । एवं तृतीये ‘ द्युभ्वादि ’ ( ब्र० सू० १। ३।१ ) इत्यत्र ‘ अमृतस्यैष सेतुः ’ ( मु० २ । २ । ५ ) ‘ यः सर्वज्ञः ’ ( मु० १।१।९ ) इत्यमृतसेतुत्वसार्वज्ञ्यादेः ‘ भूमा ’ ( ब्र० सू० १।३।८ ) इत्यत्र ‘ यत्र नान्यत्पश्यति ’ ( छा० ७। २४।१) इत्यद्वितीयत्वादेः ‘अक्षरमम्बर० ’ ( ब्र०सू०१।३।१०) इत्यत्र ‘अदृष्टं द्रष्टृश्रुतं श्रोतृ’ (बृ०३।८।११) ‘अस्थूलमनणु’ (बृ० ३।८।८ ) इत्यदृश्यत्वास्थूलत्वानणुत्वादेः ‘ ईक्षतिकर्म० ’ ( ब्र० सू० १।३।१३ ) इत्यादौ ‘ परात्परम् ’ इति परात्परत्वादेर्ब्रह्म-लिङ्गस्य स्पष्टत्वाच्च । वाक्यान्तरे ब्रह्मधर्मतया निर्णीतत्वं वा जीवादौ स्वारस्येनानुपपद्यमानत्वं वा स्पष्टत्वम्, न त्वस्वारस्ये-नापि जीवादावनुपपद्यमानत्वं विषयवाक्ये ब्रह्मधर्मतया निर्णी-तत्वं वा जीवादिमापकलिङ्गराहित्यं वा पूर्वपक्षानुदयापातात् । तच्च ‘सर्वं खल्विदम् ’ इत्यादावस्ति । न च ‘ सर्वत्र प्रसिद्धो ’ ( ब्र० सू० १।२।१ ) इत्यादेः ‘ मनोमयः प्राणशरीरो भारूपः ’ ( छा० ३।१४ ) इत्यादिकमुदाहरणम् । ब्रह्मलिङ्गं स्पष्टं किंतु ‘सर्वं खल्विदम् (छा० ३।१४।१) इत्युपक्रम इति वाच्यम् । प्रथमेऽपि ‘अन्तः ’ ( ब्र०सू०१।१।२० ) इत्यस्योदाहरणे ‘ य एषोऽन्तः ’ ( छा० १ । ६ । ६ ) इत्यत्र सार्वात्म्यस्य ‘ ज्योतिश्चरणा ’ ( ब्र० सू० १। १ । २४ ) इत्यस्योदाहरणे ‘ पादोऽस्य सर्वा भूतानि ... ’ ...

ज्योतिः ' ( छा० ३।१३।७) इत्यत्रामृतत्वादेः ' प्राणस्तथा० ' ( ब्र० सू० १।१।२८ ) इत्यस्योदाहरणे ' प्राणोऽस्मि प्रज्ञात्मा ' ( कौ० ३ । १ । २ ) इत्यत्र हिततमत्वादेर्ब्रह्मलिङ्गस्याभावात् । द्वितीयादावपि ' य एषोऽन्तरक्षिणि पुरुषो दृश्यते ' ( छा० १। ७ । ५ ) ' एतदमृतमभयमेतद्ब्रह्म ' ( छा० ४ । १५ । १ ) ' एष त आत्माऽन्तर्याम्यमृतः' ( बृ० ३।७।३ ) ' इत्याद्युदाहरणवाक्य एवामृतत्वादेः स्पष्टत्वाच्च । यथा च द्वितीये तृतीये समन्वेतव्यं मनोमयत्वादिकं न ब्रह्मणि स्पष्टं तथा प्रथमे समन्वेतव्यमादित्यस्थत्वमाकाशप्राणशब्दादिकं न ब्रह्मणि स्पष्टमिति दूषणमुक्तम् । तच्छ्रीमद्भाष्यकाराद्यनभिमेतस्वकपोलमात्रकल्पितस्पष्टत्वास्पष्टत्वनिरुक्तिमात्रनिबन्धनमित्युपेक्षणीयम् । यतो लिङ्गानां स्पष्टत्वं संभाव्यमानस्वारस्यजीवलिङ्गानभिभूतत्वं तादृशजीवलिङ्गाभिभूतत्वं चास्पष्टत्वम् । संभाव्यमानस्वारस्यत्वं च निर्णयतात्पर्यकवाक्योपक्रमगतब्रह्मलिङ्गासमभिव्याहृतत्वम् । ब्रह्मलिङ्गमित्यस्य जीवाद्युपस्थित्यद्वारा ब्रह्मोपस्थापकमित्यर्थः । जीवलिङ्गमित्यपि ब्रह्मोपस्थित्यद्वारा जीवोपस्थापकमित्यर्थकम् । तथा सत्येव सत्यकामत्वसत्यसंकल्पत्वादिब्रह्मलिङ्गसमभिव्याहृतेष्वपि मनोमयत्वादिजीवलिङ्गेष्वसंजातविरोधित्वादिना स्वारस्यसिद्धिः । तथा च न चन्द्रिकोक्तातिप्रसङ्गाद्यवकाशः । तथा हि—'सर्वत्र प्रसिद्धोपदेशात् ' ( ब्र० सू० १।२।१ ) इत्यत्र ' मनोमयः प्राणशरीरो भारूपः ' (छा० ३।१४।२) इत्यादौ निर्णयतात्पर्यके विषयवाक्ये श्रूयमाणस्य मनोमयत्वादेर्जीवलिङ्गस्य नोपक्रमस्थब्रह्मलिङ्गसमभिव्याहारः। यद्यपि ततः पूर्वतने 'सर्वं खल्विदम्'(छा० ३।१४।१) इत्यादौ सार्वात्म्यं ब्रह्मलिङ्गं श्रूयते तथाऽपि तादृशवाक्यस्य पूर्वोत्तरपक्षयोः संप्रतिपन्नार्थकतया निर्णयतात्पर्यकत्वाभावादुक्तरूपसंभाव्यमानस्वारस्येन मनोमयत्वादिना सत्यसंकल्पत्वादेर्ब्रह्मलिङ्गस्याभिभूततया तस्यास्पष्टब्रह्मलिङ्गत्वमव्याहतम् । तथा चोक्तमाकरे—अत्र सत्यसंकल्पत्वसत्यकामत्वादीनां ज्यायस्त्वस्य चोपक्रमगतमनोमयत्वाणीयस्त्वाभ्यामभिभूततयाऽस्पष्टतेति । अन्तस्तद्धर्माधिकरणे यद्यपि जीवलिङ्गतया ' हिर-

ण्यश्मश्रुः' (छा० १।६।७) इत्यादिदिव्यशरीरित्वा-दित्यस्थत्वमाशङ्कितं तथाऽपि तस्य जीवेश्वरसाधारणतया मनोमयत्वादिवज्जीव एव स्वारस्याभावेन जीवोपास्थत्वद्वारा साक्षाद्ब्रह्मोपस्थापकतया निर्णयतात्पर्यकवाक्योपक्रमगतब्रह्मलिङ्गतया च न संभाव्यमानस्वारस्यजीवलिङ्गत्वं तत्रेत्यपहतपाप्मत्वादेस्तादृशजीवलिङ्गानभिभूतत्वात्स्पष्टब्रह्मलिङ्गत्वमव्याहतम्। सशरीरत्वस्य चेश्वरसाधारण्यं स्यात्। ईश्वरस्यापि साधकानुग्रहार्थं मायामयं रूपम्।

माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद। इति भाष्ये।

अपि च श्रुतिस्मृतिपुराणादिषु परमेश्वरप्रकरण एव विग्रहाः समाम्नाताः। न च तेषां व्यावहारिकाणां संभवे वाग्धेनुतादात्म्यवदत्यन्तासत्त्वम्। 'न ह वै' इति श्रुतिमेकामवलम्ब्य वक्तुं शक्यम्। अतो न सशरीरत्वमात्रमीश्वरत्वविरोधि, किंतु स्वीयधर्माधर्मनिमित्तकसशरीर[त्व]मेवेत्यन्तरतद्धर्माधिकरणे भाष्यटीकायां स्पष्टम्। ननु यदि 'हिरण्यश्मश्रुः (छा० १।६।७) इत्यादिना प्रतीतमायिकदिव्यरूपसंबन्धो जीवेश्वरसाधारणस्तर्हि 'मनोमय' इत्यादिना प्रतीतमनआदिसंबन्धरूपमनोमयत्वादेरपि सर्वकारण ईश्वरे मायिकस्य वक्तुं शक्यत्वान्मनोमयत्वमपि जीवेश्वरसाधारणमेवेत्याविशेष इति चेत्। मैवम्। यथा हि धनवाञ्चित्रगुरित्यादौ धनगोपदोपस्थापितस्यार्थस्य स्वत्वेनातिप्रसिद्धत्वात्स्वस्वामिभावसंबन्ध एव शीघ्रमुपस्थितो भवतीति तादृशसंबन्ध एव तादृशपदात्स्वरसतो बोध्यस्तथा मनःप्राणयोर्भोगोपकरणयोस्तत्त्वेनातिप्रसिद्धत्वादुपकरणोपकरणी[य]भावरूपसंबन्ध एव मनोमय इत्यादौ शीघ्रमुपस्थितो भवतीति मनोमय इत्यादेर्जीव एव स्वारस्यमिति मनोमयत्वं जीवासाधारणं प्रथमत एव जीवोपस्थापकं जीवलिङ्गम्। अत एव वाचस्पतिग्रन्थे पूर्वपक्षे मनोमयत्वादि च कार्यकारणसंघातात्मनो जीवात्मनो निरूढमित्युक्तम्। सिद्धान्तेऽपि च-न चैष जीवसमवेतार्थो न ब्रह्मणि, तस्य 'अप्राणो ह्यमनाः' (मु०२।१।२) इत्यादिना तद्विरहप्रतिपादनादित्याक्षिप्य तस्यापि

सर्वविकारकारणतया विकाराणां च स्वकारणभेदात्तेषां च मनोमयतया ब्रह्मणस्तत्कारणस्य मनोमयत्वोपपत्तेरिति जीवद्वारैव ब्रह्मणो मनोमयत्वं न साक्षादित्युक्तम् । अग्रे च पुनः सिद्धान्ताक्षेपे—स्यादेतत् । जीवस्य साक्षान्मनोमयत्वादयः, ब्रह्मणस्तद्द्वारा । तत्र प्रथमं द्वारस्य बुद्धिस्थत्वात्तदेवोपास्यमस्तु न पुनर्जघन्यम् । ब्रह्मलिङ्गानि जीवस्य ब्रह्माभेदादुपपत्स्यन्त इति मनोमयत्वं ब्रह्मणि जघन्यमित्युक्तम् । परिमलेऽपि मनोमयत्वं ब्रह्मण्यापातत इत्युक्तम् । यत्तु—

> समासः सर्वनामार्थः संनिकृष्टमपेक्षते ।
> तद्धितार्थोऽपि सामान्यं नापेक्षाया निवर्तकः ॥
> तस्मादपेक्षितं ब्रह्म ग्राह्यमन्यपरादपि ।
> एवं च सत्यसंकल्पप्रभृतीनां यथार्थता ॥

इति वाचस्पतिस्थसिद्धान्तकारिकायां तद्धितार्थोऽपि सामान्यमित्यनेन मनोमयत्वस्य जीवेश्वरसाधारण्योक्तिस्तस्य साक्षाज्जीवलिङ्गत्वे विरुध्येतेति । तन्न । 'स क्रतुं कुर्वीत' इति वाक्येन विहितां क्रतुभावनाममुष्य 'सर्वं खल्विदम्' ( छा० ३ । १४ । १ ) इति वाक्यं शमगुणे विधिः । तथा च 'सर्वं खल्विदम्' ( छा० ३ । १४ । १ ) इति वाक्यं प्रथमं पठितमप्यर्थालोचनया परमेव । तदर्थोपजीवित्वात् । एवं च संकल्पविधिः प्रथमो निर्विषयः सन्नपर्यवस्यन्विषयापेक्षः स्वयमनिर्वृत्तो न विध्यन्तरेणोपजीवितुं शक्यः । अनुपपादकत्वात् । तस्माच्छान्ततागुणविधानात्पूर्वमेव 'मनोमयः प्राणशरीरः' ( छा० ३ । १४ । २ ) इत्यादिभिः विषयोपपादकैः संबध्यते । मनोमयत्वादि च कार्यकारणसंघातात्मनो जीवस्य निरूढमिति जीवात्मनोपास्येनोपरक्तोपासना न पश्चाद्ब्रह्मणा संबद्धुमर्हति । उत्पत्तिशिष्टगुणविरोधात् । मनोमयत्वा[दि]ना जीव एवोपास्यो न ब्रह्मेति पूर्वपक्षे—समासः सर्वनामार्थ इति सिद्धान्तः । मनोमयत्वादिना ब्रह्मैवोपास्यं न जीवः । तथा हि—प्राणशरीर इत्यादीनि बहुव्रीहिरूपाणि । प्राणः शरीरमस्येति सर्वनामार्थे बहुव्रीहिर्विग्रहवाक्यानुसारेण सर्वनामा-

र्थकः। सर्वनाम्नां च प्रकृतपरामर्शकता वक्तव्या। ततश्चान्यार्थसंनिहितमपि प्रकृतं ब्रह्म सर्वनामसमानार्थकैः प्राणशरीरादिपदैः परामृश्यत इति संकल्पविधिस्तेनैव सविषयो निराकाङ्क्षः। ननु स्ववाक्यस्थमनोमय इति मयडन्तार्थजीवपरामर्शसंभवात्तेनैवाऽऽकाङ्क्षाशान्तिरस्त्वित्यत उक्तम्—तद्धितार्थोऽपि सामान्यमिति। सोऽपि विकारप्राचुर्यप्राधान्यसाधारणत्वेन सामान्यमतो नोक्ताकाङ्क्षाशमकः। संदिग्धत्वात्। तथा च मनोमयशब्दार्थस्य जीवस्य भावनायां मनःप्रचुरत्वेन मनःप्रधानत्वेन मनोविकारत्वेन वा विषयत्वमिति संदिग्धत्वान्न मनोमयपदोपात्तो जीवः सर्वनामार्थ इत्येव 'तद्धितार्थोऽपि सामान्यम्' इत्यस्यार्थः। न तु मनोमयत्वं जीवेश्वरसाधारणमिति। व्याख्यातं च तथैव वाचस्पतिना—भवेदेतदेवं यदि प्राणशरीर इत्यादीनां साक्षाज्जीववाचकत्वं भवेत्। न त्वेतदस्ति। तथा हि—प्राणः शरीरमस्येति सर्वनामार्थे बहुव्रीहिः। संनिहितं च सर्वनामार्थं संप्राप्य तदभिधानं पर्यवस्येत्। तत्र मनोमयपदं यदि पर्यवसिताभिधानं तदा तदभिधानपर्यवसानायालम्। तदेव तु न। मनोविकारो वा मनःप्रचुरं वा किमर्थं तदद्यापि न विज्ञायत इति। तत्र साक्षादित्यस्य समुदायशक्त्यादिनेत्यर्थः। न तु जीवान्यब्रह्मोपस्थितिद्वारा। जीवस्य साक्षान्मनोमयत्वादयः, ब्रह्मणस्तद्द्वारा। तत्र द्वारस्य प्रथमं बुद्धिस्थत्वादिति पूर्वलिखितवाचस्पतिग्रन्थानुरोधात्।

'आकाशस्तल्लिङ्गात्' (ब्र० सू० १।१।२२) इत्यधिकरणे 'अत एव प्राणः' (ब्र० सू०१।१।२३) इत्यधिकरणे च 'आकाश इति होवाच' (छा० १।९।१) 'प्राण इति होवाच' (छा० १।११।५) इति निर्णयतात्पर्यकवाक्यगताकाशप्राणश्रुतिभ्यामेव पूर्वपक्षाविति तत्र ब्रह्मविषयकलिङ्गानामन्यविषयकश्रुत्यभिभूतत्वेऽपि निरुक्तसंभाव्यमानस्वारस्यजीवलिङ्गानभिभूतत्वादस्पष्टब्रह्मलिङ्गत्वं सुगमम्।

एवम् 'ज्योतिश्चरणाभिधानात्' (ब्र० सू० १।१।२४) इत्यधिकरणे 'प्राणस्तथाऽनुगमात्' (ब्र० सू० १।१।२८)

इत्यधिकरणे च 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' (छा० ३।१३।७) 'स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व' (कौ० ३।२।२) इति विषयवाक्ययोः श्रुताभ्यां ज्योतिः श्रुतिप्राणश्रुतिभ्यामेव पूर्वपक्षाविति तत्र ब्रह्मविषयकलिङ्गानामन्यविषयकश्रुत्यभिभूतत्वेऽपि न निरुक्तलिङ्गाभिभूतत्वमिति तेषामपि स्पष्टब्रह्मलिङ्गत्वं सुगममिति तेषां सर्वेषां प्रथमपाद एव निवेशः।

'अत्ता चराचरग्रहणात्' (ब्र० सू० १।२।९) इत्यत्र 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः' (का० १।२।२४) इति विषयवाक्ये श्रूयमाणस्य प्रथमश्रुतौदनशब्दावगतभोग्यत्वसंबन्धिभोक्तृत्वरूपजीवलिङ्गस्य न निर्णेयतद्वाक्योपक्रमगतब्रह्मलिङ्गसमभिव्याहृतत्वम्। 'न जायते म्रियते वा विपश्चित्' (का० १।२।१८) इत्यादि। ततः प्राचीनसंदर्भस्य तु न निर्णेयतात्पर्यकत्वम्। एवम् 'अन्यत्र धर्मादन्यत्राधर्मात्' (का० १।२।१४) इत्यादिरपि। तयोः पूर्वोत्तरपक्षयोर्ब्रह्मपरतायाः संप्रतिपत्तेः।

गुहाधिकरणे 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे' (का० १।३।१) इत्यादिविषयवाक्ये श्रूयमाणस्य गुहानिहितत्वरूपाब्रह्मलिङ्गस्य तद्वाक्योपक्रमगतब्रह्मलिङ्गासमभिव्याहृतत्वं स्फुटमेव। त्वयाऽपि तत्र संकरप्रतिपादनावसरे ब्रह्मलिङ्गानुक्तेश्च।

अन्तराधिकरणेऽपि 'य एषोऽन्तरक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदभयमेतद्ब्रह्म' (छा० ४।१५।१) इति विषयवाक्ये श्रूयमाणस्याक्षिणि प्रतिबिम्बरूपस्याक्षिणि दृश्यमानत्वस्याब्रह्मलिङ्गस्य नोक्तवाक्योपक्रमगतब्रह्मलिङ्गसमभिव्याहारः। 'कं ब्रह्म' (छा० ४।१०।४) इत्यादि ततः प्राचीनसंदर्भस्यामृतत्वादिबोधकस्य ब्रह्मपरतायाः पूर्वोत्तरपक्षयोः संप्रतिपत्तेर्न निर्णेयतात्पर्यकत्वम्। अन्तर्याम्यधिकरणेऽपि 'अन्तरो यमयति' (बृ० ३।७।२) इति विषय-

वाक्ये प्रथमश्रुतनियमनस्वरसासिद्धसशरीरत्वस्य द्रष्टृत्वादेश्च जीवलिङ्गस्य तद्वाक्योपक्रमगतब्रह्मलिङ्गसमभिव्याहारो नास्त्येव ।

अदृश्यत्वाधिकरणेऽपि, 'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः' (मु० १ । १ । ६) इति भूतयोनिपरे विषयवाक्ये श्रूयमाणानामदृश्यत्वादीनां प्रधानसाधारण्यात् 'यथोर्णनाभिः सृजते गृह्णते च' (मु० १ । १ । ७) इत्यचेतनदृष्टान्तात्प्रागवगम्यमानं नास्ति ब्रह्मलिङ्गम् । अदृश्यत्वादेर्ब्रह्मसाधारणत्वेऽप्यचेतनदृष्टान्तानुगृहीतस्य तस्य सार्वज्ञ्यादिरूपब्रह्मलिङ्गाभिभावकत्वाक्षतेः। 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' (मु०१।१।३) इति परमोपक्रमे श्रूयमाणमेकविज्ञानेन सर्वविज्ञानरूपब्रह्मलिङ्गं च न निर्णयदर्शितवाक्योपक्रमगतम् । पूर्ववादिनाऽपि तत्र भूतयोन्यक्षरातिरिक्तपराक्षरब्रह्मप्रतिपादकत्वावगमात् । तथा हि तत्र पूर्वपक्षभाष्यम्—ननु 'यः सर्वज्ञः स सर्ववित्' (मु० १ । १ । ९) इत्ययं वाक्यशेषोऽचेतने प्रधाने न संभवतीति कथं भूतयोनिः प्रधानं प्रतिज्ञायत इत्यत्रोच्यते—'यया तदक्षरमधिगम्यते यत्तदद्रेश्यम्' (मु० १ । १ । ६) इत्यक्षरशब्देनादृश्यत्वादिगुणकं भूतयोनिं श्रावयित्वा पुनः श्रावयति 'अक्षरात्परतः परः' (मु० २ । १ । २) इति । तत्र यः परोऽक्षराच्छ्रुतः स सर्वज्ञः सर्ववित्च भविष्यति । तद्विज्ञानेनैव सर्वविज्ञानं प्रतिज्ञातम् । प्रधानं त्वक्षरशब्दनिर्दिष्टं भूतयोनिरिति भाष्यटीकायामप्युक्तम् । न हीदं प्रकरणं सर्वमेव प्रधानपरमिति पूर्वपक्षी मन्यते । अपि तु भूतयोनिसंदर्भः प्रधानपरोऽन्यो ब्रह्मपरः । ततश्चास्मिन्प्रकरणे यानि श्रुतानि ब्रह्मश्रुतिलिङ्गानि तानि ब्रह्मसंदर्भगतानि भविष्यन्तीति ।

वैश्वानराधिकरणेऽपि 'को न आत्मा किं ब्रह्मेति' (छा० ५ । ११ । १) इति 'आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूहि' इति चोपक्रम्य 'यस्त्वेतमेवं प्रादेशमात्रमभिवि-

मानमात्मानं वैश्वानरमुपास्ते ' ( छा०५।१८।१ ) इत्यादिविषयवाक्ये प्रादेशमात्रत्वस्याब्रह्मलिङ्गस्योपक्रमस्थब्रह्मश्रुत्यादिसमभिव्याहृतत्वेऽपि न तादृशब्रह्मलिङ्गसमभिव्याहृतत्वमिति ।

एवं तृतीयपादे ' द्युभ्वाद्यायतनं स्वशब्दात् ' ( ब्र० सू० १।३।१ ) इत्यधिकरणेऽपि ' यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं सह प्राणैश्च सर्वैः ' ( मु० २।२।५ ) इति निर्णेयविषयवाक्ये यच्छब्दबलादनुवादप्रतीतौ तस्य पुरोवादापेक्षायां श्रुतिसिद्धब्रह्मानुमानसिद्धप्रधानयोरन्यतरस्य पुरोवादत्वे वक्तव्ये श्रुत्यर्थस्य शक्तिग्रहार्थं प्रत्यक्षानुमानापेक्षत्वेन विलम्बितोपस्थितिकतयाऽनुमानसिद्धप्रधानस्यैव पुरोवादत्वसिद्धौ यच्छब्दावगतानुमानगम्यत्वरूपेणाब्रह्मलिङ्गेन चरमश्रुतपारववरूपाब्रह्मलिङ्गोपोद्बलितेन पूर्वपक्षोत्थितेः । तस्य च प्रथमश्रुतब्रह्मलिङ्गसमभिव्याहारो नास्त्येवेति संभाव्यमानस्वारस्यत्वमक्षतम् । तेन ब्रह्मलिङ्गस्यामृतसेतुत्वसार्वज्ञ्यादेरभिभूततया तस्यास्पष्टत्वं स्पष्टम् । सर्वज्ञत्वादेरुपक्रमगतत्वेऽपि कृत्वाचिन्तयैतदधिकरणप्रवृत्त्या न दोषः । तथा चोक्तं भाष्ये—तस्मात्परमेव ब्रह्म द्युभ्वाद्यायतनम् । तदेतत् ' अदृश्यत्वादिगुणको धर्मोक्तेः ' ( ब्र० सू० १।२।२१ ) इत्यनेनैव सिद्धम् । तस्यैव हि भूतयोनिवाक्यस्य मध्य इदं पठितम् ' यस्मिन्द्यौः पृथिवी चान्तरिक्षम् ' ( मु० २।२।५ ) इति । प्रपञ्चार्थं तु पुनरुपन्यस्तमिति ।

' भूमा संप्रसादादध्युपदेशात् ' ( ब्र० सू० १।३।८ ) इत्यधिकरणेऽपि नामाद्याशान्तेषु भूयः प्रश्नप्रतिवचनपरम्परया भूयसः प्रतिपादनवत्प्राणात्तथा भूयसोऽप्रतिपादनरूपस्याब्रह्मलिङ्गस्य प्राणे भूमतागमकस्य प्राणश्रुतिप्रकरणाद्युपबृंहितस्य नोपक्रमगतब्रह्मलिङ्गसमभिव्याहारः । न चोपक्रमश्रुतम् ' तरति शोकमात्मवित् ' (छा०७।१।३) इति शोकतरणहेतुज्ञानविषयत्वं ब्रह्मलिङ्गमस्तीति शङ्क्यम् । महाप्रकरणं ब्रह्मण एव । प्राणस्य त्ववान्तरप्रकरणमिति पूर्वपक्ष उपक्रमस्य निर्णेयतात्पर्यकत्वाभावात् ।

'अक्षरमम्बरान्तधृतेः' ( ब्र० सू० १।३।१० ) इत्यधिकरणेऽपि 'स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनणु' ( बृ० ३।८।८ ) इत्यादिनिर्णयविषयवाक्ये 'स(सा) होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिंश्च तदोतं मोतं च' (बृ०३।८।३) इति गार्गिप्रश्नस्य पूर्वपक्षे परब्रह्मविषयतया तदाधारत्वेन वर्ण्यमानस्याक्षरस्य ततोऽन्यतायामेव स्वारस्यात्। परब्रह्माश्रयत्वरूपाब्रह्मलिङ्गस्याक्षरशब्दश्रुत्युपोद्बलितस्य न तद्वाक्योपक्रमगतब्रह्मलिङ्गसमभिव्याहारः।

'ईक्षतिकर्मव्यपदेशात्सः' ( ब्र० सू० १।३।१३ ) इत्यधिकरणेऽपि परिच्छिन्नफलकोपासनाविषयत्वं तत्प्रकरणस्थेन परापरब्रह्मविदो नियतपरापरब्रह्मप्राप्तिरूपफलप्रतिपादकवाक्योपोद्बलितमब्रह्मलिङ्गम् 'एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारस्तस्माद्विद्वानेतेनैवाऽऽयतनेनैकतरमन्वेति' ( प्र० ५।२ ) इति प्रकृतय श्रूयते 'यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत' (प्र० ५।५ ) इति तदीयविषयवाक्ये तद्वाक्योपक्रमगतब्रह्मलिङ्गसमभिव्याहृतमिति।

'दहर उत्तरेभ्यः' ( ब्र० सू० १।३।१४ ) इत्यधिकरणेऽपि जीवपूर्वपक्षे ब्रह्मपुरशब्दावगतशरीरसाध्यभोगवत्त्वरूपाब्रह्मलिङ्गम् 'अथ यदिदं ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यम्' ( छा० ८।१।१ ) इति निर्णयवाक्योपक्रमगतब्रह्मलिङ्गसमभिव्याहृतमेव।

'अनुकृतेस्तस्य च' ( ब्र० सू० १।३।२२ ) इत्यधिकरणेऽपि 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः, तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' ( मु० २।२।१० ) इति तदीयविषयवाक्यगतं सजातीयतेजोभिभावकत्वरूपं तेजोलिङ्गं न निर्णयवाक्योपक्रमगतब्रह्मलिङ्गसमभिव्याहृतम्।

'शब्दादेव प्रमितः' ( ब्र० सू० १।३।२४ ) इत्यधिकरणेऽपि 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति, अङ्गुष्ठ-

मात्रः पुरुषो ज्योतिरिवाधूमकः, ईशानो भूतभव्यस्य ' ( का० २।१।१२—१३ ) इति तदीयविषयवाक्यगतं जीवलिङ्गं न तादृशवाक्योपक्रमगतब्रह्मलिङ्गसमभिव्याहृतम् ।

' कम्पनात् ' ( ब्र० सू० १ । ३ । ३९ ) इत्यधिकरणेऽपि ' यदिदं किंच जगत्सर्वं प्राण एजति निःसृतम् । महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ' ( का० २ । ३ । २ ) इति तदीयविषयवाक्यगतमशन्याद्युद्यमनरूपं वायुलिङ्गमप्येतादृशमेव ।

' ज्योतिर्दर्शनात् ' ( ब्र० सू० १।३।४० ) इत्यधिकरणेऽपि ' एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते ' ( छा० ८।१२।३ ) इति तदीयविषयवाक्य आदित्यपूर्वपक्षे नक्षत्राद्यपेक्षया लिङ्गस्य स्वरसतः शरीरादुत्क्रान्तिबोधकसमुत्थानश्रुतिज्योतिःश्रुत्योपोद्बलितस्य न तादृशलिङ्गसमभिव्याहारः ।

' आकाशोऽर्थान्तरत्वादिव्यपदेशात् ' ( ब्र० सू० १ । ३ । ४१ ) इत्यधिकरणेऽपि ' आकाशो ह वै नाम नामरूपयोर्निर्वहिता ' ( छा० ८ । १४ । १ ) इति विषयवाक्यगत' ह वै '-शब्दाभ्यां लब्धप्रसिद्धिविशेषरूपाब्रह्मलिङ्गस्याऽऽकाशश्रुत्युपोद्बलितस्यापि न तादृशलिङ्गसमभिव्याहारः ।

' सुषुप्त्युत्क्रान्त्योर्भेदेन ' ( ब्र० सू० १।३।४२ ) इत्यधिकरणेऽपि ' योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः ' ( बृ० ४।३।७ ) इत्यादिवाक्येऽपि प्रतीयमानप्राणसंबन्धादिरूपं जीवलिङ्गं न निर्णयतात्पर्यकवाक्योपक्रमगतब्रह्मलिङ्गसमभिव्याहृतमिति तैर्लिङ्गैरुक्ताधिकरणीयब्रह्मनिर्णायकलिङ्गानामभिभूतत्वादस्पष्टत्वेन न तेष्वाद्यपादीयोपाधेरतिप्रसङ्गः । द्वितीयतृतीयपादोपाध्योरप्रसङ्गो वा । अस्पष्टब्रह्मलिङ्गसमन्वयपरयोरपि द्वितीयतृतीयपादयोः प्रायः सविशेषवाक्यानां द्वितीये पादे प्रायो निर्विशेषवाक्यानां तृतीये पादे समन्वय इत्यवान्तरभेद इति पूर्वोक्तौ द्वितीयपादे मनोमयोऽत्ता पाययिताऽ-

क्षिपुरुषोऽन्तर्यामी वैश्वानर इत्येषां सविशेषत्वेऽप्यक्षरं निर्विशेषम् । एवं तृतीयपादे द्युभ्वाद्यायतनभूमाक्षरेक्षतिकर्मादीनां निर्विशेषत्वेऽपि दहरः सविशेष इत्युभयत्रापि भाय इत्युक्तम् ।

यत्तु चन्द्रिकायाम्—यश्च द्वितीये सविशेषं तृतीये निर्विशेषमिति निरुक्तपादोपाधिभेदमनूद्य, तदपि न द्वितीयेऽपि 'सर्वत्र' ( ब्र० सू० १ । २ । १ ) इत्यत्र 'सर्वं खल्विदं ब्रह्म' ( छा० ३ । १४ । १ ) इत्यविद्यादिसर्वभ्रमाधिष्ठानत्वरूपसार्वात्म्यादेः 'अत्ता' ( ब्र० सू० १ । २ । ९ ) इत्यत्र 'अन्यत्र भूताच्च भव्याच्च'(का०१।२।१४)'महतो महीयान्'(का०१।२।२०) इति कालत्रयातीतत्वादेः 'अन्तरः' ( ब्र०सू०१।२।१३ ) इत्यत्र 'कं ब्रह्म खं ब्रह्म' ( छा० ४ । १०।४ ) इति पूर्णसुखत्वादेः 'अन्तर्यामि' ( ब्र० सू० १ । २ । १८ ) इत्यत्र 'एष त आत्मा' ( बृ० ३ । ७ । २ ) इति जीवतादात्म्यादेः 'अदृश्यत्वादि०' (ब्र०सू०१।२ २१) इत्यादौ 'यत्तदद्रेश्यम्' ( मु० १ । १ । ६ ) इत्यदृश्यत्वादेः सविशेषेऽनुपपत्तः । तृतीयेऽपि 'द्युभ्वादि' (ब्र०सू०१।३।१) इत्यत्र 'तमेवैकं जानथ'(मु०२।२।५) 'यदा पश्यः पश्यते रुक्मवर्णम्' (मु० ३। १ । ३) इति दृश्यत्वादे रूपित्वादेश्च 'भूमा' (ब्र० सू० १ । ३ । ८) इत्यत्र 'एवं पश्यन्' इति सप्रकारकज्ञानविषयत्वादेः 'अक्षरम्' ( ब्र० सू० १ । ३ । १० ) इत्यत्र 'अदृष्टं द्रष्टृश्रुतं श्रोतृ' ( बृ० ३ । ८ । ११ ) इति द्रष्टृत्वादेः 'ईक्षतिकर्म' ( ब्र० सू० १ । ३ । १३ ) इत्यत्र 'पुरुषमीक्षते' ( प्र० ५ । ५ ) इति दृश्यत्वादेः 'दहरः' ( ब्र० सू० १ । ३ । १४ ) इत्यादौ 'सत्यकामः सत्यसंकल्पः' ( छा० ८ । ७ । १ ) इति कामादेर्निर्विशेषे चानुपपत्तेश्चेति दूषणमुक्तम् । तदविचाररमणीयम् । यतो स्वार्थविशेषणतया विवक्षितविशेषसमर्पकवाक्यत्वमेव सविशेषवाक्यत्वं स्वार्थविशेषणतयाऽविवक्षितविशेषसमर्पकनिर्णेयतात्पर्यकवाक्यत्वं निर्विशेषवाक्यत्वमिह विवक्षितम् । अयं विशेषो वाक्यार्थविशेषणतया विवक्षितोऽयं नेति तात्पर्यानुग्राहकवाक्यगतबोधकताख्यशक्ति-

पर्यालोचनयाऽवगम्यते । तादृशशक्तिनिर्णयस्तु श्रुतिलिङ्गादि-भिरुपक्रमादिभिश्चेत्यन्यत्र विस्तरेणोक्तम् । तथा च नोक्तानुपपत्तिः । तथा हि—'सर्वत्र प्रसिद्धोपदेशात्' ( ब्र० सू० १ । २ । १ ) इत्यत्र 'स क्रतुं कुर्वीत' ( छा० ३ । १४ । १ ) 'मनोमयः प्राणशरीरो भारूपः' ( छा० ३ । १४ । २ ) इत्यस्यैव निर्णयतात्पर्यकता । तस्य च मनोमयत्वादिगुणकब्रह्मोपासनापरतया मनोमयत्वादिनोपास्यब्रह्मरूपे वाक्यार्थे मनोमयत्वादीनां विशेषाणां तद्बोध्यानां विशेषणतया विवक्षितत्वात् । तत्र निरुक्तसविशेषवाक्यत्वमक्षतम् । तत्प्रतिपाद्ये निरुक्तवाक्यार्थे 'सर्वं खल्विदम्' (छा०३।१४।१) इत्याद्यर्थस्य सार्वात्म्यादेरसत्त्वेऽपि न क्षतिः 'सर्वं खल्विदम्'(छा०३।१४।१) इत्यादेः पूर्वोत्तरपक्षयोः संप्रतिपन्नार्थकतया निर्णयतात्पर्यकत्वाभावात् । एवम् 'अत्ता चराचरग्रहणात्' (ब्र० सू०१ २ ९) इत्यत्र 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः, मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः' ( का० १ । २ । २५ ) इत्यत्र 'यस्येत्यादिमृत्युर्यस्योपसेचनम्' इत्यन्तवाक्यस्यात्तुः परमेश्वरत्वाभावे 'यत्र सः' इत्यनेन निर्दिश्यमानात्तुराधारस्य कारणीभूतपरमेश्वरातीतत्वं न सिध्यतीतीश्वरपरत्वेन निर्णयतात्पर्यकतयाऽऽधारभूतनिर्विशेषब्रह्मोपलक्षणीभूतात्तृत्वविशिष्टपरमेश्वररूपतदर्थविशेषणतयाऽत्तृत्वादेर्विशेषस्य विवक्षितत्वात्तादृशविशेषविशिष्टे 'अन्यत्र भूताच्च भव्याच्च' ( का० १ २।१४ ) इतिवाक्यबोधितकालत्रयातीतत्वादेरसंभवेऽपि न क्षतिः । तद्वाक्यस्य पूर्वोत्तरपक्षयोः संप्रतिपन्नार्थकतया निर्णयतात्पर्यकत्वाभावात्तादृशवाक्ये सविशेषवाक्यत्वमक्षतमेव । एवम् 'अन्तर उपपत्तेः' ( ब्र० सू० १ । २ । १३ ) इत्यत्र 'य एषोऽक्षिणि पुरुषो दृश्यते' ( छा० ४ । १५ । १ ) इत्यस्य वाक्यस्यापि सविशेषवाक्यत्वमक्षतमेव । अक्ष्यधिकरणकसंयद्वामत्वादिगुणविशिष्टोपास्येश्वररूपनिर्णयतात्पर्यकतादृशवाक्यार्थे उक्तविशेषाणां विशेषणतया विवक्षितत्वात् । तादृशवाक्यार्थे 'कं ब्रह्म खं ब्रह्म'(छा०४।१०।४) इति वाक्यार्थपूर्णसुखत्वादेरसत्त्वेऽपि न

क्षतिः। तादृशवाक्यस्य पूर्वोत्तरपक्षयोः संगतिपन्नार्थकतया निर्णयतात्पर्यकत्वाभावात्। एवम् 'अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्' (ब्र० सू० १।२।१८) इत्यत्राप्यन्तर्यामिब्राह्मणवाक्यस्यापि नियन्तृत्वपृथिवीशरीरकत्वादिनोपास्यब्रह्मपरतया आकरादौ स्पष्टमुक्ततया तदर्थविशेषणतया सर्वनियन्तृत्वपृथिव्यादिशरीरकत्वादेर्विवक्षितत्वात्। सविशेषवाक्यत्वं सुगमम्। तदर्थे 'एष त आत्मा' (बृ० ३।७।२) इत्यादेः शास्त्रदृष्ट्या ममाऽऽत्मा भद्रसेन इतिवदुपकारकत्वादिनोपपत्तेः। एवम् 'अदृश्यत्वादिगुणको धर्मोक्तेः' (ब्र० सू० १।२।२१) इत्यत्र 'यत्तदद्रेश्यम्' (मु० १।१।६) इत्यादेर्निर्विशेषाक्षरपरत्वान्निर्विशेषवाक्यत्वमेवेति सविशेषेऽदृश्यत्वादेरनुपपत्तेरिति चन्द्रिकोक्तदूषणानवकाशः। प्रतिपादितं चैतत्प्रायः पदव्यावृत्तिकथनावसरे। एवं तृतीयेऽपि 'द्युभ्वाद्यायतनं स्वशब्दात्' (ब्र० सू० १।३।१) इत्यत्र 'यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं सह प्राणैश्च सर्वैः। तमेवैकं जानथाऽऽत्मानमन्या वाचो विमुञ्चथ' (मु० २।२।५) इति विषयवाक्ये 'यस्मिन्नित्यादितमेवैकं जानथाऽऽत्मानम्' इत्यन्तनिर्णयतात्पर्यके वाक्ये ज्ञानकर्मतयाऽन्वयिन्यात्मरूपे वाक्यार्थे 'यस्मिन्द्यौरित्यादि सह प्राणैश्च सर्वैः' इत्यन्तप्रतिपाद्यस्य द्युभ्वाद्यायतनत्वस्य न विशेषणता। अपि तूपलक्षणतया परिचायकतामात्रमेव। अत एव 'तमेवैकं जानथ' इति सावधारणश्रुतिः। तथा चोक्तं द्युभ्वादीत्यधिकरणभाष्ये 'तमेवैकं जानथाऽऽत्मानम्' इति प्रतीकमादाय—एतदुक्तं भवति—न कार्यप्रपञ्चविशिष्ट आत्मा विज्ञेयः, किं तर्ह्यविद्याकृतं कार्यप्रपञ्चं विद्यया प्रविलापयन्तमेवैकमायतनभूतमात्मानं जानथैकरसमिति। यथा यस्मिन्नास्ते देवदत्तस्तदानयेत्युक्त आसनमेवाऽऽनयति न देवदत्तम्, तद्वदायतनभूतस्यैवैकरसस्याऽऽत्मनो विज्ञेयत्वमुपादिश्यत इति तादृशवाक्यस्य निर्विशेषवाक्यत्वमक्षतमेव। जानथेति ज्ञानविषयत्वस्य तत्र श्रवणेऽप्यविद्याकल्पितस्यैकरसात्माकारवृत्तिविषयत्वस्य तत्राभ्युपगमात्तस्य च वास्तवनिर्विशेषस्वरूपाविरोधा-

त्कल्पितत्वाद्दश्यत्वत्तिरूपज्ञानस्य च गुहायां शब्दो नास्तीति शब्दवत्कृतकरेणुवच्च स्वपरनिषेधकत्वाभ्युपगमाच्च दृश्यत्वस्य निर्विशेषेऽनुपपत्तिः । एतेन भूमाधिकरणे 'एवं पश्यन्' इति समकारकज्ञानविषयत्वादेः, अक्षरमित्यत्राद्दष्टत्वादेः, ईक्षतिकर्मेत्यत्र 'पुरुषमीक्षते' इति दृश्यत्वादेर्निर्विशेषेऽनुपपत्तिश्चन्द्रिकोक्ता निरस्ता। एवमित्यत्रैवमाद्युपलक्षिते पश्यन्निति धर्मस्योपलक्षणतया ज्ञानविषयत्वादेश्च निरुक्तरीत्या निर्विशेषेऽप्युपपत्तेः । ज्ञेयाक्षररूपवाक्यार्थे द्रष्टृत्वादेरुपलक्षणतयैव परिचायकतयाऽविद्याकल्पितस्य तस्य निर्विशेषस्वरूपाविरोधित्वात् । ईक्षतिकर्मेत्यत्र दृश्यत्वादेर्द्युभ्वाद्यायतन इवोपपत्तेः । दहरस्य तु सविशेषत्वमेव प्रायः पदव्याद्युत्तिकथनावसर उक्तमिति 'सत्यकामः' ( छा०८।७।१ ) इति कामादेर्निर्विशेषेऽनुपपत्तिरिति चन्द्रिकोक्तदूषणानवकाशः । तत्र तत्र निर्णयतात्पर्यकज्ञेयब्रह्मपरवाक्यानां निर्विशेषवाक्यत्वम् 'यस्मिन्द्यौः' ( मु० २।२।५ ) इति वाक्ये तत्प्रतिपादनदिशोह्यं सुधीभिरिति नास्मन्मते दर्शितपादोपाधिभेदसांकर्याद्यवकाशः । प्रत्युताऽऽनन्दतीर्थीयमत एव नामात्मकशब्दसमन्वयपरे प्रथमपादे 'अन्तस्तद्धर्मोपदेशात्' ( ब्र० सू० १।१।२० ) इत्यत्र लिङ्गसमन्वयः । तथा लिङ्गसमन्वयपरे द्वितीयपादे वैश्वानरनाम्नः समन्वय इति पादोपाधिभेदसांकर्यमपरिहार्यम् ।

यत्तु चन्द्रिकायाम्—अस्माकं नामसमन्वयपरे पादे 'अन्तस्तद्धर्म०' ( ब्र० सू० १।१।२० ) इत्यत्र लिङ्गसमन्वय इन्द्राद्यनेकनामसमन्वयार्थः । तथा लिङ्गसमन्वयपरे पादे वैश्वानरनाम्नः समन्वयःपाचकत्वाद्यनेकलिङ्गसमन्वयार्थ इति टीकायामेव वक्ष्यत इत्युक्तम् । तदसत् । टीकायां वक्ष्यत इत्यस्मादेव पादोपाधिसांकर्यानिराकरणात् । आनन्दतीर्थीयरीत्या पादोपाधिभेदवर्णनं यथा न संभवदुक्तिकं तथाऽग्रे सविस्तरं प्रतिपादयिष्यामः । चतुर्थपादे त्रिपाद्युक्तसमन्वयहेतुगतिसामान्यसमर्थनद्वारोक्तसमन्वयस्यैव प्रतिपादनमित्युक्तम् । तदित्थम्—श्रुत्युक्तं जगत्कारणत्वं ब्रह्मलक्षणं प्रधान एव योजयितुं शक्यं न ब्रह्मणि,

इति लक्षणासंभवशङ्कायामीक्षत्यधिकरणेन प्रधाने श्रुतिस्वारस्यं निरस्य तदुपोद्बलनाय च सर्वासां श्रुतीनां ब्रह्मण्येव गतिसामान्यं प्रतिज्ञाय 'आनन्दमयोऽभ्यासात्' इत्यारभ्य 'पत्यादिशब्देभ्यः' इत्यन्तसूत्रैस्त्रिपाद्या तत्तच्छ्रुतिपर्यालोचनया गतिसामान्यमेव शङ्काविशेषनिराकरणेन प्रतिपादितम् । चतुर्थपादे तल्लक्षणस्य प्रधानादावतिव्याप्त्या गतिसामान्यमाक्षिप्य निराक्रियते । तत्प्रकारश्च भाष्यतदीयटीकादौ प्रपञ्चितः ।

यत्तु चन्द्रिकायाम्—यच्चोक्तं परैः—प्रधानाद्येव कारणतया सर्ववेदान्तार्थ इति लक्षणासंभवशङ्कायास्त्रिपाद्यां निरासः । चतुर्थपादे तु प्रधानमपि कारणतया वेदान्तैकदेशार्थ इत्यतिव्याप्तिशङ्काया निरास इत्युक्तार्थमनूद्य तत्र 'आनुमानिकम्' (ब्र० सू० १ । ४ । १) इत्यादौ पूर्वपक्षिणा यस्य 'महतः परमव्यक्तम्' (का० १ । ३ । ११) 'अजामेकाम्' (श्वे० ४ । ५) इत्यादेः प्रधानपरत्वं शङ्कितं तस्यैकदेशस्य सिद्धान्तेऽप्यविद्यादिपरत्वेन ब्रह्मपरत्वाभावात् । अविद्यापरत्वे च ब्रह्मलक्षणस्य प्रधानेऽनतिव्याप्तावप्यविद्यायामतिव्याप्त्यपरिहारात् । तस्मात्परमते पादोपाधिभेदो न युक्तः । नापि तत्क्रमः । सुबोधस्य प्राथम्य आनन्दमयादौ निर्विशेषविचारायोगात् । दुर्बोधस्य प्राथम्ये तु स्पष्टब्रह्मलिङ्गाना प्राथम्यायोगात् । निर्विशेषस्य तृतीये निरूपणायोगाच्च । ईक्षत्यधिकरणोक्ताशब्दत्वस्य विक्षिप्य चतुर्थे पादे व्युत्पादने हेत्वभावाच्चेति दूषणमुक्तम् । तदसत् । 'महतः परमव्यक्तम्' (का० १ । ३ । ११) इत्यंशस्यास्मन्मते निर्विकारस्वरूपस्य परमात्मनो जगत्कर्तृत्वे सति जगदुपादानत्वरूपाभिन्ननिमित्तोपादानत्वनिर्वाहककामविषयदादिरूपोपाधिकानृतविकारनिर्वाहायावश्येष्यमाणानिर्वचनीयेश्वरायत्तकल्पितजगत्प्रागवस्थाश्रयाविद्यामायाशक्त्यादिशब्दवाच्यार्थपरत्वेन साङ्ख्यमतसिद्धस्वतन्त्रप्रधानपरत्वाभावात् । संकल्पपूर्वककामयितृत्वनियतकर्तृत्वघटितलक्षणस्य तादृशार्थेऽतिव्याप्तिप्रसक्त्यभावात् । प्रथमपादे 'जन्माद्यस्य यतः' (ब्र० सू० १ । १ । २) इत्यत्राद्यादेः समस्तस्य जगतो जन्मादि-

कारणं ब्रह्मेत्युक्तम् । तस्य समस्तजगत्कारणस्य ब्रह्मणो व्यापित्वं नित्यत्वं सर्वज्ञत्वं सर्वशक्तित्वं सर्वात्मत्वमित्येवमादिजातीयका धर्मा उक्ता एवेति भाष्यम् । तत्रोक्ता एवेत्यस्योक्ता इवेत्यर्थः । तथा च कण्ठतोऽनुक्ता अप्यधिकरणसिद्धान्तन्यायेनोपाक्षिप्ता एवेति फलितोऽर्थः । 'यत्सिद्धावर्थादन्य(वन्यप्रकरण)सिद्धिः सोऽधिकरणसिद्धान्तः' ( गौ० सू० १ । १ । ३१) इति न्यायः । जगत्कर्तृत्वसिद्धौ सार्वज्ञ्यादिसिद्धिस्तार्किकाणामपि संमतैव । तथा च प्रथमपादप्रतिपाद्यैर्जगत्कारणत्वसर्वज्ञत्वादिभिर्द्वितीयतृतीयपादयोस्तेषां सिद्धवदुपन्यासेन सिद्धान्तकरणाद्द्वितीयतृतीयपादार्थयोः प्रथमपादस्योपजीव्यतया तयोश्च पूर्वापरीभावः संगतिश्च । उपजीव्यस्य प्राथम्यमुपजीवकस्याऽऽनन्तर्यं च तन्त्रान्तरे सुप्रसिद्धमेवेत्यस्मन्मतानुयायिभाष्यतदीयटीकाकारादिसंमतम् । सर्वज्ञत्वादिधर्मैः प्रथमपादप्रतिपाद्यैर्वाक्यानां ब्रह्मपरत्वनिर्णयस्य द्वितीयतृतीयपादार्थत्व आकाशाद्यधिकरणस्य तत्रैव कर्तव्यत्वेऽपि तन्निर्णेयवाक्यानां स्पष्टलिङ्गतया स्पष्टलिङ्गवाक्यसमन्वयपरे प्रथमपादेऽन्तर्भावः । आनन्दमयस्य प्रतर्दनवाक्यस्य चावान्तरसंगत्यैव विचार इति न सुबोधस्य प्राथम्येत्यादिदूषणावकाशः । जगत्कारणस्येक्षितृत्वश्रवणात्कर्तृत्वांशे प्रधानस्याशब्दत्वस्येक्षत्यधिकरणेन सिद्धावप्युपादानत्वं प्रधानस्यैव भविष्यतीति प्रधानस्याशब्दत्वमसिद्धमिति शङ्कायां तदंशेऽपि ब्रह्मणि गतिसामान्यप्रपञ्चनाय पुनरपि प्रकृत्यधिकरणे ब्रह्मण एवोपादानत्वमिति व्यवस्थापनेन प्रधानस्याशब्दत्वं व्युत्पाद्यत इति 'ईक्षत्यधिकरणोक्ताशब्दत्वस्य' इत्यादिदूषणानवकाश इति दिक् ।

उक्ते ब्रह्मणि प्रमाणान्तरविरोधपरिहाराय द्वितीयोऽध्यायः । यद्यप्यौपनिषदस्य ब्रह्मणः प्रमाणान्तरायोग्यतया तद्विरोधपरिहारार्थं विचारो नापेक्षितस्तथाऽपि तत्त्वंपदार्थशोधकवाक्यैः प्रपञ्चस्यानृततामतिपादनपूर्वकं पदार्थः शोध्यते । तत्र च प्रपञ्चसत्यताप्रतिपादकसांख्यस्मृतिविरोधः प्रत्यक्षादिप्रमाणान्तरविरोधश्च प्रसज्यते । तत्परिहाराय तद्विचारोऽपेक्षित एव । तृतीयचतु-

र्थाध्यायाभ्यां ससाधनं फलं निरूपयिष्यते। तत्प्रकारश्च श्रीमद्भाष्यादौ स्पष्टः।

आनन्दतीर्थीयास्तु—विष्णोः शास्त्रगम्यत्वे हेतुत्वेनोपक्रमादितात्पर्यलिङ्गरूपः समन्वयः 'तत्तु समन्वयात्' इति सिद्धवदुपन्यस्तः, न तु तत्रोपक्रमादिर्विष्णावेव व्यवस्थित इति न्यायैर्व्यवस्थापितम्। स च यावद्वाक्यविशेषानुदाहृत्य पूर्वपक्षोत्तरपक्षग्रन्थनेन प्रपञ्च्यते तावदयमनुपन्यस्तप्राय एव। अन्यथा शैवादयोऽपि समन्वयादित्येव सिद्धवद्धेतुमुपन्यस्य शिवादीनां कारणत्वेन शास्त्रगम्यत्वं प्रसाधयेयुः। अतः समन्वयविभागेन तत्प्रपञ्चनार्थम् 'आनन्दमयोऽभ्यासात्' (ब्र०सू०१।१।१२) इत्यारभ्याध्यायशेष आरभ्यत इति पञ्चाधिकरणानन्तरमध्यायशेषप्रवृत्तिमुक्त्वा प्रकारान्तरेण पादोपाधिभेदानाहुः। तथा हि—आनन्दमयाधिकरणे तत्त्वप्रकाशिकायाम्—अथ ब्रह्मस्वरूपनिरूपणानवशेषात्किमध्यायशेषेणेत्यतस्तत्कृत्यमाहेत्यनेन 'तमेव' इति भाष्यमवतार्य कृत्यन्तराभावेऽपि 'तत्तु समन्वयात्' इत्युक्तमेवोपक्रमाद्यन्वयात्सम्यङ्निरूपणं शास्त्रीयशब्दानां प्रतिवाक्यग्रहणेन प्रकटयत्यनेनाध्यायेन सूत्रकारः। अन्यथा प्रतिज्ञामात्रस्यासाधकत्वेन 'अन्यदेव समन्वयात्' इत्यपि वक्तुं शक्यत्वादिति। तथा वैदिकाः शब्दास्तावच्चतुर्विधाः—अन्यत्रैव प्रसिद्धा उभयत्र प्रसिद्धा अन्यत्र प्रसिद्धा तत्र प्रसिद्धा इति। सर्वेऽपि नामलिङ्गात्मकतया प्रत्येकं द्विविधाः। तत्र नामात्मकानामन्यत्र प्रसिद्धानां शब्दानां प्रथमे पादे समन्वयः। लिङ्गात्मकानामन्यत्र प्रसिद्धानां शब्दानां द्वितीयपादे समन्वयः। उभयत्र प्रसिद्धानां शब्दानां तृतीयपादे समन्वयः। अन्यत्रैव प्रसिद्धानां शब्दानां चतुर्थपादे समन्वयः। उक्तेषु नामलिङ्गात्मकेषु द्विविधेष्वपि शब्देषु न तत्र प्रसिद्धानां समन्वयो वाच्यः। तेषां तत्रैव प्रसिद्धत्वात्। तेष्वन्यत्रैव प्रसिद्धस्य प्रथमं बुद्ध्यनारोहाच्चतुर्थे तदुक्तिः। उभयत्र प्रसिद्धानामन्यप्रसिद्धिनिराकरणमात्रस्यान्यत्र प्रसिद्धानां तत्प्रसिद्धिनिराकरणपूर्वकं भगवत्परत्वस्य प्रतिपादनाद्मुख्यत्वेन प्राथम्यायोगात्तृतीये तदुक्तिः। अन्यपराणां

मध्येऽपि लिङ्गात्मकानां धर्मवाचकत्वान्नामात्मकेभ्यो धर्मिवा-चिभ्योऽमुख्यत्वेनाप्राधान्यात्तेषां द्वितीये समन्वयोक्तिः । ततो लोकतोऽन्यत्र प्रसिद्धानां नामात्मकानां शब्दानां भगवति समन्वयः प्रदर्श्यतेऽस्मिन्प्रथमे पाद इति । तत्रेदं चिन्त्यते—आग्रिमाधिकरणेषु विष्णौ समन्वयप्रपञ्चनरूपः सिद्धान्तः सृष्ट्या-दिवाक्यरूपशास्त्रप्रतिपाद्यत्वं त्वद्रीत्यैव विष्णोर्न संभवतीतीक्ष-त्यधिकरणोक्तदूषणग्रस्तो नोन्मज्जनमर्हतीति स्पष्टमेव दूषणम् । किंचासिद्धसमन्वयप्रपञ्चार्थमध्यायशेष इति वदता त्वयाऽऽनन्द-मयाधिकरणमारभ्य प्रथमाध्यायगततत्तदधिकरणेषु क्वचित्त-दधिकरणविषयश्रुतिवाक्ये विष्णुमात्रनिष्ठत्वेनाद्याप्यसिद्धाविद्व-द्रूढ्यादिना सिद्धान्तः कृतो दृश्यते । तथा हि—अस्मिन्नेव 'आनन्दमयोऽभ्यासात्' (ब्र० सू० १।१।१२) इत्यधिकरणे जगत्कर्तृत्वादिना प्रतिपादितोऽन्नमयादिरानन्दमयान्तो विष्णु-रेवेति साध्ये ब्रह्मशब्दाभ्यासं हेतूकृत्य ब्रह्मशब्दस्य यद्यप्य-न्यत्राप्यज्ञरूढिस्तथाऽपि तस्य विष्णौ 'तदेव ब्रह्म परमं कवीनाम्' (महाना० १।६) इति श्रुत्योपदर्शिता विद्वद्रूढिः प्रबलेति सैव निर्ण-यहेतुरिति त्वयोक्तम् । तथा हि तत्त्वप्रकाशिकायाम्—'विष्णुरे-वाऽऽनन्दमयः, ब्रह्मशब्दस्य तदेव ब्रह्मेत्यादिश्रुतिस्मृतिषु विष्ण्वैकनिष्ठतोक्तेः' इति । प्रायस्तत्तदधिकरणेषु तत्तदधिकर-णविषयश्रुतिवाक्येषु साधारणेन ब्रह्मलिङ्गादिना विष्णुपरत्व-निर्णयः, पूर्वपक्ष्यभिमततत्तद्देवताविषयश्रुतीनां विद्वद्रूढ्या महा-योगेन प्रवृत्तिनिमित्ततादधीन्यादिना विष्णौ सावकाशतया पर-ममुख्यत्वेन प्राबल्यम्, प्रसिद्धार्थेष्वज्ञरूढ्या केवलयोगेनामु-ख्यतया दौर्बल्यमुपपाद्य निराकरणं च, तथा क्वचिदधिकरणे तद्विषयश्रुतिवाक्ये साधारणेनैव ब्रह्मलिङ्गादिना विष्णुपरत्व-निर्णयः, देवतान्तरविषयश्रुतिलिङ्गादेरन्तर्यामिविषयतया साव-काशत्वेन निराकरणं च कृतं दृश्यते । तथा हि—'अन्तस्तद्धर्मोपदेशात्' (ब्र० सू० १ । १ । २० ) इत्यधिकरणे 'अन्तःप्रविष्टं कर्तारमेतमन्तश्चन्द्रमसि मनसा चरन्तं सहैव सन्तं न विजानन्ति देवाः' इत्यस्मिन्विषयवा-

क्येऽन्तःप्रविष्टशब्दस्य विष्णुपरत्वे 'अन्तःसमुद्रे मनसा चरन्तं ब्रह्माऽन्वविन्दद्दशहोतारमर्णे ब्यस्याण्डकोशं शुष्ममाहुः' इति समुद्रशायित्वब्रह्माण्डवीर्यत्वरूपं लिङ्गमभिधाय यद्येवं समुद्रस्थायित्वलिङ्गादन्तःस्थो विष्णुस्तर्हि तेनान्तःस्थेन विष्णुनेन्द्रादीनामभेदोऽत्रास्तु विवक्षितः। तत्प्रापिकाया 'इन्द्रो राजा जगतो य ईशे सप्त युञ्जन्ति रथमेकम्' इति पूर्वपक्षोक्तश्रुतेः सद्भावात्। न च श्रुत्यादिना लिङ्गबाधेनान्यतरनिर्णयः। लिङ्गस्य निरवकाशत्वात्। नापि लिङ्गेन श्रुतिबाधः। तस्या बलवत्त्वात्। एवं च पक्षद्वयेऽन्योन्यं बाध्यबाधकभावशून्ये तदन्यथानुपपत्त्याऽन्तःस्थेन विष्णुनेन्द्रादीनामभेदः प्राप्त इत्याशङ्कया 'भेदव्यपदेशाच्च' इति सूत्रमवतार्येन्द्राद्यन्तर्यामिपरतया तद्भेदव्यपदेशेनान्तःस्थेनाभेदासंभवमुक्त्वा लिङ्गेन श्रुतिबाधं चोक्तवोक्तं तत्त्वप्रकाशिकायां शङ्कासमाधानाभ्याम्। न चेन्द्रादिषु योगरूढिभ्यां प्रवृत्तत्वाच्छब्दानां हरावमुख्यतेति वाच्यम्। परमैश्वर्यादेर्भगवति निरवधिकत्वेन महायोगसंभवादज्ञरूढितोऽपि विद्वद्रूढेरेव बलवत्त्वात्। अन्यगतप्रवृत्तिनिमित्तस्यापि भगवदधीनत्वेन च तत्रैव मुख्यत्वोपपत्तेश्चेति।

एवम् 'आकाशस्तल्लिङ्गात्' (ब्र० सू० १।१।२२) इत्यधिकरणे 'अस्य लोकस्य का गतिरित्याकाश इति होवाच' (छा० १।९।१) इति वाक्यस्य 'स एष परोवरीयानुद्गीथः स एषोऽनन्तः' (छा० १।९।२) इति वाक्यशेषश्रुतपरोवरीयस्त्वानन्तत्वादिसाधारणलिङ्गेनैव निरवकाशत्वात्प्रबलेन विष्णुपरत्वनिर्णयः, आकाशश्रुतेर्विद्वद्रूढिमहायोगप्रवृत्तिनिमित्ततादधीन्यैर्विष्णुपरत्वसंभवेन सावकाशतया तन्निराकरणं च। तथा हि तत्त्वप्रकाशिकायाम्—अस्तु लिङ्गेन श्रुतेर्बाधस्तथाऽपि विष्णौ श्रुतिरमुख्यैव, अन्यत्र रूढत्वाद्विष्णौ यौगिकत्वादिति चेत्। न। आकाशस्य भगवदधीनत्वेन तत्रैव मुख्यत्वान्महायोगविद्वद्रूढयोर्भावाच्चेति। एवम् 'अत एव प्राणः' (ब्र० सू० १।१।२३) इत्यधिकरणे 'तद्वै त्वं प्राणोभवो महान्भोगः प्रजापतेर्भुजः करिष्यमा(मा)णो यद्देवान्प्राणयोन वा'

इति वाक्ये प्राणशब्दस्य 'श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे' इति तत्पूर्वानुवाकश्रुतेन साधारणेनैव श्रीलक्ष्मीपतित्व-लिङ्गेन विष्णुपरत्वनिर्णयः, प्राणश्रुतेर्विद्वद्रूढ्यादिना विष्णुपर-त्वसंभवेन सावकाशतया दुर्बलत्वेन तन्निराकरणम् । तथा च तत्त्वप्रकाशिकायाम्—कथं श्रुत्या पूर्वपक्षिते लिङ्गेन निर्णय इति चेत्, लिङ्गस्य निरवकाशत्वात्प्राणश्रुतेर्विष्णावपि सावकाश-त्वान्निरवकाशेन सावकाशस्य बाधोपपत्ते रूढियोगयोरभावात् । कथं विष्णौ प्राणश्रुतेरवकाश इति चेत् । न । 'ईशानः प्राणदः प्राणः' इति विद्वद्रूढेर्महायोगस्य च सत्त्वादिति ।

एवम् 'ज्योतिश्चरणाभिधानात्' (ब्र० सू० १ । १।२४) इत्यधिकरणे 'वि मे कर्णा पतयतो वि चक्षुर्वीदं ज्योतिर्हृदय आ-हितं यत् । वि मे मनश्चरति दूर आधीः किंस्विद्वक्ष्यामि किमुनूम-निष्ये' इति वाक्ये ज्योतिःशब्दस्य साधारणेनैव कर्णादिविरुद्ध-(द्धा)चरेणन कर्णादिविदूरत्वरूपेण कर्णाद्यपरिच्छेद्यत्वरूपेण वा लिङ्गेन विष्णुपरत्वनिर्णयः, ज्योतिःश्रुतेर्विद्वद्रूढ्यादिना विष्णुप-रत्वसंभवेन सावकाशतया दुर्बलत्वेन निराकरणम् । तथा च तत्त्वप्रकाशिकायाम्—न च श्रुतिविरोधः, श्रुतेर्विष्णावपि साव-काशत्वान्महायोगविद्वद्रूढिसद्भावेन मुख्यत्वाच्च निरवकाशलि-ङ्गेन सावकाशश्रुतेर्बाधोपपत्तेरिति ।

एवम् 'छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्' (ब्र० सू० १ । १ । २५) इत्यधिकरणे 'गायत्री वा इदं सर्वं भूतम्' (छा०३।१२।१) इति वाक्ये गायत्रीशब्दस्य साधार-णेनैव गानत्राणकर्तृत्वेन लिङ्गेन विष्णुपरत्वनिर्णयः, गायत्रीश्रुतेः पूर्ववदेव विद्वद्रूढ्यादिना विष्णौ सावकाशतया निराकरणं च । तथा हि तत्त्वप्रकाशिकायाम्—ननु गायत्रीश्रुतेरन्यत्र रूढत्वा-त्कथं लिङ्गमात्रेण विष्णुपरत्वनिर्णय इत्याशङ्क्या—

सर्वच्छन्दाभिधो ह्येषः सर्वदेवाभिधो ह्यसौ।
सर्वलोकाभिधो ह्येषस्तेषां तदुपचारतः ॥

इति वामन इति भाष्यमवतार्योक्तम्—गायत्रीश्रुतेः पौराणिक-रूढ्या श्रुत्युक्तयोगेन गायत्र्या भगवदधीनत्वेन च विष्णावेव

मुख्यतया वृत्त्या सावकाशत्वात्, लिङ्गस्य च मुख्यया वृत्याऽन्यत्रानवकाशत्वात्सावकाशश्रुतेर्लिङ्गेन बाधोपपत्तेर्युक्तो लिङ्गमात्रेणायं निर्णय इति।

एवम् 'प्राणस्तथाऽनुगमात्' (ब्र० सू० १।१।२८) इत्यधिकरणे 'ता वा एता शीर्षं श्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक् प्राणः' इति वाक्ये प्राणशब्दस्य 'तं देवाः प्राणयन्त स एषोऽसुः स एष भूतिश्चाभूतिश्च तं भूतिरिति देवा उपासांचक्रिरे' इत्यादिवाक्यश्रुतदेवोपास्यत्वादिना साधारणेनैव लिङ्गेन विष्णुपरत्वनिर्णयः, तत्र यन्मुख्यप्राणलिङ्गं ताश्च हि सत अहमुक्थमहमुक्थमस्मीति प्राण उदक्रामत्' इत्यादि श्रुतम् 'इन्द्रियैः सह कलह उत्क्रमण प्रवेश इत्यादि त्वामेव विजानीयाम्' इत्यादिपृष्टवन्तं विश्वामित्रं प्रति 'प्राणो वा अहमस्मि' इति वचनं जीवलिङ्गं च तत्सर्वमन्तर्यामिविषयतया सावकाशत्वेन दुर्बलमिति तन्निराकरणम्। तथा च तत्त्वप्रकाशिकायाम्—विष्णुरेवायं प्राणो न जीवादिः, लिङ्गानां तदन्तर्यामिभगवद्विषयतयोपपत्तेरिति। एवं द्वितीयपादीयाद्यधिकरणेष्वपि तत्तद्विषयवाक्यानां साधारणब्रह्मलिङ्गादिभिर्विष्णुपरत्वनिर्णयः, अन्यविषयश्रुतिलिङ्गादीनां पूर्वोक्तरीत्यैव निराकरणमित्येतदेव प्रायिकं तद्दर्शिनां स्पष्टमेव। विस्तरभयान्नोदाह्रियते।

क्वचिदधिकरणे बलाबलतयाऽनवधारितदेवताद्वयाविषयश्रुतिद्वयसत्त्वेऽप्येकयैव श्रुत्या तद्विषयवाक्यगतशब्दस्य विष्णुपरत्वनिर्णयः कृतो दृश्यते। यथा 'शब्दादेव प्रमितः' (ब्र० सू० १।३।२४) इत्यधिकरणे 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति' 'ईशानो भूतभव्यस्य स एवाद्य स उ श्वः' (का० २।१।१२–१३) इति मन्त्रश्रुताङ्गुष्ठमात्रशब्दस्य विष्णुपरत्वे

> ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति।
> मध्ये वामनमासीनं विश्वे देवा उपासते॥

इति मन्त्रश्रुतवामनश्रुतिरस्तीति। तत्र साधारणब्रह्मविषयश्रुतिलिङ्गानां विष्ण्वेकाविषयत्वम्, अन्यविषयश्रुतिलिङ्गानां विद्वद्रूढिप्रवृत्तिनिमित्ततादधीन्यादिभिर्विष्णावेव सा-

वक्तव्यमित्येतत्, यावत्तत्तद्वाक्यविशेषानुदाहृत्य पूर्वोत्तरग्रथनेन यावन्न मीमांस्यते तावदप्यसिद्धम् । शिवादिविषयत्वमपि संभवतीति शङ्काग्रस्तत्वात्तन्निराकरणायैव त्वयाऽध्यायशेषस्याऽऽरब्धत्वात् । तथा च साधनीयत्वेनोपक्रान्तार्थविस्मरणेन तस्यैव सर्वत्र हेतूकरणमत्यन्तायुक्तं मीमांसासंप्रदायविरुद्धं चेति दूषणमतिस्पष्टमेव । अथ विष्ण्वेकनिष्ठत्वेनास्माभिर्दर्शितानां श्रुतिलिङ्गानां कथं साधारण्यं तत्त्वयैवोपपादनीयम् । मया तु तत्तदधिकरणेष्वसाधारण्यस्योक्तत्वादिति चेत् । सत्यमुक्तम् । असदुक्तं तु तत् । शिवादिविषयकत्वेन श्रुतिलिङ्गानां शङ्काग्रस्तत्वेन तदसाधारण्यासिद्धेः । तथा हि—यदुक्तमानन्दमयाधिकरणे 'तदेव ब्रह्म परमं कवीनाम्' ( महाना० १ । ६ ) इत्यादिश्रुत्युपदर्शितविद्वद्रूढया ब्रह्मशब्दस्य विष्णुपरत्वमिति । तत्र वक्तव्यम्—'तदेव' इति श्रुतौ ब्रह्मशब्दस्य विष्णावेव विद्वद्रूढिरिति कुतो व्यवस्थितिः, येन शिवादिस्तदन्यो मुख्यार्थो न भवेत् । विष्णुरेव जगत्कर्तृ परं ब्रह्मेतिनिश्चयाधीनत्वात्तद्व्यवस्थितेः । तस्य चाद्याप्यसिद्धेः । न च 'यमन्तः कवयो वयन्ति' इति जगत्कारणे श्रुतसमुद्रान्तःस्थत्वरूपप्रसिद्धतल्लिङ्गात्तदेवेति श्रुतिस्थब्रह्मशब्दो विष्णुपर एवेति वक्तुं युक्तम् । 'प्रजापतिश्चरति गर्भेऽन्तः' इति प्रजापतिश्चरति गर्भे इत्युपक्रम्य 'धाता यथापूर्वमकल्पयत्' इत्युपसंहारादुपक्रमोपसंहारगतप्रजापतिधातृश्रुतिभ्याम्, तथा—

> एकार्णवे तु त्रैलोक्ये ब्रह्मा नारायणात्मकः ।
> भोगिशय्यागतः शेते त्रैलोक्यग्रासबृंहितः ॥

इति विष्णुपुराणवचनेन च मध्यस्थतल्लिङ्गस्य 'प्रजापतिर्वै हिरण्यगर्भः' इति 'हिरण्यगर्भः समवर्तताग्रे' ( ऋ० सं० १० । १२१ । १ ) इति जगत्कारणत्वेनावगतहिरण्यगर्भपदवाच्यप्रजापतिसाधारण्यशङ्कया तेन ब्रह्मशब्दस्य विष्णु[ पर ]त्वानिर्णयाच्च । नारायाणत्मक इति जलनिवासो नारायणसंज्ञां प्राप्त इत्यर्थः ।

> सर्वलोकस्य निर्माता ब्रह्मा विश्वसृजां पतिः ।
> स चाप्सु शयनादेव शिवात्मा स्वेच्छया चरन् ॥

नारायणाख्यामभजच्छक्तिरूपः प्रजापतिः ।

इत्याश्वलायनस्मृतेः । एतेन संज्ञयाऽनन्यसाधारणनारायणशब्दो ब्रह्मशब्दस्य विष्णु[ पर ]त्वनिर्णायकः, 'आपो नारा इति प्रोक्ताः' इत्यादि 'तेन नारायणः स्मृतः' इत्यन्तश्रौतनिर्वचनस्येतरसाधारण्ये संज्ञायां विहितणत्वानुपपत्तेरिति समाहितम् । ब्रह्मणि नारायणसंज्ञाया उक्तस्मृतिप्रमाणासिद्धत्वात् । एवं हिरण्यगर्भाष्टकमध्ये 'य ईशे अस्य द्विपदश्चतुष्पदश्च-(दः) कस्मै देवाय हविषा विधेम' (श्वे० ४।१३) इति 'एतावन्तो वै पशवो द्विपादश्चतुष्पादश्च' इति श्रुत्यन्तरासिद्धं पशुपतित्वं शिवलिङ्गम् । अत एव श्वेताश्वतरोपनिषदि 'यो देवानां प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं पश्यत जायमानं स नो बुद्ध्या शुभया संयुनक्तु' ( ऋ० सं० १०।८२।३ ) इति मन्त्रानन्तरम् 'यो देवानामधिपो यस्मिँल्लोका अधिश्रिताः' इति मन्त्रस्य 'य ईशे अस्य द्विपदश्चतुष्पदश्च(दः)' इतीदमेवोत्तरार्धं श्रूयते । एवं *हिरण्यगर्भाष्टके 'पुरुषस्य विद्महे सहस्राक्षस्य महादेवस्य धीमहि । तन्नो रुद्रः प्रचोदयात् । तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात्' ( ना० अ० १ । द० ५ ) इत्युपसंहारादौपसंहारिकरुद्रमहादेवश्रुत्योः "—'यतः प्रसूतिः' इत्युक्तजगत्प्रसूतिहेतोः 'अतः परं नान्यदणीयसं हि परात्परं महतो महान्तं यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात्' इति सर्वोत्कृष्टत्वं तमसः प्रकृतिमण्डलात्परत्वादवगम्यते । तदण्डवर्तिनो हिरण्यगर्भस्य प्रजापत्याख्यस्य न संभवति । एवम् 'य एवं विदुरमृतास्ते भवन्ति' ( तै० सं० १।६।९ ) इत्युपक्रान्तजगत्प्रसूतिहेतोर्ज्ञानादमृतत्वं मुक्तिरभिधीयते । तदिदं मुमुक्षुज्ञेयत्वं लिङ्गं हिरण्यगर्भे न संभवति ।

+यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥

---

* हिरण्यगर्भाष्टक इति । 'अम्भस्य पारे' इति प्रकरण इति भावः ।
+ यदेति । यदीत्यर्थः ।

( श्वे० ६।२० ) इति शिवज्ञानादेव मोक्षोक्तेः । 'नेतरोऽनुपपत्तेः' (ब्र० सू० १।१।१६) इति सूत्रे 'न चान्यज्ञानान्मोक्षः' इति त्वदीय-भाष्यतत्त्वप्रकाशिकोक्तार्थस्यासिद्ध्या 'शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा [स] विज्ञेयः' ( मा० १।७ ) इति श्रुत्यन्तरे शिवस्यैव मुमुक्षुज्ञेयब्रह्मतोक्तेश्च'' एवंविधानेकशिवलिङ्ग×सहकृतयोरुप-क्रमस्थप्रजापतिधातृश्रुत्यपेक्षया बलवत्त्वेन प्रजापतिश्रुतेर्भवन्मत इव तदन्तर्यामिविषयतया—

पाति यस्मात्प्रजाः सर्वाः प्रजापतिरिति स्मृतः ।
देवेषु च महादेवो महादेवस्ततः स्मृतः ॥

इति लैङ्गे दर्शितयोगेन वा शिवविषयत्वसंभवात् ।

लिङ्गमूर्तिर्महाज्वालामालासंवृतमव्ययम् ॥
लिङ्गस्य मध्ये रुचिरं चन्द्रशेखरविग्रहम् ।
व्योममार्गे तथा लिङ्गे ब्रह्माणं हंसरूपिणम् ॥
विष्णुं वराहरूपेण लिङ्गस्याधस्त्वधोमुखम् ।
ब्रह्माणं दक्षिणे तस्य कृताञ्जलिपुटं स्थितम् ॥
वामे विष्णुं महाबाहुं कृताञ्जलिपुटं तथा ।
मध्ये लिङ्गं महाघोरं महाब्धेरम्भसि स्थितम् ॥
ध्यात्वा प्रदोषकालेषु शिवसायुज्यमाप्नुयात् ।
एकार्णवे तु त्रैलोक्ये ब्रह्मा नारायणात्मकः ॥
भोगिशय्यागतः शेते त्रैलोक्यग्रासबृंहितः ।
जलस्थैर्योगिभिर्देवैश्चिन्त्यमानोऽब्जसंभवः ॥
ततोऽवतीर्य विश्वात्मा देहमाविश्य चक्रिणः ।
सुष्वाप योगशयन एकीभूयाथ विष्णुना ॥
ब्रह्मा कमलवर्णाभो रुद्रः कालाग्निसंनिभः ।
पुरुषः पुण्डरीकाभो रूपं तत्परमात्मनः ॥
तप्तहेमनिकायाभं शितिकण्ठं त्रिलोचनम् ।
प्रसादसुमुखं वीक्ष्य प्रणेमुर्जातकौतुकाः ॥

इत्यादित्यपुराणोक्तेः समुद्रान्तःस्थत्वलिङ्गस्य शिवसाधारण्याच्च । 'तदेव ब्रह्म' इति श्रुतौ ब्रह्मशब्दस्य शिवविषयत्व-

× सहकृतयोरिति । अस्य पूर्वोक्तरुद्रमहादेवश्रुत्योरित्यनेनान्वयो बोध्यः ।

प्रतीतेश्च । न चास्य सूक्तस्य ' अद्भ्यः संभूतो हिरण्यगर्भ इत्यष्टौ ' इत्युत्तरनारायणैकवाक्यत्वावगमात्तत्र 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ ' इति श्रुतलक्ष्मीपतित्वलिङ्गासंभवः शिवे शङ्क्यः । 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ ' इत्यत्र *हृल्लेखावाच्योमापतित्वलिङ्गस्यापि प्रतीत्या लक्ष्मीपतित्वलिङ्गेन विष्णुमात्रपरत्वासिद्धेः । लक्ष्मीशब्दस्य—

तत्र माहेश्वरी लक्ष्मीमूर्तिर्मूर्तिमतः प्रभोः । इत्यारभ्य

तस्याङ्कमध्यमारूढा शक्तिर्माहेश्वरी परा ।
महालक्ष्मीरिति ख्याता श्यामा सर्वमनोहरा ॥

इति वायुसंहितायां माहेश्वरीशक्तिरूपायां महालक्ष्म्यां वृत्त्युपपत्तेः । लक्ष्मीपतित्वस्यापि विष्णुमात्रनिष्ठत्वासंभवाच्च । ननु ' श्रीश्च ते लक्ष्मीश्च ' इति वाजसनेयके पठ्यत इति चेत् । किं ततः । श्रीशब्दस्यापि समानप्रकरणाम्नातहृल्लेखार्थ एव पर्यवसानात् । न च वैपरीत्यं शङ्क्यम् । श्रीशब्दस्य ' श्रियं लक्ष्मीमौपलामम्बिकां गां षष्ठीं जयामिन्द्रसेनेत्युदाहुः ' इत्यायुष्यसूक्ते गौर्यां दृष्टप्रयोगत्वात् । हृल्लेखायाः कमलायां प्रयोगानुपलम्भात् । उपलम्भेऽपि वा तल्लिङ्गस्य शिवविष्णुसाधारण्याक्षतेः । लैङ्गे ब्रह्मनारायणकृतशिवस्तोत्रे—

नमोऽस्तु लक्ष्मीपतये श्रीपते ह्रीपते नमः ।

इति शाखाभेदभिन्नपाठोपसंहारेणोपबृंहणाच्च । ' अहोरात्रे पार्श्वे ' इत्यस्य ' शर्वरी त्वमहं दिनम् ', इत्युमामहेश्वरसंवादोक्तेरर्धनारीश्वररूप एव स्वारस्यावगमाच्च ।

अथ ' ब्रह्मविदाप्नोति परम् ' ( तै० २ । १ । १ ) इति श्रुत्या ब्रह्मज्ञानात्परप्राप्तिरूपमोक्षोक्तेर्ब्रह्मज्ञानस्य च ' औपनिषदं पुरुषं पृच्छामि ' ( बृ० । ३.९ । २६ ) इति श्रुतेरुपनिषदेकप्रमाणजन्यत्वावगमादुपनिषच्छास्त्रं मुख्यतया यस्य प्रतिपादकं स एव ब्रह्मशब्दार्थो वाच्यः । नहि मुख्यत्वेन शिवस्य प्रतिपादकमुपनिषच्छास्त्रमस्ति । नापि वेदान्तोक्तं जगत्कारणत्वादिलक्षणं शिवसाधारणम् । येन ब्रह्मशब्दस्य

* हृल्लेखेति । ' ह्रीं ' इत्याकारकबीजवाच्येत्यर्थः ।

शिवविषयत्वशङ्कया तदर्थस्य विष्णुत्वनिर्णयो न स्यात् । 'सर्वे वेदा यत्पदमामनन्ति । तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति । तत्ते पदं संग्रहेण ब्रवीमि' ( का० १ । २ । १५ ) इत्युपक्रम्य प्रवृत्तया 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' ( का०१।३।९ ) इति कठवल्लीश्रुत्या 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' ( मु०१।२।१३ ) इति माण्डूक्य(मुण्डक) श्रुत्या च विष्णुपुरुषादिशब्दाभिधेयस्य नारायणस्यैवोपनिषत्प्रतिपाद्यत्वावगमात् । अत एव 'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति' ( भाल्लवेयश्रु० ) इति श्रूयते । 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नाग्नीषोमौ नेमे द्यावापृथिवी' इत्यादिमहोपनिषज्जातेन 'पुरुषो ह वै नारायणोऽकामयत। प्रजाः सृजेयेति । नारायणाद्ब्रह्मा जायते नारा[यणा]द्रुद्रो जायते' इत्यादिनारायणोपनिषज्जातेन 'नैवेह किंचनाग्र आसीत् । अमूलमनाधारमिमाः प्रजा जायन्ते । दिव्यो देव एको नारायणः' इत्यादिसुबालोपनिषज्जातेन च जगत्कारणत्वलक्षणस्यानितरसाधारण्यावगमात्तदनुरोधात् 'सदेव सोम्येदमग्र आसीत्' 'ब्रह्म वा इदमग्र आसीत्' 'आत्मा वा इदमेक एवाग्र आसीत्' इत्यादिश्रुत्यन्तरगतकारणवाक्येषु श्रुतस्यापि कारणस्य सद्ब्रह्मात्मादिसामान्यशब्दस्य 'यदग्नीषोमीयं पशुमालभेत' इति विधिवाक्यपठितस्य गवाश्वादिसाधारणपशुशब्दस्य 'छागस्य वपाया मेदसः' इति मन्त्रप्रतिपन्ने छाग इव 'छागो वा मन्त्रवर्णात्' ( जै० सू० ६ । ८ । ३१ ) इति न्यायेन नारायण एव पर्यवसानाच्चेति चेत् । अत्र वदन्ति—'अहमेकः प्रथममासम्' इत्याथर्वशिरसि देवान्प्रति शिववचनेन 'यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः । तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात्प्रसृता पुराणी' (श्वे०४।१८) इति श्वेताश्वतरोपनिषन्मन्त्रेण च शिवस्य सर्गाद्यसमये तमोमात्रावशिष्टे कारणभावेनावस्थानोपवर्णनात् । 'यो देवानां प्रथमं पुरस्तात् । विश्वाधिको रुद्रो महर्षिः ।

हिरण्यगर्भं पश्यत जायमानम् । स नो देवः शुभया स्मृत्या संयुनक्तु'(ना० १२।१२) इति तैत्तिरीयमन्त्रेण सर्वादिभूतहिरण्यगर्भजनयितृत्वप्रतिपादकेन सर्वकारणत्वप्रत्यायनात् । अथर्वशिखायाम्—'ब्रह्मविष्णवग्नीन्द्रास्ते सर्वे संप्रसूयन्ते' इति ब्रह्मादीनां कार्यत्वमुक्त्वा 'कारणं तु ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरः शंभुराकाशमध्यगः' इति वाक्येन शिवस्य साक्षात्कारणत्वोक्तेर्जगत्कारणत्वस्य नारायणासाधारण्यानिश्चयाच्छागपशुन्यायेन नारायण एव कारणवाक्यपर्यवसानासिद्धेः । न च शिवे कारणताबोधकवाक्येषु रुद्रशिवादिश्रुतीनां विद्वद्रूढ्यादिना विष्णुविषयत्वेन सावकाशतया निरवकाशत्वेन प्रबलनारायणपुरुषादिश्रुतिभिर्जगत्काणत्वस्य विष्णुमात्रनिष्ठत्वनिर्णय इति शक्यं वक्तुम् । पुरुषनारायणादिशब्दानामपि तदन्तर्यामिशिवविषयतया नेतुं शक्यत्वेन तेषां निरवकाशत्वासिद्धेः । पुरुषशब्दस्य 'तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात्' (ना० १) इत्यत्र शिवसाधारण्यदर्शनात् । नारायणशब्दस्यापि हिरण्यगर्भादौ रूढेः पुराणोक्तायाः दर्शितत्वात् । योगेनान्यपरतायामेव त्वदुक्तणत्वानुपपत्तिरूपबाधकसद्भावादन्तर्यामिविषयतयाऽन्येषां रुद्रेन्द्रादिश्रुतीनां तत्र तत्रोदाहृतस्मृतिपुराणादिवाक्यावष्टम्भेन साकाशत्वमिति त्वदुक्तरीत्यैव—

> स्मृतयश्च पुराणानि भारतादीनि सत्तम ।
> शिवमेव सदा साम्बं हृदि कृत्वा ब्रुवन्ति हि ॥

इति पराशरोक्तेः ।

> कानिचिद्वेदवाक्यानि ब्राह्मणा वेदवित्तमाः ।
> रुद्रमूर्तिं समाश्रित्य शिवे परमकारणे ॥
> पर्यवसन्ति विप्रेन्द्रास्तथा वाक्यानि कानिचित् ।
> विष्णुमूर्तिं समाश्रित्य ब्रह्ममूर्तिं च कानिचित् ॥
> आग्नेयीं मूर्तिमाश्रित्य श्रुतिवाक्यानि कानिचित् ।
> सूर्यमूर्तिं मुनिश्रेष्ठास्तथैवान्यानि कानिचित् ॥
> एवं मूर्त्यभिधानेन द्वारेणैव मुनीश्वराः ।
> मूर्तिरूपो महादेवः स्थितः सर्वासु मूर्तिषु ॥

इति स्कान्दवचनावष्टम्भेन 'इमा रुद्राय स्थिरधन्वने गिरः' इति श्रुतिवाक्यानुसारेण च नारायणादिश्रुतीनां तदन्तर्यामिशिवविषयतया सावकाशत्वमिति वक्तुं बाधकाभावात् । शिवस्य सर्वान्तर्यामित्वे प्रमाणमग्रे वक्ष्यामः । एतेन विष्णोरेव ब्रह्मशब्दार्थत्वे 'ब्रह्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते' इति परेषां प्रमाणोपन्यास आभास एव । निरुक्तप्रमाणैर्ब्रह्मलक्षणस्य जगत्कारणत्वस्य शिवसाधारण्येन तस्यापि ब्रह्मत्वप्रतीतौ विष्णुशब्दस्य तदन्तर्यामिविषयतया सावकाशत्वेन ब्रह्मशब्दस्य विष्णुमात्रवाचितायां तद्वाक्याशक्तेरतिस्फुटत्वात् । 'शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा [स] विज्ञेयः' ( मा० १ । ७ ) ।

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥

( श्वे० ६ । २० ) इत्यादिश्रुतिभिः शिवज्ञानं विना मुक्तेर्गगनवेष्टनवदसंभावितत्वोक्तेर्मुक्तिसाधनज्ञानविषयौपनिषदब्रह्मणः शिवत्वावगतौ 'यदिच्छन्तो ब्रह्मचर्यं चरन्ति' इत्युपक्रम्य प्रवृत्तायाम् 'तद्विष्णोः परमं पदम्' ( का० १।३। ९ ) इति श्रुतौ विष्णुशब्दस्य तदन्तर्यामिविषयतया सावकाशत्वान्न तद्बलात्सर्ववेदान्तप्रतिपाद्यत्वं विष्णोरेवेति निर्णेतुं शक्यम् । एवम्—

आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥

इत्यत्र पदशब्दो न स्थानवाची, किंतु,

इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ॥ ( का० १ । ३ । ३ )

इति पूर्वमन्त्रानिर्दिष्टपुरुषस्यैवात्र स्थानप्रमाणेन पदशब्दानिर्देश्यत्वावगमात् । एवं च पद्यते प्राप्यत इति पदमिति व्युत्पत्त्या पदशब्दनिर्दिष्टः प्राप्यः पुरुष इति स्थिते प्राप्यः पुरुषो न विष्णुः । 'विष्णोः पदम्' इत्यनेन प्रतिपादितस्य विष्णववि-

कोत्कर्षस्य तत्र बाधात्। किंतु शिव एव, इति 'सर्वे वेदा यत्प-दमामनन्ति' (का० १।२।१५) इत्युपक्रमो शिवविषय एव। यद्वा पदशब्द एव शिववाची।

शिवो रुद्रो महादेवः शंकरो ब्रह्म सत्पदम्।
एवमादीनि नामानि विशिष्टानि परस्य तु॥

इति स्कान्दोक्तेः। तथा च विष्णोरिति पञ्चम्यन्तं परमश-ब्दार्थोत्कर्षप्रतियोगिसमर्पकम्। परशब्दयोगे पञ्चम्या एव मुख्य-त्वात्। एवम् 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच' इत्यत्राप्य-क्षरपुरुषशब्दाभ्यां शिव एवोच्यते। 'क्षरः(रं) प्रधानममृताक्षरं हरः क्षरात्मना वि(त्मानावी)शते देव एकः' (श्वे० १।१०) इत्यत्राक्षरशब्दस्य शिवे दृष्टत्वात्। पुरुषशब्दस्य 'तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात्' (ना० १) इत्यत्र शिवे प्रसिद्धेश्चेति शैवोक्तरीत्या वाक्यार्थस्य वक्तुं शक्य-त्वात्। 'इमा रुद्राय स्थिरधन्वने गिरः' इति श्रुत्या शिवं प्रस्तुत्य 'सर्वाणि ह वा एतस्यैव नामधेयानि' इत्याश्वलाय-नस्मृत्या च शिवस्यापि सर्ववेदप्रतिपाद्यत्वावगमाच्च न सर्ववे-दान्तशास्त्रप्रतिपाद्यो विष्णुरेव ब्रह्मशब्दार्थ इति निर्णेतुं शक्यम्। किंच 'ऋतꣳ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्। ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः' (महाना० १) इति मन्त्रे रुद्रेऽपि परं ब्रह्मेति ब्रह्मशब्दश्रवणाद्विष्णुरेव ब्रह्मशब्दार्थो मुख्य इति न निर्णेतुं शक्यम्।

यत्तु पूर्वार्धोक्तं विष्णवाख्यमूर्ध्वरेतं परब्रह्म प्रति स्थितमपरं ब्रह्म नीललोहितकृष्णपिङ्गलान्यतरापरपर्यायविरूपाक्षशब्देन निर्दिश्यत इत्येव तन्मन्त्रार्थो वर्णनीयः। अन्यथा कृष्णपिङ्गलं नीललोहितमित्यनयोरेकतरस्य पौनरुक्त्यापत्तिः। किंच '_ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिः' इत्युत्तरवाक्ये 'ब्रह्माधिपतिः' इत्यस्य बहुव्रीहिरूपताऽवश्यमनुसरणीया। अन्यथा तत्रत्यब्रह्म-शब्दस्य स्वरितान्तत्वानुपपत्तेः। समासान्तरत्वे वाऽनन्तोदात्त-त्वेन 'अनुदात्तं पदमेकवर्जम्' (पा० सू० ६।१।१५८) इत्यस्य प्रसङ्गेन समासस्य स्वरितपूर्वपदान्तत्वानिर्वाहः स्पष्ट इति परोक्तम्। तदसत्। पिङ्गललोहितपदयोर्भिन्नार्थकतया

पौनरुक्त्याभावात् । 'नमः सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च'(रु०अ०८) इति श्रुताविवोपपत्तेश्च । ब्रह्माधिपतिरित्यनेन च 'पतिं विश्वस्याऽऽत्मेश्वरं॰शाश्वत॰शिवमच्युतम्'(ना० १३।३)इत्यादाविवानन्याधिपतित्वमेवोच्यते । ब्रह्म परमात्मरूपं स्वयमेवाधिपतिर्यस्येति बहुव्रीह्याश्रयणात् । अन्यथा ब्रह्मणोऽधिपतिरित्युत्तरवाक्यासंगतेः । न च रुद्रो ब्रह्माणं प्रत्यधिपतिरिति त्वयाऽपीष्यते । नापि ब्रह्मशब्दोऽयं जीववाचीत्यपि वक्तुं युक्तम् । 'ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम्' इत्यनेन पौनरुक्त्यापत्तेः । ब्रह्मशब्दस्य प्रधानवाचित्वेऽपि नासौ रुद्र इति शक्यमभ्युपगन्तुम् । प्रधानवश्यताया एव तत्र त्वयोपगमात् । अनन्याधिपतित्वद्योतनायैव जीवोत्तमं हिरण्यगर्भं प्रत्यधिपतिरित्युक्तिरर्थवती भवति । किंच सदाशिव इति दोषगन्धराहित्यमोमिति प्रणववाच्यत्वं चोच्यमानं रुद्रस्य परब्रह्मतामवगमयति । 'यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं पश्यत जायमानं स नो देवो शुभया स्मृत्या संयुनक्तु । यस्मात्परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायान्'(ना० १२।१२) इत्युपक्रम्य 'यो वेदादौ स्वरः प्रोक्तः' इत्यादिना तस्यैव रुद्रस्योंकारवाच्यतामुक्त्वा तस्यैव परमेश्वरताया 'यः परः स महेश्वरः' इत्यनेन निर्धारणात्स एवात्र मन्त्रे प्रत्यभिज्ञायते । अपि च त्वदुक्तरीतौ प्रतिशब्दाध्याहारो विरूपाक्षादिशब्दानां नपुंसकतानिर्वाहाय ब्रह्मशब्दाध्याहारश्चेत्यादि बह्वसमञ्जसम् ।

यदपि 'तदेवर्तं तदसत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्' (म० ना० १ । ६ ) इति श्रुतौ समुद्रशायित्वलिङ्गाद्विष्णुरेव ऋतादिशब्दवाच्य इत्यवगम्यत इति । तदपि न । समुद्रान्तःस्थत्वस्याप्यष्टमूर्तौ रुद्रे प्रसिद्धेः । 'मध्ये लिङ्गं महाघोरं महाब्धेरम्भसि स्थितम्' इत्यादित्यपुराणोक्तेश्च । तस्य शिवसाधारण्यात् । नारायणेऽपि सुप्रसिद्धं समुद्रान्तःस्थत्वमिति चेत् । बाढमस्तु । नैतावता रुद्रव्यवच्छेदलाभः । किंच श्वेताश्वतराणां मन्त्रोपनिषदि 'यो देवानां प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः

हिरण्यगर्भं जनयामास पूर्वम्' इति रुद्रस्य हिरण्यगर्भजनयितृत्वमुक्त्वा 'यस्मात्परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्' इति (ना० १२।१३) मन्त्रेण तस्य सर्वापेक्षया परत्वज्यायस्त्वे अभिधाय 'ततः परं ब्रह्म परं महान्तम्' इति मन्त्रे कार्यब्रह्महिरण्यगर्भापेक्षया परत्वेन शिवाख्यब्रह्मप्रतिपादके शिवेऽपि ब्रह्मशब्दप्रयोगाच्च विष्णुरेव ब्रह्मशब्दवाच्य इति न निर्णेतुं शक्यम्। न च 'ततः परं ब्रह्म' इति मन्त्रात्पूर्वपठिते 'यो देवानाम्' (ऋ० सं० १०।८२।३) इति मन्त्रे हिरण्यगर्भजनयितृत्वेनोक्तो यो रुद्रस्ततः परं विष्ण्वाख्यं ब्रह्मैव 'ततः परं ब्रह्म' इति मन्त्रे प्रतिपाद्यते। तदनुरोधेन 'यस्मात्परं नापरमस्ति' इति मन्त्रोऽपि विष्ण्वाख्यब्रह्मविषय एवेति शङ्क्यम्। 'यो देवानाम्' इति मन्त्रे हिरण्यगर्भजनयितृरुद्रे 'विश्वाधिकः' इति विश्वशब्दवाच्याद्विष्णोराधिक्योक्तेस्तत्परत्वस्य विष्णावसंभवात्। विष्णोर्विश्वशब्दवाच्यता च 'विश्वं विष्णुर्वषट्कारः' इति सहस्रनामप्रमाणसिद्धा। अत एव 'ततः परं ब्रह्म' इति मन्त्रस्य 'यो देवानाम्' इति मन्त्रप्रतिपादितहिरण्यगर्भजनयितृरुद्रादपि परत्वेन विष्ण्वादिज्ञेयब्रह्मपरत्वभ्रमो मा भूदिति तदनन्तरम्।

> सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः।
> सर्वव्यापी च भगवांस्तस्मात्सर्वगतः शिवः॥

इति सर्वव्यापित्वसर्वगुहाशयत्वादिना 'यस्मात्परं नापरम्' इति 'ततः परं ब्रह्म' इति च मन्त्रयोः शिवाख्यब्रह्मण्येव निगमनं संगच्छते। 'यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः' (श्वे० ४।१८) इति पूर्वतनमन्त्रेण तमोमात्रावशिष्टे सर्गाद्यसमये कारणभावेनावस्थानोपवर्णनेन जगत्कारणत्वानियतब्रह्मत्वस्य शिव एवावगतेश्च। तयोर्मन्त्रयोः शिवपरत्वावगमाच्च। सकलसदसदात्मकवस्तुकालाधिककालवृत्तिशिव एव 'यदा तमः' इत्यादिमन्त्रबोध्ये 'यस्मात्परं नापरम्' इति मन्त्रस्वारस्यावगमाच्च।

यत्तु 'यदा तमः' इति मन्त्रो न कारणप्रापकः। यदेति कालविशेषप्राप्ततमसोऽनुवादात्। अनुवादस्य प्राप्तिपूर्वकत्वा-

त्प्राप्तिबोधकपुरोवादाकाङ्क्षायाम् 'अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते, तमः परे देव एकी भवन्ति(ति)' इति सुबालोपनिषदेव पुरोवादः । तस्यां चाव्यक्ताक्षरक्रमेण 'यस्य शरीरम्' इत्युपक्रम्य 'एष आत्मा अपहतपाप्मा दिव्यो देव एको नारायणः' इति पाठान्नारायणाधिष्ठिततमसः प्रतिपादनात्तदनुरोधेनानुवादमन्त्रश्रुततमोधिष्ठातृशिवशब्दो नारायणपर एव । एवं च 'तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात्प्रसृता पुराणी' इत्यादिना नारायणस्यैव प्रकारविशेषोपदेश इति परैरुक्तम् । तन्न शिवतत्त्वविदोऽनुमन्यन्ते । तथा हि— सत्यम् 'यदा तमः' इत्यनुवादः, परं सौबलोपनिषद्वाक्यमेव तस्य पुरोवाद इति कुतोऽवगतम्, अन्येषामनूद्यमानार्थप्रापकाणाम् 'तमो वा इदमेक एवाग्र आसीत्' 'नासदासीन्नो सदासीत्तदानीम्' 'प्रजापतिर्वा इदमेक आसीन्नाहरासीन्न रात्रिरासीत्सोऽन्धे तमसि प्रासर्पत्' इत्यादीनां श्रवणात् । नापि 'यदा तमः' इति भाग इव 'तन्न दिवा न रात्रिः' इत्यादिभागोऽपि कात्स्न्र्येनानुवादः । तच्छब्दयोगेन तत्काले कस्यचिद्विधेयत्वाप्रतीतेः । विधेयश्च तत्र न दिवानिशाविभागाभावः सदसदात्मकप्रपञ्चाभावो वा । उदाहृतपुरोवादवचनजातादेव तयोः प्राप्तेः । नहि किंचिदनूद्य किंचिद्विधातुं प्रवृत्तं वाक्यमनुवादायावश्यापेक्षितात्पुरोवादादेव प्राप्तेऽर्थे पर्यवस्यत्साफल्यमश्नुवीत । अतस्तत्रापि 'न दिवा' इत्यादिरनुवादः । एवं च शिवशब्दोऽपि यथाकथंचिदौत्सर्गिकार्थपरतां हित्वा पुरोवादविशेषप्राप्ते नारायण एव पर्यवस्येत्तदा 'यदा तमस्तत्' इति वाक्यं किंचिदनूद्य किंचिद्विधातुमुद्यम्य किं विधेयमासाद्य विश्राम्यतु न हि शिवपदस्य नारायणवृत्तित्वे पुरोवादादप्राप्तं किंचिदर्थं पश्याम इति परमते वाक्यवैयर्थ्येनैव भावत्प्राप्तम् । तस्मात्सर्गाद्यसमये तमःप्रापकेषु वाक्येषु क्वचिदधिष्ठाता नारायणशब्देनोच्यते क्वचित्प्रजापतिशब्देनोच्यते क्वचित्साधारणशब्देनोच्यत इति विरुद्धानेकश्रवणादनिर्णीतविशेषपर्यवसाने तेषामेकविषयत्वं दर्शयितुमयं मन्त्रः । तेभ्योऽप्राप्तं सर्गाद्यकालीनतमोऽनूद्य तदधिष्ठातुः शिवत्वं

विदधातीति तत्सार्थकत्वस्य वक्तव्यतया तदुत्थाप्यपुरोवाद-स्थितनारायणादिशब्दस्यैव शिवे वृत्तिर्वक्तव्येति युक्तम् । वा-क्यैकवाक्यत्वापेक्षया पदलक्षणाया एवोचितत्वात् । एवं चोक्तप्रकारेण 'यदा तमः' इति पूर्वार्धम् । 'तमो वा इदमेकमास' इत्यादीनां केषांचित्कारणवाक्यानां यथा शिव एव पर्यवसान-परं तथोत्तरार्धे 'तदक्षरम्' इति भागः 'यथा सुदीप्तात्पाव-काद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथाऽक्षराद्विविधाः सौम्य भावाः प्रजायन्ते तत्र चैवापियन्ति' (मु० २।१।१) इत्यादिमुण्डकोपनिषदादिश्रुतीनाम्, 'तत्सवितुर्वरेण्यम्' इति भागः सवितृमण्डलमध्यवर्तिनि परमपुरुषे जगत्कारणत्वानियतं सर्वान्तर्यामित्वलिङ्गम् 'धियो यो नः प्रचोदयात्' इति उप-वर्णयन्त्याः सावित्र्या ऋचः, 'प्रज्ञा च तस्मात्प्रसृता पुराणी' इति भागः 'तदैक्षत बहु स्यां प्रजायेय' (छा० ६।२।३) इति 'स ईक्षत लोकान्नु सृजा' इति 'सोऽकामयत बहु स्यां प्रजायेय (तै० २।६) इति 'तपसा चीयते ब्रह्म ततोऽन्न-मभिजायते' इति च स्रष्टुरादिसर्गकालीनस्रष्टव्यवस्तुजातानां वीक्षणादिशब्दैः प्रतिपादयतां छान्दोग्यादिश्रुतकारणवाक्यानां शिव एव पर्यवसानं बोधयतीति युक्तम् । हिरण्यगर्भादिसर्व-कारणत्वेन सर्वोपनिषत्संमतस्य शिवस्यैव सकलकार्येभ्यः पर-स्माद्धिरण्यगर्भात्परत्वम् । 'यस्मात्परं नापरमस्ति' इति मन्त्रो बोधयतीति । किंच शिवनामत्वेन लोकप्रसिद्धैर्हरशिवेशरुद्रेशा-नमहेश्वरशब्दैः 'अथ कस्मादुच्यते सर्वव्यापी । विश्वेदेवाश्च यस्मि-न्विश्वरूपः ततः स्मृतः । हंसो नाम सदाशिवः' इति अथ-र्वशिरोमहाभारताद्यवगमितशिवनामभावैः सर्वव्यापिविश्वरूप-हंसादिशब्दैरन्यदेवतावाचिशब्दान्तरव्यतिकररहितैः 'क्षरः प्रधा-नममृताक्षरं हरः' (श्वे० १।१०) 'भावाभावकरं शिवम्' (श्वे० ५।१४) भूयः सृष्ट्वा पतयस्तथेशः' (श्वे० ५।३) 'एको हि रुद्रो न द्वितीयाय तस्थुः' (श्वे० ३।२) 'ईशानो ज्योतिरव्ययः' (श्वे० ३।१२) 'मायिनं तु महेश्वरम्' (श्वे० ४।१०) 'सर्वव्यापी स भगवान्' (श्वे० ३।११)

'तं विश्वरूपं भवभूतमीड्यम्' (श्वे० ६।५) 'एको हंसो भुवनस्यास्य मध्ये' (६।१५) इत्यादिमन्त्रावयवैरस्या उपनिषदः कार्त्स्न्येन शिवपरत्वावगमात्तदन्तर्गतस्य 'यस्मात्परं नापरम्' (श्वे० ३।९) इति मन्त्रस्य 'ततः परं ब्रह्मपरं महान्तम्' (श्वे० ३.७) इति मन्त्रस्य शिवपरत्वमेव युक्तम्। स्फुटीकृतं चास्याः कार्त्स्न्येन शिवपरत्वं कूर्मपुराणे सुशीलोपाख्याने—

अथास्मिन्नन्तरे पश्यत्समायातं महामुनिम् ।
श्वेताश्वतरनामानं महापाशुपतोत्तमम् ॥

इत्यादिना सुशीलस्य राज्ञः श्वेताश्वतरस्य महर्षेर्दर्शनं तद्वन्दनादिकं शिष्यभावेन तत्परिग्रहप्रार्थनं चोपन्यस्य 'सोऽनुगृह्याथ राजानम्' इत्यादिना महर्षेस्तत्प्रार्थनस्याङ्गीकारादिकं चोक्त्वा

ददौ तदैश्वरं ज्ञानं स्वशाखोक्तं हितप्रदम् ।
अशेषवेदसिद्धं तत्पशुपाशविमोचकम् ॥

इति पाशुपतज्ञानस्य श्वेताश्वतरशाखोक्तत्वकीर्तनेन ।

उवाच शिष्यान्संप्रेक्ष्य एतदाश्रमवासिनः ।
ब्राह्मणान्क्षत्रियान्वैश्यान्ब्रह्मचर्यपरायणान् ॥
मया प्रकाशितां शाखामधीत्यैवेह योगिनः ।
समासते महादेवं ध्यायन्तो निष्कलं शिवम् ॥
इह देवो महादेवो रममाणः सहोमया ।
अध्यास्ते भगवानीशो भक्तानामनुकम्पया ॥

तच्छाखोक्तमार्गेण तेषां शिवध्यानोपवर्णनाच्चेति । वायुसंहितायां च चतुर्थे पशुपतिनिर्णयाध्याये शिवपरत्वमस्याः प्रपञ्चितं द्रष्टव्यम् ।

यदप्यस्या उपनिषदः शिवपरत्वमसहमानैः परैरुक्तम्—अस्यामेव तृतीयाध्याये 'वेदाहमेतं पुरुषं महान्तम्' (श्वे० ३।८) इत्यादिपुरुषसूक्तमन्त्राम्नानात्तत्प्रतिपाद्यमानस्य नारायणस्येह प्रत्यभिज्ञानेन तस्यैवैतत्प्रतिपाद्यताऽवसीयते । उभयो-

रपि प्रतिपाद्यभेद उभयत्र 'नान्यः पन्था विद्यतेऽयनाय' (श्वे० ३।८) इत्यनेन द्वयोरितरेतरव्यवच्छेदेन मुक्त्युपायत्वावधारणासंभवात् । तर्ह्युपनिषत्प्रत्यभिज्ञानात्पुरुषसूक्तमेव शिवपरं किं न स्यादिति चेत् । न । 'सहस्रशीर्षा पुरुषः' (श्वे० ३।१४) इति उपक्रम एव

पुरुसंज्ञे शरीरेऽस्मिञ्छयनात्पुरुषो हरिः ।
शकारस्य षकारोऽयं व्यत्ययेन प्रयुज्यते ॥
भगवानिति शब्दोऽयं तथा पुरुष इत्यपि ।
निरुपाधी च वर्तेते वासुदेवे सनातने ॥

इत्यादिपुराणवचनावगमितनारायणैकान्त्यस्य पुरुषशब्दस्याऽऽम्नानेन मध्ये 'वेदाहमेतं पुरुषं महान्तम्' (श्वे० ३।८) इति 'महादेवं वा महापुरुषं वाऽर्चयेत्' इति कल्पसूत्रावगमितनारायणनामभावस्य महापुरुषशब्दस्याऽऽम्नानेनाथर्वणेऽष्टादशशान्तिप्रकरणे तत्तद्दैवत्यासु शान्तिषु तत्तद्दैव[त]स्य मन्त्रविनियोजनावसरे 'वैष्णव्यां पुरुषसूक्तम्' इति वैष्णव्यां शान्तौ पुरुषसूक्तस्य विनियोजनेन शौनकबौधायनादिस्मृतिषु बहुधा नारायणसमाराधने तस्य विनियोजनेन विष्णुपुराणादिषु पुरुषसूक्तार्थप्रक्रियया नारायणस्तुतिदर्शनेन 'पुरुषेण नारायणेन यजमानेनोपतिष्ठते' 'अथ नारायणाभ्यामुपस्थानम्' इति कल्पसूत्रेषु नारायणसमाख्यया व्यवहारेण च पुरुषसूक्तस्य नारायणपरत्वावगमादनेकप्रमाणव्याकुलीकरणायोगेन तन्मन्त्रप्रत्यभिज्ञानादस्या एवोपनिषदो नारायणपरत्वप्राप्तेः । न चा-(न्व)स्यामेवोपनिषादि 'वेदाहमेतं पुरुषं महान्तम्' (श्वे० ३।८) 'यस्मात्परं नापरमस्ति किंचित्' (श्वे० ३।९) इति मन्त्रद्वयाम्नानानन्तरम् ।

ततो यदुत्तरतरं तदरूपमनामयम् ।
य एवं विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति ॥
सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः ।
सर्वव्यापी च भगवांस्तस्मात्सर्वगतः शिवः' (श्वे० ३।१०।११)।

इति मन्त्राम्नानेन पुरुषसूक्तप्रतिपाद्यान्नारायणादुत्तरत्वेन शिवस्य प्रतिपादन एवास्यास्तात्पर्यमवसीयत इति चेत् । न । प्रथममेव 'वेदाहमेतम्' (श्वे० ३।८) इत्यनेन मन्त्रेण नारायणवेदनस्यैव मोक्षहेतुत्वस्य 'यस्मात्परं नापरम्'(श्वे० ३।९) इति मन्त्रेण तस्मात्परभावस्य च प्रतिपादनेन तदनन्तरश्रुतमन्त्रसंदर्भस्य तद्विरुद्धार्थे तात्पर्यकल्पनायोगात् । उपक्रमोपसंहारयोर्विरोधेऽसंजातविरोधित्वेनोपक्रमबाधस्य पूर्वतन्त्रे स्थितत्वेन चरमश्रुतस्य 'ततो यदुत्तरम्' इत्यादेः प्रथमावगतार्थानुरोधेनैव नेयत्वात् । तस्मात्तत्रोत्तरसंदर्भोऽपि नारायणपर एव । तस्मात् 'सर्वगतः शिवः' इत्येतदनन्तरमपि 'सहस्रशीर्षा पुरुषः' 'पुरुष एवेदं सर्वम्' (श्वे० ३।१४।१५) इति पुरुषसूक्तमन्त्राम्नानात् 'सत्त्वस्यैष प्रवर्तकः' (श्वे० ३।१२) इति सत्त्वगुणोपाधिलिङ्गाम्नानाच्च ततःशब्देन 'तेनेदं पूर्णं पुरुषेणं[1] विश्वम्' (श्वे० ३।९) इति पूर्वमन्त्रान्ते प्रथमानिर्दिष्टं विश्वं परामृश्य ततःपरत्वं प्रकृतनारायणस्य प्रतिपाद्यते । अथवा ततःशब्दो हेतौ । यस्मात्तेन सर्वं पूर्णं ततो यदुत्तरमिति संदर्भसंगतेः । एवं च तत्र तत्र मन्त्रे स्थिता रुद्रादिशब्दा अपि शिवशब्दन्यायेन नारायणपरा एव । एवं चास्यामुपनिषदि कात्स्न्र्येन नारायणपरायाम् 'स कारणं करणाधिपाधिपः' (श्वे० ६।९) इति मन्त्रान्तरेऽपि न शिवस्य कारणत्वशङ्काऽपीति । अत्र वदन्ति शिवतत्त्वविद्धुरीणाः—यदुक्तं पुरुषसूक्तमन्त्रप्रत्यभिज्ञानात्तत्प्रतिपाद्यस्य नारायणस्यैवैतदुपनिषत्प्रतिपाद्यताऽवसीयत इति । तदसत् । श्रुतयो हि प्रत्यभिज्ञानात्स्यलिङ्गद्वयपरामर्शापेक्षितत्वेन विलम्बिताद्बलवत्तराः । तथा चोपनिषदुपक्रममारभ्यानुवर्तमानानेकशोऽभ्यस्यमानशिवरुद्राद्यनेकाभिधानश्रुतिप्रतिपादितं शिवविषयत्वमपोह्यान्यविषयत्वमापादयितुं न प्रत्यभिधानं शक्नोति । न च 'नान्यः पन्था विद्यतेऽयनाय' (श्वे० ३।८) इति पुरुषसूक्तप्रत्यभिज्ञानमनन्यथासिद्धत्वादभिधानश्रुतिभ्यः प्रबलमित्युक्तं युक्तम् । कैवल्योप-

---



१ °ण सर्वम् । इतीदानीतनमुद्रितकेषु पाठः ।

निषत्कुतावापि 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्' इति प्रस्तुत्य 'ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये' इति श्रवणेन मुक्त्युपायत्वावधारणस्य पुरुषसूक्तप्रतिपाद्ये नारायण एव व्यवस्थितत्वासिद्ध्या तस्यानन्यथासिद्धत्वासिद्धेः। किं चास्यामुपनिषदि तृतीयाध्याये चतुर्थाध्याये च 'या ते रुद्र शिवा तनूः' (श्वे० ३ ५) 'यामिषुं गिरिशंत हस्ते' (श्वे० ३ । ६) 'मा नस्तोके तनये मा न आयुषि' (श्वे० ४ । २२) इति श्रीरुद्रमन्त्रा बहव आम्नाता इति रुद्रमन्त्राणामप्यस्ति प्रत्यभिज्ञानम्। तथा चाभयमन्त्रप्रत्यभिज्ञायामेकत्र नारायण एव पक्षपातो न युक्तः। किं च प्रत्यभिज्ञयोर्बलाबलविवेके शिवमन्त्रास्तृतीयेऽध्याये चतुर्थेऽध्याये चाऽऽम्नाताः पुंसूक्तमन्त्राश्च रुद्रमन्त्रसंदंशपतिताः, न प्रथममाम्नाताः। न च देवताविशेषासाधारणपदघटिताः। पुरुषशब्दस्य नारायणासाधारण्यस्य निरसिष्यमाणत्वात्। तथा च संदंशन्यायेनासाधारणरुद्रशिवादिपदघटितत्वेन च रुद्रमन्त्रप्रत्यभिज्ञानस्यैव प्राबल्यमवधार्यते। वस्तुतस्तु पुरुषसूक्तमपि न नारायणपरम्। 'उतामृतत्वस्येशानः' (श्वे० ३ । १५) इत्यभिधानश्रुतिबलात्तस्य शिवपरत्वावगमात्। नन्वमृतत्वस्येशितव्योपादानादैश्वर्यरूपयौगिकार्थविधित्सया प्रयुक्तमीशानपदम् 'सर्वस्य वशी सर्वस्येशानः' इत्यत्रेव केवलयौगिकत्वान्न रूढ्या शिवप्रतिपादकमिति चेत्। न। ईशितव्यानुपादान इव तदुपादानेऽप्यवयवशक्त्या यौगिकार्थं प्रतिपादयत एव तस्य 'ईश्वरः शर्व ईशानः' (अ० को० १।१) 'ईशानः शशिशेखरः' इति शिवाभिधानकोशस्मृतिसिद्धसमुदायशक्त्या शिवप्रतिपादकत्वस्यौत्सर्गिकस्य दुरुपह्नवत्वात्केवलयोगाच्छक्तिद्वयानुग्रहलाभेन योगरूढेर्बलवत्त्वाच्च। न ह्यवयवार्थप्रतियोग्यनुपादान एव समुदायशक्त्युन्मेष इति कश्चिद्व्युत्पत्तिसिद्धो नियमः। येनेहेशानशब्दो केवलयौगिक एवेत्यवधार्येत। 'शब्दादेव प्रमितः' (ब्र० सू० १।३।२४) इत्यधिकरणे 'अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः। ईशानो भूतभव्यस्य' (का० २ । ४ । १३)

इति कठवल्लीमन्त्रस्याङ्गुष्ठमात्र इति परिमितप्रमाणलिङ्गाज्जीवः परत्वप्राप्तौ तन्मन्त्रप्रतिपाद्यस्य पुरुषस्येशानो भूतभव्यस्येतीशितव्योपादानेऽपि सौत्रशब्दपदस्वारस्यादीशान इत्यभिधानश्रुत्यैव परब्रह्मपरत्वनिर्णयस्य श्रीमद्भाष्यकारैः कृतत्वात् । तस्य केवलयौगिकत्वे तदसाधारणशब्दाभावाद्भूतभव्येशितृत्वलिङ्गादेव निर्णेतव्यमिति 'शब्दादेव' इतिसूत्रास्वारस्यप्रसङ्गात् । ननु 'ईशानः प्राणदः प्राणः' इति विष्णुसहस्रनाममध्ये परिगणनादीशानशब्दो विष्णौ रूढ इति चेत् । न । स्तुवन्नामसहस्रेणेत्युपक्रमानुसारेण सर्वात्मतया स्तोतुं प्रवृत्ते विश्वं विष्णुरित्यादौ सर्वात्माभिप्रायेण देवतान्तरनाम्नामपि बहूनां परिगणनदर्शनेन ततस्तेषां तत्र शक्त्यसिद्धेः । अन्यथा भारतलैङ्गादित्यपुराणपठितशिवनामानन्तर्गतस्य विष्णुनाम्नोऽभावेन हरिवंशे कैलासयात्रायाम्

नामानि तव गोविन्द यानि लोके महान्ति च ।
तान्येव मम नामानि नात्र कार्या विचारणा ॥

इति कृष्णं प्रति शिववचनेन च विष्णुनाम्नां शिवनामत्वप्रसिद्धेश्चाभिधानश्रुत्या क्वचिदपि विष्णुपरत्वनिर्णयो न स्यात् । तस्मात्स्तुत्यर्थगन्धरहितलोकवेदसाधारणनामगणनैदंपर्येण प्रवृत्ताभिधानकोशश्रुतिरेव नामत्वे प्रमाणमितीशानशब्दस्य शिवनामत्वमेवेतीशानशब्दात्पुंसूक्तस्य शिवपरत्वनिर्णयो युक्त एव ।

यदपि पुरुषश्रुत्याद्यनेकप्रमाणैः पुंसूक्तस्य नारायणपरत्वमुक्तम् । तदसत् । पुरुषशब्दस्य शक्त्या नारायणैकान्त्यासिद्धेः । यद्यपि 'पुरुषो ह वै नारायणोऽकामयत' इत्यादौ नारायणे पुरुषशब्दप्रयोगो दृश्यते तथाऽपि 'पुरुषावात्ममानवौ' (अ०को० ३.३.२१९) इत्यभिधानकोशस्मृतेर्लौकिकवैदिकप्रयोगप्राचुर्याच्चाऽऽत्मसामान्ये तस्य शक्तेरावश्यकत्वेन तत एव तदुपपत्तेर्विष्णौ तस्य न विशिष्यापि शक्तिः कल्पयितुं युक्ता । =बर्हिराज्याधिकरणविरोधात् । तत्र हि म्लेच्छैस्तृणघृतादिजातिमात्र

= बर्हिराज्याधिकरणेति । दर्शपूर्णमासप्रकरणे हि श्रूयते—'बर्हिर्लुनाति' 'आज्यं विलापयति' 'पुरोडाशं पर्यग्नि करोति' इति । ननु बर्हि

आर्यैः संस्कृततृणादावेव प्रयुज्यमानानां बर्हिराज्यादिशब्दानां शास्त्रप्रसिद्धेर्बलवत्त्वात्संस्कारानिमित्तत्वमाशङ्क्य शास्त्रस्थप्रयोगस्य जात्यव्यभिचाराज्जातिमात्रव्यवहारस्य संस्कारव्यभिचाराद्व्यभिचारिजातिशक्तिमादाय सर्वप्रयोगोपपादनसंभवेन विरोधाभावाज्जातिवाचितैवेति सिद्धान्तितम् । उक्तं च तन्त्रवार्तिके—

एकदेशेऽपि यो दृष्टः शब्दो जातिनिबन्धनः ।
तदत्यागान्न तस्यास्ति निमित्तान्तरकल्पना ॥ इति ।

नन्वस्तु प्रयोगमात्रस्यान्यथासिद्धिस्तथाऽपि 'पुरुसंज्ञे शरीरेऽस्मिञ्शयनात्पुरुषो हरिः' इत्यादिपौराणिकानां तन्निर्वचनम्

तथा पुरुषशब्दोऽयं वासुदेवेऽवतिष्ठते ।
तं विना पुण्डरीकाक्षं कोऽन्यः पुरुषशब्दभाक् ॥
भगवानिति शब्दोऽयं तथा पुरुष इत्यपि ।
निरुपाधी च वर्तेते वासुदेवे सनातने ॥

इति पौराणिकासाधारण्यवचनं चानन्यथासिद्धं पुरुषशब्दस्य विष्णौ विशिष्यापि शक्तिं कल्पयिष्यतीति चेत् । न । सामान्यशक्तस्यापि पुरुषशब्दस्य श्रुत्यादौ क्वचित्प्रकरणादिसामर्थ्या-

---

राज्यपुरोडाशशब्दानां संस्कृतबर्हिरादिपरत्वमेवास्तु । शास्त्रे हि सर्वत्र संस्कृतेषु तृणादिषु प्रयोगदर्शनाच्छास्त्रीयरूढेश्च पीत्वादिशब्देषु प्राबल्यस्य तत्र तत्रोक्तत्वाद्यूपाहवनीयादिशब्दानां च तथैव दृष्टत्वादिति चेत् । मैवम् । अन्वयव्यतिरेकाभ्यां जातिवाचित्वस्यैव निर्णयात् । तथाहि—यत्र यत्र बर्हिराज्यादिशब्दप्रयोगस्तत्र तत्र जातिप्रतीतिरिति व्याप्तेर्लोके वेदे च नास्ति व्यभिचारः । संस्कारविशिष्टवाचित्वस्य च लोके व्यभिचारो दृश्यते । किं च क्वचिद्वेदे विनाऽपि संस्कारं जातिमात्रमुपजीव्य ज्योतिरादिशब्दप्रयोगो दृश्यते । यथा—'बर्हिरादाय गावो गताः, कव्यमाज्यम्, पुरोडाशेन मे माता प्रहेलकं ददाति' इति । तस्माज्जातिवाचित्वमिति सिद्धम् । तेन च 'बर्हिषा यूपावटमवस्तृणाति' इत्यत्र संस्कारं विनाऽपि स्तरणसिद्धिर्भवतीति भावः ।

नारायणे पर्यवसानमस्तीत्येतज्ज्ञापनेन चरितार्थतयाऽर्थवादप्रधानपौराणिकनिर्वचनस्य चित्राधिकरणे माहेन्द्रस्तोत्रविशेषनामत्वेन प्रसिद्धस्य पृष्ठशब्दस्य क्वचित् 'पृष्ठैरुपतिष्ठते' इत्यादौ स्तोत्रसाधने रथंतरादौ लक्षणया प्रसिद्धिरस्तीत्येतज्ज्ञापनेन चरितार्थस्य पृष्ठशब्दस्य रथंतरादौ प्रवृत्तिनिमित्तप्रतिपादनपरस्य 'आपो वा ऋत्विषमार्छंस्ताऽऽसां वायुः पृष्ठे व्यवर्तत' इत्यादिश्रौतार्थवादिकनिर्वचनस्य न तत्र शक्तिकल्पकत्वमिति मीमांसकोक्तरीत्या विष्णावभिधानकोशस्मृत्यादिवदनन्यथासिद्धप्रयोगविषयविशिष्यशक्तिकल्पकत्वायोगात् । पुरुषशब्दस्य नारायणासाधारण्यवचनस्यापि 'अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः' (तै०सं०५।२।९) इति पशुत्वजातेर्गवाश्वसाधारण्यनिर्वचनस्योपकाराधिक्यात्प्रशंसापरत्वमिव स्वातन्त्र्यादिपुरुषलक्षणाधिक्यान्नारायणप्रशंसापरत्वेनोपपत्तेर्न तद्बलादपि पुरुषशब्दस्य नारायणे विशिष्यशक्तिः सिध्यति । अन्यथा गोअश्वेष्वपि पशुशब्दस्य विशिष्यशक्तिसिद्ध्यापत्त्या पशुत्वस्य गवाश्वासाधारण्यापत्तेः ।

> स एव वासुदेवोऽयं पुरुषः प्रोच्यते बुधैः ।
> प्रकृतिस्पर्शराहित्यात्स्वातन्त्र्याद्वैभवादपि ॥
> स एव वासुदेवोऽयं साक्षात्पुरुष उच्यते ।
> स्त्रीप्रायमितरत्सर्वं जगद्ब्रह्मपुरःसरम् ॥

इति नरसिंहोपपुराणवचनेन पुरुषशब्दस्य नारायणासाधारण्यवचनानां प्रशंसापरत्वस्य स्फुटीकरणाच्च । यद्येवमपि पुरुशब्दस्य विष्णौ प्रयोगनिर्वचनासाधारण्यवचनैर्विशिष्यशक्तिः स्यात्तदा 'पुरुषस्य विद्म सहस्राक्षस्य महादेवस्य धीमहि । पुरुषं कृष्णपिङ्गलं तमीशानं वरदं देवमीड्यम्' (ना० १०।१) इत्यादिश्रुतिषु प्रयोगात् ।

> यस्मात्पुर्यनुशेते च तस्मात्पुरुष उच्यते ।

इति लैङ्गे शिवनामप्रस्तावे निर्वचनात्,

पुरुषो नाम संपूर्णः शिवः सत्यादिलक्षणः ।
साम्बमूर्तिधरो नान्यो रुद्राद्विष्णुरजोऽपि वा ॥

इति स्कान्दे ब्रह्मगीतास्वसाधारण्यप्रतिपादनाच्च शिवेऽपि शक्तिः स्यात् । तस्मादेकया वाऽनेकया वा साधारणत्वान्न पुरुषश्रुत्या विष्णुपरत्वनिर्णयो युक्तः । महापुरुषशब्दोऽपि न तत्परत्वनिर्णायकः । उक्तरीत्या सामान्यशक्त्यैव प्रयोगोपपत्तेः । न चात्र महापुरुषश्रवणमपि । महान्तं पुरुषमिति भिन्नपदयोरेव श्रवणात् । न च पदद्वयस्य क्वचिदेका रूढिरस्ति । नारायणसमाख्याऽपि पुरुषसूक्तस्य तद्दर्शिकत्वनिबन्धना । 'नारायणदृष्टेन पुरुषसूक्तेनोपचितां चितिमुपतिष्ठमान इह जन्मनि पुरुषो भवेत्' इति वाधूलसूत्र ऋषिदेवतयोर्नारायणपुरुषशब्दाभ्यां भेदेनोपादानात् । वैष्णव्यां शान्तौ नारायणसमाराधने च विनियोगोऽपि नाभिधानश्रुतिमासं शिवपरत्वमस्य बाधते । 'उद्बुध्यस्व' 'अग्निर्मूर्धा दिवः ककुत्' इत्यादिमन्त्राणां ग्रहयज्ञे तत्तद्ग्रहाराधने तत्तद्देवत्यमन्त्रविनियोगावसरे बुधभौमादिपूजासु विहितानामपि बहुशस्तदाराधनजपहोमादिषु विनियुज्यमानानामपि विरुद्धविनियोगमात्रेण श्रुतितदनुकूलविनियोगान्तरप्राप्ताग्नेयत्वाबाधात् । अन्यथा

'यजेत्पुरुषसूक्तेन धनदं विश्वरूपिणम्' ।

इत्यादिशातातपसिद्धविनियोगान्तरेणान्यपरत्वस्याप्यापत्तेः । अस्ति चास्य सूक्तस्याभिधानश्रुत्याद्यनुगुणोऽपि विनियोगः । यथा बौधायनसूत्रे श्रीरुद्रन्यासादिषु शिवसंकल्पादिषु विनियोगः ।

नमकं चमकं चैव पुरुषसूक्तं च नित्यशः ।
जपन्नेति महादेवं गृहं गृहपतिर्यथा ॥ इति पुराणे ।

वास्तुशान्तौ—

आवाह्य कुम्भे देवेशं रुद्रं भुवननायकम् ।

इत्युपक्रम्य—

नमकं चमकं चैव पौरुषं सूक्तमेव च ।

इत्यादिना जपे विनियोगः । तथा लिङ्गपुराणे शिवपूजाविधौ—



ससूक्तेन सपुरुषेण स्नापयेन्मन्त्रपूर्वकम् ।

मन्त्रांश्चैतान्प्रवक्ष्यामि, इत्युपक्रम्य—

ज्येष्ठसाम्नां त्रयेणैव तथा देवव्रतैरपि ।
रथंतरेण पुण्येन सूक्तेन पुरुषेण च ॥

इति शिवाभिषेके च विनियोगः । उपबृंहणमपि विनियुक्तम-न्त्रार्थविवरणरूपत्वाच्छ्रुतविनियोगनिर्वाहार्थकत्वादन्यथासिद्धं न श्रुतिप्राप्तमस्य शिवपरत्वमपवादितुमीष्टे । तथा हि—अस्त्यन्यदेवत्यानां मन्त्राणां विधिबलाद्देवतान्तरयजने विनियोगः । स च तेषां मन्त्राणां यजनीयदेवताप्रदर्शनेन निर्वाह्यः । मन्त्राधिकरणे मन्त्रविनियोगस्य वाक्यार्थप्रतिपादकत्वस्थितेः । तदर्थं च मन्त्रस्थस्य देवतापरस्य पदस्य यजनीयदेवतायां मुख्यवृत्त्यसंभवात् ‘ वचनात्तु यथार्थमैन्द्री स्यात् ’ ( जै० सू० ३ । २ । ३ ) इत्यैन्द्र्यधिकरणन्यायेन लक्षणावृत्तिर्वाच्या । तत्समभिव्याहृतविशेषणानां तु ‘ दर्भैस्तृणीत हरितैः ’ इति मन्त्रे हरितत्ववत्संभवदर्थानां तद्विशेषणप्रकाशनद्वारा तत्र पर्यवसानं वाच्यम् । ‘ सोमः पवते जनिता मतीनाम् ’ इति मन्त्रे सोमलतायामग्न्यादिजनयितृत्ववत् । तत्रासंभवदर्थकानां त्वभ्युदयायासमवेतगुणप्रकाशनद्वारा तत्र पर्यवसानं वाच्यम् । असमवेतस्यापि गुणस्याभिधानं मन्त्रश्रुतविशेषणविशिष्टप्रकाशनमभ्युदयकारीति नियमाद्दृष्टार्थमित्यस्यार्थस्य वचनात्तेषामितरार्थं प्रयुज्यत इति नावमिकाधिकरणस्थितेः । एवं च पुरुषसूक्तस्याभिधानश्रुतितदनुगुणलिङ्गादिनियमितशिवैकान्त्यस्यापि श्रुतविनियोगान्तरनिर्वाहाय धनदादिप्रकाशकत्वप्रकारवन्नारायणप्रकाशकत्वप्रकारोऽपि पुराणादेरभावे पुरुषबुद्ध्या कल्पनीय इति स एव तत्समाराधनतदङ्गफलादिप्रपञ्चप्रधानेषु पुराणागमादिषु नियम्यत इत्यन्यथासिद्धान्येवोपबृंहणानि । दृश्यन्ते ह्यसमवेतार्थविशेषणानामपि मन्त्राणां पुराणेषूपबृंहणानि—

सोमं ससर्ज यज्ञार्थं सोमाद्द्यौः समजायत ।

१ ‘नावम’ इतीदानींतनपुस्तकपाठः ।

धरा च वह्निः सूर्यश्च वज्रपाणिः शचीपतिः ॥
विष्णुर्नारायणः श्रीमान्सर्वं सोममयं जगत् ।

इत्यादीनि । एवं पुरुषसूक्तस्य शिवपरत्वप्रतिपादकान्यपि उपबृंहणानि दृश्यन्ते । यथा लिङ्गपुराणे—

द्यौर्मूर्धा हि विभोस्तस्य खं नाभिः परमेष्ठिनः ।
सोमसूर्याग्नयो नेत्रं दिशः श्रोत्रं महात्मनः ॥
वक्त्राद्वै ब्राह्मणा जाता ब्रह्मा च भगवान्विभुः ।
इन्द्राविष्णू भुजाभ्यां तु क्षत्रियाश्च महात्मनः ॥
वैश्याश्चोरुप्रदेशात्तु शूद्राः पादात्पिनाकिनः ॥

इत्यादीनि । तस्मादुक्तरीत्याऽन्यथासिद्धप्रयोगोपबृंहणाबाध्यैरभिधानश्रुतितदनुगुणलिङ्गविनियोगोपबृंहणैः पुरुषसूक्तस्य शिवपरत्वसिद्धेर्न तन्मन्त्रप्रत्यभिज्ञानेनापि मन्त्रोपनिषदो नारायणपरत्वशङ्काऽपि । एवं चास्या हररुद्रमहेश्वराद्यनेकाभिधानश्रुतिभिः शिवपरत्वे सकारणमित्यादिमन्त्राणामपि शिवपरत्वमेवेति प्रतिपादितं शैवमूर्धन्यैः ।

अथैवं ब्रह्मश्रुतिलिङ्गादीनां शिवविष्णुसाधारण्ये कथं निर्णय इति चेत् । अमत्सरत्वेऽभियुक्तोक्तरीत्या शिवविष्ण्वोरभेदाङ्गीकारादिति ब्रूमः । तथा ह्यभियुक्ताः—व्यावहारिकप्रक्रियायां पदार्थो द्विविधः । दृग्दृश्यं च । दृक्पदार्थ आत्मा परमार्थत एकोऽप्युपाधिभेदेन जीवेशसाक्षिभेदात्त्रिविधः । कारणीभूताज्ञानमायापरपर्यायोपाधिरीश्वरः । अन्तःकरणतत्संस्कारावच्छिन्नाज्ञानोपहितो जीवः । अविद्याप्रतिबिम्ब ईश्वर इति पक्षे बिम्बचैतन्यं साक्षी । बिम्बेश्वरपक्षे बिम्बप्रतिबिम्बानुगतमुखवज्जीवेश्वरानुगतसर्वानुसंधातृ चैतन्यं साक्षीत्युच्यते । विशिष्टकेवलयोर्भेदाभेदाङ्गीकारात् । बिम्बप्रतिबिम्बाभ्यां शुद्धस्य भिन्नत्वं तदनुस्यूतत्वं च द्वयमप्यविरुद्धम् । ईश्वरोऽपि स्वोपाधिभूतत्रिगुणात्मकमायाया गुणत्रयभेदेन ब्रह्मविष्णुरुद्रभेदेन त्रिविधः । कारणीभूतरजउपाधिको ब्रह्मा स्रष्टा । कारणीभूतसत्त्वगुणोपाधिर्विष्णुः पालयिता । कारणीभूततमउपाधिरुद्रः संहर्ता । हिर-

ण्यगर्भस्तु महाभूतकारणाभावान्न ब्रह्मा । तथाभूतोऽपि स्थूलभूत-स्रष्टृत्वात् । क्वचित् 'स वै शरीरी प्रथमः' इत्यत्र ब्रह्मेत्युपचर्यते । तथा च चतुर्भुजादिकार्यशरीरपालनादेर्विष्ण्वादिकर्तृकत्व एकस्यैवेश्वरस्य चतुर्भुजचतुर्मुखपञ्चमुखाद्याः पुमाकाराः । श्रीभारतीभवान्याद्याश्च स्त्र्याकाराः । अन्ये च मत्स्यकूर्मादयोऽनन्तावतारा लीलयैवाऽऽविर्भवन्ति भक्तानुग्रहार्थम् । न तु चतुर्भुजाकारो विष्णोरवतारश्चतुर्मुखाकारो ब्रह्मणः पञ्चमुखाकारो रुद्रस्य लक्ष्म्याकारो विष्णोर्भारत्याकारो ब्रह्मणो भवान्याकारो रुद्रस्येति । तथा सति चतुर्भुजशरीरिणः पालनकर्तृताप्रयोजकं विष्णुत्वमिति वक्तव्यं स्यात् । तन्न संभवति । तस्य दैत्यसंहारादिरूपरुद्रकार्यकर्तृत्वस्यापि दर्शनात् । तस्य देवरक्षणफलकत्वेऽपि तमःकार्यत्वेन रुद्रकार्यत्वात् । एवं पञ्चवक्त्रशरीरावच्छिन्नस्य त्रिपुरादिसंहर्तृत्वेऽपि न तस्य रुद्रत्वनिर्णयः । संहारस्य जगत्पालनफलकत्वेन विष्णुकार्यत्वात् । 'शिव एको ध्येयः शिवंकरः प्रज्ञा च तस्मात्प्रसृता पुराणी' इत्यादिश्रुत्या मुक्तिज्ञानादिविष्णुकार्यप्रतीतेश्च । एवं भवान्यादेर्दैत्यसंहारकर्तृत्वेऽपि पालनरूपविष्णुकार्यदर्शनात् । 'सैषा प्रसन्ना वरदा नृणां भवति मुक्तये' इति मुक्तिरूपविष्णुकार्यप्रतीतेश्च न रुद्ररूपत्वनिर्णयः । एवं पुराणतन्त्रादौ सरस्वत्यादेरपि पालनादिरूपविष्णुकार्यप्रतीतेश्च न ब्रह्मरूपत्वनिर्णयः । तस्मात्सर्वाणि शरीराणि सर्वेषामपि । चतुर्भुजादिशरीरावच्छिन्ने क्लृप्तकार्यस्य रुद्रादावपि प्रतीतेः । एतदभिप्रायेणैव—

हरिरूपी महादेवो लिङ्गरूपी जनार्दनः ।
ईषदप्यन्तरं नास्ति भेदकृन्नरकं व्रजेत् ॥

इत्यादीनि नारदीयस्थानि वाक्यानि ।

अहं त्वं सर्वगो देवस्त्वमेवाहं जनार्दन ।
त्वत्तः परतरो नास्ति शब्दैरर्थैर्जगत्पते ॥
नामानि तव गोविन्द यानि लोके महान्ति च ।
तान्येव मम नामानि नात्र कार्या विचारणा ॥

त्वदुपासा जगन्नाथ सैवास्ति मम गोपते ।
यश्च त्वां द्विषते लोकः स मां द्वेष्टि न संशयः ॥
त्वद्विस्तारो यतो ब्रह्मा अहं भूतपतिस्ततः ।
न तदस्ति विभो देव यन्ने विरहितं क्वचित् ॥
यदासीद्यच्च वर्तेत यच्च भावि जगत्पते ।
सर्वमेतद्धि देवेश विना किंचित्त्वया नहि ॥

इत्यादीनि कैलासयात्रायां हरिवंशस्थानि महेश्वरोक्तानि ।
तथा—भवानहं च विश्वात्मन्नेक एव हि कारणम् ।

जगतोऽस्य जगत्यर्थे भेदेनाऽऽवां व्यवस्थितौ ॥
त्वया यदभयं दत्तं दत्तं तदभयं मया ।
मत्तो न भिन्नमात्मानं द्रष्टुमर्हसि शंकर ॥
योऽहं स त्वं जगच्चेदं सदेवासुरमानुषम् ।
अविद्यामोहितात्मानः पुरुषा भिन्नदर्शनाः ॥

इत्यादिविष्णुपुराणवाक्यानि ।

विष्णोरन्यं तु पश्यन्ति ये मां ब्रह्माणमेव च ।
कुतर्कमतयो मूढाः पच्यन्ते नरकेष्वधः ॥
ये च मूढा दुरात्मानो भिन्नं पश्यन्ति मां हरेः ।
ब्रह्माणं च तथा तेषां भ्रूणहत्यासमं त्वघम् ॥

इति भविष्यत्पुराणस्थानि च समञ्जसानि । 'स ब्रह्मा स शिवः स हरिः' 'एको देवः सर्वभूतेषु गूढः' 'द्यावाभूमी जनयन्देव एकः' ( ऋ० सं० १० । ८१ । ३ ) इत्यादीनि श्रुतिवाक्यानि च ।

ब्रह्मनारायणौ पूर्वं रुद्रः कल्पान्तरेऽसृजत् ।
कल्पान्तरे पुनर्ब्रह्मा रुद्रविष्णू जगन्मयः ॥
विष्णुश्च भगवांस्तद्वद्ब्रह्माणमसृजत्पुनः ।
नारायणं पुनर्ब्रह्मा ब्रह्माणं च पुनर्भवः ॥
एवं कल्पेषु कल्पेषु ब्रह्मविष्णुमहेश्वराः ।
परस्परस्माज्जायन्ते परस्परजयैषिणः ॥
तत्तत्कल्पीयवृत्तान्तमधिकृत्य महर्षिभिः ।
प्रभावः कथ्यते तेषां परस्परसमुद्भवात् ॥ इति वायूक्तेः ।

क्वचिद्ब्रह्मा क्वचिद्विष्णुः क्वचिद्रुद्रः प्रशस्यते ।
नानेन तेषामाधिक्यं न्यूनत्वं वा कथंचन ॥
तत्तत्कल्पीयवृत्तान्तमधिकृत्य महर्षिभिः ।
पुराणानि प्रणीतानि विद्वांस्तत्र न मुह्यति ॥ इति कूर्मपुराणोक्तेः।
अयं परस्त्वयं नेति संरम्भाभिनिवेशिनः ।
यातुधाना भविष्यन्ति पिशाचाश्च न संशयः ॥

इति वायूक्तेस्तेषां न्यूनाधिकभाववादे प्रत्यवायश्रवणाच्च । एतेन 'एको ह वै नारायण आसीत्' इति श्रुतौ परमकारणे नारायणपदश्रवणात्तस्य रुद्रपरत्वे णत्वानुपपत्तेस्तदनुरोधेन सावकाशानि श्रुत्यन्तराणि नेयानीति वाचोयुक्तिरपि निरस्ता । वाक्यान्तरेष्वादिरुद्रेऽत्यन्तप्रसिद्धानां शिवहरेशानादिशब्दानां श्रवणेन विरोधपरिहाराय तयोरैक्याभ्युपगमस्यैव युक्तत्वात् । अन्यथा नारायणशब्दस्यापि योगवृत्त्या शिवपरत्वसंभवेनानिर्णयस्य दुर्वारत्वात् । न च णत्वायोगः । नारायणस्यायं नारायण इति व्युत्पत्तौ नारायणस्येयं नारायणीतिवद्बाधकाभावात् । 'जनितोत विष्णोः' ( ऋ० सं० ९ । ९६ । ५ ) इति सोमं प्रकृत्य श्रवणात्तादधीन्यन्यायाच्च यानि रुद्रापकर्षव्यञ्जकानि वाक्यानि दृश्यन्ते तानि कार्यरुद्रपरतया नेयानि । ब्रह्मविष्णुरुद्रेन्द्राः संप्रसूयन्त इति दर्शनात् ।

यत्तु रुद्रस्य विष्ण्वात्मकत्वे विष्णोरेव ब्रह्मत्वं सिद्धमिति तद्विष्णो रुद्रात्मकत्वे रुद्रस्यैव ब्रह्मत्वं सिद्धमित्यनेनोत्तरितम् । दुराग्रहत्वे यथेश्वरप्रेरणं त्वमेव विचारय । तत्र नास्माकं निर्बन्धः । परंतु विष्णुरेव जगत्कर्तृब्रह्मशब्दवाच्य इति वदता विष्णुशिवादिविषयत्वेन संदिह्यमानानां दर्शितश्रुतिलिङ्गादीनां तत्तद्वाक्यमुदाहृत्य पूर्वोत्तरपक्षरचनतया तत्परत्वं न्यायैरुपपादनीयम् । न त्वसिद्धविद्वद्रूढ्यादिभिस्तेषां विष्णुपरत्वं निर्णेयम् । मीमांसावैयर्थ्यापातात् । तच्च नोपपादितं सूत्रकृता 'अनुपपत्तेस्तु न शारीरः' (ब्र०सू०१.२.३) 'न च स्मार्तमतद्धर्माभिलापात्' (ब्र० सू० १।२।१९) इतिवत् 'न शिवोऽनुपपत्तेः' इति

स्पष्टतयेति दूषणमवशिष्यत एव। अन्तस्तद्धर्माधिकरणादिप्रथमपादीयाद्यधिकरणादिषु तदीयविषयवाक्यश्रुतश्रुतिलिङ्गादीनां शिवसाधारण्योपपादनेन न यथा विष्णुमात्रनिर्णायकत्वं तथा तत्तदधिकरणेषु त्वद्रीत्याऽधिकरणयोजनायां दूषणावसरे निपुणतरं प्रतिपादयिष्यामः।

यदपि शब्दा वैदिकास्तावच्चतुर्विधाः। अन्यत्रैव प्रसिद्धाः, उभयत्र प्रसिद्धाः, अन्यत्र प्रसिद्धाः, तत्र प्रसिद्धाः, इति। सर्वेऽपि नामलिङ्गात्मकतया प्रत्येकं द्विविधाः। तत्र नामात्मकानामन्यत्र प्रसिद्धानां शब्दानां प्रथमपादे समन्वयः। लिङ्गात्मकानामन्यत्र प्रसिद्धानां शब्दानां द्वितीयपादे समन्वयः। उभयत्र प्रसिद्धानां शब्दानां तृतीयपादे समन्वयः। अन्यत्रैव प्रसिद्धानां चतुर्थे पादे समन्वय इति वैदिकशब्दचातुर्विध्योक्तिपुरःसरमुक्तरीत्याऽऽनन्दतीर्थीयानां पादभेदोपाधिभेदवर्णनम्। तदप्यसत्। अन्यत्रैव प्रसिद्धवत्तत्रैव प्रसिद्धानां पृथग्वक्तव्यतया चातुर्विध्योक्त्ययोगात्। न च तत्रेत्यनेन तत्रैवेति विवक्षितमन्यथा तत्रापीति विवक्षायामुभयत्र प्रसिद्धेष्वन्तर्भावः स्यादत एव तत्र प्रसिद्धा ब्रह्मण्येव प्रसिद्धा इति सुधायामुक्तमिति वाच्यम्। तथा सत्युक्तयुक्त्यैवान्यत्रैव प्रसिद्धानां पार्थक्यायोगेन त्रैविध्यस्यैवाऽऽपत्तेः। किं चान्यत्र प्रसिद्धा इत्यस्य पादभेदोपाधेरवधारणागर्भत्वे चतुर्थपादोपाध्यन्तर्भावः। आनन्दमयशब्देऽन्यत्रैव प्रसिद्धिर्दुरुपपादा च। मयटो विकार इव प्राचुर्येऽपि प्रयोगाविशेषात्। प्रसिद्धिर्हि प्रयोगप्राचुर्यं तच्चाविशिष्टम्। तदगर्भत्वे तृतीयपादोपाध्यन्तर्भाव इति कथं पादोपाधिवैजात्यम्। किंचेन्द्राकाशप्राणादिशब्दानां प्रथमपादीयानामव्यक्तजीवादिशब्दानां चतुर्थपादीयानां चान्यत्रैव प्रसिद्ध्यविशेषे कुतो वैजात्यम्। कथंचित्कल्पनेऽपि वा तत्र प्रसिद्धेऽपि तथा वैजात्यस्य कल्पनया द्वैविध्यसंभवात्पाञ्चविध्ये वक्तव्ये चातुर्विध्योक्तिरयुक्ता।

यत्तु चतुर्थपादीयटीकायां लोकप्रसिद्ध्याऽन्यत्र निरूढानां श्रुतिलिङ्गबलाद्विष्णौ समन्वयः प्राक् प्रतिपादितः। इदानीं तु श्रुतिलिङ्गादिभिरेवान्यत्र प्रसिद्धानां समन्वयः प्रतिपाद्यत इत्यु-

क्तत्वात्, श्रुतिलिङ्गादिभिरन्यत्रैव प्रसिद्धानां सामस्त्येन विशेषहेतुभिर्विष्णावेव प्रवृत्तिं दर्शयत्यस्मिन्पाद इति चतुर्थपादे भाष्योक्तेश्च; लोकतोऽन्यत्रैव प्रसिद्धा अन्यत्र प्रसिद्धाः, श्रुत्यादिभिरन्यत्रैव प्रसिद्धास्त्वन्यत्रैव प्रसिद्धा इति वैजात्यान्नोक्तपादोपाधिसांकर्यम् । तत्र प्रसिद्धानां तत्रैव प्रसिद्धानां चाव्युत्पाद्यसमन्वयत्वेनाभेदाविवक्षया च न पाञ्चविध्यं वैदिकशब्दानामिति । तदप्यसत् । आनन्दमयादिनाम्नां सर्वगतत्वादिलिङ्गानां च 'आनन्दमयोऽभ्यासात्' (ब्र० सू० १ । १ । १२) 'अन्तस्तद्धर्मोपदेशात्' (ब्र० सू० १ । १ । २०) इत्याद्यधिकरणेषु प्रथमपादीयेषु समन्वेतव्यानामिन्द्राकाशादिशब्दानामिन्द्राकाशादाविवान्यत्रार्थविशेषेऽन्यत्राऽऽदित्यादौ लोकतोऽन्यत्र प्रसिद्ध्यभावादन्यत्र प्रसिद्धत्वाभावापातात् ।

यत्त्वादित्यादिश्रुतिसमभिव्याहारात्सर्वगतत्वादिलिङ्गानामन्यत्र प्रसिद्धिरस्तीति कल्पनम् । तन्न । तथा सत्यक्षरत्वादिलिङ्गसमभिव्याहारेणाव्यक्तादिपदानां चतुर्थपादे समन्वेतव्यानामन्यत्रैव प्रसिद्धत्वेन त्वदभिमतानामप्यन्यत्र प्रसिद्धत्वापातात् । यथा हि सर्वगतत्वादेरन्यत्र प्रसिद्धिसाधिकाऽऽदित्यश्रुतिरन्तर्यामित्वादेरन्यत्र प्रसिद्धिसाधकं शरीरित्वादिकं लिङ्गं च लोकतोऽन्यत्र प्रसिद्धं तथाऽव्यक्तादिशब्दस्यान्यत्र प्रसिद्धिसाधकमक्षरत्वादि लिङ्गमपि लोकतोऽन्यत्र प्रसिद्धम् । किंचान्यत्रैव प्रसिद्धेष्वव्यक्तमकृत्यादिशब्देष्वपि लोकतोऽप्यन्यत्र प्रसिद्धेः सत्त्वादन्यत्र प्रसिद्धेन्द्राकाशादिशब्देष्वपि श्रुत्यादिनाऽप्यन्यत्र प्रसिद्धेः सत्त्वादुपाधिसांकर्यं दुर्वारम् । न च प्रबलश्रुतिलिङ्गादिभिरन्यत्र प्रसिद्धा अन्यत्रैव प्रसिद्धाः, श्रुत्यादिमात्रेणान्यत्र प्रसिद्धास्त्वन्यत्र प्रसिद्धा इति श्रुतिलिङ्गादिगतप्राबल्याप्राबल्याभ्यां भेद इति वाच्यम् । अव्यक्तादिशब्दानामन्यत्र प्रसिद्धिसाधकाक्षरत्वादीनामिव सर्वगतत्वादिसाधकादित्यादिश्रुतीनामन्तर्यामित्वसाधकशरीरित्वादीनां गुहाप्रविष्टत्वादिसाधकद्वित्वादीनां च ब्रह्मण्यसंभवेन प्रबलत्वाविशेषात् । कथंचित्संभवेऽप्यक्षरत्वादावपि तुल्यत्वात्प्रबलश्रुतिलिङ्गादिभिरन्यत्रैव प्रसिद्धसाधके

समन्वयासिद्धिप्रसङ्गाच्च । तत्र प्रसिद्धानां तत्रैव प्रसिद्धानां चाव्युत्पाद्यसमन्वयत्वेनाभेदाभिधानमप्ययुक्तमेव । तथा सत्यन्यत्र प्रसिद्धानामन्यत्रैव प्रसिद्धानां च व्युत्पाद्यसमन्वयत्वेनैक्यापत्त्या त्रैविध्यापत्तेश्चातुर्विध्योक्तेरयुक्ततापातात् । किंच द्युभ्वायतनत्वादीनामुभयत्र प्रसिद्धत्वं किं लोकादुत श्रुत्यादिना । नाऽऽद्यः । असिद्धेः । नान्त्यः । इन्द्राव्यक्तादिशब्देष्वपि तौल्यात् । पूर्वोत्तरपक्षसाधकश्रुत्यादिभिस्तेष्वपि तथात्वस्य वक्तुं शक्यत्वात् । उभयत्र प्रसिद्धानामपि नान्यत्र प्रसिद्धादिभ्यो भेदः । किंचाऽऽकाशज्योतिरादयः शब्दाः प्रथमतृतीयचतुर्थेषु समन्वीयन्त इति यदुक्तम् । तदयुक्तम् । तेषां त्रिःप्रकारप्रसिद्धेरुपपादयितुमशक्यत्वादेकस्यैव प्रसिद्धित्रैविध्यायोगात् । 'आकाशस्तल्लिङ्गात्' ( ब्र० सू० १ । १ । २२ ) 'आकाशोऽर्थान्तरत्वादिव्यपदेशात्' ( ब्र० सू० १ । ३ । ४१ ) 'कारणत्वेन चाऽऽकाशादिषु०' ( ब्र० सू० १ । ४ । १४ ) इत्यधिकरणेषु क्रमात्प्रथमतृतीयचतुर्थपादीयेषु समन्वेतव्यानामाकाशादिशब्दानामन्यत्रोभयत्रान्यत्रैव प्रसिद्धता स्यात् ।

यच्च नामलिङ्गभेदाच्छब्दानां द्वैविध्यवर्णनम् । तदपि न युक्तम् । तद्वैलक्षण्यस्य दुरुपपादत्वात् । यच्च रूढत्वं नामत्वम् । यौगिकत्वं लिङ्गत्वमिति सुधायामुक्तम् । यच्च केवलधर्मिवाचित्वं नामत्वम्, धर्मविशिष्टधर्मिवाचित्वं लिङ्गत्वमिति टीकायामभिमतम् । तदुभयमपि न चतुरस्रम् । ब्रह्मणि सर्वशब्दानां महायोगविद्वद्रूढ्योः स्वीकारात् । किंच पादोपाधितावच्छेदकं यदि नामत्वं लिङ्गत्वं च तदा द्वैपाद्यमेव स्यात् । अन्यत्र प्रसिद्ध्याद्युपपादनं च निरर्थकमेव स्यात् । यद्यन्यत्र प्रसिद्ध्यादिकमेव पादोपाधितावच्छेदकं तदा त्रैपाद्यमेव स्यात् । यदि चान्यत्र प्रसिद्धिसहितं नामत्वं तथाविधं लिङ्गत्वं चेत्युच्यते तदोभयत्र प्रसिद्धादिष्वपि तथाऽवश्यंभावेन पादषाड्विध्यस्य त्वन्मते दुर्वारत्वात् । तथान्यत्र प्रसिद्धेष्ववान्तरभेदः पादभेदव्यवस्थापको नान्यत्रोभयत्र प्रसिद्धेष्वित्यत्र

किंचिद्गमकमस्ति । तस्मात्पादोपाधिभेदो नाऽऽनन्दतीर्थीयोक्तो युक्तः ।

पादक्रमोक्तिरप्ययुक्ता । महामल्लभङ्गन्यायेनातिप्रयत्नसाध्यस्य प्राथम्येऽन्यत्रैव प्रसिद्धानां प्राथम्यावश्यंभावात् । सोपानारोहणन्यायेनाल्पप्रयत्नसाध्यस्य प्राथम्ये तूभयत्र प्रसिद्धानामेव प्राथम्यौचित्यात् ।

यत्तु चन्द्रिकायामुक्तरीत्या पादोपाधिभेदवर्णनं शङ्कासमाधानाभ्यामाक्षिप्योच्यते—

* श्रुत्यन्तरादिभिस्तुल्या ह्युभयस्मिन्प्रसिद्धता ।
श्रुत्यादितो लोकतो वाऽपीतरेषु प्रसिद्धता ॥
बलवच्छ्रुतिलिङ्गाद्यैरन्येष्वेव प्रसिद्धता ।
उभयत्र प्रसिद्धादेः क्रमाल्लक्षणमुच्यते ॥

यद्वा—

येषां प्रसिद्धिरन्यत्र केवलैव विरोधिनी ।
समन्वयस्योभयत्र प्रसिद्धास्ते हि कीर्तिताः ॥
येषां ब्रह्मण्यप्रसिद्धिः प्रसिद्धिश्चान्यवस्तुषु ।
× विरोधिन्यौ हि तेऽन्यत्र प्रसिद्धा कथिता = इह ॥

---

* श्रुत्यन्तरादिभिरिति । अयं भावः—प्रथमाध्यायस्य पादचतुष्टयं कुत इत्याशङ्क्य, उपाधिभेदादित्युक्तम् । उपाधिचतुष्टयं प्रतिपादयितुमादौ—[तत्र प्रसिद्धाः] अन्यत्र प्रसिद्धाः, उभयत्र प्रसिद्धाः, अन्यत्रैव प्रसिद्धाः, इति विभागः कृतः । तत्राऽऽद्ये नामलिङ्गाभ्यां भेदः । तथा चोपाधिचतुष्टयं संपन्नम् । एवं चोपाधिचतुष्टयेन पादचतुष्टयमुपपन्नम् । तेषां च लक्षणानि यानि सुधादिग्रन्थान्तरे प्रतिपादितानि तानि संकीर्णानि सन्तीत्याशयेन ' अन्यत्र प्रसिद्धाः ' इत्यादीनामसंकीर्णानि लक्षणानि हेतुमुखानि ' श्रुत्यन्तरादिभिः ' इत्यादिश्लोकद्वयेन प्रतिपादयति । ततश्च ' यद्वा ' इत्युक्त्वा ' येषां प्रसिद्धिः ' इत्याद्येकैकेन स्वरूपमुखाणि फलमुखानि च तेषामेव लक्षणान्यसंकीर्णानि प्रतिपादयति ।

× विरोधिन्याविति । अत्र ' समन्वयस्य ' इत्यनुषज्जते । एवमग्रेऽपि ' विरोधिन्यः ' इत्यत्र बोध्यम् ।

= इहेति । समन्वीयमानशब्देष्वित्यर्थः ।

येषा*मुक्तद्वयं ब्रह्मपरत्वस्यात्यशंक्यता ।
इति तिस्रो विरोधिन्यस्तेऽन्यत्रैव प्रसिद्धकाः ॥

+ येषां शब्दानां लोके ब्रह्मणीवाऽन्यत्राप्यप्रयोगाद्व्यक्तिविशेषनिर्णयाय श्रुत्यन्तरान्वेषणे श्रुत्यन्तरेऽन्यत्रैव ब्रह्मण्यपि प्रयोगः श्रुत्यन्तरसाधारण्यं प्रवृत्तिनिमित्तादि साधारण्यं वा पूर्वपक्षिणोऽपि संमतम् । × अत एव येषां विषयवाक्य आपाततोऽन्योपस्थापनसमये तत्तुल्यतया ब्रह्मोपस्थापकत्वम् । = अत एव येषां ब्रह्मणि समन्वयस्यान्योपस्थितिमात्रेण प्रतिबन्धस्त उभयत्र प्रसिद्धाः । ◡ येषां तु वस्त्वन्तरे लोकप्रसिद्ध्यादेः सत्त्वात्तद्विरोधेन क्वापि ब्रह्मणि वृत्त्यादिकं पूर्वपक्षिणो न संमतम् । अत एव येषां विषयवाक्य आपाततोऽन्यमात्रोपस्थापकत्वम् । अत एव येषां समन्वयस्यान्योपस्थितिब्रह्मानुपस्थितिभ्यामेवातिप्रतिबन्धस्तेऽन्यत्र प्रसिद्धाः । ⊙ येषां पुनर्वस्त्वन्तरे लोकप्रसिद्धिस्तत्परत्वे प्रबलश्रुत्यादिकमप्यस्ति । अत एव येषां

---

* उक्तद्वयमिति । ब्रह्मण्यप्रसिद्धिरन्यत्र प्रसिद्धिश्चेत्यर्थः । 'अन्यत्रैव प्रसिद्धकाः' इत्यत्र स्वार्थे कप्रत्ययो बोध्यः ।

+ 'श्रुत्यन्तरादिभिः' इत्यादिश्लोकोक्तानां लक्षणानां हेतुमुखत्वं विशदयन् 'येषां प्रसिद्धिरन्यत्र' इत्यादिश्लोकोक्तलक्षणानां स्वरूपमुखत्वं फलमुखत्वं च सूचयन्व्याचष्टे—येषां शब्दानां लोक इति ।

× हेतुमुखं लक्षणमुक्त्वा स्वरूपलक्षणमाह—अत एवेति । साधारण्यादेवेत्यर्थः । यद्यपि स्वरूपलक्षणं पूर्वोक्तश्लोकेषु कण्ठतो नोक्तं तथाऽप्युभयत्रान्यत्रान्यत्रैव प्रसिद्धेतिशब्दावयवार्थरूपं तदिति तत्तच्छब्दप्रयोगादेव सूचितमिति तदाशयः ।

= कण्ठोक्तमेव फलमुखलक्षणं विवृणोति—अत एव येषामिति । उभयोपस्थापकत्वादेव वा साधारण्यादेवेत्यर्थः ।

◡ अन्यत्र प्रसिद्धानां त्रिविधान्यपि लक्षणानि विवृणोति-येषां तु वस्त्वन्तर इति ।

⊙ अन्यत्रैव प्रसिद्धानां त्रिविधान्यपि लक्षणानि स्पष्टयति-येषां पुनरिति ।

---

१ 'शक्यता' इति पाठान्तरम् ।

विषयवाक्य आपाततोऽप्यत्यन्तमन्यमात्रोपस्थापकत्वम् । अत एव येषां समन्वयस्यान्योपस्थितिब्रह्मानुपस्थितिभ्यां ब्रह्मपरत्वस्याशक्यकल्पनत्वशङ्कया चातितरां प्रतिबन्धस्तेऽन्यत्रैव प्रसिद्धाः । अत्र च सर्वत्र प्रत्येकं हेतुस्वरूपफलमुखेन लक्षणत्रयं विवक्षितम् । तत्र चाऽऽद्येन येषामित्यादिनाऽत एवेत्यतः पूर्वेण हेतुमुखलक्षणमुक्तम् । द्वितीयेन येषामित्यादिनाऽत एवेत्यतः पूर्वेण स्वरूपमुखलक्षणमुक्तमिति विवेक इति । उक्तं हि—

यस्तानि प्रविभक्तानि हेतुरूपफलैः पृथक् । इति ।

अन्यत्र प्रसिद्धानामिन्द्रादिशब्दानां लोकतः सर्वगतत्वादिलिङ्गानां च लोकतोऽन्यत्र प्रसिद्धादित्यादिश्रुतिसाहचर्येणान्यत्र प्रसिद्धिः, न तूभयत्र प्रसिद्धानामिव ब्रह्मसाधारणश्रुत्यादिनेति ततो वैलक्षण्यम् । उभयत्र प्रसिद्धानां हि द्युभ्वाद्यायतनत्वादीनाम् ‘ रुद्रो वाव लोकाधारः ’ विष्णावोताश्च प्रोताश्च ’ इत्यादिश्रुत्यन्तरसाधारण्येनाक्षरादिशब्दानां प्रवृत्तिनिमित्तसाधारण्येन सदादिशब्दानां विषयवाक्यस्थाकारणत्वादिधर्मसाधारण्येन ‘ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ’ ( ब्र० सू० १ । ३ । ४१ ) इति सूत्रविषये ‘ आकाशो ह वै नाम नामरूपयोर्निर्वहिता ’ इति वाक्य आकाशशब्दे ‘ आकाशस्तल्लिङ्गात् ’ ( ब्र० सू० १ । १ । २२ ) इत्यत्र ब्रह्मण्यपि प्रयोगस्योक्तत्वात्प्रयोगसाधारण्येनोभयत्र प्रसिद्धिः, न तु पूर्वपक्षसिद्धान्तन्यायेनेति न सांकर्यावकाश इत्यादिकमन्यत्र प्रसिद्धादीनां प्रत्येकं हेतुस्वरूपफलमुखेन लक्षणत्रयपरिष्करणेनोक्तपादोपाधिसांकर्यनिवारणम् । तदपि मन्दमेव । एवमपि प्रथमचतुर्थपादयोरुपाधिसांकर्यस्य प्रागुक्तस्यापरिहारात् । इन्द्राव्यक्तादिशब्दानां प्रथमचतुर्थपादीयानां लोकप्रसिद्ध्यादिविरोधेन ब्रह्मणि वृत्त्यादेः पूर्वपक्ष्यनभिमतत्वाविशेषात् । न च प्रथमपादीये लोकप्रसिद्ध्युपष्टम्भकश्रुत्यल्पत्वं चतुर्थपादीये तदाधिक्यमिति वैजात्यं शङ्कितुं शक्यम् । तथाऽपि लोकप्रसिद्ध्यविशेषप्रयुक्तावैलक्षण्येन सांकर्यापरिहारात् । न चेन्द्रादिशब्द इन्द्रादिस्वरूपे लोकप्रसिद्धिः, अव्यक्तादिशब्दे त्वव्यक्तादिस्वरूपे लोकप्रसिद्धिसहकारिण्यवरत्वादिलिङ्ग इत्यतो वैलक्षण्यं शङ्क्यम् । इन्द्रादिशब्द इवाव्यक्तज्योतिर्ब्रा-

प्रमाणादिशब्देष्वप्यव्यक्तादिस्वरूपे लोकप्रसिद्धेः सत्त्वात् । सर्वगतत्वादिलिङ्गे लोकप्रसिद्ध्युपष्टम्भकादित्यादिशब्दगतादित्यस्वरूपे लोकप्रसिद्धेरिवावरत्वादिलिङ्गगतलोकप्रसिद्धेरप्यव्यक्तादिशब्दानां तत्तत्स्वरूपे लोकप्रसिद्धिसाधकत्वस्य वक्तुं शक्यत्वात् । इन्द्रादिशब्देष्वपि लोकप्रसिद्ध्युपष्टम्भकश्रुत्याधिक्यसंभवाच्च ।

अथास्तु श्रुत्युपष्टम्भकतौल्यं तथाऽपि श्रुतिगतप्राबल्यमधिकमव्यक्तादिशब्दे नेन्द्रादिशब्दे तच्च लक्षणे विवक्षितम् । तथा चोक्तं चन्द्रिकायाम्—तच्च श्रुत्यादिकं चतुर्थपादीयश्रुत्यादिवन्न प्रबलम् । श्रुत्यादेः प्राबल्यं हि प्रवृत्तिनिमित्तस्य तदधीनत्वादिना ब्रह्मणि शब्दस्य परममुख्यत्वेऽपि तस्य शब्दस्य तद्युक्तवाक्यस्य वाऽपरममुख्यवृत्त्याऽन्यपरत्वं विनाऽनुपपद्यमानत्वम् । न त्वापाततो ब्रह्मण्यसंभवमात्रम् । येन द्वित्वादिकमपि बलवत्स्यात् । नापि सर्वथाऽसंभवः । येन सिद्धान्तानुदयः स्यात् । तच्चास्त्यव्यक्तादिशब्दे तद्युक्तवाक्ये च । अन्यथाऽवरत्वादिलिङ्गविरोधात् । इन्द्रादिशब्देषु तन्नास्तीति न सांकर्यमिति । तदप्यसत् । अव्यक्तादिशब्देष्ववरत्वादिलिङ्गानामिन्द्रादिशब्देष्वपि पूर्वपक्ष्युक्तलिङ्गानां तत्तद्साधारणानां सत्त्वेन तदविरोधायापरममुख्यवृत्त्यश्यंभावतौल्यात्तदुपष्टम्भकश्रुत्यादिप्राबल्यस्य दुर्वारत्वात् । न च तत्र लिङ्गानामन्यथासिद्ध्या तदनावश्यकताशङ्कया । अवरत्वादीनामप्यनन्यथासिद्धिसहत्वात् । किंचेन्द्राव्यक्तादिपदानां लोकतोऽन्यत्रप्रसिद्ध्यविशेषेऽपि यद्युपष्टम्भकश्रुत्यादिवशाद्वैजात्यं तदा द्युभ्वाद्यायतनत्वादीनामपि जायमानत्वादिरूपान्यत्रप्रसिद्धलिङ्गसाहचर्यवशादन्यत्रप्रसिद्धत्वापत्त्या तत्रोभयत्र प्रसिद्धिर्न सिध्येत् । लोकतोऽन्यत्रप्रसिद्धादित्यादिश्रुतिवशात्सर्वगतत्वस्याप्यन्यत्रप्रसिद्ध्युपपादकत्वात् । अथ लोकतोऽन्यत्रप्रसिद्धजायमानत्वादिलिङ्गसाचिव्येन द्युभ्वाद्यायतनत्वादेरन्यत्रप्रसिद्धत्वेऽपि तद्व्यतिरेकस्य स्वतोऽन्यत्र प्रसिद्धिवद्ब्रह्मण्यपि संभवादुभयत्रप्रसिद्धिरविकलेति तृतीये तन्निवेश इत्युच्यते । तर्ह्यव्यक्तादिपदेऽप्युपष्टम्भकवैकल्येन लोकतोऽन्यत्र-

प्रसिद्धिविशेषात्सांकर्यं दुर्वारमेव । किंचान्तर्यामित्वादिकं यथाऽन्यसाचिव्येनान्यत्र प्रसिद्धमुच्यते तद्वद्द्युभ्वाद्यायतनत्व-मप्यन्यसाहित्येनान्यत्र प्रसिद्धमन्तर्यामित्वं चेतरसाहित्येनोभयत्र प्रसिद्धमस्तु ।

यत्तु समाख्याश्रुतितौल्याभावोऽप्यन्यत्रप्रसिद्धिलक्षणान्त-र्गतः । स च न द्युभ्वाद्यायतनत्वादावस्ति । 'रुद्रो वाव लोका-धारः । 'लोकाश्च लोकिनश्च विष्णावोताश्च प्रोताश्च' इति तत्रोभयत्र समाख्याश्रुतितौल्येन न द्युभ्वाद्यायतनत्वादावन्यत्रप्र-सिद्धतेति कल्पनम् । तदप्यसत् । इन्द्रादिशब्देऽपि 'ब्रह्मेन्द्रमग्निं यमिन्द्रमाहुः' इत्यादिसमाख्याश्रुतितौल्येनान्यत्रप्रसिद्धयभा-वापत्तेः ।

यदपि द्युभ्वाद्यायतनत्वस्योभयत्रप्रसिद्धत्ववदन्यत्रप्रसिद्धत्व-सत्त्वेऽपीतरानपेक्षं स्वत उभयत्रप्रसिद्धत्वमादाय तृतीये संग-तिरस्तु । अन्यथा क्वापि रूपद्वयवतो विचारो न स्यादिति द्यु-भ्वाद्यधिकरणे चन्द्रिकायामुक्तम् । तदपि न सत् । तर्हि तद्वद-न्तर्यामित्वमपि तृतीये स्यात् । उभयत्र संगतस्य यत्र क्वापि विचार्यत्वे समाने च कृतं पादोपाधिवैजात्यकल्पनेन । किंचैवं स्वत उभयत्र प्रसिद्धानां तृतीये निवेशे स्वतोऽन्यत्र प्रसिद्धा-नामेव द्वितीये निवेशो युक्तः स्यात् । तथा चाऽऽदित्यादिश्रुति-साहचर्येणान्यत्रप्रसिद्धसर्वगतत्वादीनां द्वितीये निवेशो न स्यात् । यत्तु सर्वगतत्वादेः स्वतःप्रसिद्ध्युपपादनं तट्टीकाग्रन्थादिविरोधा-द्बहुप्रमाणविरोधाच्च न समञ्जसम् । वस्तुतस्तु यथाऽऽनन्दमय-शब्दस्य नामलिङ्गोभयात्मकतयोभयत्र संगतत्वे सति प्रथमाति-क्रमे कारणाभावात्प्रथमतो निरूपणमेवं द्युभ्वाद्यायतनत्वस्योभ-यरूपत्वेनोभयसंगतत्वे प्रथमानतिक्रमादादावेव तन्निरूपणं युक्त-मिति । अपि चोक्तपरिष्कारेऽपि कथमाकाशज्योतिरादिपदानां पादत्रयविषयता । एकस्य त्रैविध्यायोगस्य प्रागुक्तस्यापरिहा-रात् । नहि लोकतः श्रुतिलिङ्गादिभिश्चान्यत्रैव प्रसिद्धतया ब्रह्मणि वृत्तिशून्यतया पूर्वपक्ष्यभिमतानां पुनर्ब्रह्मण्यन्यत्र च वृत्तिमत्तया पूर्वपक्ष्यभिमतत्वसंभवः । ननु 'आकाशवल्लिङ्ग

ङ्गात् ' ( ब्र० सू० १ । १ । २२ ) इत्यत्र ब्रह्मण्याकाशपदस्य प्रयोगसाधारण्यादुभयत्र प्रयोगः सिध्यतीति चेत् । न । तथाऽपि पूर्वपक्षिणोऽन्यत्रैव ब्रह्मणि वृत्तेरभिमतत्वात् । ' आकाशो ह वै नाम नामरूपयोर्निर्वहिता ' ( छा० ८ । १४ । १ ) इत्यत्राऽऽकाशपदस्यान्यपरत्वे ' सर्वाणि ह वा इमानि ' ( छा० १ । ९ ) इत्यत्राप्यन्यपरत्वावश्यंभावे ब्रह्मपरत्वासिद्धेश्च । अत एव ' आकाशादेव सर्वाणि भूतानि ' इति च्छान्दोग्यस्थाकाशस्याब्रह्मत्वे ' यदेष आकाश आनन्दो न स्यात् ' इति तैत्तिरीयस्थाकाशोऽपि विष्णुर्न स्यादित्युच्यते । ' प्राणस्तथाऽनुगमात् ' ( ब्र० सू० १ । १ । २८ ) इत्यत्रैतरेयवाक्यस्थप्राणस्याब्रह्मत्वे ' तद्वै त्वं प्राणोऽभवः ' इति तैत्तिरीयस्थप्राणोऽपि तथा स्यादित्युच्यते । तथा ' ज्योतिर्दर्शनात् ' ( ब्र० सू० १ । ३ । ४० ) इत्यत्र वाजसनेयवाक्यस्थज्योतिषो ब्रह्मान्यत्वेऽग्निसूक्तस्थज्योतिरपि तथा स्यादित्युच्यते । तस्मादाकाशशब्दस्य प्रयोगसाधारण्यादुभयत्र प्रसिद्धिरित्युक्तिरयुक्ता । यदि च योगेन ब्रह्मवृत्तिता तस्यापीष्टेत्युच्येत तर्हि रूढेर्योगापहारकत्वं वदतः पूर्वपक्षिणस्तदपि न संमतमिति प्रत्युच्येत । इन्द्रादिशब्दानामपि तथैवोभयत्र प्रसिद्धता च प्रसज्येत । एतेन ' आकाशोऽर्थान्तरत्वादिव्यपदेशात् ' ( ब्र० सू० १ । ३ । ४१ ) इत्यनेन द्युभ्वाद्यधिकरणस्यैव संनिहितत्वादाक्षेपात् ' आकाशस्तल्लिङ्गात् ' ( ब्र० सू० १ । १ । २२ ) इत्यस्येत्युभयत्रप्रसिद्धता चन्द्रिकोक्ता निरस्ता । ' प्राणस्तथाऽनुगमात् ' ( ब्र० सू० १ । १ । २८ ) इत्यत्रेव पादान्तरस्थस्याप्याक्षेपसंभवात्, अन्यथा ' ज्योतिर्दर्शनात् ' ( ब्र० सू० १ । ३ । ४० ) इत्यत्र टीकाविरोधाच्च । अत एव ' ज्योतिश्चरणाभिधानात् ' ( ब्र० सू० १ । १ । २४ ) इत्यत्र वह्निरिति पूर्वपक्षः, ' ज्योतिर्दर्शनात् ' ( ब्र० सू० १ । ३ । ४० ) इत्यत्र तु जीव इत्यतो न तदाक्षेप इति चन्द्रिकोक्तिरपि टीकाविरोधान्निरस्ता । ब्रह्मान्यविषयकत्वस्यैवाऽऽक्षेपप्रयोजकत्वाच्च । ज्योतिःशब्दस्याग्निपर्यायेष्वपाठेन प्रकाशकत्वस्य च साधारण्येन चान्यत्र प्रसिद्धे-

दुरुपपादत्वाच्च । कथंचित्तदुपपादने च प्रथमचतुर्थपादीयं न स्यात् ।

यत्तु 'आकाशस्तल्लिङ्गात्' (ब्र० सू० १ । १ । २२) इत्यतः प्राग्ब्रह्मपरत्वात्तुक्तेरन्यत्र प्रसिद्धतेत्युपपादनम् । तन्न । तर्हि चतुर्थपादेऽन्यत्रप्रसिद्धिर्न स्यात् । प्राग्ब्रह्मपरत्वस्योक्तत्वात् । न च तत्र ब्रह्मलिङ्गाभावेन लोकतोऽन्यत्रप्रसिद्धेरबाधादन्यत्रप्रसिद्धतेति कल्पना युक्ता । तथाऽपि प्रयोगासाधारण्यप्रयुक्ताया उभयत्रप्रसिद्धताया दुर्वारत्वात् । अन्यथा 'आकाशो ह वै नाम नामरूपयोर्निर्वहिता' (छा० ८ । १४ । १) इत्यत्रापि तदभावप्रसङ्गात् । यदि च संभूतत्वरूपान्यलिङ्गबलादन्यत्रप्रसिद्धतेत्युच्येत तर्हि 'वै नाम' इति प्रसिद्ध्युपपादकनिपातबलाल्लोकप्रसिद्धेरेव ग्राह्यत्वनिश्चये च नामरूपनिर्वोढृत्वस्येदानीमपि ब्रह्मलिङ्गत्वनिश्चयेन तथात्वे पूर्वपक्षानुत्थितिप्रसङ्गेन च तत्राप्यन्यत्रप्रसिद्धिनिश्चयसंभवात् । किंचैवं 'ज्योतिर्दर्शनात्' (ब्र० सू० १।३।४०) इत्यत्रापि ज्योतिःशब्दस्योभयत्रप्रसिद्धता न स्यात् । 'प्राणेषु हृद्यन्तर्ज्योतिः' (बृ० ६।३।७) इति प्राणसंबन्धादिलिङ्गेन जीवपरत्वनिश्चयात् । प्रयोगसाधारण्यमात्रादुभयत्रप्रसिद्धिनिश्चये च 'ज्योतिरुपक्रमात्तु तथाहि०' (ब्र० सू० १।४।९) इत्यत्रापि तथात्वं स्यात् । लोकप्रसिद्ध्यव्याघाताय तत्र तदनङ्गीकारे चाऽऽकाशशब्देऽपि तथात्वं स्यात् । किंच 'आत्मन आकाशः संभूतः' (तै० २।१।२) इत्यत्र ब्रह्मलिङ्गाभावविपरीतलिङ्गाभ्यां लोकप्रसिद्ध्यबाधाङ्गीकारे 'अङ्गुष्ठमात्रः पुरुषः' इति वाक्यस्थेशानशब्दस्यान्यत्रप्रसिद्ध्यभावः स्यात् । ब्रह्मलिङ्गाश्रवणात् । प्रत्युत 'ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति' इति प्राणोन्नेतृत्वादिविपरीतलिङ्गश्रवणात् । न च तत्र सर्वदेवोपास्यत्वानन्वयाद्बुद्धित्यागे प्रेरकत्वसाधारण्यादुभयत्रप्रसिद्धता टीकोक्ता युक्ता । तथा सति नित्यमहिमत्वविरोधेनाजब्राह्मणशब्दयोर्मोक्षजनकज्ञानविषयत्वेन वज्रशब्दस्य नामरूपनिर्वोढृत्वादिनाऽऽकाशशब्दस्य च रूढित्यागेनैवोभयत्रप्रसिद्धता स्यात् । अस्तु वा यथाकथंचिदुपपत्ति-

प्रसिद्धत्वैवास्मदिष्टा। अक्षरशब्दे द्रष्टृत्वादिविरोधेन रूढिभङ्गेनापि नाशित्वायोगेनोभयत्रप्रसिद्धताया अस्मदिष्टत्वादिति चेत्। सत्यम्। तर्हि पारिभाषिकमेवोभयत्रप्रसिद्धत्वं स्यात्। तच्चेन्द्रादिशब्देष्वव्यक्तादिशब्देष्वपि तुल्यम्। इदं त्वर्थानुसारेण साधारण्याविघातात्। रूढेर्योगापहारकत्वात्तदनङ्गीकारश्चेत्। तुल्यमीशानादिशब्देष्वपीति दिक्।

इदं चात्र बोध्यम्। वस्त्वन्तरे लोकप्रसिद्ध्या श्रुतिसहितया वा तत्प्रव्युत्पन्नानां शब्दानां तद्विरोधाद्ब्रह्मणि वृत्तेः पूर्वपक्ष्यनभिमतत्वमादायेन्द्रादिशब्दानामव्यक्तादिशब्दानां चान्यत्रप्रसिद्धत्वमत्रैव प्रसिद्धत्वमित्यस्य कथंचित्संभवेऽप्यक्षरेशानवज्रब्राह्मणाकाशाव्यक्तादिपदानामन्यत्रप्रसिद्धत्वं कथं त्वदुक्तलक्षणेन सिध्यति। ब्रह्मतदितरविषयलौकिकप्रयोगाभावप्रयोज्यव्यक्तिविशेषनिर्णयोपयुक्तश्रुतिसाधारण्यादेः पूर्वपक्ष्यनभिमतत्वं ह्युभयत्रप्रसिद्धतागमकमुक्तं त्वया। तच्चाक्षरेशानवज्रादिपदेषु नास्ति। तेषामन्यत्र लोके प्रयोगसत्त्वेन तदभावघटितलक्षणाभावात्।

ननु पूर्वपक्ष्यभिमतवस्तुविषयकलौकिकप्रयोगाभावोऽस्मदभिमतः, स चास्त्येव, शीतत्ववायुचतुर्मुखादावक्षरेशानब्राह्मणादिपदानां पूर्वपक्ष्यभिमतत्वात्। तत्र च लौकिकप्रयोगाभावादिति चेत्। न। वज्रपद इन्द्रायुधपरत्वेन पूर्वपक्ष्यभिमते तथाऽपि तदसिद्धेः सर्वगतत्वादावतिव्याप्तेश्च। तत्रापि लौकिकप्रयोगाभावाच्छ्रुतिसाधारण्याच्च। तदुपष्टम्भकादित्यादिपदेषु लौकिकप्रयोगासाधारण्यं च। तच्च ब्राह्मणाद्युपष्टम्भकाजादिशब्देष्वपीति। एवं स्वरूपलक्षणान्यपि न चतुरस्राणि। अन्यमात्रोपस्थापकत्वस्येन्द्रादिष्वव्यक्तादिपदेषु समत्वेन सांकर्यानपायात्। न चाऽऽत्यन्तिकत्वानात्यन्तिकत्वाभ्यां वैलक्षण्यं शङ्क्यम्। अन्यमात्रोपस्थापकत्वघटकाभावाश्रयोरात्यन्तिकत्वानिरूपणात्। तथा हि—तत्किं न्यायानुगुणत्वं न्यायान्तराप्रतिवध्यत्वं वा। आद्ये पूर्वपक्ष्यभिमतन्यायानुगुण्यमुभयत्राप्यस्तीति तदेव सांकर्यम्। द्वितीये सिद्धान्तन्यायप्रतिवध्यत्वादसंभवो दुर्वारः। अत एव श्रुत्यनुगुण्यं श्रुत्यन्तराप्रतिवध्यत्वं वा न तत्। इन्द्रादिप-

देष्वपि श्रुत्यनुगुण्योपपादनात् । सिद्धान्त्यभिमतश्रुतिप्रतिबध्य-त्वस्योभयोः सत्त्वेनासंभवात् । अथ प्रबलश्रुत्यननुगुण्यं तत् । प्राबल्यं चापरममुख्यवृत्त्यादिनाऽन्यपरत्वमन्तरेणानुपपद्यमानत्व-मिति चेत् , न । इन्द्रादिपदेष्वतिप्रसङ्गस्य प्रागुक्तस्यापरिहारात् । तत्तद्वाक्यगततत्तदसाधारणलिङ्गानामवरत्वादीनामिहापरममुख्य-वृत्त्येन्द्रादिपदानामन्यपरत्वं विनाऽनुपपद्यमानत्वसत्त्वात् । उक्ता-त्यन्तिकत्वापातप्रतीतत्वयोः परस्परविरोधाच्च । समीचीनन्या-यानुगुणत्वरूपापातप्रतिपन्नत्वस्य तदनुगुणत्वरूपात्यन्तिकाभाव-रूपत्वात् । एतेन फलमुखलक्षणमपि निरस्तम् । किंच सर्वस्य ब्रह्मणि समन्वयो नाम ब्रह्मैकविषयकत्वनिश्चयः । तत्र च ब्रह्मान्यविषयकत्वज्ञानं प्रतिबन्धकं न तु ब्रह्मानुपस्थित्यादि-कमपि । गौरवात् । तदेव प्रतिबन्धकं न त्वन्यत् । उभयमत्र प्रसिद्धेष्वभावात् । अतो न तत्प्रयुक्तमपि वैजात्यं युक्तम् । कार्यानुत्पत्तिरूपप्रतिबन्धे च नाऽऽत्यन्तिकत्वं तत्तारतम्यं वा । अभावरूपे तदयोगात् । कथंचिद्योगेऽपि नाऽऽत्यन्तिकप्रतिबन्धै-कफलकयोरपि नामलिङ्गयोः पादभेददर्शनेन तस्य पादभेदो-पाधित्वायोगात् । आत्यन्तिकप्रतिबन्धफलकत्वविशिष्टं नामत्वं लिङ्गत्वं च प्रत्येकमुपाधिश्चेत् । तथैव द्वितीयतृतीययोरपीति षड्-विधं स्यादित्युक्तमेव । यत्तु सर्वस्यैवाध्यायस्य पादचतुष्टयनैयत्ये-न समाधानं तत्पूर्वमीमांसायां तृतीयषष्ठदशमाध्यायेष्वदर्शनादयु-क्तमिति विदुषां स्पष्टमेव । यदप्यापातप्रसिद्धभेदमाश्रित्य प्रथमं पादभेदः, इदानीं तु तत्त्यागेन पादैक्यं कृतमिति । तदुपहास्य-मेव । पादैक्ये सति क्वचिदापातप्रसिद्धभेदाश्रयणं क्वचित्तदना-श्रयणमित्यत्र विनिगमकानुपन्यासात् । इच्छाया एव नियाम-कत्वे पादोपाधिनिरूपणस्य क्लेशैकफलकत्वापत्तेः । महायोग-विद्रूढिभ्यामेकीकरणं तत्र द्वयोरस्ति तद्द्वयोरित्यत्र शफ(प)-थमन्तरेणानाश्वासः ।

यदपि क्रमोपपादनं चतुर्थपादीयसमन्वयस्या*सर्वाधिकारि-

* असर्वाधिकारित्वादिति । 'महासमन्वये तस्मिन्नाधिकारोऽखिलस्य हि ' इत्युक्तत्वादिति भावः ।

त्वात्त्रिपाद्युक्तश्रुतिलिङ्गादिसापेक्षाया अन्यपरत्वशङ्कायास्त- दनन्तरभावित्वात्तच्छब्दप्रवृत्तिनिमित्तगुणमात्रसिद्धफलकस्य कारणत्वादिसिद्धफलकत्वाच्चान्यतता । इतरयोस्तु महामल्लभ- ङ्गन्यायेनान्यत्रप्रसिद्धसमन्वयस्य प्राथम्यम् । यथोक्तमनु- व्याख्याने—

तत्र प्रथमतोऽन्यत्रप्रसिद्धानां समन्वयः ।
शब्दानां वाच्य एवात्र महामल्लेशभङ्गवत् ॥ इत्यादि ।

यद्वाऽन्यत्रप्रसिद्धेरन्यपरत्वस्य प्रसिद्धिमात्रमूलकत्वेन स्थू- लत्वादुभयत्रप्रसिद्धेषु श्रुत्यादिमूलकत्वेन सूक्ष्मत्वादन्यत्रैव प्रसिद्धेरभिहितोभयमूलकत्वापादकम इति । तदपि न । असर्वाधिकारिकत्वेऽपि प्रयत्नाधिक्यसापेक्षत्वे महामल्लभङ्गन्या- यविष[य]त्वानपायात् । त्रिपाद्युक्तश्रुतिलिङ्गादिसापेक्षत्वं चायु- क्तम् । सिद्धान्ते तेषामनुपयोगात् । श्रुतिलिङ्गादिस्वरूपं त्वन्यत्र एवावगम्यत इति न तदर्थमपि तदपेक्षा । गुणमात्रसिद्धिफलकत्वं चासिद्धम् । द्वितीयसूत्रोक्तलक्षणातिव्याप्तिनिरासफलकताया 'कारणत्वेन चाऽऽकाशादिषु' ( ब्र० सू० १।४ । १४ ) इत्या- दिना सूत्रकारेणैव सूचितत्वात् । तथैव प्रागुपपादितत्वाच्च । उत्तमाधिकारिकत्वेन चतुर्थपादीयसमन्वयस्यैव प्राथम्यौचि- त्याच्च । प्रवृत्तिनिमित्ततादधीन्योपपादकतया तस्य सर्वोपजी- व्यत्वाच्च । इतरयोरपि समन्वेतव्यब्रह्मोपस्थितितदनुपस्थितिभ्यां पौर्वापर्यस्य सुलभतयाऽन्यत्रप्रसिद्धस्य ब्रह्मणि समन्वयस्य समन्वेतव्यब्रह्मोपस्थितिसापेक्षतदुपजीव्यतयोभयत्रप्रसिद्धानामेव प्राथम्याच्च । अत एव महामल्लभङ्गन्यायाविषयत्वस्यापि संभ- वाच्च । तदाश्रयणेऽपि प्रागुक्तरीत्याऽन्यत्रैव प्रसिद्धप्राथम्यौचि- त्याच्च । उभयमूलकादन्यतरमूलकस्यैव सूक्ष्मतया न्यायस्यापि विपरीतत्वाच्च । लोकव्युत्पत्तिमूलकस्यार्थप्रतिपत्तिकश्रुतिमूलकस्य ततोऽपि स्थूलत्वाच्च ।

यदप्युभयत्रप्रसिद्धेरन्यत्रप्रसिद्धिनिरूप्यत्वात्, अन्यत्रैव प्रसि- द्धेरेवकारार्थभूतव्यवच्छेदविषयतदुभयनिरूप्यत्वापादकम इति । तदपि न । उभयनिष्ठस्य परस्परानिरूपणानपेक्षत्वादन्यत्र-

प्रसिद्धेरपि तात्पर्यतोऽन्यत्रैव प्रसिद्धिरूपतयोभयत्रप्रसिद्धाना-मेव निरूपणस्य प्राथम्यप्रसङ्गाच्च । अन्यत्रप्रसिद्धेषु नाम्नां प्रथमं निरूपणेऽपि नास्ति विनिगमकम् ।

यत्तु रूढानां धर्मिधीजनकत्वात्प्राथम्यम् । योगस्य तु धर्म-मात्रगोचरत्वादप्राथम्यम् । योगस्याप्यवयवरूढिसापेक्षत्ववद्रूढेश्च योगानपेक्षत्वात्पौर्वापर्यकल्पनम् । तन्न । रूढेरपि प्रवृत्तिनिमित्त-भूतधर्मसापेक्षत्वाद्योगरूढनाम्नां योगसापेक्षत्वेनोक्तविनिगमक-स्याप्यव्यापकत्वाच्च । इन्द्रादीनामसमन्वयस्यान्तःस्थत्वलिङ्गमा-पेक्षत्वमङ्गीकुर्वतां मत उक्तक्रमानुपपत्तेश्च । सर्वस्यापि नामसम-न्वयस्य लिङ्गाधीनत्वेनोपजीव्यत्वेन तत्प्राथम्यौचित्याच्च । वा-च्यत्वाधीननामसमन्वयस्य तत्साधकेक्षणीयत्वादिलिङ्गाधीन-तया तस्य चाऽऽत्मशब्दादीनां नामाधीनतयाऽन्योन्याधीनत्वा-च्च । द्युभ्वाद्यायतनत्वादिसमन्वयस्य हेतूकृतात्मनामसमन्वया-धीनत्वाच्च । एतेन लिङ्गैर्नामसमन्वय उक्ते तेषु वा तज्जाती-येष्वन्येषु वा लिङ्गेषु ब्रह्मपरत्वासिद्धिशङ्कायां तन्निरास इति लिङ्गनामानन्तर्यम् । लिङ्गसमन्वयस्तु लिङ्गान्तराधीनो न नामाधीन इति निरस्तम् । सर्वगतत्वादिलिङ्गानां नामाधीनस-मन्वयत्वात् । किंचान्यत्रैव प्रसिद्धानां प्रबलश्रुतिलिङ्गादिभिर्ब्र-ह्मपरत्वे सति कैमुतिकन्यायेनान्यत्र प्रसिद्धानामुभयत्र प्रसिद्धानां ब्रह्मपरत्वसिद्धिसंभवादितरवैयर्थ्यम् । चतुर्थपादस्य प्राक्पादा-नुपजीवकत्वस्योक्तत्वेन तत्पूर्वपक्षेष्वप्येतन्न्यायोपस्थित्यविघा-तात् । न चाऽऽकाशस्य संभूतत्वादिवत्सर्वलोकगतित्वादिप्रसङ्गो दोषः । बाधाबाधाभ्यां विशेषात् । केचित्तु—उक्तान्यत्रप्रसिद्ध-लक्षणमव्यक्तादिपदातिव्याप्तम् । लोकप्रसिद्धतद्वाक्यगतपरत्वा-दिलिङ्गसाचिव्यप्रतिबद्धब्रह्मतात्पर्यकत्वेन पूर्वपक्ष्यभिमतत्वात् । न च प्राबल्यविशेषणात्तन्निस्तारः । तथाऽपि लोकप्रसिद्धिसाम्य-प्रयुक्तप्रतिबन्धापरिहारात् । शरीरित्वसाहचर्येणान्तर्यामित्वस्येव जायमानत्वसाहचर्येण द्युभ्वाद्यायतनत्वस्याप्यन्यत्रप्रसिद्धतया तत्रातिव्याप्तेश्च । यत्तु समाख्याश्रुतितौल्याभावोऽपि लक्षणे विवक्षितः, स च द्युभ्वाद्यायतनत्वादौ नास्तीति नातिव्याप्ति-

रिति । तन्न । इन्द्रादिशब्देषु 'ब्रह्मेन्द्रमग्निम्' इत्यत्र प्रसिद्धिसंपादिकायाः *'यमिन्द्रमाहुः' इति विष्णुप्रसिद्धिसंपादिकायाश्च श्रुतेरन्तस्तद्धर्माधिकरणे त्वयैवोदाहृतत्वेन तेष्वव्याप्तेः । यत्तु द्युभ्वाद्यायतनत्वस्य यद्यप्यन्यसापेक्षाऽन्यत्रप्रसिद्धिरप्यस्ति तथाऽपि तन्निरपेक्षोभयप्रसिद्धिमादाय तृतीये निवेश इति कल्पनम् । तन्न । 'यस्मिन्द्यौः (अथ० उ० २।२।५) इत्यारभ्य 'स एषोऽन्तरश्चरते बहुधा जायमानः' इति श्रवणेन स्ववाक्यगतजायमानत्वसापेक्षाया अन्यत्रप्रसिद्धेः श्रुत्यन्तरसापेक्षोभयप्रसिद्ध्यपेक्षयाऽन्तरङ्गत्वात्प्रथमपाद एव तन्निरूपणौचित्यात् । अन्यथेन्द्रादिशब्दानामपि तृतीयपादसङ्गत्यापत्तेश्च 'सुषुप्त्युत्क्रान्त्योर्भेदेन' (ब्र० सू० १।३।४२) इति तृतीयपादस्थाद्यधिकरणविषये यत्स्वप्नं पश्यत्यन्यासत इत्यादिवाक्यगते लोकप्रसिद्धिप्रतिबद्धब्रह्मप्रवृत्तिकत्वेन पूर्वपक्ष्यभिमते श्रुतितौल्याभाववति स्वद्रष्टृत्वादावतिव्याप्तेश्च । 'पत्यादिशब्देभ्यः' (ब्र० सू० १।३।४३) इत्यस्य विषये 'स वा एष महानज आत्मा' (बृ० ४।४।२२) इति लोकप्रसिद्धाजशब्दसमभिव्याहारावगतचतुर्मुखप्रसिद्धिप्रतिबद्धब्रह्मप्रवृत्तिके समाख्याश्रुतितौल्याभाववति 'एष नित्यो महिमा ब्राह्मणस्य' इतिवाक्यगते ब्राह्मणशब्दे 'कम्पनात्' (ब्र० सू० १।३।३९) इतिसूत्रविषयी तथाविधे वज्रशब्दे चातिव्याप्तेश्च ।

यत्तु वज्रादिनाम्नां स्वप्नद्रष्टृत्वादिलिङ्गानां च लोकप्रसिद्धिपूर्वपादद्वयन्यायाभ्यामुभयत्रप्रसिद्धानामुभयपरत्वमेव पूर्वपक्ष्यभिमतमिति तत्र नातिव्याप्तिरिति कम्पनादिति सूत्रस्थचन्द्रिकायामुक्तम् । तदपि न सत् । तथा सति वज्रश्रुत्युद्यतत्वाद्यायुधलिङ्गेन कम्पनादिति ब्रह्मलिङ्गान्यथानयनपूर्वकं वज्रादिशब्दा आयुधादिपरा एवेति पूर्वपक्षवर्णनस्यानुपपत्तिप्रसङ्गात् । पूर्वपादोक्तन्यायेनैव वज्रादिशब्दानां भगवत्परत्वसिद्धौ तदधिकरणवैयर्थ्यापत्तेश्च । वज्रादिशब्दानामाकाशादिशब्दानामिव

*यमिन्द्रमाहुरिति । यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः । यो देवानां देवतमस्तमोजाः तस्मै त्वा तेभ्यस्त्वा ॥ इति यजुःश्रुतिः ।

लौकिकप्रसिद्धिसत्त्वेऽपि भगवत्परत्वसिद्धेस्तत्साधकलिङ्गानां लोकप्रसिद्ध्यपेक्षया बलवत्त्वाभावेऽनुपपत्तेः । बलवत्त्वे च ब्रह्ममात्रपरत्वस्यापि सिद्धेश्च । अन्यथाऽऽकाशादिशब्दानामप्युभयपरत्वशङ्कानिरासाय पुनर्विचारापत्तेः । तन्मात्रपरत्वस्थापकन्याये तत्परत्वस्थापकपूर्वपादस्य गतार्थत्वाच्च । किंचैवं नामपादन्यायेनाऽऽदित्यादिनाम्नामपि ब्रह्मणि प्रयोगस्योक्तप्रयोगत्वात्तत्साहित्येन सर्वगतत्वादिलिङ्गानामपि द्वैतीयानां ब्रह्मपरत्वसिद्ध्या तदधिकरणवैयर्थ्यापत्तिः । न च पूर्वं लिङ्गसमन्वयानुक्त्या सर्वपुरुषाभिमुख्यादिरूपादित्यादिप्रसिद्धलिङ्गैस्तत्र सिद्ध्युपजीवनान्न साहचर्येण सर्वगतत्वादेर्ब्रह्मपरत्वसिद्धिरिति वाच्यम् । तदधीनत्वादित्यव्यक्तनयगतगुणसूत्रोक्तन्यायेनान्यश्रुतीनामन्यलिङ्गानां च ब्रह्मणि मुख्यत्वसिद्ध्या लिङ्गविशेषेणाप्यादित्यश्रुत्युपजीवनायोगात् । वक्ष्यमाणसिद्धान्तन्यायाच्छादनेन पूर्वपक्षकरणेन न्यायेनैव तत्सिद्धान्तसिद्ध्या, एतस्य वैयर्थ्याद्वज्रादिशब्दानामपि पूर्वन्यायाच्छादनेनान्यमात्रपरत्वपूर्वपक्षसंभवाच्च । यदि चाऽऽदित्यशब्दस्य पूर्वपादीयाधिकरणविषयवाक्येष्वश्रुतत्वान्निरवकाशादित्यादिलिङ्गानामप्यधिकरणान्तरविषयवाक्येष्वश्रुतत्वाच्च कथंचित्तत्तदधिकरणाविषयत्वाभ्युपगमेनान्यत्रप्रसिद्धता तदा वज्रादिशब्देष्वपि तुल्यमिति तत्रातिव्याप्तिर्वज्रलेपायिता ।

अथ वज्रादिशब्दाः प्रसिद्धा एव । न चैवं तृतीयपादासंगतिः । यथा 'यदष्टाकपालो भवति' इत्यादेरवान्तरसंगतिलोभादर्थवादस्थस्वस्थानातिक्रमस्तथा वज्रादिपदानामप्यवान्तरसंगतिवशात्स्वस्थानातिक्रम इति मतं तदाऽनुगतानतिप्रसक्तत्त्वत्पादोपाधिनिर्वचनप्रयासवैफल्यात् । एतेन हेतुमुखलक्षणरूपेतत्स्वरूपमुखलक्षणद्वयमपि निरस्तम् । द्युभ्वाद्यायतनत्वस्वप्रद्रष्टृत्वबोधकलिङ्गयोर्वज्रब्राह्मणनामधेययोश्च तार्तीययोरतिव्याप्तेः । तत्र त्वया सर्वगतत्वबोधकशब्दवदिन्द्रादिनामवच्च प्रागुक्तविधयाऽऽपाततोऽस्य साहचर्येण स्वत एवान्यमात्रोपस्थापकत्वसत्त्वाभ्युपगमात् । द्वितीयलक्षणस्य [illegible] ।

उभयत्रप्रसिद्धत्वं यदि लोकतस्तदा द्युभ्वाद्यायतनत्वे ज्योतिरादिनाम्नि चाव्याप्तिः। श्रुत्यादिना चेत् । आनन्दमयेन्द्राव्यक्तादिशब्देष्वपि पूर्वोत्तरपक्षोदाहृतश्रुत्यवगतोभयोपस्थापकताकेष्वतिव्याप्तिः । आकाशज्योतिरादिपदानामुभयत्रप्रसिद्धत्वाङ्गीकारे प्रथमचतुर्थपादीयत्वानुपपत्तेः । तदनङ्गीकारे तार्तीयत्वानुपपत्तेः । एवं द्वितीयतृतीयपादीयेऽक्षरशब्देऽप्यव्याप्तिर्द्रष्टव्या । चन्द्रिकोक्तहेतुस्वरूपफलमुखलक्षणत्रयमपि न युक्तम् । इन्द्रादिशब्दे द्युभ्वाद्यायतनत्ववच्छ्रुत्यवगतसाधारण्येनाऽऽकाशशब्दवत्प्रयोगसाधारण्यवति चातिव्याप्तेः। चतुर्थपादीयज्योतिःशब्दे चातिव्याप्तेश्च । ‘ज्योतिर्दर्शनात्’ (ब्र०सू०१।३ ४०) इत्यत्र ज्योतिःशब्दस्य विष्णुपरत्वस्थापनेन तस्येहाऽऽक्षेपेण विष्णौ प्रयोगस्य पूर्वपक्ष्यभिमतत्वात्। आकाशशब्दे त्वया तथात्वस्य स्वीकारात्। यद्यपि वसन्तादिवाक्ये ब्रह्मलिङ्गाभावेन बाधकाभावात्कर्मक्रमकोपाधिप्रसङ्गरूपप्रबलबाधकसद्भावेन चान्यत्रैव प्रसिद्धता तथाऽपि प्रयोगसाधारण्यप्रयुक्तसाधारण्यविघातेनाव्याप्तिर्दुर्वारा। अन्यथा ‘आकाशो ह वै नाम नामरूपयोर्निर्वहिता’ (छा० ८।१४।१) इतिवाक्यस्थाकाशशब्देऽव्याप्तेः । वज्रब्राह्मणस्वप्नद्रष्टृत्वादिशब्देष्वव्याप्तेश्च । अत एव स्वरूपमुखं फलमुखमपि लक्षणद्वयं प्रत्युक्तम् । इन्द्रादिशब्दानामपि श्रुतिसाधारण्यप्रयोगसाधारण्याभ्यामुभयोपस्थापकत्वात् । अत एवान्योपस्थितिमात्रप्रतिबद्धसमन्वयकत्वाच्च तत्रातिव्याप्तेः । अन्यथाऽऽकाशशब्दस्यापि तदभावप्रसङ्गात् । चतुर्थपादीये ज्योतिःशब्देऽपि विष्णूपस्थापकत्वसंभवेनातिव्याप्त्यापत्तेश्च । वज्रादिशब्दानामायुधविशेषमात्रोपस्थापकत्वेन तत्राव्याप्तेश्च । चतुर्थपादीयोपाधेरप्यन्यत्रैव प्रसिद्धत्वं यथाश्रुतमिन्द्रादिशब्देष्वतिव्याप्तम्। श्रुत्यादिभिरन्यत्रप्रसिद्धत्वं तच्चेन्द्रादित्यश्रुतिसंपादितान्यत्रप्रसिद्धिके सर्वगतत्वादावतिव्याप्तम् । ‘ब्रह्मेन्द्रमग्निम्’ इतिश्रुतिसाधितान्निप्रसिद्धिकेन्द्रशब्दे ‘सर्वाणि ह वा इमानि भूतानि’ (छा० १।९।१) इति सर्वभूतोपादनत्वावगमिताकाशप्रसिद्धिकाकाशशब्दे प्रथमपादीयेऽतिव्याप्तम् । श्रुत्यादेः

प्राबल्येन विशेषणेऽपि ब्रह्मासंभववद्वृत्तिक्रमबलद्वित्वादिसंपादितान्यत्रप्रसिद्धिके गुहाप्रविष्टत्वादिलिङ्गकेऽतिव्याप्तम्। चतुर्थपादीय आकाशपदेऽव्याप्तम्। प्रथमतृतीयपादे तस्मिन्नतिव्याप्तं च। चन्द्रिकोक्तहेतुस्वरूपफलमुखलक्षणानि च न युक्तानि। वसन्तवाक्यगतज्योतिःशब्दे कर्मणि लोकप्रसिद्ध्यभावेनाव्याप्तेः। 'आत्मन आकाशः संभूतः' (तै० २।१) इति वाक्यगताकाशशब्द आकाशविशिष्टपरमात्मपरेऽव्याप्तेश्च। न च तस्यापि विशेषणतयाऽऽकाशवाचित्वमस्तीति वाच्यम्। तथा सति 'तमिन्द्र उवाच ऋषे प्रियं वै मे धामोपागा वरं ते ददामीति। सहोवाच त्वामेव जानीयामिति। तमिन्द्र उवाच ब्राह्मणो वा अहमस्मि ऋषे' इति श्रुतिगतस्येन्द्रशब्दस्यान्तर्यामिपरत्वेऽपीन्द्रपरत्वस्याप्यस्तीति तत्रातिव्याप्तेः। किं बहुना वैदिकशब्दानां सर्वेषां परममुख्यया वृत्त्या भगवत्परत्वेऽप्यपरममुख्यवृत्त्याऽन्यपरत्वमप्यस्तीति पूर्वपादीयेषु सर्वेष्वतिव्याप्तेश्च हेतुमुखस्य दुष्टत्वात्। इन्द्राकाशप्राणवज्रब्राह्मणादिशब्दानामप्यन्यमात्रोपस्थापकतयाऽतिव्याप्तेः स्वरूपमुखस्यापि दुष्टत्वात्। अत्यन्तमित्यस्यासर्वदेत्यर्थकत्वे सर्वदान्यमात्रोपस्थापकत्वस्य सिद्धान्तन्यायप्रतिसंधानकालीनविष्णूपस्थापकेष्वव्यक्तादिशब्देष्वप्यभावात्। अत एव सिद्धान्तन्यायानिरस्यत्वस्यापि तदर्थत्वासंभवात्फलमुखलक्षणस्यापीन्द्रप्राणाकाशादिशब्देषु प्रथमपादीयेषु वज्रादिशब्देषु द्वितीयपादीयेषु चातिव्याप्तेः। पूर्वपक्षन्यायैर्ब्रह्मपरत्वस्याशक्यकल्पनत्वस्य सर्वत्रभावात्सिद्धान्तन्यायेन तथात्वस्य क्वाप्यभावाच्च। ब्रह्मतात्पर्यकत्वस्याशक्यकल्पनत्वशङ्कया प्रतिबद्धत्वस्य दुर्निरूपत्वात्। अन्योपस्थितिब्रह्मानुपस्थितिभ्यां प्रतिबन्धस्य तेषु सुलभत्वात्। एतेन ब्रह्मपरत्वे बहुविप्लवापत्तिरूपतर्कानुगृहीतत्वं बलवत्त्वमित्यपि निरस्तम्।

ननु सिद्धान्तिनाऽप्यवश्यस्वीकार्यान्यपरताकतया ब्रह्मपरत्वस्याशक्यकल्पनत्वशङ्कया प्रतिबध्यसमन्वयत्वोक्तौ न दोष इति चेत्। तर्हि तावतैवोपपत्तौ शेषवैयर्थ्यात्। विशेषस्य लक्षणान्तरत्वेऽन्यत्रप्रसिद्धेष्वतिव्याप्तेरिति दिक्। अन्यत्रप्रसिद्धता-

विशेषे नामरूपावान्तरभेदमुपादाय पादभेदवर्णनमप्यसंगतम् । त्वदभिमतनामलिङ्गविभागस्यासंगतत्वात् । तथा हि—न ताव-द्धर्मिवाचित्वं नामत्वं धर्मवाचित्वं लिङ्गत्वमिति युक्तम् । धर्मवाचिनामन्तर्याम्यादिपदानां नामत्वस्य धर्मवाचिनामानन्दा-दिपदानां लिङ्गत्वस्य चाऽऽपत्तेः । नापि रूढत्वयौगिकत्वाभ्यां नामलिङ्गभेदः । ब्रह्मणि महायोगविद्वद्रूढयोरङ्गीकारात् । अत एव रूढियोगयुक्तानि नामानि केवलयौगिकानि लिङ्गानीति निरस्तम् ।

नन्वापाततो रूढान्येव नामानि तद्विपरीतानि लिङ्गानि ब्रह्मणि सर्वशब्दानां योगवृत्त्यङ्गीकारेणासंभववारणायाऽऽपातत इति, वैश्वानरपदस्यानुव्याख्याने लिङ्गत्वोक्तेस्तद्वारणायैवकार इति चेत् । न । इन्द्रादिशब्दानां केवलनामतानापत्तेः । तद्विपरीता-नीत्यत्राप्यापाततो यौगिका योगरूढा इति विवक्षितं न वा । अन्त्ये वाक्यप्रकरणादेरपि लिङ्गतापत्तिः । आद्ये 'ह्रीश्च ते' इत्यादिवाक्योपात्तलिङ्गस्य लिङ्गतानापत्तिः । एतेनाऽऽपाततो रूढानि तानि नामानि यान्यापाततो यौगिकानि तानि लिङ्गा-नीत्यपि निरस्तम् ।

अथ मतं यान्यापाततो रूढिरहितानि तानि 'अन्तर्यामि' इत्यादीन्येकप्रातिपदिकमात्राणि वा । 'सर्वेषु भूतेष्वेतम्' 'यस्मिन्द्यौः' इत्याद्यनेकपदसमभिव्याहाररूपाणि धर्मद्वारा धर्म्युपस्थापकानि तानि लिङ्गानि । यानि तु तद्विपरीतान्यापा-ततो रूढानि योगरूढानि वा तानि नामानि । अत एव पूर्वपक्ष-दशायां देवतासु योगरूढियुक्तानामिन्द्रादिपदानां नामता । अत एव 'ह्रीश्च ते' इत्यादिवाक्योपात्तस्य लिङ्गत्वम् । प्रकरणादौ च नातिव्याप्तिः । तस्य धर्मद्वारा धर्म्युपस्थापकत्वाभावादिति । तदपि मन्दम् । रूढिरहितत्वे सति धर्मद्वारा धर्म्युपस्थापकत्वस्य विशिष्टलिङ्गलक्षणत्वे विष्णुरूढिमदनन्तशब्दादावव्याप्तेः । तल्लि-ङ्गत्वस्य त्वदीयभाष्यटीकादौ स्पष्टत्वात् । उद्भिन्नाम्न्यतिव्याप्तेश्च । वाक्यप्रकरणयोरपि यत्किंचिद्धर्मद्वारा धर्म्युपस्थापकयोरतिव्या-प्त्यनपायाच्च । न च साक्षाद्व्याप्यधर्मोपस्थितिद्वारा व्यापकधर्मा-

वच्छिन्नधीजनकत्वं विवक्षितमिति नातिव्याप्तिः । तयोः साक्षाद्व्याप्यधर्मोपस्थापकत्वाभावस्य 'शब्दादेव प्रमितः' (ब्र० सू० १।३।२४) इत्यत्र स्फुटत्वादिति वाच्यम् । रूढिराहितानीत्यस्य वैयर्थ्यापत्तेः । न च लक्षणद्वये तात्पर्यं कल्प्यम् । पूर्वलक्षणस्योक्तदूषणग्रस्तत्वात् । द्वितीयस्य त्रिविधपरिच्छेदराहित्यलक्षणव्याप्यधर्मस्य विष्णुत्वलक्षणव्याप्यधर्मस्य च युगपदुपस्थापकेऽनन्तपदेऽतिव्याप्तेः । योगरूढस्यानन्तपदस्य कथंचिद्व्याप्यधर्मद्वारा तदुपस्थापकत्वे चेन्द्रादिशब्देऽतिव्याप्तेः । एवं तद्विपरीतान्यापाततो रूढानि योगरूढानि वा नामानीत्यत्रापि धर्मद्वारा धर्म्युपस्थापकत्वराहितत्वमात्रस्य लक्षणत्वे वाक्यप्रकरणादावतिव्याप्तेः । साक्षाद्धर्म्युपस्थापकत्वविवक्षायां चाऽऽन्तर्यामिलिङ्गेऽतिव्याप्तेः । आपाततो रूढत्वस्यापि लक्षणघटकत्वेऽनन्तादिलिङ्गेऽतिव्याप्तेः । गौणेषु श्येनादिषु कर्मनामसु यौगिकेषूद्भिदादिष्वव्याप्तेश्च । तेषामलक्ष्यत्वे ज्योतिर्गौरायुरित्यादिकर्मनामस्वतिव्याप्तेः । तेषामपि समन्वयस्य चतुर्थपादे त्वदिष्टत्वेनालक्ष्यत्वोक्त्ययोगाच्च । अस्तु वा यथाकथंचिन्नामालिङ्गभेदः । तथाऽपि न तेन पादव्यवस्था शक्या । प्रथमे पाद आनन्दमयाधिकरणे लिङ्गविचारादिति तत्त्वप्रदीपोक्तरीत्याऽऽनन्दमयत्वलिङ्गसमन्वयस्य 'अन्तस्तद्धर्मोपदेशात्' (ब्र० सू० १।१।२०) इत्यत्रान्तःस्थत्वलिङ्गसमन्वयस्य द्वितीये वैश्वानरनामसमन्वयस्य च विरोधात् । न चाऽऽनन्दमयत्वान्तःस्थत्वलिङ्गसमन्वयस्याऽऽनन्देन्द्रादिनामसमन्वयफलकतया प्रथमे पादे संगतिः, वैश्वानरनामसमन्वयस्य पाचकत्वादिलिङ्गसमन्वयफलकतया च द्वितीये संगतिरिति वाच्यम् । तथा सति सर्वगतत्वलिङ्गसमन्वयस्याऽऽदित्यादिना[म]समन्वयफलकतया प्रथमपादीयत्वापत्तेः । 'अन्तः प्रविष्टं कर्तारमेतम्' (तै० आ० ३ । ११) इत्येकवाक्यतापन्नेन्द्रादिनामसमन्वयस्यापि तत्प्रकरणगतलोकप्रसिद्धिराहित्यलिङ्गसमन्वयफलकत्वसंभवेन द्वितीयपादे निवेशापत्तेः । एवं त्वदुक्तपादक्रमोऽप्यनुपपन्नः । महातात्पर्ये ... प्रथमे पाद ... उभयत्रप्रसिद्धानां मुख्यभङ्गन्यायेनातिप्रयत्नसाध्यस्य प्राथम्य

प्राथम्यं स्यात् । अथ चतुर्थपादीयसमन्वयस्य 'महासमन्वये तस्मिन्नाधिकारोऽखिलस्य हि' इत्यनुव्याख्यानोक्तरीत्याऽसार्वाधिकारिकत्वात्पादत्रयोक्तश्रुतिलिङ्गादिप्रयुक्तान्यपरत्वाशङ्काया-स्तदानन्तर्यनियमात्तत्तच्छब्दप्रवृत्तिनिमित्तगुणासिद्धिमात्रफलकस्य कारणविषयकत्वाच्चान्त्यता, इतरयोस्तु महामल्लभङ्गन्यायेनान्यमात्रप्रसिद्धस्य प्राथम्यमिति चेत् । न । अन्यत्रैव प्रसिद्धानामन्त्यतायामसार्वाधिकारिकत्वस्याप्रयोजकत्वात् । गृहस्थमात्राधिकारिकयागनिरूपणानन्तरं सर्वाधिकारिकप्राङ्मुखत्वादेनिरूपणस्य षष्ठे दर्शनाच्च । किंच महासमन्वयत्वादसर्वाधिकारकत्वम्, तत्र यदि महत्त्वमितराभ्यर्हितत्वं तदा प्रमेयात्प्राक् प्रमाणनिरूपणस्येव प्राथम्यं दुर्वारम् । यदि चातिप्रबलन्यायसाध्यत्वेन तदा महामल्लभङ्गन्यायेन प्राथम्यं दुर्धरम् । नापि पादत्रयोक्तश्रुत्याद्युपजीव्यत्वेनान्त्यता । अदृश्यत्वादिपदानामेवावरत्वादिलिङ्गबलेनान्यपरत्वशङ्कायाः प्रथमं कर्तुं शक्यत्वात् । न च श्रुतिलिङ्गादिस्वरूपाज्ञानात्प्राक् तदनिरूपणं तर्हि 'शब्दादेव प्रमितः' (ब्र० सू० १ । ३ । २४) इत्यत्र निरूप्यमाणश्रुतिलिङ्गादिस्वरूपस्य ततः प्रागज्ञानेन श्रुतिलिङ्गादिभिरिन्द्रप्राणाकाशादिशब्दसमन्वयासिद्धिप्रसङ्गात् । कारणत्वसिद्धिफलकत्वाभावस्त्वसिद्धः । 'कारणत्वेन चाऽऽकाशादिषु' (ब्र० सू० १ । ४ । १४) इत्यत्रावान्तरकारणत्वनिरूपणात् । किंच नाम्नां लिङ्गानां चान्यत्रप्रसिद्धत्वाविशेषे कथं पादभेदः । अवान्तरभेदस्योभयत्रप्रसिद्धावापि साम्यात् । पादचतुष्टनियमत्यागश्च । अन्यत्रैवेत्यत्र विनिगमकानुपलम्भात् ।

यत्तु प्राधान्यान्नाम्नामनन्तरं लिङ्गानां च समन्वये बुद्धिस्थत्वसंपादनाय न प्रथममुभयोरेकीकरणमिति । तदयुक्तम् । नामसमन्वयहेतुत्वेन लिङ्गानामपि बुद्धिस्थत्वेन प्राधान्यबुद्धिस्थत्वयोरविशेषात् ।

यदप्यापातसिद्धनामभेदाश्रयणेन प्रथमं पादभेदः, ततस्तत्त्यागेन महायोगविद्वद्रूढिभ्यामेकीकरणेन तदभेद इति कल्पनम् । तदपि न त्वया नामत्वलिङ्गत्वान्यत्रप्रसिद्धयादीनां

सर्वेषामापातप्रतिपन्नत्वघटितत्वं वदता तृतीयचतुर्थयोरापातप्र-
तीतित्यागायोगेन तेषामपि भिन्नपादनिवेशस्यावश्यंभावादि-
त्यास्तां तावदिति वदन्ति।

स एव प्रपञ्च आरभ्यते—आनन्दमयोऽभ्यासादिति। अत्र 'ब्रह्मविदाप्नोति परम्' (तै० २।१) इति तैत्तिरीयश्रुतेः स्पष्टब्रह्मलिङ्गाया ज्ञेये ब्रह्मणि समन्वयप्रतिपादनाच्छास्त्राध्यायपादसंगतिः। पूर्वाधिकरणविषयसद्विद्यायामीक्षणश्रुत्या प्रायपाठस्य बाधो युक्तः। इह त्वन्यशेषावयवपाठाद्ब्रह्मशब्दमुख्यार्थस्य ब्रह्मणोऽन्यशेषत्वेनैव प्रतिपाद्यता, न स्वप्राधान्येनेति प्रत्यवस्थानादनन्तरसंगतिः। तत्र प्रथमान्तानन्दमयपदोपलक्षितम् 'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमयः' (तै० २।५) इत्युपक्रम्याऽऽम्नातम् 'ब्रह्म पुच्छं प्रतिष्ठा' (तै०२।५) इत्यन्तं वाक्यजातं विषयः। तत्किमन्यशेषतया ब्रह्म प्रतिपादयत्युत स्वप्राधान्येनेति संशयः। 'असन्नेव स भवति' (तै० २।६) इत्यादिश्लोकस्थाभ्यस्यमानब्रह्मण आनन्दमयविषयत्वपुच्छविषयत्वानिर्णयश्च तद्बीजम्। न च तस्याप्यानन्दमयविषयत्वं प्रायपाठान्निर्णीतमेवेति वाच्यम्। मनोमयपर्यायेऽतद्विषयस्यापि 'यतो वाचो निवर्तन्ते' (तै० २।४) इत्यादिश्लोकस्योदाहरणेन प्रायपाठान्निगमनश्लोकस्याऽऽनन्दमयविषयत्वासिद्धेः कथंचित्तद्विषयत्वं च न प्राधान्यनिर्वाहकम्। फलं च पूर्वपक्ष आनन्दमयावयवत्वेन ब्रह्मोपास्तिः, सिद्धान्ते च ज्ञेयब्रह्मप्रमितिः। तत्र पूर्वपक्षः—आनन्दमयपदोदितं मुख्यहमित्युपलभ्यमानं भोक्तारं जीवं प्रति शेषत्वेनैव ब्रह्म प्रतिपाद्यते, न प्राधान्येन। पूर्वपूर्वपर्यायेषु पुच्छतया निर्दिष्टानामन्यशेषत्वदर्शनात्। न च 'ब्रह्मविदाप्नोति परम्' (तै० २।१) इति ब्रह्मज्ञानस्य फलवत्त्वश्रवणात्तस्य चात्र ब्रह्मपदेन प्रत्यभिज्ञानाद्ब्रह्मणः स्वप्रधानत्वमेवोचितमिति वाच्यम्। विदेरुपास्तिपरताया अपि बहुशो दर्शनेन तत्र ब्रह्मोपासनाया एव फलसंबन्धप्रतिपादनात्। भवति च ब्रह्मपुच्छकत्वेनाऽऽनन्दमयोपासनाया अपि ब्रह्मोपासनात्वम्। न च 'परमाप्नोति'

इति परब्रह्मप्राप्तेः फलत्वकीर्तनादन्यशेषत्वेन ब्रह्मोपासनायाश्च 'तमेव विदित्वाऽति मृत्युमेति, नान्यः पन्था विद्यतेऽयनाय' ( श्वे० ३।८ ) इति श्रुतिविरोधात्फलकत्वासंभवेन तत्र ज्ञानमेव विदिना विवक्षणीयमिति वाच्यम्। 'ब्रह्मविदाप्नोति परम्' ( तै० २।१ ) इति संक्षिप्य कथितस्यैवार्थस्य 'तदेषाऽभ्युक्ता। सत्यं ज्ञानमनन्तं ब्रह्म। यो वेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्वान्कामान्सह' (तै०२ १) इति विवृतत्वेन सर्वकामावाप्तेस्तत्फलत्वलाभेऽपि परब्रह्मप्राप्तेः फलत्वालाभात्। सत्यत्वज्ञानत्वानन्तत्वजगत्कारणत्वादिगुणकीर्तनं चाऽऽनन्दमयपुच्छे तादृशगुणविशिष्टब्रह्मदृष्टिविधानार्थम्। यथा ह्युद्गीथेऽनन्तत्वसर्वभूतकारणत्वपरोवरीयस्त्वादिगुणविशिष्टब्रह्मदृष्टिविधानायाऽऽकाशशब्दिते ब्रह्मणि तत्कीर्तनम्। न च 'यो वेद निहितं गुहायाम्' ( तै० २।१ ) इति ब्रह्मणो गुहानिहितत्वं प्रतिज्ञातम्, तस्य चाऽऽनन्दमय एव पर्यवसानं दृश्यते न पुच्छतया निर्दिष्टे ब्रह्मणीत्यानन्दमयस्यैवोपक्रमावगतं सर्वकामावाप्तिफलकवेदनाविषयत्वजगत्कारणत्वादि सिध्यतीति तस्यैव परब्रह्मत्वे स्थिते तस्य ब्रह्मपुच्छकत्वेनोपासनीयत्वेऽपि ब्रह्मणः स्वप्राधान्यमनपवादम्। एकस्यैव पुच्छपुच्छवद्भावानुपपत्तिरिति तु न, अन्नमयादावपि स्वानतिरिक्तैरेव शिरःपक्षादिभिरुपास्यत्वावगमादिति वाच्यम्। आनन्दमयस्य विज्ञानमयादान्तरत्वे कथिते तत्पुच्छत्वेन निरूपितस्य ब्रह्मणोऽपि विज्ञानमयादान्तरत्वलाभात्। नहि पुच्छवदत्राऽस्ति न पुच्छमिति नियमो वक्तुं शक्यते। अग्रिमः 'सोऽकामयत' ( तै० २।६ ) इत्यादिरपि पुच्छब्रह्मविषय एव। तस्योपक्रम आत्मशब्देनापि निर्देशात्। स इति पुंलिङ्गेन निर्देशोपपत्तेः। 'तस्यैष एव शारीर आत्मा। यः पूर्वस्य' ( तै० २।३ ) इत्यानन्दमयपर्यायेऽप्यात्मशब्देन ब्रह्मनिर्देशाच्च। तस्मान्नात्र स्वप्राधान्येन ब्रह्म प्रतिपाद्यम्। एवं ब्रह्मणः स्वप्रधानत्वे पुच्छपदमनर्थकम्। प्रतिष्ठापदेनैवाऽऽधारलाभात्। न च कान्तिमान्मुखचन्द्र इत्यादौ स्वशब्देनैव कान्तिमत्त्वलाभेऽपि मुखे गौणं चन्द्रपदमपि प्रयुज्यते। तथा प्रकृते

प्रतिष्ठापदेनाऽऽधारत्वे लब्धेऽपि तल्लम्भकः पुच्छशब्दोऽपि स्यादिति वाच्यम् । यतस्तत्र चन्द्रस्य यादृशी यावती च कान्तिस्तादृशी तावती वा सा मुखेऽस्तीति मुखस्तुत्यर्थं चन्द्रपदमर्थवत् । न च कान्तिमत्पदमात्रेण तादृशार्थलाभः संभवति । तस्य मानान्तरविषयविद्यमानतावन्मात्रकान्तिविषयत्वेन चारितार्थ्यात् । अतश्चन्द्रतुल्यकान्तिमत्त्वलाभाय चन्द्रपदोपादानम् । ब्रह्मणि तु प्रतिष्ठात्वसंकोचकमानान्तराभावात्तस्य निरपेक्षसर्वप्रतिष्ठात्वबोधकश्रुत्यन्तराच्च निरतिशयमेवाऽऽधारत्वं प्रतिष्ठापदेन लभ्यत इति न पुच्छपदमर्थवत् । प्रत्युत पुच्छतुल्याधारत्वविवक्षायां पुच्छस्याऽऽधारत्वं भूतलास्तीर्णतृणराशौ संचरतः पुरुषान्प्रति तृणराशेरिवाऽऽधारान्तरसापेक्षं सातिशयमिति ब्रह्मणस्तथाविधमाधारत्वं लक्षयत्पुच्छपदमनिष्टार्थकमेव स्यात् । तस्मात्पक्षिरूपेणोपासनीयमानन्दमयं प्रति परब्रह्मणः कल्पनीयं पुच्छत्वं पुच्छपदेनोच्यते । प्रतिष्ठापदं च कल्पनानिमित्तमाधारत्वलक्षणसारूप्यं बोधयदर्थवद्भवति । पक्षिणो हि पुच्छभागमाधारीकृत्य निषीदन्तीति पक्षिणां पुच्छं प्रतिष्ठा । अत एव तैत्तिरीयोपनिषदि श्रूयते—'तस्मात्सर्वाणि वयांसि पुच्छेन प्रतितिष्ठन्ति । पुच्छेनैव प्रतिष्ठायोत्पतन्ति । प्रतिष्ठा हि पुच्छम्[1]' इति । ब्रह्मानन्दोऽपि 'एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' (बृ० ४ । ३ । ३२) इति श्रुत्यनुसारेण कृत्स्नस्य लौकिकानन्दशीकरजातस्य समुद्रस्थानीय इति प्रियमोदाद्यवयवयुक्तस्याऽऽनन्दमयस्य प्रतिष्ठा । अतः सारूप्याद्ब्रह्मणः पुच्छत्वकल्पना युक्ता । अन्यत्रापि च तादृशकल्पनानिमित्तं सारूप्यवर्णनं दृश्यते । यथा— 'तस्य भूरिति शिरः, एकं हि शिरः, एकमेतदक्षरम्' (बृ० ५ । ५ । ३) इति । अत्र भूरित्यक्षरे प्रजापतिशिरस्त्वकल्पनानिमित्तमेकत्वं सारूप्यमुक्तम् । न च पुच्छवाक्योपात्ते ब्रह्मणि निगमनश्लोकस्थब्रह्मशब्दाभ्यासरूपतात्पर्यलिङ्गदर्शनात्तस्यैव स्वप्रधानता युक्तेति वाच्यम् । पूर्वपूर्वनिगमनश्लोकानामन्न-



१ हीत्येतदानन्दाश्रमस्थपुस्तके नास्ति ।

मयादिप्रधानविषयतादर्शनेनात्रत्यनिगमनश्लोकस्याप्यानन्दमय-विषयताया एव युक्तत्वात् । युक्तो हि जीवेऽपि ब्रह्मशब्दो बृंहणादिगुणयोगात् । अन्यथा पुच्छादिपदवैयर्थ्यस्योक्तत्वात् । तस्मादानन्दमयो जीव एव स्वप्राधान्येनोपास्यतया विवक्षित इति । एवं पूर्वपक्षे प्राप्तेऽभिधीयते—आनन्दमयोऽभ्यासादिति । अत्राऽऽनन्दमयपदं तदुपलक्षितवाक्यविशेषपरम् । यथा 'प्रकरणं तु पौर्णमास्यां रूपावचनात्' (जै० सू० २ । २ । ३) इति सूत्रे पौर्णमासीपदस्य तद्धटितविद्वद्वाक्यपरत्ववत् । स्वप्रधानब्रह्मपरमिति च साध्यमध्याहार्यम् । अभ्यासरूपशब्दधर्मस्य तात्पर्यलिङ्गस्य हेतूकरणानुरोधात् । तादृशतात्पर्यलिङ्गं च वाक्यरूपपक्षे स्वप्रधानब्रह्मपरत्वसाधन एव स्वरसम् । आनन्दमयस्य ब्रह्मत्वसाधनपरतया सूत्रव्याख्यातॄणां परेषां मते चाभ्यासादिति हेतोः शब्दवृत्तेः पक्षावृत्तितया स्वारस्याभावात् । जैवानन्दविलक्षणजगत्प्राणनादिहेतुत्वस्यापि ब्रह्मलिङ्गत्वेन 'आकाशस्तल्लिङ्गात्' (ब्र० सू० १ । १ । २२) इतिवत् 'आनन्दमयस्तल्लिङ्गात्' इति निर्देशेनैव तत्साधनोपपत्तेः । एवं चाभ्यासरूपतात्पर्यलिङ्गस्य हेतूकरणस्वारस्यात्प्राधान्येन तत्परत्वरूपसाध्य एव तात्पर्यावगतौ तस्याऽऽनन्दमयेऽनन्वयादानन्दमयपदेन तदुपलक्षितब्रह्मपुच्छेति वाक्यविशेषलक्षणायामपि न क्षतिः । तात्पर्याधीनत्वाच्छब्दवृत्तेः । आनन्दमयस्य ब्रह्मत्वं साधयद्भिः परैरपि 'आनन्दमयोऽभ्यासात्' (ब्र० सू० १।१। १२) इति सूत्र आनन्दमयपदस्य तदर्थत्वविशिष्टे तत्तात्पर्यविषयत्वविशिष्टे वा धर्मिणि लक्षणाऽवश्यं वाच्यैव । अन्यथा प्रचुरानन्दस्य पक्षत्वे नायमानन्दमयो विष्णुः किंतु प्रागुक्तप्रकृत्यादय एव, विकाराभिधायकमयट्प्रयोगादिति 'विकारशब्दान्नेति चेन्न०' (ब्र० सू० १।१।१३) इति शङ्काया अनुत्थानप्रसङ्गात् । आनन्दविकारस्य तथात्वे च बाधासिद्ध्यादिप्रसङ्गात् । तथा चाऽऽनन्दमयपदघटितवाक्यविशेषः स्वप्रधानब्रह्मपरः । अभ्यासात् । अभ्यस्यमानब्रह्मपदघटितवाक्यैकवाक्यतापन्नत्वादिति सूत्रार्थः । परमतेऽप्यानन्दमयो विष्णुरेव । 'अस-

न्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद ' ( तै० २ । ३ ) इत्यानन्दमये ब्रह्मशब्दाभ्यासादिति जयतीर्थाद्युक्तेः । शब्दादिभिष्ठस्य पौनःपुन्येनोच्चारणरूपस्याभ्यासस्य साध्यवैयधिकरण्यपरिहारायाभ्यस्यमानब्रह्मशब्दघटितनिगमनश्लोकविषयत्वरूपार्थेऽभ्यासादिति हेतुपर्यवसानस्य वक्तव्यतया निगमनत्वतद्विषयत्वादीनां यथाश्रुतानामतिप्रसञ्जकत्वात् । अनेकपदार्थघटितस्य तस्यास्मदीयहेतुतो न लाघवशङ्काऽपि । यद्वाऽऽनन्दमयपदं तत्तात्पर्यविषयपरम् । पूर्वसूत्रादनुषक्तं तत्पदं साध्यसमर्पकम् । वाक्यस्य पदसमुदायरूपत्वात् । तस्य यत्परत्वं तद्घटकपदानामपि तत्परत्वमविरुद्धमित्यानन्दमयपदपरमतात्पर्यविषयस्तादिति प्रतिज्ञायां न सूत्राक्षराननुगुण्यमभ्यासादिति हेतूपपादनमुक्तरीत्योभयोः सममेव । आनन्दमयशब्दार्थस्य जीवस्यैव निगमनश्लोकविषयत्वाद्ब्रह्मशब्दस्यापि जीवपरतासंभवान्न पुच्छं ब्रह्मानन्दमयशब्दघटितवाक्यप्रतिपाद्यमिति शङ्का च ' नेतरोऽनुपपत्तेः ' ( ब्र० सू० १ । १ । १६ ) इति निर्लोडयिष्यते । तथा च निगमनश्लोके ब्रह्मशब्दाभ्यासेन ब्रह्मणः स्वप्रधानत्वावगमात् । तस्यैव च ' ब्रह्म पुच्छं प्रतिष्ठा ' ( तै० २ । ५ ) इत्यत्र प्रत्यभिज्ञानात्पुच्छत्वेन निर्दिष्टस्य ब्रह्मणः स्वप्रधानतया प्रकरणप्रतिपाद्यत्वमप्रत्यूहमित्युक्तरीत्या सूत्रार्थो निराबाध एव । अथैवम् ' ब्रह्म पुच्छमभ्यासात् ' इत्येव वक्तुमुचितत्वेन सूत्रे लाक्षणिकानन्दमयपदप्रयोगो निरभिप्राय इति चेत् । शङ्काविशेषनिराकरणार्थः स इति ब्रूमः । तथा हि— ' ब्रह्म पुच्छं प्रतिष्ठा ' इत्यनेन प्राधान्येन ब्रह्म प्रतिपाद्यते, नाऽऽनन्दमयशेषत्वेन । ' असन्नेव स भवति ' इति मन्त्रेऽभ्यासानुसारेण ब्रह्मणः प्राधान्यावगमात् । इहापि तस्यैव प्रत्यभिज्ञानात्स्वप्रधानमेव ब्रह्म भविष्यतीत्युक्ते प्रायपाठसहकृतोपक्रमस्थपुच्छशब्दस्वारस्यानुसारेण ' असन्नेव स भवति ' इति मन्त्रे ब्रह्मपदमानन्दमयस्य लक्षकमस्तु । ततश्च बाधासिद्ध्यादिकमिति शङ्कायाम्—आनन्दमयपदाभ्यासपदयोराहृत्या ' न निगमनश्लोकप्रतिपाद्यः ' इति साध्याध्याहारेण सूत्रयोजन-

याऽऽनन्दमयो न निगमनश्लोकप्रतिपाद्योऽभ्यासात्, तत्रैव स इति, एनमिति पदेनाऽऽनन्दमयस्य ब्रह्मपदार्थगोचरसदसत्त्वज्ञानाधीनसत्त्वासत्त्वाश्रयतयाऽभ्यासात्। तथा च प्रियादिविशिष्टस्य सुख्यहमिति प्रतीयमानस्याऽऽनन्दमयस्यासत्त्वशङ्कानास्पदतया तन्निवारणाय प्रवृत्तमन्त्रस्य नाऽऽनन्दमयविषयत्वमिति न बाधासिद्ध्यादिः। सूत्राणामावृत्त्याऽनेकार्थत्वमलंकार एव। सारवद्विश्वतोमुखमिति तल्लक्षणानुरोधात्॥ १२॥

ननु 'ब्रह्म पुच्छं प्रतिष्ठा' इति वाक्यस्य स्वप्रधानब्रह्मपरत्वे पुच्छपदस्याभ्यस्यमानब्रह्मशब्दानुरोधेन प्रतिष्ठापदलभ्याधारादिलक्षकत्व आनर्थक्यापत्तिः। प्रतिष्ठापदेनैवाऽऽधारलाभात्। ततश्च 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्' इति न्यायेनाभ्यस्तब्रह्मशब्दादपि पुच्छशब्द एव बलीयानिति तदनुरोधेन तादृशवाक्यस्याऽऽनन्दमयशेषत्वेन ब्रह्मपरत्वमेव युक्तम्। तथा सति पक्षिरूपेणोपासनीयमानन्दमयं प्रति परब्रह्मणः कल्पनीयं पुच्छत्वं पुच्छशब्देनोच्यते। प्रतिष्ठापदं तु कल्पनानिमित्तमाधारत्वलक्षणं सारूप्यं बोधयदर्थवद्भवतीति शङ्कामनूद्य पुच्छपदस्य गतिं वक्ति—

## विकारशब्दान्नेति चेन्न प्राचुर्यात्॥ १३॥

अत्र विकारशब्दोऽवयवपरः। तथा चावयवपरपुच्छशब्दसत्त्वान्न 'ब्रह्म पुच्छं प्रतिष्ठा' इति वाक्यं प्राधान्येन ब्रह्मप्रतिपादकमिति चेत्। न। प्राचुर्यात्, अवयवप्रायवचनात्पुच्छशब्दोपपत्तेरिति तदर्थः। आनन्दमयपर्यायस्यान्नमयादिपर्यायसाम्याय पक्षित्वेन निरूपणीयस्याऽऽनन्दमयस्य शिरआदिष्ववयवेषूक्तेषु पुच्छे चावश्यं निर्देष्टव्ये ब्रह्मण एव पुच्छत्वेन निर्देश इति भावः। ननु पूर्वत्रावयवपरः पुच्छशब्दः, इह त्वाधारपर इति कथमर्थभेदे साम्यमवगम्यत इति चेत्। न। अर्थभेदेऽपि शब्दसाम्यमात्रेण प्रायपाठनिर्वाहस्य दृष्टत्वात्। तथा हि—'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः' इत्यादाविन्द्रियादीनामव्यक्तानां पूर्वपूर्वापेक्षयान्तरत्वेन परत्वम्। 'अव्य-

स्मात्पुरुषः परः ' इत्यत्र पुरुषस्य परत्वम् । ' सा काष्ठा सा परा गतिः ' इति वाक्यशेषानुसारेण परमपुरुषार्थत्वरूपमन्यदेवे-त्यर्थभेदेऽपि सोपानोदाहरणन्यायेन पूर्वस्मात्पूर्वस्मादुत्तरोत्तरस्य परत्वबोधनपूर्वकं सर्वतः परं ब्रह्मेति बोधयितुं प्रवृत्ते तस्मिन्प्रकरणे शब्दसाम्यमात्रेण प्रायपाठस्य निर्वहणीयत्वात् । अन्यान्यप्युदाहरणान्याकरे द्रष्टव्यानि ।

किंच न केवलं तत्र पुच्छपदं पर्यायसाम्याय प्रयुक्तम्, किंतु शङ्काविशेषनिराकरणायापि। तथा हि—'यो वेद निहितं गुहायां परमे व्योमन् ' ( तै० २ । १ ) इति मन्त्रे 'सत्यं ज्ञानमनन्तम्' (तै० २।१ ) इति प्रतिज्ञातमानन्त्यमसंकुचितं वस्तुपरिच्छेदराहित्यगर्भम् । तत्सति परमार्थतो जीवब्रह्मणोः स्वाभाविकभेदे जडवर्गस्य तद्विवर्ततया वस्तुपरिच्छेदासंभवस्य सृष्टिवाक्यादवगमेऽपि जीवस्य तद्विवर्तत्वाभावान्नोपपद्यत इति शङ्कायां तस्योपपादनाय जीवो नातिरिक्तः। येन वस्तुपरिच्छेदः स्यात् । किंत्वविद्योपाधिकं बुद्ध्युपाधिकं वा ब्रह्मैवेति दर्शयितुम् । ब्रह्मण एव जीवरूपेण परमव्योमशब्दितायामव्याकृतायां तादृशहार्दाकाशलक्षणव्योम्नि स्थितायां बुद्धिलक्षणायां वा गुहायां निहितत्वमुक्तम् । तत्रापि ब्रह्मणो गुहानिहितत्वोक्त्या जीवब्रह्मणोः स्वरूपैक्यं कथं निर्धार्यते । उपक्रमे प्राप्यप्राप्तृभावेन निर्दिष्टयोर्जीवब्रह्मणोर्भेदावश्यंभावात्, अशनायाद्यूर्मियुक्तस्य जीवस्य ब्रह्मणा स्वरूपैक्यासंभवाच्चेति शङ्काद्वयं प्रसक्तम् । तत्रोपक्रमे प्राप्तिर्न नगरादेरप्राप्तस्येव ब्रह्मणोऽप्राप्तस्य विवक्षिता । अपि तु कण्ठचामीकरन्यायेन प्राप्तस्यैवाप्राप्तभ्रमापोहेनेति द्योतयितुम् । परमे व्योमन्निति जीवाधारतया गुहायामेव संनिधानमुक्तम् । अशनायापिपासादयश्चोर्मयो न जीवस्य स्वाभाविकाः, अपि त्वन्नमयादिविज्ञानमयान्तकोशोपाधिका इति दर्शयितुं विज्ञानमयान्तान्कोशान्निरूप्य तच्छिरस्येव ' विज्ञानं यज्ञं तनुते ' इति विज्ञानमयशब्दितायां बुद्धावेव कर्तृत्वं निक्षिप्तम् । एवमपि जीवस्य न ब्रह्मता संभवति । अविद्योपाधिकस्य बुद्ध्युपाधिकस्य वोपाधि-

मिथ्यात्वेन मिथ्यात्वाद्ब्रह्मणश्च सत्यत्वादिति शङ्कायां तन्निरासाय नोपाधिविशिष्टस्य ब्रह्मतोच्यते। किंतु ततो निकृ(ष्कृ)ष्टस्य विशेष्यांशस्यैवेति द्योतनायाऽऽनन्दमयाधारत्वेन ब्रह्म प्रतिपाद्यते । उक्ते ह्याधारे ब्रह्मण्युपहिताज्जीवाद्विलक्षणत्वं सिध्यति। एवमप्याधाराधेययोरत्यन्तविलक्षणत्वं लोके दृष्टम् । तथा चाविद्याद्युपाधिकं ब्रह्मैव जीव इत्यनुपपन्नमिति शङ्कायां यथा पक्षिणां शिरःपुच्छाद्यवयवसंघातात्मनां तदन्तर्गतं पुच्छमेवाऽऽधारः ‘ तस्माद्भूयांसि पुच्छेनैव प्रतितिष्ठन्ति । पुच्छेन प्रतिष्ठायोत्पतन्ति। प्रतिष्ठा हि पुच्छम् ’ इति श्रुतेः । एवं जीवस्यापि तदन्तर्गतं ब्रह्मैवाऽऽधार इति समाधिसौकर्यायाऽऽनन्दमयं पक्षित्वेन निरूप्यार्थान्तराधारलक्षकपुच्छपदसमानाधिकरणब्रह्मशब्देन तदुपन्यस्तम् ।

यद्यप्येवम् ‘ पुच्छशब्दान्नेति चेन्न प्रायवचनात् ’ इत्येव सूत्रयितुमुचितं तथाऽपि विवक्षितार्थान्तरलाभाय विकारेत्याद्युक्तिः । तथा हि—नन्वेवं पुच्छशब्देन यद्याधारो लक्ष्यते तर्हि प्रतिष्ठापदवैयर्थ्यमिति शङ्कायां तन्निरासाय पुच्छशब्देन पुच्छवत्पुच्छमिति पुच्छसादृश्यं विवक्षितम् । प्रतिष्ठाशब्देनाऽऽधारो विवक्षितः । यद्वा स्थितिहेतुः प्रतिष्ठापदार्थः । स चाऽऽधारादन्य एव । ‘कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामि ’ ( प्र० ६ । ३ ) इति जीवरूपेण प्रविष्टस्य ब्रह्मणः स्थितिहेतुत्वेनाऽऽम्नातेऽपि प्राणे ब्रह्माधारत्वाभावादाधारभूतानामपि पीठादीनामन्नादिवत्स्थितिहेतुत्वाभावाच्चेति विवक्षितार्थप्राचुर्यान्न तद्वैयर्थ्यमित्यपि सूत्रेण प्रतिपादनीयम् । तदर्थमुक्तरूपविन्यासः । लभ्यते चायमर्थोऽस्मात्सूत्रात् । तथा हि—विकारो विगतकार्योऽनर्थकः शब्दः । विगतः कारः कार्यं यस्य स विकार इति व्युत्पत्तेः । ‘ अकर्तरि च कारके संज्ञायाम् ’ ( पा० सू० ३ । ३ । १९ ) इति कर्मणि घञन्तस्य कारशब्दस्य कार्यवाचित्वात् । तादृशात्प्रतिष्ठाशब्दात् ‘ आनर्थक्यप्रतिहतानाम् ’ इत्युक्तन्यायेन बलवती हेतोरभ्यासो न

ब्रह्मप्राधान्यहेतुरिति शङ्काभागस्य प्राचुर्याद्विवक्षितार्थप्राचुर्या-दिति समाधानभागस्य च ततो लाभात् । पूर्वोक्तशङ्कानि-रासाय यथा पक्षिणां पुच्छं तदन्तर्गतमेवाऽऽधारस्तथाऽऽनन्दम-यस्यापि तदन्तर्गतं ब्रह्माऽऽधार इति ब्रह्मणि पुच्छतुल्याधार-तया वाच्यत्वात् । किंचाऽऽनन्दमयस्य पक्षित्वेन निरूपणी-यस्य पुच्छत्वेन कस्मिंश्चिन्निर्देष्टव्ये ब्रह्मैव निर्दिष्टमिति पूर्वोक्तं न युक्तम् । पुच्छपदप्रयोगेऽपि तेन पुच्छसादृश्यमात्रबो-धनेन पुच्छत्वेन निर्देशाभावादिति शङ्कायां तन्निराकरणाया-र्थान्तरलक्षकतया स्वार्थमनभिदधानस्यापि शब्दस्य स्वार्था-भिधानफलकतादर्शनप्राचुर्यादित्यप्यवश्यं वाच्यम् । लभ्यते चायमर्थोऽस्माद्यथाविन्याससूत्रात् । तथा हि—विकारशब्दा-दवयवात्मकविकारशब्दमात्रस्यैवात्र सद्भावात्, न पुच्छ-त्वेन तन्निर्देशलाभ इति प्रायवचनफलसिद्धिर्नेति चेत् । न । प्राचुर्यादुक्तजातीयदृष्टान्तप्राचुर्यात् । तद्यथा—' उत्तरं बर्हिषः प्रस्तरमासादयति प्रजा वै बर्हिर्यजमानः प्रस्तरो यजमानमेवाय-जमानादुत्तरं करोति, तस्माद्यजमानोऽयजमानादुत्तरः ' इति श्रुतौ प्रस्तरसमानाधिकरणस्य यजमानशब्दस्य प्रस्तरे यज्ञनिर्व-र्तकत्वादियजमानगुणमुखेन वृत्तिस्तत्सिद्धिपेटिकायामुक्ता । अथापि प्रस्तरे मुख्ययजमानत्वबोधने यत्फलम् ' यजमानमेवा-यजमानादुत्तरं करोति ' इत्यादिवाक्यशेषार्थोपपादनं तादर्थ्यमपि दृश्यते । यथा वा ' अग्निर्वै ब्राह्मणः ' इति श्रुतावग्निशब्द-स्याऽऽस्यप्रभवत्वरूपाग्निगुणमुखेन ब्राह्मणे वृत्तिस्तत्र समर्थिता । तत्तुल्यन्यायेन ' अग्निर्वै दीक्षितः ' इत्यत्राप्यग्निशब्दस्य दीक्षिते वृत्तिः किंचिदग्निगुणमुखेन सिध्यति । तथाऽपि दीक्षितेऽग्नितादा-त्म्यबोधनस्य यत्फलम् ' मदन्तीभिर्मार्जयन्ति ' इति विधिशे-षस्य ' न ह्यग्निः शीतेन वायति ' इत्यर्थवादस्योपपादनं ताद-र्थ्यमपि दृश्यते । एवम् ' यजमानो वाऽऽहवनीयो यजमानं वा एतद्विकर्षते यदाहवनीयात्पशुश्रपणं हरन्ति ' इत्येतदादीनि प्रचु-रतराण्युदाहरणानि बोध्यानीति स्थितम् । आनन्दमयस्य ब्रह्मत्वे तु ' ब्रह्म पुच्छम् ' इति न समञ्जसम् । नहि तदेवावय-

ऽवयवश्च, इत्यानन्दमयपदे विकारार्थमयटः प्रायपाठपरि-त्यागः। उपेक्ष्यापि प्रायपाठं कथंचित्प्रचुरानन्दवाचि वाऽऽनन्द-मयपदमिति कल्पनायामपि प्राचुर्यस्य प्रतियोग्यल्पत्वापेक्षत्वा-द्ब्रह्मणि स्तोकदुःखानुवृत्त्यापत्तेस्तत्कयाचिद्वृत्त्या गौणत्वेनैव व्याख्येयम्। एकस्यावयवावयवित्वयोरनुपपत्त्या पुच्छवाक्य-गतब्रह्मशब्दस्य गौणार्थत्वम्। 'सैषाऽऽनन्दस्य मीमांसा भवति। यदेष आकाश आनन्दो न स्यात्' (तै० २।८) इत्यादा-वभ्यस्यमानानन्दप्रातिपदिकेन मयडर्थो लक्षणीय इति बहवो दोषाः। पुच्छवाक्यस्य ब्रह्मप्रधानत्वे त्ववयवप्रायपाठबाध-मात्रम्। पुच्छपदमुख्यार्थत्यागश्चाऽऽनन्दमयस्य ब्रह्मत्वपक्षेऽपि समः। लाङ्गूले शक्तस्य तस्याऽऽनन्दमयावयवेऽपि गौणत्वात्। अपि च प्रतिष्ठेत्युपपदसामर्थ्यात्पुच्छपदेन नाऽऽधारलक्षणा श्रुत्यनुमता नावयवलक्षणाऽपि। तथा चोक्तं वाचस्पतिमिश्रैः—

> प्रायपाठपरित्यागो मुख्यात्रितयलङ्घनम्।
> पूर्वस्मिन्नुत्तरे पक्षे प्रायपाठस्य बाधनम्॥ इति।

त्रितयलङ्घनमित्यस्य ब्रह्मपदानन्दमयपदमित्येतत्त्रितयलङ्घ-नमित्यर्थः। अपि चाऽऽनदमयस्य ब्रह्मत्वे प्रियाद्यवयवत्वेन सविशेषं ब्रह्माभ्युपगन्तव्यं स्यात्। निर्विशेषं तु ब्रह्मवाक्यशेषे श्रूयते। वाङ्मनसयोरगोचरत्वाभिधानात्। 'यतो वाचो निवर्त-न्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्न बिभेति कुत-श्चन' (तै०२।९) इति प्रतिशरीरं च प्रियादिभेदादानन्दमयस्यापि भिन्नत्वम्। ब्रह्म तु न प्रतिशरीरं भिद्यते। 'एको देवः सर्वभूतेषु गूढः' (श्वे० ६।११) इति श्रुतेरतोऽपि नाऽऽनन्दमयो ब्रह्म। अपि च 'सुषुप्तिस्थान एकीभूतः प्रज्ञानघन एवायमान-न्दमयो ह्यानन्दभुक्' इति सुषुप्तिलिङ्गाज्जीव एवाऽऽनन्दमयः, न ब्रह्म। अत एव 'अन्नमयप्राणमयमनोमयविज्ञानमयानन्द-मया मे शुध्यन्ताम्' (याज्ञिकी० ७०६६) इति श्रूयते। शुद्धिर्हि प्रागशुद्धस्य सतोऽवगम्यते। अतो शुध्यन्तामिति शुद्धिप्रार्थन-याऽशुद्धेर्जीवधर्मभूताया द्योतनान्न ब्रह्माऽऽनन्दमयः। अपि तु पञ्चापि कोशा एव।

यत्तु चन्द्रिकायाम्—अन्ये त्वित्यादिनोक्तमस्मन्मतमनूद्य तन्ने-त्युक्त्वोक्तम्—

> एकत्रापि न मुख्यार्थोल्लङ्घनं मामके मते ।
> सर्वत्रापि च मुख्यार्थोल्लङ्घनं तावके मते ॥

तथा हि—आनन्दमयपुच्छयोर्द्वयोरपि पूर्णत्वेन ब्रह्मशब्दस्ता-वन्मुख्यः । पूर्णत्वं हि ब्रह्मशब्दस्य मुख्योऽर्थः । यथा धर्मान्तरे-ष्वदृष्टमपि जातिसमवायादौ धर्मिताधिकदेशवृत्तित्वम्, यथा वा परिच्छिन्नेनाऽऽश्रियमाणसंबन्धिनाऽऽवृतेष्वदृष्टमपि परिच्छि-न्नाज्ञानावृते निरंशचैतन्येऽपरिच्छिन्नत्वम्, यथा वाऽऽनन्दान्तरे-ष्वदृष्टमपि ब्रह्मानन्दस्य पूर्णत्वादिकम्, तथाऽन्यत्रादृष्टमप्यवयव-स्य पूर्णत्वं विचित्रशक्तियुक्तब्रह्मावयवेऽस्तु । उक्तं च 'विश्वत-श्चक्षुः' (श्वे० ३ । ३) 'पूर्णमदः पूर्णमिदम्' (ई० पृ० ३) इत्यादिश्रुत्या 'सर्वतःपाणिपादं तत्' (भ० गी० १३ । १३) इति स्मृत्या चावयवस्य पूर्णत्वम् । तथा कृष्णकेशात्मनः कृष्णस्य 'व्याप्तं त्वयैकेन दिशश्च सर्वाः' (भ० गी० ११ । २०) इति पूर्णतोक्ता । तदुक्तमनुव्याख्याने—

> ब्रह्मताऽवयवेऽपि स्यात्तथाऽवयविनि स्वतः ।
> यथैव कृष्णकेशस्य कृष्णस्य ब्रह्मताऽखिला ॥
> दर्शिता चैव पार्थाय निःसीमाः शक्तयोऽस्य हि ॥ इति ।

युक्तं चानवस्थापरिहाराय क्वचित्संबन्ध्यादेरेव संबन्धत्ववत् । अस्मिन्नेव प्रकरणे 'आनन्दं ब्रह्मणः' इति श्रुतेरानन्दा-त्मकस्यैव ब्रह्मण आनन्दित्ववच्च, विशेषबलाच्छक्तिभावात् 'स शिरः स दक्षिणः पक्षः' इति श्रुत्याऽवयविन एवावयव-त्वम् । तदुक्तं न्यायविवरणे—न चावयवत्वाविरोधः 'नेह नानाऽस्ति किंचन' (का० २ । ४ । ११) इत्यादिश्रुतेरवय-वाद्यभेदादिति । अन्नमयादावपि प्राचुर्यार्थत्वस्य भाष्य एवोक्त-त्वान्न मायपाठपरित्यागः । प्राचुर्यस्य प्रतियोग्यल्पत्वापेक्षत्वेऽपि न प्रतियोगिनः सामानाधिकरण्यनियमः । यतः प्राचुर्यस्य

विजातीयसमानाधिकरणाल्पं यथा तथा ।
सजातीयविभिन्नाधिकरणाल्पं निरूपकम् ॥

दृश्यते हि ब्राह्मणप्रचुरो ग्राम इत्यादौ समानाधिकरणस्य विजातीयशूद्रादेरल्पत्वेनैव प्रचुरप्रकाशः सवितेत्यादौ व्यधिककरणस्य सजातीयस्य नक्षत्रादिप्रकाशस्याल्पत्वेनापि प्राचुर्यम् । प्रकृते च 'सैषाऽऽनन्दस्य' इत्यादिश्रुत्यैव व्यधिकरणस्य सजातीयस्य जीवानन्दस्यैवाल्पत्वमुक्त्वा ब्रह्मानन्दस्य 'यतो वाचः' (तै०२।४)इति महत्त्वमुक्तमिति । तद्विचाररमणीयमित्युपेक्ष्यमेव । तथा हि—पदवाच्यवयवावयविनोर्द्वयोरपि पूर्णत्वेन ब्रह्मशब्दस्तावन्मुख्य इति । नैतद्युक्तम् । विभुत्वे द्वयोरवयवावयविभावानुपपत्तेः । श्रूयते च ब्रह्मणः 'नित्यं विभुं सर्वगतम्' 'आकाशवत्सर्वगतश्च' इत्यादिषु श्रुतिषु विभुत्वम् । न च तुल्यपरिमाणयोर्द्वयोरवयवावयविभावो दृष्टो युक्तो वा । यत्तु धर्मान्तरेष्वदृष्टमित्यादि । तदसत् । भूतलादिगतेऽत्यन्ताभावेऽन्योन्याभावे च धर्मिताधिकदेशवृत्तिताया दृष्टत्वात् । भेदो मन्मतेऽधिकरणात्मक एवेति चेत् । न । जातेरपि तथात्वात् । पदार्थविन्मतानुसरणे च भेदादेरपि तथात्वात् । समवायादेस्तन्मत एव सत्त्वात्तदभिप्रायेणैव दृष्टान्तोक्त्यवगमात् । वस्त्रादिकर्तृकमावरणमवरकापेक्षयाऽऽत्रियमाणस्य न्यूनपरिमाणापेक्षमिति युक्तम् । संपूर्णावरणस्योपरितनसर्वावयवसंयोगसाध्यतयाऽऽवरकस्य न्यूनपरिमाणत्वे तदयोगात् । अविद्यकमावरणं च तदीयविषयताविशेषरूपं नाऽऽव्रियमाणगतं परिच्छिन्नत्वमपेक्ष्यते । अस्ति भातीत्यादिव्यवहाराभावप्रयोजकतामात्रेणैव तत्राऽऽवरणव्यपदेश इति विषमो दृष्टान्त इति बालेनापि सुबोधम् । आनन्ददृष्टान्तोऽपि विषम एव । अन्यत्रादृष्टस्यापि परममहत्परिमाणपरमाणुपरिणामगततारतम्यविश्रा(श्र)न्तस्य तत्र दर्शनमात्रेणान्यत्र वक्तुमशक्यत्वात् । प्रमाणाधीनत्वाद्व्यवस्थायाः । ननूक्तं मयाऽपि प्रमाणमिति चेत्सत्यमुक्तम्, असदुक्तं तत् । तथा हि—पुच्छपदं तावदवयवविशेषे शक्तमित्यावयोः समानम् । तत्र शक्यतावच्छेदकं पुच्छत्वं संस्थानविशेषाभिव्यङ्ग्यो जातिविशेषः । न च व्यापके वस्तुनि संस्थान-

विशेषः संभवदुक्तिकः । न च रूपत्वादिवत्संस्थानाविशेषव्य-ङ्ग्यताञ्शून्यमेव तदिति शक्यं वक्तुम् । लोकावगतपुच्छत्वविव-क्षयोपपत्तौ तादृशादृष्टचरकल्पनायां लोकावगतप्रवृत्तिनिमित्तत्या-गादमुख्यार्थत्वस्यापरिहारात् । अन्यथाऽयं मुख्योऽयममुख्य इति व्यवस्थैव दुर्वचा । त्वदुक्तरीत्या भूरादौ लोकावगतशिर-स्त्वादित्यत्वाकाशत्वादिजातेः कल्पनापत्तेः । तत्रापि 'भूरिति शिरः' ( बृ० ५ । ५ । ३ ) आदित्यो यूपः 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' ( छा० १ । ९ ) इति प्रमाणसौलभ्यात् । 'विश्वतश्चक्षुः' ( तै० सं० ४ । ६ । २ ) इत्यादिकमपि न तत्र प्रमाणम् । विश्वतो विश्वानि चक्षूंषि यस्येति व्युत्पत्त्या प्रमाणान्तरसिद्धाखिलचक्षुष्मत्ताया एव तत्र बोधनात् । एवम् 'सर्वतःपाणिपादं तत्' ( गी० १३ । १३ ) इति स्मृतिरपि न तत्र प्रमाणम् । न च 'विश्वतश्चक्षुः' इत्या-दावुक्तव्युत्पत्तावन्यपदार्थे प्रतीयमानः संबन्ध उपकरणोपकर-णीभावलक्षण एव वाच्योऽन्यस्यातिप्रसञ्जकत्वात्स्वरसतः प्रती-तेश्चेति वाच्यम् । भगवतो व्यापकचक्षुःस्वीकारेऽपि जीववदु-पकार्यत्वाभावेन स्वारस्यभङ्गतादवस्थ्यात् । न हि भागवतच-क्षुषो ज्ञानजननद्वारा भगवदुपकरणत्वं युज्यते । अतः—

'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी ।
त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः ॥

( श्वे० ४ । ३ )' इतिवत्सर्वात्मताबोधनाय 'विश्वतश्चक्षुः' इत्याद्युक्तिरित्येव कल्पयितुं युक्तम् ।

यत्तु कृष्णकेशः कृष्ण इति भागवते प्रतिपादनात्तस्य च गीतायां पूर्णताया उक्तत्वादवयवस्यापि पूर्णत्वमिति । तदसत् । तत्र तावत्केशत्वोक्तिर्न वास्तवकेशत्वाभिप्रायेण । किंतु 'यस्य निःश्वसितं वेदः' इत्यत्रेव तदवयवकार्यमत्यनायाससाध्यमिति द्योतनाय । अन्यथा तत्र सितकृष्णकेशयोर्विभुत्वे—

एवं संस्तूयमानस्तु भगवान्पुरुषोत्तमः ।
उत्पपाटाऽऽत्मनः केशौ सितकृष्णौ तदा मुने ॥

उवाच च सुरानेतौ मत्केशौ वसुधातले ।
अवतीर्य भुवो भारं क्लेशहानिं करिष्यतः ॥

इति विष्णुपुराणे तयोरुत्पाटनाभिधानासंगतेः ।

युक्तं चेत्याद्यपि न युक्तम् । परमाण्वादीनां सांशत्वमिच्छता त्वयाऽनवस्थाप्रयुक्तदोषक्षतेस्त्यक्तत्वात् । ब्रह्मणः पुच्छाङ्गीकारेऽपि पुच्छस्यावयवान्तरकल्पकप्रमाणाभावेनानवस्थाप्रसङ्गस्यैवाभावेन पुच्छपुच्छिनोरभेदकल्पनाया अनवस्थानिमित्तकत्वायोगाच्च । न च पुच्छत्वादेव सावयवत्वमनुमानासिद्धमिति वाच्यम् । स्वभिन्नावयवकत्वस्यापि तेनानुमातुं शक्यत्वात् । दर्शनानुरोधात् । दर्शनानादरे सावयवत्वस्यापि कल्पकाभावात् ।

यदपि विशेषबलादवयविन एवावयवत्वम् । यथाऽस्मिन्नेव प्रकरणे 'आनन्दं ब्रह्मणो विद्वान्' इति श्रुतेरानन्दात्मकस्यैव ब्रह्मण आनन्दित्वमिति । तदपि न । विशेषबलादित्यस्य विचारासहत्वात् । तथा हि—धर्म्येव धर्मः, धर्मितन्मात्रमिति यावत्, उत धर्मो धर्मी चेति व्यक्तिद्वयं तयोर्भेदः परं नाङ्गी क्रियते किंतु विशेष इति । नाऽऽद्यः । अपसिद्धान्तापातात् । ज्ञानानन्दादिशब्दानां पर्यायताप्रसङ्गात् । तुल्यन्यायेन ज्ञानत्वानन्दत्वादेरपि धर्मितन्मात्रत्वात् । न द्वितीयः । भेदाद्विशेषस्याविशेषात् । भेदस्य विशेषसंज्ञाकृतेत्येव पर्यवसानात् । भेदं निषिध्य विशेषं व्यवस्थापयन्त्याः श्रुतेः फलादर्शनात् । ननु 'नेह नानाऽस्ति किंचन' ( का० २ । ४ । ११ ) इति श्रुत्या 'एवं धर्मान्पृथक्पश्यन्' इति श्रुत्या चाऽऽत्मनि भेदनिषेधात् 'आनन्दं ब्रह्मणो विद्वान्' 'यः सर्वज्ञः स सर्ववित्' 'सोऽकामयत' 'तन्मनोऽकुरुत' 'सत्यकामः सत्यसंकल्पः' इत्याद्यनेकश्रुतिभिरत्यन्ताभेदविरोधिधर्मधर्मिभावप्रत्यायनाच्च भेदप्रतिनिधिर्विशेषोऽङ्गी क्रियते । तथा च विशेषबलाद्भेदाभावेऽपि भेदनियतधर्मिधर्मभावाद्युपपत्तिः । नहि स्वतन्त्रा श्रुतिः पर्यनुयोगमर्हतीति चेत् । मैवम् । 'नेह नानाऽस्ति' इति श्रुतेः संकोचकाभावेन निखिलद्वैतनिषेधपरत्वावगमात् । तथा सत्यप्यविद्याबलात्सर्वव्यवहारोपपत्तेः । प्रपञ्चितं चैतज्जिज्ञासाधिकरणे ।

तल्लाभायैव किंचनेति किमपीत्यर्थकमुपात्तम् । भेदमात्रनिषेधस्य 'नेह नानाऽस्ति' इत्यनेनैव सिद्धेः। संकोचे प्रमाणाभावाच्च। किंच नानात्वनिषेधो विशेषसत्तामपि न सहते । तस्य सविशेषभिन्नसाधारणत्वात् । ' न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ' ( ब्र० सू० १ । ४ । ११ ) इति सूत्रे त्वन्मते प्राणादिब्राह्मरूपेषु नानात्वाभिधानात् । भेदाभेदमात्रेण श्रुतिद्वयोपपत्तौ विशेषकल्पने बीजाभावाच्च । ' नेह नानाऽस्ति ' इति श्रुतेरात्यन्तिकभेदनिषेधपरतासंभवात् । परमात्मनि तद्धर्मभूतघटेऽपि द्वित्वादिभेदस्य त्वन्मतेऽपि सत्त्वेन स्वधर्मभेदसामान्यनिषेधायोगात् । अवतार्यवतारादिकृतभेदनिषेधरूपसंकोचे विनिगमकदौर्लभ्यात् । प्रत्युत विशेषकल्पनाप्रयुक्तं तवैव गौरवमधिकम् । भेदोपगमे तद्भेदादिधारामादायानवस्था स्यादिति चेत् । विशेषकल्पनेऽपि सा कुतो न स्यात् । धर्मिग्राहकमानस्य स्वनिर्वाहकतारूपधर्मविशिष्टविशेषावगाहित्वेन नानवस्थेति चेत् । भेदे जागरूके धर्मिग्राहकमानस्यैवानुत्थानात् । ततश्च धर्मधर्म्युभयकल्पनातो धर्ममात्रकल्पनाया लघुत्वेन भेदस्यैव स्वनिर्वाहकताऽस्तु भेदाभेदस्यानवस्थापरिहारायाधिकरणस्वरूपतायास्तन्त्रान्तरवद्युक्तत्वाच्च ।

ननु निषादस्थपत्यधिकरणन्यायेन 'नेह नानाऽस्ति किंचन' इति वाक्याद्यथाश्रुताद्धर्मभेदनिषेधावगतौ तन्निर्वाहाय स्वनिर्वर्तकताविशिष्टविशेषकल्पनं न दोषायेति चेत् । न । वैषम्यात् । निषादस्थपत्यधिकरणे हि बहुव्रीह्यपेक्षया कर्मधारयाश्रयणे लाघवं प्रमाणान्तरावगतमिति कर्मधारयसमासे निश्चिते तदनुरोधेन तदुत्तरकालिकविध्यादिकल्पनं न दोषायेत्युक्तम् । इह तु ' नेह नानाऽस्ति ' इति वाक्ये भेदमात्रनिषेधासंभवेन नानाशब्दे संकोचनीये सति किमसौ यावद्द्रव्यभाविधर्मप्रतियोगिकभेदपरो वाऽत्यन्तभेदपरो वेति जिज्ञासायां लाघवेन द्वितीयपक्षस्यैवोन्मेषात् ।

नन्वस्तु भेदाभेदस्तथाऽपि ब्रह्मणः पुच्छपुच्छिभावानिराकरणात्स्वप्रतीतौ कश्चिद्दोष इति चेत् । न । अपसिद्धान्तापा-

तस्यैव दोषित्वात् । किंचेदं ब्रह्मणोऽवयवित्वं न तावदवयवा-रब्धत्वम् ! ब्रह्मण आनन्दमयस्यानारब्धत्वात् । अत एव न स्वावयवविशिष्टत्वम् । अन्यावयववैशिष्ट्यरूपं बाढमिति चेत् । अवयवब्रह्मण आनन्दमयान्यत्वेन तदेकत्वानुपपत्तेः । आनन्दि-त्वमानन्दत्वं ब्रह्मणि श्रूयमाणमपि न विशेषं गमयति, धर्म्या-नन्दधर्मानन्दयोर्भेदोपगमादित्यपि केचित् ।

यदप्युक्तमन्नमयादावपि प्राचुर्यार्थत्वस्य भाष्य एवोक्तत्वान्न भाष्यपाठपरित्याग इति । तदपि त्वद्रीत्या 'विकारशब्दात्' (ब्र० सू० १।१।१३) इति सूत्रयोजनाद्दूषणावसरेऽन्नम-यादौ मयटः प्राचुर्यार्थकत्वदूषणे दूषयिष्यामः ।

यदपि प्राचुर्यस्य प्रतियोग्यल्पत्वापेक्षत्वेऽपि न प्रतियोगिनः सामानाधिकरण्यनियम इत्यादि । तत्रोक्तं कल्पतरौ प्राचुर्य-स्य विशेषणत्वे प्रतियोगिन ईषदनुवृत्तिप्रतीतिनियमाभावेऽपि तस्य विशेष्यत्वे तन्नियमोऽस्त्येव । ब्राह्मणप्रचुरो ग्राम इति प्रयोगे तद्दर्शनात् । आनन्दमय इत्यत्र प्रत्ययार्थप्राधान्यानुरोधेन प्राचुर्यस्य विशेष्यत्वात् ।

यत्तु चन्द्रिकायाम्—यश्चित्यादिनोक्तकल्पतरूक्तिमनूद्य तत्र प्रकाशप्रचुरः सवितेत्युक्तेऽपि तस्मिन्नन्धकारलेशाप्रतीतेरिति दूषणमुक्तम् । तन्मन्दमेव । सवितरि तमसो बाधितत्वेऽपि त-त्रापि तुहिनघनसैंहिकेयाच्छादनारोपिततमोल्पत्वप्रतीतेः । घना-पगम एव व्युत्पन्नानां तथा प्रयोगेण सर्वसंमतत्वात् ।

यदप्युक्तम् । 'सैषाऽऽनन्दस्य मीमांसा भवति' (तै०२।८) । 'यदेष आकाश आनन्दो न स्यात्' (तै० २।७) इत्यादिवाक्ये-ष्वानन्दपदान्यानन्दपराण्येव न प्राचुर्यलक्षकाणीति । तत्स्वसि-द्धान्तविरुद्धम् । 'तद्धेतुव्यपदेशात्' (ब्र० सू०१।१।१४) इति सूत्रे 'यदेष आकाश आनन्दो न स्यात्' (तै० २।७) इति वाक्यस्थानन्दपदस्य प्राचुर्यघटितार्थकतायास्त्वदीयैर्दर्शितत्वात् । तथा हि तत्त्वप्रकाशिकायाम्—'एवं प्रचुरानन्दत्वेनाऽऽनन्दम-यपदवाच्यो विष्णुरेव ब्रह्मशब्दाभ्यासादित्युक्तम् । तदेव हेत्व-न्तरेण प्रतिपादयत्सूत्रमुपन्यस्य तदुपात्तश्रुतिमुदाहरति—तद्धे-

ङ्क्विति । आसमन्तात्काशमानो विष्णुर्यदि पूर्णानन्दो न स्यात्त-दाऽसौ लोकं न प्रवर्तयेत् । आनन्दोद्रेकमन्तरेण तत्प्रवृत्तौ कारणाभावात् ' इति । 'यदेष आकाशः' इतिवाक्यस्थानन्दपद-स्य पूर्णानन्दार्थकत्वमुक्तं तदानन्दपदस्याऽऽनन्दसामान्ये शक्त-स्य लक्षणां विना न निर्वहतीति स्पष्टमेव ।

यच्चोक्तम् ' यतो वाचो निवर्तन्ते ' इति श्रुतिर्न निर्विशेष-त्वमाह किंतु ब्रह्मानन्दस्यावाङ्मनसगोचरानेकविशेषवत्त्वमिति । तच्चिन्त्यमेव । अनन्तविशेषवानानन्द इति ज्ञानजनकवाङ्मनस-गोचरस्य ब्रह्मानन्दस्य तदगोचरत्वबाधेन तादृशश्रुत्योक्तार्थ-बोधायोगात् । विशिष्य तज्ज्ञानजनकवाङ्मनसागोचरत्वं तदर्थ इति चेत् । न । विशिष्येत्यनेनैव विशिष्यबोधात् । तदानन्दग-तोभयाद्यविधर्मनिष्ठनिरवच्छिन्नप्रकारताशालिबोधाविषयत्वं त-दर्थ इति चेत् । निवर्तन्त इत्यस्यैतादृशार्थबोधे स्वारस्याभा-वात् । अस्मद्रीत्या यच्छब्दपरामृष्टसर्वोपाधिविनिर्मुक्तात्मतत्त्वा-द्वागादिनिवृत्तिरूपयथाश्रुतार्थकत्वपरतयोपपत्तावेतावति गुर्वर्थे लक्षणायां मानाभावात् । निवर्तन्त इत्यस्यास्मन्मते यथाश्रुतार्थ-कत्वस्वारस्यादिकं प्रपञ्चितमीक्षत्यधिकरणे विस्तरेण ।

न चानेकसगुणवाक्यानुरोधेन 'यतो वाचः' इत्यस्यैकस्यैव यथाकथंचिन्नयनमिति शङ्क्यम् । तात्पर्यग्राहकलिङ्गवतैकेनैव प्रबलेनानेकबाधोपपत्तेः । इदं हि वाक्यमस्मिन्प्रकरणे द्विरभ्य-स्यते मनोमयपर्याये ब्रह्मवल्ल्यन्ते च । तथा चैकरूपेण द्विरभ्य-स्यमानस्य वाक्यस्यान्यथानयनं न युक्तम् । किंचोपक्रमे ' सत्यं ज्ञानमनन्तम् ' इत्यानन्त्यमसंकुचितं चतुर्विधाभावप्र-तियोगित्वरूपं प्रतिज्ञातम् । जन्माधिकरणोक्तरीत्या तदुपपाद-कतयैव सृष्टिवाक्यस्य प्रवृत्तिः । तत्र सृष्टिवदुपयोगिगुणमात्र-प्रतिपादने वस्तुपरिच्छेदस्य प्रसक्तेरानन्त्यमप्रतिपादितमेव भ-वेदित्यस्मिन्प्रकरणे सृष्टिवाक्यजातमपवादमपेक्ष्यमाणमेव भव-तीति ' यतो वाचः ' इति तदनुगुणमेव व्याख्येयम् । तदुक्त-स्वसिद्ध्युपयोगित्वान्न विपरीतम् । ' यतो वाचः ' इत्यस्य

मध्येऽपवादोऽपि दृश्यते—‘एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते, अथ सोऽभयं गतो भवति’ (तै० २ । ७) । इदं हि वाक्यम् ‘सच्च त्यच्चाभवत् । निरुक्तं चानिरुक्तं च । निलयनं चानिलयनं च । विज्ञानं चाविज्ञानं च । सत्यं चानृतं च सत्यमभवत्’ (तै० २ । ६) इति पूर्वतनवाक्येऽध्यारोपितप्रपञ्चजातस्य निषेधार्थम् । तत्र यद्यपि ‘अदृश्ये’ इत्यनेनैव सर्वारोपितनिषेधः सिध्यति तथाऽपि पूर्ववाक्योपात्तानामेवाऽऽरोपितानामयं निषेध इति विधिनिषेधयोः समानविषयताद्योतनायाऽऽरोपितान्तर्गतप्रतियोगिसमर्पकपदप्रत्यभिज्ञापूर्वकं गोबलीवर्दन्यायेन पुनर्निषेधः केषांचित् । तत्रायमर्थः—आत्म्यं शरीरमात्मीयमिति यावत्, तद्रहिते । निरुक्तमित्थमिति निर्वचनयोग्यं तद्रहिते । निलयनं नितरां लयस्थानम् । यद्वा निलीयते स्थीयतेऽस्मिन्निति निलयनमाधारस्तद्रहिते । प्रतिष्ठां साक्षात्काररूपं तज्ज्ञानम् । ‘आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन’ (तै०२।९) इत्युत्तरत्राभयहेतुत्वेन ज्ञानस्य कीर्तनादिहाप्यभयहेतुत्वेन प्रत्यभिज्ञानात्तदेव प्रतिष्ठाशब्दार्थ इति निर्णयः । ‘यदेष आकाश आनन्दो न स्यात्’ ‘आनन्दो ब्रह्मेति व्यजानात्’ इत्यादिश्रुत्यन्तरात् । ‘आनन्दं ब्रह्मणः’ इत्यभेदे षष्ठी । घटस्य स्वरूपम्, राहोः शिरः, इतिवत् । ‘उदरमन्तरं कुरुते । अथ तस्य भयं भवति’ इत्यत्र भयहेतुत्वेन कीर्त्यमानमभयहेतुविरुद्धमित्यवगतेर्निर्विशेषात्मज्ञानस्याभयहेतुत्वोपपादनात्सविशेषज्ञानं भयहेतुरित्यवगम्यते । अत एव श्रूयते—‘द्वितीयाद्धि भयं भवति’ इति । तत्र वाक्येऽन्तरशब्दो भेदपरः । कुरुत इति क्रियासामान्यवाचकस्य धातोस्तद्विशेषज्ञाने वृत्तिराश्रीयते । उदरमित्यत्र उत्, अरमिति पदच्छेदः । अरमित्यल्पार्थे, उदित्यप्यर्थे । तथा चाल्पमपि धर्मधर्मिभावलक्षणमप्यन्तरं भेदं कुरुते जानातीत्यर्थः । एवं चाभ्यासवदुपक्रमोपसंहारैक्यरूप्यमपि ‘यतो वाचः’ इत्यस्य प्रबलत्वे लिङ्गमिति ध्येयम् ।

यच्चोक्तं चन्द्रिकायाम्—प्रियादिकं[1] यत्प्रतिशरीरं भिन्नं[2]



१ दिकं च यः प्रति । २ भिन्नो ना° इतीदानींतनचन्द्रिकापुस्तकस्थः पाठः ।

नासौ भगवदवयवः । यश्चावयवो नासौ प्रतिशरीरं भिन्नः ।
+विस्तृतं चैतत्तैत्तिरीयभाष्ये भगवत्पादैरिति । तच्चिन्त्यम् । आनन्दमयस्य ब्रह्मत्वसिद्धावेवैतत्कल्पनाप्रसरात् । त्वदीयतैत्तिरीयभाष्योक्तिर्विप्रतिपन्नं प्रति प्रमाणत्वेनोन्यासानर्हेति स्पष्टमेवेति ।

यच्चोक्तं चन्द्रिकायाम्—'सोऽकामयत' (तै॰ २।६) इति पुंलिङ्गेन संनिहितपरामर्शिना तच्छब्देन नपुंसकलिङ्गब्रह्मपुच्छशब्दनिर्दिष्टस्य 'तस्माद्वा एतस्मादात्मनः' इति व्यवहितात्मशब्दनिर्दिष्टस्य च परामर्शायोगात्संनिहितस्याऽऽनन्दमयस्यैव परामृष्टव्यत्वात् । 'सोऽकामयत' (तै॰ २।६) इत्यस्य च कारणवाक्यस्य त्वयाऽपि ब्रह्मपरत्वेनाङ्गीकृतत्वाच्च कथमानन्दमयस्याब्रह्मता । अपि चानुवाकान्त उदाहृतः 'यतो वाचः' इति श्लोक एव मनोमयेऽपि श्रुत्योदाहृतस्तस्य च ब्रह्मविषयता त्वयाऽपि स्वीकृतेति कथं मनोमयस्याब्रह्मता । किंचान्नमयादीनामब्रह्मत्वे ब्रह्मजिज्ञासोस्तदुपदेशायोगः । द्वारमपि द्वारत्वेनोपदेष्टव्यं नाऽऽत्मतया । लोके हि चन्द्रारुन्धत्यादौ शाखास्थूलतारादिकं द्वारत्वेनैवोपदिश्यते । न चान्नं ब्रह्मेत्यनुकथाऽऽनन्दो ब्रह्मेति वक्तुमशक्यम् । येन द्वारत्वं स्यात् । न च 'सत्यं ज्ञानम्' (तै॰ २।१) इति स्वरूपलक्षणेन ब्रह्मोपदिश्य पुनस्तस्य देहादिरूपताभ्रान्तिमुत्पाद्य पुनरपि पुच्छवाक्येन तदुपदेशोऽर्थवान् । न च द्वारोपदेशश्चित्तस्य प्रत्यक्प्रावण्यार्थः । कोशानां पराक्त्वात् । परागुपदेशेन च प्रत्यक्प्रावण्येऽतिप्रसङ्गात् । कोशानां च प्रत्यक्त्वेनाऽऽरोपस्याप्यानन्दमय उत्तरानुवाकोक्तान्नादौ चाभावात् । तत्रत्यानामन्नादीनामन्नमयादित्वे च तत्रत्यस्त्वया ब्रह्मत्वेन स्वीकृत आनन्दोऽप्यानन्दमयः स्यात् । स्थानप्रामाण्यात् ।

---

+विस्तृतमिति । 'शिरः प्रिये स्थितं तस्य परेयं प्रियनामकम् । मोदप्रमोदयोर्बाहू मोदनाच्च प्रमोदनात् । मोदप्रमोदनामानावानन्दस्त्वाततत्त्वतः । मध्यमानन्दरूपं च ब्रह्म सृष्ट्या तु बृंहयत् । पुच्छं प्रधानवायौ च ब्रह्माख्ये संस्थितं सदा' इत्यादिना प्रमाणेन विस्तृतमित्यर्थः ।

---

१ 'योगेन संनि' ।

न चाज्ञातधर्मतत्त्वं चैत्यवन्दनादि धर्म इति मन्वानं प्रति चैत्यवन्दनादि धर्म इत्युपदिश्य ज्योतिष्टोमादिर्धर्म इत्युपदिश्यते। न च त्वन्मतेऽपरिच्छिन्नस्याऽऽत्मनः शरीराद्यन्तरत्वमहत्त्वरूपं प्रत्यक्त्वं वाऽस्ति। न च घटाकाशादिज्ञानोपयोगिघटादिर्महाकाशज्ञानोपायः। इह च 'सत्यं ज्ञानमनन्तम्' (तै० २।१) इति प्रकृतापरिच्छिन्न एवाऽऽत्मा जिज्ञापयिषित इति तेऽपि मतम्। किंच निरवयवे चित्तप्रावण्यार्थं निरवयवान्तरमेवोपदेष्टव्यं न तु 'अयं दक्षिणः पक्षः' इति सावयवः। अपि च न तावदन्नमयादीनामन्नादीनां वा प्राणादीन्प्राणमयादीन्वा प्रति द्वारत्वम्। अन्नादिज्ञानं विनाऽपि प्राणादिज्ञानात्। ब्रह्मणि द्वारत्वे त्वन्नादिपूर्वकं प्राणाद्युपदेशो न युक्तः। अनेकद्वारवैयर्थ्यं च। न च द्वारविकल्पः, उत्तरानुवाके 'अन्नं ब्रह्मेति व्यजानात्' 'प्राणो ब्रह्मेति व्यजानात्' 'मनो ब्रह्मेति व्यजानात्' इत्यादिनाऽन्नप्राणादिद्वारसमुच्चयोक्तेः। अपि च 'यतो वै' इत्यादिपूर्ववाक्योक्तकारणत्वस्यापि त्वत्पक्षे ब्रह्मणि द्वारत्वात्कोशानां च कारणत्वे द्वारत्वाभावात्कोशोपदेशवैयर्थ्यम्। किंच भृगुर्वरुणोपदिष्टानां द्वारत्वं न वेत्ति चेद्विरोचनस्येव पुनरुपसत्त्ययोगः। वेत्ति चेत् 'नान्नं ब्रह्मेति व्यजानात्, नान्नाद्ध्येव' इति श्रूयेत। तस्मादन्नमयादयो ब्रह्मैव न कोशा इति।

अत्रेदं वक्तव्यम्—'सोऽकामयत' इत्यादिकमयुक्तमेव। आनन्दमयपर्याये पठितेन 'तस्यैष एव शारीर आत्मा। यः पूर्वस्य' इति श्लोकेनाऽऽनन्दमयं प्रत्यात्मत्वेन ब्रह्मणः प्रस्तुतत्वात्सर्वनाम्ना पुंलिङ्गेन स इत्यनेनातिसंनिहितस्य तस्य परामर्शोपपत्तेः। अपि चेत्यादिकमपि न सत्। मनोमयपर्याये 'यतो वाचः' इत्यस्य मनःस्तुतिपरत्वेन मनोमयस्य ब्रह्मत्वासाधकत्वात्। किंचान्नमयादीनामब्रह्मत्व इत्याद्यपि न सत्। उभयथाऽपि द्वारोपदेशस्य लोके दृष्टत्वात्। न चान्नं ब्रह्मेत्यनुक्त्वाऽऽनन्दो ब्रह्मेति वक्तुमश-



१ नोपायो घ° इतीदानींतनचन्द्रिकापुस्तकस्थः पाठः।

कथम् । येन द्वारत्वं स्यादित्युक्तिरप्यस्मत्सिद्धान्तरहस्यानभिज्ञमतारणपरैव । यत आनन्दो ब्रह्मेत्युपदेशेन ब्रह्मानन्दयोरभेदावगमेऽप्यवश्योपदेष्टव्यस्य प्रत्यग्ब्रह्मैक्यस्यानवगमात् । द्वारोपदेशे तु तत्सौलभ्यम् । तथा हि—उपक्रमे तावत् 'ब्रह्मविदाप्नोति परम्' (तै० २ । १) इति ब्रह्मज्ञानेन परप्राप्तिरूपं फलमुक्तम् । तत्र कीदृशं ब्रह्म कीदृशं च तज्ज्ञानं परप्राप्तिश्च कीदृशीत्याकाङ्क्षायाम् 'सत्यं ज्ञानमनन्तम्' (तै० २ । १) इति तत्स्वरूपमुपदर्शितम् । 'यो वेद निहितं गुहायाम्' (तै० २ । १) इति तद्वेदनं च दर्शितम् । अत्र बुद्धिपरो गुहाशब्दः । परमव्योमशब्दश्चेश्वरपरः । अव्याकृताकाशशब्दितपरमेश्वरोपाधिभूता याऽविद्या माया वा तत्परो वा । तथा चाविद्यादौ तत्कार्यतया वर्तमाना या बुद्धिस्तत्र निहितमित्यनेन जीवलाभः । यद्यपि परब्रह्मणः परमेश्वररूपेण जीवरूपेण च गुहाप्रविष्टत्वमस्ति तथाऽपि 'यो वेद निहितम्' इत्यत्र स्थितं विततं वेत्याद्यनभिधाय निहितमित्युक्त्या पारतन्त्र्यावगमाज्जैवमेव रूपं झटिति प्रतीयते । निहितमिति कर्मप्रत्ययसमभिव्याहृताद्धातोः प्रतीतायां क्रियायां केनेति कर्त्राकाङ्क्षा जायते । यथा गृहे स्थापितो मणिर्धरण्यां निहितं धनमित्यादौ तथैवानुभवात् । कर्ता चोत्सर्गतः कर्मणोऽन्यः । तथा च कर्मण्यन्यकर्तृकक्रियाकर्मत्वावगमादस्वातन्त्र्यं लभ्यते । पारमेश्वररूपं च नान्येन निहितम् । स्वातन्त्र्यात् । जीवस्तु परमेश्वरेण निहितः । अस्वातन्त्र्यात् । न हि परमेश्वरसंकल्पं विना यत्किंचिदपि केनापि कर्तुं शक्यम् । स्फुटा च जैवरूपेण प्रवेशे ईश्वरसंकल्पाधीनता । 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति तासां त्रिवृतं त्रिवृतमेकैकां[कां] करवाणीति सेयं देवतेमास्तिस्रो देवता अनेन[एव] जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरोत्तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' (छा० ६।३।२–४) इत्यादिश्रुतेः । एवं च ब्रह्मपदानुषङ्गेण 'एवंविधगुहानिहितं जीवं ब्रह्मेति यो वेद' इति ज्ञानाकारो दर्शितो भवति। यद्वा—एवंभूतं ब्रह्म गुहानिहितं जीवं वेदेति यथाश्रुत एवान्वयः । श्रुतिप्रसिद्धं

ब्रह्मरूपमनूद्य जीवाभेदस्यापि विधानसंभवात् । उभयथाऽपि बोधस्य जीवब्रह्मैक्यविषयत्वानपायात् । तमेव प्रकृताभेदं प्रपञ्चयितुमात्मनः प्रकृतिभूताद्व्यतिरेकेणासतो वियदादेरुत्पत्तिरभिहिता । ब्रह्मपदसमानार्थकानन्तपदबोधितचतुर्विधाभावाप्रतियोगित्वरूपासंकुचितानन्त्यस्य बोधनाय । प्रतिपादितं चैतज्जन्माधिकरणे ।

ननु जीवब्रह्माभेदोऽनुपपन्नः, जीवस्य कर्तुर्भोक्तुः सतो भेदस्याहं मनुष्य इति प्रत्यक्षसिद्धत्वादित्यादिशङ्कानुदासेन स्थूलशरीरमारभ्य सौषुप्तजीवपर्यन्तेभ्यः कोशेभ्यो विविक्तं यज्जीवस्य पारमार्थिकं रूपं तद्ब्रह्मेत्यवगमयितुं कोशोपदेशो द्वारतया प्रक्रान्तः । तत्रानायासेन विनेयबुद्ध्यवताराय पामरैरप्यात्मतया गृहीतमन्नमयकोशं सृष्टिप्रसङ्गादन्नविकारत्वेनाभिधाय तत एव हेतोर्नासौ जीवस्य पारमार्थिकं रूपमित्यादिक्रमेणाऽऽत्मानं कोशादिभ्यो विविच्य दर्शयितुं शरीरादात्माऽन्य इति विवेचयद्भिरन्यैरात्मत्वेन निर्धारितं प्राणमयकोशमन्नमयादन्यत्वेनानूद्य सोऽपि न जीव इति विवेचयद्भिः प्राणमयादन्यत्वेनानूद्य तैरप्यात्मतया निर्णीतं मनोमयं सूक्ष्मदर्शिभिरधिकविवेकशालिभिरात्मत्वेनावधारितं विज्ञानमयकोशं मनोमयादन्यत्वेनानूद्य ततोऽधिकतरविज्ञानैरात्मत्वेनावधारितमाविद्योपहितं बुद्धिवासनोपहितं वा जीवस्योपाधिकलुषितं रूपं विज्ञानमयकोशादन्यत्वेनाभिधाय ततोऽपि निष्कृष्टं शुद्धमात्मस्वरूपं ब्रह्मेति 'ब्रह्म पुच्छं प्रतिष्ठा' (तै० २।५) इत्यनेन(नया) श्रुत्या निर्णीयते । अयमेवार्थ उपसंहारे दर्शितः—'स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः' (तै० २।८) इति । पुरुषादित्यशब्दयोः शरीरिपरत्वात् । लोके हि परमसूक्ष्मामरुन्धतीं दर्शयितुं तन्निकटवर्तिस्थूलतारामरुन्धतीत्वेनोपदिश्य तत्र बुद्धिस्थैर्ये सति तत्त्वोपादिदर्शयिषुणा तन्निकटवर्तिनी सूक्ष्मतारा ततः सूक्ष्मतरा ततः सूक्ष्मतमा ततश्च मुख्याऽरुन्धती प्रदर्श्यत इति प्रसिद्धम् । स चायमुपदेशक्रमः प्रकृते समादृतः । एतेन 'सत्यं ज्ञानमनन्तम्' (तै० २.५) इति स्वरूपलक्षणेन ब्रह्मोपादिश्य पुनस्तस्य देहादिरूपताभ्रान्तिनिवृत्तये पुनरपि पुच्छ-

वाक्ये तदुपदेशोऽसंगतः। प्रयोजनाभावादुक्तत्वाच्चेति चन्द्रिको-
क्तमपास्तम् । सत्यमित्यादिना शुद्धब्रह्मावगतावपि तस्य जैवता-
त्त्विकरूपाभेदस्यानवधारणादेतादृशभना(णा)ड्याश्रयणे च मनः-
संस्कारोपहितसौषुप्तात्मनः पक्षिशरीराणां पुच्छमिवोक्तसंस्कारो-
पहितरूपेऽन्तर्भूतमाधारतयोपवर्ण्यमानं विशुद्धं साक्षिचैतन्यं ब्र-
ह्मेत्युक्त्या जीवब्रह्माभेदो लभ्यत इति श्लिष्टतरं प्रसङ्गाच्च ।
द्वारानुबद्धोपासनानां विधानं फलविशेषार्थतया प्रत्यगात्मनि
चित्तप्रावण्यार्थं ब्रह्मविद्याविरोधिदुरितनिरासार्थं चेति न किंचि-
दवद्यम् । एतस्यैवार्थस्यानुगुणं पूर्णायुर्लाभपाप्मराहित्यलक्षणं
फलं प्राणमयविज्ञानमयोपासनयोरुपदर्शितम् । चिरकालसाध्य-
ब्रह्मप्रतिपत्तावायुषो वृजिनाविशेषप्रतिबद्धस्वकरणशक्तिकायां
तस्यां वृजिनाभावस्य चावश्यमपेक्षितत्वात् । न च द्वारोपदेश-
श्चित्तस्य प्रत्यक्प्रावण्यार्थः । कोशानां पराक्त्वात् । परागुपदेशेन
च प्रत्यक्प्रावण्येऽतिप्रसङ्ग इति चन्द्रिकोक्तिरपि न युक्ता ।
प्रत्यक्त्वं हीदंकारास्पदेभ्यो विषयादिभ्यः प्रातिलोम्येनाञ्चनम् ।
पराञ्चि विषयानञ्चति प्रातिलोम्येन वर्तत इति प्रत्यगिति
व्युत्पत्तेः । तच्च मनुष्योऽहं क्षुधितोऽहं पिपासुरहम्, अहं संदे-
ह्मि कल्पयामि निश्चिनोमि करोमि सुख्यहमिति स्फुटतरप्रत्यय-
वेद्यत्वमिति । शरीरादीनामप्युक्तविवक्षितप्रत्यक्त्वानपायात् ।
चाञ्चल्यादिनिवृत्तिलक्षणस्य प्रावण्यस्य क्वचिदपि प्रतीके ध्याना-
भ्यासपरिपाके सत्यन्यत्रापि संभवाच्च । उत्तरानुवाकोक्तान्ना-
दिकमपि स्थानप्रमाणादन्नमयादिकमेव । एवं सति तत्रत्य-
स्त्वया ब्रह्मत्वेन स्वीकृतोऽप्यानन्द आनन्दमयः स्यात्स्थानप्रा-
माण्यादिति चन्द्रिकोक्तिस्तु न सम्यक् । तत्र 'सैषा भार्गवी
वारुणी विद्या । परमे व्योमन्प्रतिष्ठिता '( तै० ३ । ६ ) इत्या-
दिलिङ्गेन तदंशे स्थानप्रामाण्यस्य बाधात् । इतरांशे तु
बाधकानुपलम्भेन स्थानप्रमाणप्रसरात् । अन्नब्रह्मतानिरासे
तदीयावस्थान्तरस्य शरीरस्य कैमुतिकन्यायेन ब्रह्मस्वरूपतानि-
राकरणसंभवाच्च । एतेनाज्ञातधर्मतत्त्वमित्यादि चन्द्रिकोक्तदूषणं

१ "व्योतादृशावि" इति पाठः ।

निरस्तम् । धर्मस्य ब्रह्मण इवातिगहनत्वाभावात् । अपि च न तावदित्यपि चन्द्रिकोक्तं न सत् । विनेयबुद्ध्यवताराय पामरादिभिरप्यात्मत्वेन गृहीताद्देहादतिस्थूलादात्मानं विविच्य सूक्ष्मसूक्ष्मतरसूक्ष्मतमेभ्योऽनात्मभ्य आत्मनो विविच्य प्रदर्शनायान्नादिपूर्वकं द्वारसमुच्चयोपदेश इत्यभ्युपगमात् । अपि च यतो वेत्यादिकमपि चन्द्रिकोक्तमसत् । कारणत्वोपलक्षितेन ब्रह्मणा कोशान्निष्कृष्टसाक्षिचैतन्यस्याभेदोपपादनाय कारणत्वोपदेशकोशोपदेशयोर्द्वयोरप्यावश्यकत्वात् । किंच भृगुरित्यादिकमपि चन्द्रिकोक्तमसत् । आसुरप्रकृतेर्विरोचनस्यानेकभवार्जितदुरितशतमलीमसचित्ततया तत्त्वास्फुरणेऽपि तपःसमुचितभागधेयस्य शुद्धचित्तस्य भृगोस्तत्त्वप्रतिपत्तौ बाधकाभावात्पुनः पुनरुपसत्त्युपपत्तेः । पुनः पुनरुपसत्त्या च नान्नं ब्रह्मेत्यंशस्य स्फुटीकरणाच्च न कण्ठतस्तदुक्तिरिति न किंचिदपि चन्द्रिकोक्तं दूषणमिति विभावनीयममत्सरैः सुधीभिरिति ॥ १३ ॥

यश्चान्नमयादिपर्यायेषु पुच्छस्याप्राधान्यं पुच्छिनश्च प्राधान्यमवगतमानन्दमयपर्याये परित्यक्तमिति प्रायपाठविरोधः स तावन्निगमनश्लोकस्थेन ब्रह्मश्रुत्यभ्यासेन निरस्तोऽपि हेत्वन्तरेण पुनर्निरस्यते—

तद्धेतुव्यपदेशाच्च, इति ॥ १४ ॥

तस्याऽऽनन्दमयपर्याये स्वप्रधानतया प्रतिपाद्यस्य हेतुत्वव्यपदेशात्, अग्रिमसंदर्भेण 'सोऽकामयत, इदं सर्वमसृजत । यदिदं किंच' (तै०२।६)इत्यादिना सानन्दमयसर्वविकाररूपजगत्कर्तृत्वव्यपदेशादिति सूत्रार्थः । अयं भावः—यद्यानन्दमयपर्यायस्य ततःप्राचीनपर्यायावैरूप्यायाऽऽनन्दमयप्राधान्यं त्वयोच्यते तथाऽपि पूर्वपूर्वपर्यायेभ्यो वैरूप्यमानन्दमयपर्याये दुस्त्यजमेव । यतोऽन्नमयपर्यायेषु निगमनश्लोकोत्तरं ततोऽन्यस्यैवाऽऽत्मनः प्रदर्शनमेव कृतं न तु तदनुबन्धितया तद्गताः केचन गुणा आम्नाताः। अत्र च प्रकृतपर्यायप्रधानगताः करणत्वादयो निगमनश्लोकोत्तरमपि वर्ण्यन्त इति । मन्मते तूपक्रान्तगुहानिहितत्वपर्यवसानभूमितया ब्रह्मप्रतिपत्तयेऽन्नमयादिकोशान्तरात्मतयोपादिश्य-

मान आत्माऽत्रापि पर्याय आनन्दमयादान्तरत्वेन निर्दिष्टः ।
तथा च जीवेश्वरभेदप्रयुक्तायां जडेश्वरभेदप्रयुक्तायां च वस्तुप-
रिच्छेदगर्भानन्त्यासंभवशङ्कायां निरस्तायामपि जगदुपादानानि-
यन्तृभेदप्रयुक्तामुक्ताशङ्कां निरसितुम् 'सोऽकामयत' इत्याद्य-
ग्रिमोक्तिरिति केचिद्व्याचक्षते ।

वस्तुतस्तु—ननु कृत्स्नेनाप्यानन्दमयवाक्येन 'ब्रह्म पुच्छं
प्रतिष्ठा' (तै० २ । ५) इत्यन्तेनावयव्यानन्दमयः पूर्व
पर्यायेष्वन्नमयादिवच्छिरःप्रभृतिपुच्छान्तसकलावयवापेक्षया मा-
धान्येन प्रतिपाद्यः प्रतीयते । अतः प्रथमश्रुतानेकावान्तर-
वाक्यघटितमहावाक्यविरोधादभ्यस्तस्यापि ब्रह्मशब्दस्याऽऽ-
नन्दमये जघन्यवृत्तिकल्पनं युक्तमित्याशङ्कां निरस्यति—
तद्धेतुव्यपदेशाच्चेति । तस्य ब्रह्मणः सानन्दमयनिखिलविकार-
हेतुत्वव्यपदेशाच्चेति तदर्थः । अयं भावः—'असन्नेव स भवति ।
असद्ब्रह्मेति वेद चेत्' (तै० २।६) इत्युक्त्या पक्षे प्राप्तामसत्त्वाश-
ङ्कां निरसितुम्—'सोऽकामयत' इत्यादिना परस्य ब्रह्मणोऽभि-
न्ननिमित्तोपादानतामग्रिमः संदर्भः प्रतिपादयतीत्ययमर्थस्तैत्तिरी-
यभाष्ये भगवता भाष्यकारेण प्रपञ्चितः । स एव भगवतः परमर्षेः
सूत्रकारस्याभिप्रेतः । तथा च यद्यानन्दमय एव निगमनश्लोकवि-
षयस्तदा प्रियादिविशिष्टस्य तस्य सुख्यहमिति सर्वानुभवसिद्ध-
तयाऽसत्त्वशङ्कायास्तस्मिन्ननुदयात्तन्निरासाय सोऽकामयतेत्या-
दिना संदर्भेण तस्य निखिलजगद्धेतुत्वव्यपदेशोऽसंगत एव
स्यादिति । न चैवम् 'असत्त्वशङ्कायोगाच्च' इति सूत्रवि-
न्यासः स्यादिति वाच्यम् । जीवस्यापि नित्यत्वविभुत्वादिना
धर्मेणाप्रत्यक्षतया तेन रूपेणासत्त्वशङ्कायाः संभवात् । संक-
ल्पपूर्वकजगत्स्रष्टृत्वकथनेन तादृशशङ्कानिरासलाभाद्यथोक्त-
विन्यासस्यैवाऽऽवश्यकत्वात् । चशब्देनाग्रिमसंदर्भे वक्ष्यमाणा-
नामसत्त्वशङ्कानिरासकहेत्वन्तराणां समुच्चयः । तादृशहेतवश्च
तैत्तिरीयभाष्ये स्पष्टमुपपादिताः ।

यद्वा—अन्नमयादिपर्यायेषु पुच्छशब्दस्यावयवपरत्ववदिहापि
पुच्छशब्देन ब्रह्मणोऽवयवत्वं कल्प्यं पूर्वसाम्यायेति वदन्तं प्र-
त्याह—तद्धेतुव्यपदेशाच्चेति । अयं भावः—पूर्वपर्यायेषु 'इदं

पुच्छम्' इति तत्तत्कोशैकदेशेऽपि पुच्छत्वं निबद्धम्। ब्रह्मणश्च नाऽऽनन्दमयैकदेशत्वम्। तं प्रत्यपि कारणत्वात्। ततश्च ब्रह्म पुच्छमित्यत्रानेकदेशेऽपि पुच्छत्वाभ्युपगमे वैषम्यं प्राप्तमेव। तदाधारलक्षणाप्रयुक्तं कुतो न सह्यमिति। इदं पुच्छं प्रतिष्ठेत्यन्नमयपर्याये 'आकाश आत्मा। पृथिवी पुच्छं प्रतिष्ठा। [तस्य] यजुरेव शिरः' (तै० २।२।३) इति। प्राणमयमनोमयपर्याययोश्च क्वचिदेकदेश एव पुच्छत्वादिदृष्टिः क्वचिदनेकदेश एव शिरआदिदृष्टिरितिवत्क्वचित्पुच्छशब्दोऽवयवलक्षकः क्वचिदाधारलक्षक इति वैषम्यमविरुद्धमिति द्योतयितुं चशब्द इति व्याख्येयम् ॥ १४ ॥

यदुक्तं पूर्वपूर्वपर्यायेष्ववयविनः स्वप्रधानतया प्रतिपाद्यत्वदर्शनादानन्दमयस्याप्यवयविनोऽत्रापि स्वप्रधानतया प्रतिपादनं युक्तमिति तच्च पूर्वपूर्वपर्यायेष्ववयविनां प्राधान्यमभ्युपेत्य प्रकारान्तरेण समाहितम्। इदानीं परमार्थतो विचारे पूर्वपर्यायेष्वप्यन्तरात्मतया ब्रह्मण एव स्वप्रधानस्य प्रतिपाद्यता नान्नमयादीनामित्याह—

## मान्त्रवर्णिकमेव च गीयते ॥ १५ ॥

मन्त्रवर्णे गुहानिहितत्वेन प्रतिपादितं ब्रह्मैवान्नमयादिष्वपि स्वप्रधानतया प्रतिपाद्यते। यतोऽन्नमयादिपर्याया अपि सर्वान्तरतया प्रत्यगात्मतया च ब्रह्म प्रतिपादयितुमेवान्नमयादीन्प्रतिपादयन्ति न स्वप्राधान्येन। अन्यार्थतयोपदिश्यमानान्नमयाद्याश्रितानां ब्रह्मदृष्टीनां फलविशेषोद्देशेन विधानेऽपि न तावता तेषां प्राधान्यं वक्तुं शक्यम्। दर्शपूर्णमासाङ्गाप्प्रणयनमाश्रित्य पशुरूपफलोद्देशेन विधीयमानस्यापि गोदोहनस्य प्रकरणित्वादर्शनात्। 'गोदोहनेन पशुकामस्य' इति वाक्येन तस्य फलवत्त्वमिव 'सर्वं वै तेऽन्नमाप्नुवन्ति। येऽन्नं ब्रह्मोपासते' (तै० २।२) इति वाक्येष्वन्नमयाद्युपासनानां फलवत्त्वं न वार्यते। न चैतावता तस्य प्रकरणित्वमिति। चकारेणैवंभूतप्रधानस्यापि मनोमयपर्याये व्यभिचारः समुच्चीयते ॥ १५ ॥

ननूपक्रमादावपि जीव एव प्रतिपाद्यः। तस्य देशतः परि-

च्छेदराहित्येन शरीरबृंहणेन च ब्रह्मशब्दार्थतोपपत्तेः। तदुपा-
सनैव च सर्वकामावाप्तिलक्षणफलाय विधीयते। स एव चावि-
द्यालक्षणायां गुहायां निहितत्वेन मन्त्रवर्णप्रतिपाद्यः। तस्य
चान्नमयादिक्रमेण कोशचतुष्टयान्तरत्वमुपासनार्थमुपदिश्यते।
आनन्त्यं च देशतः कालतो वा तस्यापि संभवति। आकाशा-
द्युपादानताऽपि तस्यैव युक्ता। आकाशाद्यात्मना परिणममाना-
विद्याश्रयत्वात्। न च निरवयवस्य शुद्धब्रह्मणः। आनन्दप्र-
चुरत्वमानन्दविकारत्वं वाऽऽनन्दमयत्वं तस्यैव युक्तम्। तद्वि-
जातीयदुःखाश्रयत्वात्प्रियादिविशिष्टतया कार्यत्वसंभवाच्च। तस्य
च प्रियाद्यवयवविशिष्टं स्वं प्रति पुच्छत्वकल्पनमपि निराबाधम्।
'तस्यैष एव शारीर आत्मा। यः पूर्वस्य' (तै०२।५) इत्यस्य
च तस्य पूर्वस्य विज्ञानमयस्य, एष एव शारीर आत्मा य एष
आनन्दमय इत्यर्थः। शारीरत्वमपि तस्यैव प्रसिद्धम्। 'शारीरश्चो-
भयेऽपि हि' (ब्र० सू० १।२।२०) इति सौत्रनिर्देशात्।
एवं च निगमनश्लोकप्रतिपाद्योऽपि स एव। एवमुपक्रमे जीवप-
रतया व्यवस्थित उपसंहारोऽपि हिरण्यगर्भाद्युत्कृष्टजीवपरतया
कथंचिन्नेयः। असंजातविरोध्युपक्रमानुरोधेनोपसंहारो नेय
इत्यर्थस्य पूर्वतन्त्रसिद्धत्वादिति शङ्कां निरस्यति—

नेतरोऽनुपपत्तेः ॥ १६ ॥ इति।

इतरो जीवो न स्वप्राधान्येनात्र प्रतिपाद्यः। तत्र ब्रह्मश-
ब्दमुख्यार्थत्वे संकल्पपूर्वकनिखिलहिरण्यगर्भादिसहितजगत्का-
रणत्वानुपपत्तेः। न चाक्लेशेन वाक्यार्थसंभवे क्लेशाश्रयणं
युक्तम् ॥ १६ ॥

'तस्यैष एव शारीर आत्मा। यः पूर्वस्य' (तै० २।५)
इत्यस्य पूर्वपक्ष्यभिमतमर्थं दूषयति—

भेदव्यपदेशाच्च ॥ १७ ॥ इति।

आनन्दमयादन्तरात्मनो भेदव्यपदेशाच्चेत्यर्थः। तस्यासिद्धि-
शङ्कानिरासाय चशब्दः। तेनोक्तयोजनाक्लेशस्यायुक्तता समुच्ची-
यते। 'सोऽकामयत' इति कामयितृत्वस्य चेतनधर्मस्य श्रव-

णान्न प्रधानापेक्षेति सूत्रार्थः। अत्र प्रधानस्यैतदुपनिषत्प्रतिपाद्यत्वं निराक्रियते। यद्यप्यात्मब्रह्मादिश्रुतीनां ज्ञानत्वादिलिङ्गानां च भूयसामुपक्रमेऽपि सत्त्वान्न प्रधानपरत्वशङ्कोन्मिषति तथाऽपि गतिसामान्यप्रपञ्चनाय तदुक्तिः।

केचित्तु—नन्वौपसंहारिकप्राधान्यलिङ्गैर्बहुभिरेकं पुच्छपदमप्राधान्यद्योतकं तदनुरोधेनाऽऽधारलक्षणयाऽन्यथा व्याख्येयमित्युक्तम्। इदानीमुपक्रमानुरोधेनाप्यन्यथा व्याख्येयमित्याह—मान्त्रवर्णिकमेव च गीयत इति। मन्त्रवर्णे हि ब्रह्म स्वप्रधानमवगतम्। तदेव 'ब्रह्म पुच्छम्' इत्यत्र ब्रह्मपदेन प्रत्यभिज्ञायते। अतश्चरमश्रुतपुच्छपदं प्रथमश्रुतब्रह्मपदानुरोधादाधारलक्षकं भविष्यतीत्यभिप्रायः।

नन्वानन्दमयं प्रति ब्रह्मणः पुच्छत्वेनावयवत्वाविवक्षायामानन्दमयोपासनं निरङ्गं स्यात्। पूर्वपर्यायेषूपासनाङ्गतया गौणलाङ्गूलत्वविवक्षादर्शनादित्यत आह—नेतरोऽनुपपत्तेरिति। आनन्दमय इह पर्याय उपास्यो न भवति। उपक्रमोपसंहारावगतज्ञेयब्रह्मतात्पर्यके प्रकरण उपासनाविवक्षानुपपत्तेः।

ननु ब्रह्मप्रकरणेऽपि यथाऽन्नमयादिकोशेष्ववान्तरोपासनानि विवक्षितानि तद्वत्प्रकृतेऽपि किं न स्यादित्यत आह—भेदव्यपदेशाच्चेति। भेदो वैलक्षण्यम्। पूर्वपर्यायेषु फलनिर्देश इह नास्तीति वैलक्षण्यम्॥ १७॥

## कामाच्च नानुमानापेक्षा॥ १८॥

एतत्सूत्रार्थः पूर्ववदेव॥ १८॥

नन्वानन्दमयपर्याये फलनिर्देशो नास्तीत्यसंगतम्। उपक्रान्तसर्वकामावाप्तेरेव फलत्वस्य तत्र संभवात्। न च तद्ब्रह्मविद्याफलं नाऽऽनन्दमयोपासनाफलमिति शङ्क्यम्। विदेरुपास्तिपरताया अपि दर्शनात्। ब्रह्मपुच्छकत्वेनाऽऽनन्दमयोपासनाया अपि ब्रह्मोपासनत्वसंभवात्। न च 'ब्रह्मविदाप्नोति परम्' (तै० २।१) इति परशब्देन मोक्षप्राप्तेरेव फलत्वावगमात्तस्य चाऽऽनन्दमयोपासनतोऽसंभवेन विदेरुपास्तिपरत्वं न संभवतीति

वाच्यम् । विज्ञानमयमनोमयपर्याययोरपि 'शरीरे पाप्मनो हित्वा सर्वान्कामान्समश्नुते' (तै० २ । ५) 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन' (तै० २ । ९) इति मोक्षरूपफलकीर्तनात् । तत्र चेच्चित्तशुद्धिद्वारा तत्फलकत्वं तर्हि प्रकृतेऽपि किं न स्यादत आह—

## अस्मिन्नस्य च तद्योगं शास्ति ॥ १९ ॥ इति ।

अस्मिन्नेतदुपनिषत्प्रतिपाद्यनिर्विशेषप्रत्यगभिन्नब्रह्मताज्ञाने स-
त्यस्य जीवस्य तद्योगस्तदात्मना योगस्तद्योगस्तद्भावापत्ति-
रिति यावत् । तच्छब्दोऽत्र ब्रह्मपरः । शास्ति शास्त्रम् 'यतो
वाचो निवर्तन्ते, अदृश्येऽनात्म्ये' इत्यादिना वाङ्मनसागोच-
रमदृश्यत्वादिधर्मकं निर्विशेषम् । एतस्मिन्नित्यनेन प्रकृत्य
'अभयं प्रतिष्ठां विन्दते, अथ सोऽभयं गतो भवति' (तै०२।७)
इति शास्त्रम् । नहि ब्रह्मपुच्छकानन्दमयोपासनतस्तादृशमोक्षाख्य-
फलमुपपद्यते । 'तमेव विदित्वाऽति मृत्युमेति । नान्यः पन्था
अयनाय विद्यते' (श्वे० ३ । ८) इति श्रुत्या प्रत्यगभिन्नब्र-
ह्ममात्रज्ञानान्मोक्षोक्तेः । नापि मनोमयविज्ञानमयकोशप्रतिबन्दी ।
मनोमयपर्याये हि 'यतो वाचः' इति श्लोकस्याऽऽम्नानात्त-
स्मिंश्च 'आनन्दं ब्रह्मणो विद्वान्' (तै० २ । ९) इति दर्श-
नान्मनोमयोपासनं मोक्षजनकब्रह्मविद्यासाधकमिति स्वीक्रि-
यते । विज्ञानमयकोशेऽपि 'शरीरे पाप्मनो हित्वा' (तै०
२ । ५) इति वचनाद्ब्रह्मविद्याप्रतिबन्धककल्मषनिवृत्तिस्तत्फल-
मिति स्वीक्रियते। नैवमानन्दमयपर्याये किंचित्फलं स्पष्टमाम्ना-
यते । अतो नाऽऽनन्दमयपर्याय उपासना विवक्षितेति ।

अथवा जीवः प्रधानं वा न प्रकरणिनौ । अस्मिन्नेतदुपनि-
षत्प्रतिपाद्यविषयकज्ञाने सति, अस्य जीवस्य तद्योगं तद्भावाप-
त्तिरूपं शास्ति शास्त्रं पूर्वोक्तम् । नहि प्रधानस्य जीवस्य वा
चेतनेन चेतनान्तरेण वैक्यं संभवति । जीवस्यानुपहितं रूपं पर-
मात्मैवेति तत्सूत्रार्थः । ननु 'ब्रह्मविदाप्नोति परम्' (तै०२।१)
इत्युपक्रमे भेदगर्भब्रह्मप्राप्तेः फलत्वकीर्तनात् 'सोऽश्नुते सर्वा-
न्कामान्' (तै० २ । १) इति तद्विवरणेऽपि कामशब्दोदितपर-

मानन्दजगत्कारणत्वादिकल्याणगुणविशिष्टभगवदनुभवरूपाया-स्तत्प्राप्तेः फलत्वाभिधानाच्च तदनुरोधेन चरमश्रुतस्य ‘ उदरमन्तरं कुरुते । अथ तस्य भयं भवति ’ (तै०२।७) इत्यादेस्तदविरोध्यर्थपरताया एव वाच्यत्वान्न तद्भावापत्तिरूपतद्योगशासनमस्तीति चेत्। ‘ अस्मिन्नस्य च तद्योगं शास्ति ’ ( ब्र० सू० १।१।१९ ) इत्यस्यैव तच्छङ्कोत्तरत्वात् । तथा हि—अस्मिन्प्रकरणेऽस्य जीवस्य ‘ब्रह्मविद्ब्रह्मैव भवति’ इत्यादिश्रुत्यन्तरेषु प्रसिद्धतद्योगं ब्रह्मभावापत्तिरूपं शास्ति शास्त्रं ‘ब्रह्मविदाप्नोति परम्’ (तै०२।१) इति शास्त्रमिति। अयं भावः—‘ब्रह्मविदाप्नोति परम् ’ (तै०२।१) इति प्राप्यप्राप्तृभावेन भेदनिर्देशस्त्वापाततः। ब्रह्मविद्ब्रह्मैव भवति ’ इति सावधारणश्रुत्यन्तरानुरोधादाप्नोतीत्यस्य भवत्यर्थकत्वान्मोक्षप्रकरणे प्राप्त्यर्थकाणां(नां) पदानां तद्भावापत्तिरूपार्थकत्वेन श्रुत्यैव स्वयं व्याख्यातत्वाच्च। तथा हि—‘असतो मा सद्गमय’ ‘तमसो मा ज्योतिर्गमय’ ‘मृत्योर्मामृतं गमय’ इति मन्त्राः। तेषां च ब्राह्मणम्—स यदाहासतो मा सद्गमयेति मृत्युर्वा असत्, सदमृतम्, मृत्योर्मामृतं गमयामृतं मा कुर्वी(र्वि)त्येतद्वै तदाह । तमसो मा ज्योतिर्गमयेति मृत्युर्वै तमो ज्योतिरमृतं मृत्योर्मामृतं गमयामृतं मा कुर्वी(र्वि)त्येतद्वै तदाह। मृत्योर्मामृतं गमयेति नात्र किंचन तिरोहितमिवेति। अत्र मन्त्रद्वये गमयेत्यस्य कुर्वित्यर्थप्रदर्शनेन तृतीयमन्त्रे मृत्य्वादिपदानामव्याख्येयत्वेऽपि गमयेत्यस्य कुर्वित्यर्थपरतया व्याख्येयत्वमस्तीति द्योतयितुम् ‘ नात्र तिरोहितमिव ’ इतीवशब्दः प्रयुक्तः। परंतु पूर्ववदेव गमयेत्येतद्व्याख्यातुं शक्यत इति स्पष्टतया न व्याख्यातम्। क्वचिद्दर्शिताया व्युत्पत्तेः सर्वत्रोहितुं शक्यत्वादिति। उक्तब्राह्मणव्याख्यायाममृतीकरणं च नाहममृतमित्याकारकाज्ञाननिवृत्तिः। अर्थान्तरस्य बाधात्। सैव च ब्रह्मभावाभिव्यक्तिर्मुक्तिरिति चोच्यते।

यत्तु ‘ मा सद्गमय ’ इत्यस्य परमं साम्यं प्रापयेत्यर्थः। ‘ निरञ्जनः परं साम्यमुपैति ’ इति श्रुत्यन्तरादिति। तन्न। सच्छब्दस्यामृतार्थकतायाः श्रुत्यैव व्याख्यातत्वेन तद्विहाय

तद्वीयसाम्यार्थताकल्पनाया अनुचितत्वात् । तदनुरोधेन 'परं साम्यम्' इत्यस्यैव तद्भावापत्तिरित्यर्थकताया वक्तव्यत्वात् । अत एव तत्र परमिति शब्दः सार्थकः । अन्यथा 'साम्यमुपैति' इत्यनेनैव निर्वाहे तद्वैयर्थ्यात् । परमसाम्यस्य चोक्ताज्ञाननिवृत्तिरूपनिर्भेदतत्स्वरूपावाप्तिरूपत्वात् । गम्यादीनां चलनादावेव मुख्यतया परमसाम्यापादनानुकूलव्यापारे लाक्षणिकत्वाविशेषादज्ञाननिवृत्त्यनुकूलव्यापारबोधकतायामपि दोषाभावात् । भवति चाज्ञाननिवृत्तावपि प्राप्तिव्यपदेशः । यथा यथावस्थित एव कण्ठस्थत्वेनाज्ञायमाने चामीकरमण्यादौ तदज्ञाननिवृत्तौ सत्यां चामीकरादिकं प्राप्तमिति व्यवहारात् । नहि परमसाम्यापादनं क्वापि प्राप्तित्वेन व्यपदिश्यते । येन सच्छब्दो यथाश्रुतार्थः स्यात् । क्त्वोऽपि न तादृशार्थे क्वापि प्रयोगः । न च तुल्योऽनुयोगः । मृत्युशब्दस्य प्रमादापरपर्यायाज्ञानवाचकतायाः 'प्रमादं वै मृत्युमहं ब्रवीमि' इति सनत्सुजातेन विवरणात् । मृतशब्दस्यापि भावसाधनस्य प्रमादपरतयाऽमृतं प्रमादशून्यं कुर्वित्यनेन स्वरूपाभिव्यक्तिरेव सद्गमनमिति पर्यवसानेन क्त्वोऽपि प्रसिद्धार्थपरत्वाभावात् । असत इति ल्यब्लोपे पञ्चमी । तथाऽभिधानं च तथा चासदुपगूह्य सन्तं मा सद्गमयेत्यर्थः । तथाऽभिधानं च प्रसिद्धब्रह्मभावस्य ते कथं तत्प्रापणमुपपद्यत इति शङ्काव्युदासाय । यद्यप्यस्ति मे ब्रह्मभावस्तथाऽपि तदविद्यातिरस्कारिण्याऽसत्कल्पम् । अतः परमानुग्रहेण माममृतं कुर्विति हि तत्रपर्यवसितोऽर्थः । एतेन जीवब्रह्मणोर्भेदे 'ब्रह्मैव सन्ब्रह्माप्येति' इति श्रुतिविरोधमाशङ्क्य नात्र परब्रह्माभिधायक आद्यब्रह्मशब्दः, किंतु 'ब्रह्माणि जीवाः सर्वेऽपि' इति श्रुतेर्जीवाभिधायक एव । ब्रह्मशब्दस्य परब्रह्मणि मुख्यत्वेऽपि नात्र तत्परता । तथा सति 'ब्रह्माप्येति' इति श्रुतब्रह्मप्राप्तिविरोधादिति 'भेदव्यपदेशाच्च' (ब्र० सू० १।१।१७) इति सूत्रे जयतीर्थोक्तमपास्तम् । 'ब्रह्मविद्ब्रह्मैव भवति' इति श्रुत्यनुरोधादुक्तब्राह्मणानुरोधात् 'स यो ह वै तत्परं ब्रह्म वेद ब्रह्मैव भवति' । (मु० ३।२।९) 'तद्यो यो देवानां प्रत्यबु-

ध्यत स एव तदभवत् ' ( बृ० १ । ४ । १० ) इतिश्रुत्यन्तरानुरोधात् 'एति ' इत्यस्य भवत्यर्थकत्वस्वीकारस्य न्याय्यत्वात्। किंचाऽऽप्तिरप्यत्र न मुख्या संभवदुक्तिका । अन्यस्यान्येन परिच्छिन्नेन परिच्छिन्नस्य च सा मुख्या दृष्टा । अपरिच्छिन्नं च सर्वात्मकं ब्रह्मेति परिच्छिन्नवदनात्मवच्च तस्य प्राप्तिरनुपपन्नैवेति दर्शनादर्शनापेक्षयैव तत्प्राप्त्यप्राप्ती गौणे एव वाच्ये इति वरं श्रुत्यन्तरानुगुणार्थकल्पनं प्राप्त्यर्थकशब्दस्येति कृतधियो विदांकुर्वन्त्वनाग्रहेणेति दिक् ।

आनन्दतीर्थीयास्तु—यद्यानन्दमयो ब्रह्मणोऽन्यस्तदा न ब्रह्मजिज्ञासा संभवति । अवयविन एव जिज्ञास्यत्वप्राप्तेरवयविजिज्ञासां विनाऽवयवमात्रजिज्ञासायोगात् । ब्रह्मजिज्ञासा च श्रुत्युक्ता न हातुं शक्या । अत आनन्दमयस्य विष्णोरन्यत्वे न ब्रह्मजिज्ञासा संभवतीत्यनेन सूत्रेणाऽऽनन्दमयस्य विष्णुत्वमाह सूत्रकार इति जिज्ञासासूत्रसंगतिः । ' तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमयः ' ( तै० २ । ५ ) इत्यादि ' ब्रह्म पुच्छं प्रतिष्ठा ' ( तै० २ । ५ ) इत्यन्तवाक्य आनन्दमयो विषयः । स किं चतुर्मुखादिः किंवा विष्णुरिति चिन्ता । तदर्थम् ' असद्ब्रह्मेति वेद चेत् ' ( तै० २ । ६ ) इत्यादावानन्दमये श्रुतो ब्रह्मशब्दः किं जघन्यवृत्तिरुत मुख्यवृत्तिः । तदर्थं मयट्प्रत्ययः किं ब्रह्मशब्दस्य मुख्यत्वविरोधी, उत नेति । तदर्थं मयट् किं विकारार्थः किंवा प्राचुर्यार्थ इत्यादिश्चन्द्रिकायां दर्शितो विशयः । आनन्दमयो न विष्णुः किंतु चतुर्मुखादिर्जीवान्तः । आनन्दमयमधिकृत्य ' अस्ति ब्रह्मेति चेद्वेद ' ( तै० २ । ६ ) इत्यादिवाक्ये रूढ्यादिना चतुर्मुखादिनिष्ठब्रह्मशब्दश्रवणादिति पूर्वपक्षे सिद्धान्तः—आनन्दमयोऽभ्यासादिति । विष्णुरेवाऽऽनन्दमयः ' असन्नेव स भवति । असद्ब्रह्मेति वेद चेदस्ति ब्रह्मेति चेद्वेद ' ( तै० २ । ६ ) इत्यानन्दमये ब्रह्मशब्दाभ्यासात् । ब्रह्मशब्दस्य च ' तदेव ब्रह्म ' इत्यादिश्रुतिषु विष्णुनिष्ठतोक्तेरन्नमयादीनामपि ब्रह्मशब्दादेव विष्णुरूपत्वमिति ।

विकारशब्दान्नेति चेन्न प्राचुर्यात्। नायमानन्दमयो विष्णुः,
किंतु प्रागुक्तप्रकृत्यादय एव। विकाराभिधायकमयट्शब्दमयो-
गात्। विकारार्थशब्दवाच्यत्वप्रवृत्तिनिमित्तस्य विकारित्वस्य
विकारितादात्म्यस्य च विष्णावभावादिति शङ्का मा भूत्।
यतः प्रचुरानन्दत्वादानन्दमयशब्देनाऽऽनन्दमयः कथ्यते, न
त्वानन्दविकारित्वात्।

तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधा।

इति प्राचुर्येऽपि मयट्प्रयोगात्। आनन्दप्रचुर इति यथास्थि-
ताभिधाने ब्राह्मणप्रचुरो ग्राम इत्यादाविवानानन्दप्राप्तेः प्रचु-
रानन्द इति विपरीतसमासः कृतः।

प्रचुरानन्दत्वेनाऽऽनन्दमयपदवाच्यो विष्णुरेव ब्रह्मशब्दा-
भ्यासादित्युक्तं तत्र हेत्वन्तरमाह, अथवा तदेव हेत्वन्तरेण
प्रतिपादयति—तद्धेतुव्यपदेशाच्चेति। आसमन्तात्काशमानः
प्रकाशमानः विष्णुर्यदि पूर्णानन्दो न स्यात्तदाऽसौ लोकं न
प्रवर्तयेत्। आनन्दोद्रेकमन्तरेण तत्प्रवृत्तौ कारणाभावात्।

यदुक्तमन्नमयादीनां ब्रह्मशब्दादेव विष्णुत्वं ब्रह्मत्वं वेति।
नैतद्युक्तम्। ब्रह्मशब्दस्यापरब्रह्मण्युपपत्तेः। ब्रह्मशब्दस्य पर-
ह्मणि मुख्यत्वेऽपि विष्णोरान्दमयावयवत्वोक्त्यादिनाऽमुख्यार्थ-
स्यैव ग्रहणोपपत्तेरिति शङ्कां परिहरति—मान्त्रवर्णिकमेव च
गीयत इति। नेदमानन्दमयादिकमपरं ब्रह्म। यतः 'सत्यं ज्ञान-
मनन्तं ब्रह्म' (तै०२।१) इति मन्त्रवर्णे लक्षणवत्तयोक्तं परमेव
ब्रह्मान्नमयादिशब्दपञ्चकेन गीयते। सत्यज्ञानानन्तशब्दानामन्न-
मयादिशब्दानां चार्थानुसंधाने सत्यैकार्यत्वप्रतीतेः।

आनन्दमयस्य विष्णुत्वेऽनन्यथासिद्धलिङ्गमाह—नेतरोऽ-
नुपपत्तेरिति। नाऽऽनन्दमयादिर्विष्णोरितरः। 'ब्रह्मविदाप्नोति
परम्' (तै०२।१) इत्यानन्दमयादिज्ञानेन मोक्षश्रवणात्। न
चान्यज्ञानान्मोक्ष उपपद्यते। 'तमेवं विद्वानमृत इह भवति।
नान्यः पन्था अयनाय विद्यते' (तै० आ० ३। १२। १८)
इति श्रुत्या विष्णुज्ञानादेव मोक्षोक्तेः।

हेत्वन्तरेणापि ब्रह्मादीनामानन्दमयत्वं निराकुरुते—भेद-व्यपदेशाच्चेति । 'नेतरः' इत्यनुषज्यते । 'ते ये शतं प्रजापतेरानन्दाः । स एको ब्रह्मण आनन्दः' ( तै० २ । ८ ) इति रुद्राच्छतगुणमानन्दत्वोक्तेर्न तावदानन्दमयो विरिञ्चिः । 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह' ( तै० २ । ४ ) इत्यानन्दस्यापरिमितत्वोक्तेः । अत एव न रुद्रः । तस्य हिरण्यगर्भाच्छतांशेनानन्द[ वत् ]त्वोक्तेः । एवमन्येऽपि । 'अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति' ( तै० २ । ८ ) इति श्रुतौ प्रकृत्याद्ययोग्यस्वातन्त्र्यश्रवणान्न प्रकृत्यादीनामानन्दमयत्वम् । अदृश्येऽनात्म्ये स्वामिरहिते जीवगुणविधुरे वा साकल्येन वचनागोचरेऽपराश्रये तस्मिन्नानन्दमये योऽभयतया प्रतिष्ठां ध्यानं विन्दते, अनन्तरं स उपासकोऽभयं भगवन्तं गतो भवतीति तादृशश्रुत्यर्थः । 'स यश्चायं पुरुषे । यश्चासावादित्ये' ( तै० २ । ८ ) इत्यानन्दमयस्यापकृष्टोत्कृष्टजीवेषु पुरुषादित्यपदोपलक्षितेषु स्थितिकथनान्नाऽऽनन्दमयो ब्रह्मादिर्जीवसमूहः । तत्त्वमस्यादिश्रुतयोऽपि नाभेदे प्रमाणम् । 'नामानि सर्वाणि' ( भाल्लवेयश्रु० ) इति श्रुत्या तत्त्वमस्यादिशब्दैर्विष्णोरेव वाच्यत्वोक्तेः । अस्तु वा तासामभेदपरत्वम् । भगवतः सकलस्वामित्वेनाभेदव्यपदेशोपपत्तेरिति । अस्त्वानन्दमयो विष्णुस्तथाऽपि कथं तेन ब्रह्मादीनां भेदः, अभेदबोधकश्रुतिभिस्तदभेदावगमादिति शङ्कानवकाशः ।

नन्वनुमानमेवाभेदे प्रमाणम् । तथा हि—विमतानि शरीराणि मद्भोगायतनानि शरीरत्वादिति शङ्कां परिहरति—कामाच्च नानुमानापेक्षेति । किमद्वैतं श्रुत्याद्यनुकूलानुमानेन साध्यते केवलेन वा । नाऽऽद्यः । अद्वैतश्रुत्यभावस्योक्तत्वात् । न द्वितीयः । पृथगनुमानस्य कामगतित्वेनादृष्टार्थविषयेऽसाधकत्वात् ।

नन्वस्त्वानन्दमयेन ब्रह्मणा हिरण्यगर्भादीनां भेदः, परं स सांसारिक एव, न पारमार्थिकः । भेदवाक्यानां सांसारिकभेदपरत्वेनोपपत्तेरिति शङ्कां परिहरति—अस्मिन्नस्य च तद्योगं

शास्तीति । न केवलं भेदव्यपदेशादानन्दमयेन जीवानां भेदः । किंत्वस्य जीवस्याऽऽनन्दमयेन सह मुक्तावपि 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता' (तै० २ । १) इति श्रुतिः संबन्धमेव शास्ति न त्वैक्यम् । संबन्धस्य भेदनियतत्वादिति रीत्याऽधिकरणयोजनया सूत्राणि व्याचक्षते ।

तत्रेदं चिन्त्यते—यदुक्तमवयविजिज्ञासां विनाऽवयवजिज्ञासा न संभवतीति । तन्न सर्वसंमतम् । तथाश्रुतिवाक्यस्य क्वाप्यनाम्नानात् । नहि घटजिज्ञासां विना कपालजिज्ञासा न भवतीति त्वदुक्तिमात्रस्याश्रद्धेयत्वात् । न च ब्रह्मावयवस्याब्रह्मत्वनियमादानन्दमयावयवजिज्ञासया ब्रह्मजिज्ञासा न संपद्यत इत्याक्षेप इति वाच्यम् । तर्हि तप आदिष्विव बाधकबलेन ब्रह्मशब्दस्यान्यपरत्वसंभवेन 'ब्रह्मविदाप्नोति परम्' (तै०२।१) 'तद्विजिज्ञासस्व' इत्यादिश्रुतिभावितब्रह्मविचाराक्षेपकत्वायोगः । नापि—आनन्दमयो न विष्णुः, किंतु चतुर्मुखादिजीवान्तः, ब्रह्मशब्दस्य रूढ्यादिना तन्निष्ठस्य 'असद्ब्रह्मेति वेद चेत्' इत्यादिवाक्ये श्रवणादिति पूर्वपक्षोऽपि युक्तः । जिज्ञासासूत्रे 'तद्विजिज्ञासस्व । तद्ब्रह्म' इति वाक्यस्थब्रह्मशब्दस्य यौगिकत्वेन जीवाद्भेदकत्वोक्तेः । जन्मादिसूत्रेऽपि तस्मिन्नेव वाक्ये ब्रह्मशब्दस्य कारणत्वादिना जीवादौ रूढिं बाधित्वा योगस्य ब्रह्मणि व्यवस्थापनाच्च पुना रूढ्याश्रयणेन पूर्वपक्षानुत्थितेः ।

यत्तु चन्द्रिकायाम्—यद्यप्येवं तथाऽप्यानन्दमयवाक्ये रूढौ बाधकाभावः, प्रत्युत विकारशब्दादेस्तत्साधकस्य सत्त्वादिति पूर्वपक्षोदय इत्युक्तम् । तदसत् । जन्मादिसूत्रे 'तद्विजिज्ञासस्व । तद्ब्रह्म' इति वाक्ये ब्रह्मशब्दार्थो यदि जीवादिः स्यात्तदा तत्र 'यतो वै' इत्याद्युक्तजगत्कारणत्वानुपपत्तिरिति यथा रूढ्यर्थत्यागे बाधकं तथाऽत्रापि । आनन्दमयमधिकृत्य प्रवृत्ते 'असद्ब्रह्म' इति वाक्ये ब्रह्मशब्दार्थो यदि विष्णोरन्यो जीवादिः स्यात्तदा तस्याऽऽनन्दमयं प्रकृत्य प्रवृत्तेन 'सोऽकामयत । को ह्येवान्यात्कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्' (तै०२।६।७) इत्यादिवाक्येनोक्तजगत्कारणत्वजगत्प्राणनादिहेतु-

त्वाद्यनुपपत्तिरिति बाधकतौल्यात् । विकारबोधकमयट्शब्द(प्रत्यय)स्य च प्राचुर्यपरतयाऽन्यथासिद्धत्वात्संदिग्धत्वाच्च । 'सोऽकामयत' इति वाक्यम् 'तस्यैष एव शारीर आत्मा। यः पूर्वस्य' (तै०२।३) इतिवाक्यनिर्दिष्टमात्मानं परामृशति । स चाऽऽत्मा 'ब्रह्मविदाप्नोति परम्'(तै०२।१) इति यज्ज्ञानान्मोक्ष उक्तः, यस्य च 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः'( तै०२।१ ) इति वाक्येनाऽऽकाशादिक्रमेण हेतुत्वमुक्तं तद्ब्रह्मैव । तस्य पूर्वस्य विज्ञानमयस्य, एष एव शारीर आत्मा य एष आनन्दमय इति योजनया तस्याऽऽनन्दमयपरत्वे क्लिष्टकल्पनापत्तेरित्येवं पूर्वपक्ष्याशय इति तु न युक्तम् । 'तस्यैष एव शारीर आत्मा' इत्ययं मन्त्रः प्रथममन्नमयपर्याये नाऽऽम्नातः । प्राणमयपर्यायमारभ्य समाम्नायते । तत्र यः पूर्वस्यान्नमयस्य शारीर आत्मा एष एव तस्य प्राणमयस्याऽऽत्मेति वक्तुं न शक्यते । अन्नमयस्य प्राणमयादन्यत्वेनाऽऽत्मनोऽनाम्नानात् । 'तस्माद्वा अन्नरसमयादन्योऽन्तर आत्मा प्राणमयः' ( तै० २ । २ ) इति प्राणमयस्यैव तं प्रत्यात्मत्वेनाऽऽम्नानात् । अतस्तस्य पूर्वस्यान्नमयस्य, एष एव शारीर आत्मा य एष प्राणमय इत्येवार्थो वर्णनीयः । ततश्च तदैकरूप्यायोत्तरेष्वपि पर्यायेषु तथैवार्थः स्वीकर्तव्य इत्यानन्दमयपर्यायाम्नातः 'तस्यैष एव' ( तै० २ । ३ ) इति मन्त्रो दर्शितयोजनयाऽऽनन्दमयपर एवेति तदुत्तरमाम्नाते 'सोऽकामयत' ( तै० २ । ६ ) इति वाक्ये तस्यैव परामर्शावश्यकत्वात् । एवम् 'सोऽकामयत' (तै०२।६) इति जगत्कारणवस्तुनिरूपणानन्तरं प्रवृत्तम् 'रसो वै सः । रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति । को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात्' ( तै० २ । ७ ) इति वाक्यं तदेकार्थमिति जगत्कारणत्ववज्जगत्प्राणनादिहेतुत्वस्याऽऽनन्दमय एव पर्यवसानात् । यदि चाऽऽनन्दमयपर्यायाम्नातः 'तस्यैष एव शारीर आत्मा' ( तै० २ । ६ ) इति मन्त्रोऽद्वैतिमतरीत्या 'ब्रह्मविदाप्नोति परम्' ( तै० २ । १ ) इत्युपक्रान्तमन्नमयाद्यानन्दमयादन्यमात्मानं परामृशति । उक्त-

क्लिष्टयोजनयाऽऽनन्दमयग्रहणापेक्षया यथाश्रुतार्थग्रहणस्यैव युक्तत्वात्। न च प्राणमयपर्याये 'तस्यैष एव इति' मन्त्रस्य यथाश्रुतार्थग्रहणं न संभवति प्राणमयादन्यस्यान्नरसमयस्याऽऽत्मनोऽनुक्तेरिति वाच्यम् । यस्मादन्नरसमय उत्पन्नः स एव मूलकारणभूतः प्राणमयस्याऽऽत्मा भविष्यतीति 'तस्यैष एव शारीर आत्मा । यः पूर्वस्य ' ( तै० २ । ६ ) इत्यनुवादबलादेवावगन्तुं शक्यत्वात् । स च मूलकारणतया 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः ' ( तै० २ । १ ) इति निर्दिष्ट एव । ततश्च ' यः पूर्वस्य ' इति षष्ठी जन्यजनकभावे । तथा च तस्य प्राणमयस्यैष एवाऽऽत्मेत्यत्रापि षष्ठी जन्यजनकभावे । शारीरपदं च तस्य जीवस्वरूपाभेदसूचकम् । अयं जन्यजनकभाव उपादानोपादेयरूपेणापि भवतीति 'स वा एष पुरुषोऽन्नरसमयः' ( तै० २ । १ ) इति ' अन्योऽन्तर आत्मा प्राणमयः ' ( तै० २ । २ ) इत्यात्मपदसामानाधिकरण्यं चोपपद्यत इति ' सोऽकामयत ' ( तै० २ । ६ ) इति वाक्यमपि तादृशात्मानमेव परामृशतीति पूर्वपक्ष्याशय इत्युच्यते तदा तन्मते ' असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् ' ( तै० । २ । ६ ) इति ब्रह्मशब्दाभ्यासस्य पुच्छब्रह्मविषयतयाऽऽनन्दमयं प्रकृत्य ब्रह्मशब्दाभ्यासासिद्धेः । त्वं प्रति तेन हेतुनाऽऽनन्दमयस्य ब्रह्मत्वसाधनायोगात् । इत्थं हि तन्मतम्—' असन्नेव ' इति मन्त्रो ब्रह्मपुच्छं प्रतिष्ठेति वाक्यनिर्दिष्टब्रह्मपरः । न त्वानन्दमयपरः । तदप्रत्यभिधानात् । पूर्ववाक्यस्वारस्येन ब्रह्मभिन्नतयाऽवगते तस्मिन् ब्रह्मपदलक्षणाप्रसङ्गात् । प्रियादिविशिष्टस्य तस्य सुख्यहमिति प्रतीयमानस्यासत्त्वशङ्कानास्पदत्वेन तच्छङ्कानिवारणार्थं प्रवृत्तस्य मन्त्रस्य तद्विषयत्व आनर्थक्यप्रसङ्गात् । अपि चैतस्य मन्त्रस्य पुच्छवदानन्दमयाविषयत्वे स एव चैतन्मन्त्रे प्राधान्येन वेद्य इति ' असन्नेव स भवति ' ( तै० २ । ६ ) इति वेदनकर्तृत्वेन समाम्नातस्य तस्य परामर्शोऽप्यसंगतः स्यात् । वेदितृत्ववेद्यत्वयोर्विरोधादिति ।

एवमानन्दमये ब्रह्मशब्दाभ्यासादानन्दमयो विष्णुरेवेति

सिद्धान्तोऽप्ययुक्तः। आनन्दमये ब्रह्मशब्दाभ्यासासिद्धेः। तस्य पुच्छब्रह्मविषयत्वात्। नहि तदनभिधायकेन शब्देन तदभ्यासोऽस्ति। न चाऽऽनन्दमयप्रकरणे श्रुतं ब्रह्मपदं तस्यैव वाचकमिति वाच्यम्। किमानन्दमयस्य प्रकरणित्वमभ्यासात्किंवाऽन्यतः। नाऽऽद्यः। आनन्दमयस्य प्रकरणित्वेऽभ्यासस्याऽऽनन्दमयविषयत्वाद्ब्रह्मशब्देनाऽऽनन्दमयोपस्थितिः, अभ्यासस्याऽऽनन्दमयविषयत्व आनन्दमयस्य प्रकरणित्वमित्यन्योन्याश्रयापातात्। न द्वितीयः। अभ्यासादिति सौत्रहेतुवैयर्थ्यापत्तेः।

अथ समानप्रकरणे भृगुवल्ल्याम् 'अधीहि भगवो ब्रह्म' (तै० ३।१) इत्युपक्रम्य 'सैषा भार्गवी वारुणी विद्या। परमे व्योमन्प्रतिष्ठिता' (तै० ३।६) इत्यानन्द एव परिसमाप्तिदर्शनात्तत्राऽऽनन्दमयत्वस्य 'एतमानन्दमयमात्मानमुपसंक्रम्य' (तै० ३।१०) इत्यनेनावगमादिहाप्यानन्दमयो ब्रह्मैवेति 'असन्नेव स भवति। असद्ब्रह्मेति वेद चेदस्ति ब्रह्मेति चेद्वेद' (तै० २।६) इत्यादिब्रह्मशब्दाभ्यास आनन्दमयविषय एवेति निश्चयान्नोक्तान्योन्याश्रयः। तथा चोक्तं चन्द्रिकायामन्नमयादीनां कोशत्वनिराकरणेन ब्रह्मत्वनिरूपणप्रस्तावे—'भृगुर्वै वारुणिः' (तै० ३।१) इत्युत्तरानुवाक उक्तानामन्नादीनां तावद्ब्रह्मत्वं वक्तव्यम्[1]। 'सैषा भार्गवी वारुणी विद्या। परमे व्योमन्प्रतिष्ठिता' (तै० ३।६) इति श्रुत्या स्वयमेव परब्रह्मत्वोक्तेः। 'अधीहि भगवो ब्रह्म' (तै० ३।१) इति ब्रह्मप्रश्नोत्तरत्वात्। 'स तपस्तप्त्वा' (तै० ३।१) 'अन्नं ब्रह्मेति व्यजानात्' (तै० ३।२) इति श्रवणानन्तरभाविनिदिध्यासनाख्यतपसाऽपरोक्षीकृतत्वलिङ्गात्। 'अन्नं ब्रह्म' इत्यादि ब्रह्मशब्दात्। 'अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते' (तै० ३।२) इत्यादिब्रह्मलक्षणाच्च। तत्समाख्यया चात्राप्यन्नमयादीनां ब्रह्मत्वम्। न च तत्र मयटोऽश्रवणाद्भिन्नविषयत्वम्। * तत्रापि

* तत्रापीति। अत्रेदं बोध्यम्—इदानींतनचान्द्रिकापुस्तकपाठस्तु—तत्रापि 'एतमन्नमयमात्मानमुपसंक्रामति' इत्यादौ 'एतमानन्दमयमात्मानमुपसंक्रा-

१ °स्त्वं तावदुपेयम्, इतीदानींतनचन्द्रिकापुस्तकपाठः।

'एतमन्नमयमात्मानमुपसंक्रम्य' ( तै० ३ । १० ) इत्यादौ 'एतमानन्दमयमात्मानमुपसंक्रम्य' ( तै० ३ । १० ) इत्युपसंहारे च तच्छ्रवणात् । अत्रापि 'अन्नाद्वै प्रजाः प्रजायन्ते' ( तै० २ । २ ) इत्यादौ तदश्रवणात् । तत्राप्यन्नमयादीनामब्रह्मत्वे 'एतमन्नमयमात्मानमुपसंक्रामति' ( तै० २ । ८ ) इत्यात्मशब्दस्य मुक्तप्राप्यत्वस्य चायोगाद्द्वितीयेति चेत् । न । आनन्दमयपर्यायोत्तरं पुच्छब्रह्मणः 'तस्यैष एव शारीर आत्मा । यः पूर्वस्य' (तै०२।३) इत्यनेनाऽऽनन्दमयान्तरात्मत्वेनाऽऽम्नानोत्तरम् 'सोऽकामयत' 'रसो वै सः' 'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्' 'यदा

---

मति' इत्यन्ते मध्ये, तथा 'एतमन्नमयमात्मानमुपसंक्रम्य' इत्यादौ 'एतमानन्दमयमात्मानमुपसंक्रम्य' इत्यन्त उपसंहारे च तच्छ्रवणात् । इति । अस्यार्थश्च टीकाकारैस्तत्रैवोपवर्णितस्तस्यायं भावः—उपक्रमे मध्य उपसंहारे च मयडन्तानां श्रवणादन्नादीनामन्नमयादित्वं स्वीकार्यम् । तत्र 'स वा एष पुरुषोऽन्नरसमयः' ( तै० २ । १ ) इत्युपक्रमे मयडन्तस्य प्रयोगः स्पष्ट एव । मध्ये तथोपक्रमे च तं दर्शयितुमाह—एतमन्नमयमिति । अत्र 'मध्ये' इति 'उपसंहारे' इति च विशिष्यबोधकौ शब्दौ । तयोश्च क्रमेण 'इत्यादौ' 'इत्यन्ते' इति च समानाधिकरणे द्वे द्वे विशेषणे । एवं चोपक्रमे मध्य उपसंहारे च मयडन्तानां प्रयोगसत्त्वादन्नादीनां मयडन्तत्वाभावेऽपि न भिन्नविषयत्वमिति तात्पर्यमिति । यद्यप्येतादृश एव पाठोऽत्र मूले चतुष्कोणकंसमध्ये निवेशयितुमुचितस्तथाऽपि मूलकाराणां न तादृशपाठविशिष्टं पुस्तकं दृष्टिपथमागतं किंतु यथाश्रुतपाठविशिष्टमेवेत्यभिप्रायेण न चतुष्कोणमध्ये निवेशितः । युक्ततरश्चायं मूलस्थः पाठः । तथा हि—यथा भृगुवल्ल्यामन्नादीनां शब्दानां ब्रह्मपरत्वं तथैव ब्रह्मवल्ल्यामप्यन्नमयादीनां शब्दानां ब्रह्मपरत्वम् । समानप्रकरणत्वात् । इति पूर्वमुक्तम् । ततो भृगुवल्ल्यां मयटोऽश्रवणात्समानप्रकरणत्वं नास्तीत्याशङ्कितम् । ततो भृगुवल्ल्यामपि मयटः श्रवणं वर्तत इति प्रतिपादयितुम् 'तत्राप्येतमन्नमयम्' इत्यादिग्रन्थः प्रवृत्तः । तत्र भृगुवल्लीस्थमेव 'एतमन्नमयमात्मानमुपसंक्रम्य' इत्यादिवाक्योच्चारणं युक्तम् । न तु ब्रह्मवल्लीस्थम् 'एतमन्नमयमात्मानमुपसंक्रामति' इति । एवं च तत्पाठसमर्थनार्थं व्याख्याकाराणां प्रयत्नोऽपि न समाश्रयणीयो भवति । इति ।

ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति' (तै० २।७) 'भीषाऽस्माद्वातः पवते। भीषोदेति सूर्यः' (तै० २।८) इत्यादिकार्यरसलाभप्राणनाभयप्रतिष्ठाभयदर्शनोपपत्तिभ्योऽस्त्येव तदाकाशादिकारणं ब्रह्मेति प्रतिपादनेन ब्रह्मविषये 'अस्ति नास्ति' इति प्रश्नमपाकृत्य द्वावन्यावनुप्रश्नौ विद्वदविदुषोर्ब्रह्मप्राप्त्यप्राप्तिविषयौ। तत्र मध्यमोऽनुप्रश्नः 'विद्वान्समश्नुते' इत्यन्त्यप्रश्नापकरणेनैवापाकृतो भविष्यतीति तमनपाकृत्यान्त्यप्रश्नापकरणायाऽऽम्नातम् 'स य एवंवित्, अस्माल्लोकात्प्रेत्य, एतमन्नमयमात्मानमुपसंक्रामतीत्यादि एतमानन्दमयमात्मानमुपसंक्रामति' (तै० २।८) इति। तत्रायमर्थः—स यः कश्चित्, एवं यथोक्तं ब्रह्मोत्सृष्टोत्कर्षापकर्षमद्वैतं सत्यं ज्ञानमनन्तमहमस्मीत्येवंवित्। एवंशब्दस्य प्रकृतपरामर्शार्थत्वात्। स कः, योऽस्माल्लोकात्प्रेत्यान्नमयादिमानन्दमयान्तमात्मानमुपसंक्रामति, अथादृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दत इति। तथा चोपसंक्रमितव्यान्नमयादिप्रवाहपतितस्याऽऽनन्दमयस्योपसंक्रमणकर्मत्वावगमात्, प्रियमोदादिविशिष्टस्य तस्य 'सुख्यहम्' इति प्रत्यक्षविषयस्य सत्त्वासत्त्वाशङ्कानास्पदत्वेन तत्परिहाराय 'असद्ब्रह्म' इत्यादिवाक्यवैयर्थ्यात्, प्रियादिविशिष्टस्य च तस्यादृश्यत्वादिधर्मकत्वासंभवात् 'यतो वाचो निवर्तन्ते' (तै० २। ४) इति श्रुतिप्रतिपादितवाङ्मनसागोचरत्वासंभवात्, पूर्वोक्तरीत्याऽऽनन्दमयपदार्थे दुःखलेशप्रतीत्या ब्रह्मशब्दमुख्यार्थत्वाभावाच्चाऽऽनन्दमयस्याब्रह्मत्वसिद्धौ भृगुवल्ल्यामाम्नातस्य 'सैषा भार्गवी वारुणी विद्या। परमे व्योमन्प्रतिष्ठिता' (तै० ३।१) इत्येतदनन्तरमाम्नातस्य 'य एवं वेद' इत्यस्य 'एतमानन्दमयमात्मानमुपसंक्रम्य' (तै० ३।१०) इत्यनेन संबन्धात् 'अदृश्येऽनात्म्ये' इत्यादेः 'अभयम्' इत्यन्तस्याऽऽनन्दवल्लीस्थस्यापि तत्संनिधौ योजनया 'य एवं वेद स कः' य एतमन्नमयादिमानन्दमयान्तमात्मानमुपसंक्रम्यादृश्यत्वादिधर्मकेऽभयं प्रतितिष्ठति प्रतिष्ठां लभत इत्यस्यैव वाक्यस्याद्भृगुवल्ल्या

आनन्द एव समाप्तिर्नाऽऽनन्दमय इत्यादेरतिस्पष्टत्वात्। अत एव प्रातिपदिकमात्रमेवाभ्यस्यते—'रसो वै सः' 'यदेष आकाश आनन्दो न स्यात्' (तै० २। ६-७) 'सैषाऽऽनन्दस्य मीमांसा भवति' (तै० ३। ५) 'आनन्दो ब्रह्मेति व्यजानात्' (तै० ३। ६) इति। 'उपसंक्रामति, उपसंक्रम्य' इत्यानन्दमयादावुपसंक्रमणकर्मत्वस्यैव प्रतीतेर्न तस्य मुक्तप्राप्यत्वम्। आत्मशब्दस्त्वमुख्यान्नमयाद्यनात्मप्रवाहपतितत्वात्तत्र गौण एव। विवेचयिष्यते चेदमुपरिष्टात्।

यत्तु चन्द्रिकायाम्—न 'उपसंक्रम्य' इत्यत्रोपशब्दोऽतिक्रमार्थः। अव्ययानामनेकार्थत्वस्यापि प्रयोगानुसारित्वात्। अन्यथाऽन्तःशब्दो बहिरर्थः स्यात्। 'अस्माल्लोकात्प्रेत्य' इत्यनेनैव च शरीराख्यान्नमयपरित्यागस्योक्तत्वेन 'अन्नमयमुपसंक्रामति' इत्यनेनापि तदुक्तौ पुनरुक्तिश्च स्यादिति। तत्तुच्छमेव। न ह्यत्र जलूकावन्नीडे पक्षिप्रवेशवद्वा मुख्यं संक्रमणं विवक्षितम्। अन्नमये बाधात्। न ह्यन्नमयमुपसंक्रामतो बाह्यादस्माल्लोकाज्जलूकावदन्यथा वा संक्रमणं दृश्यते। स्वीकृतं वा त्वयाऽपि। किंतु ज्ञानमात्रम्। प्रयोगानुसार्यर्थकल्पनाया अपि तात्पर्याधीनत्वात्। प्रकृते च 'यो वेद निहितं गुहायाम्' (तै० २।१) इति सर्वान्तरब्रह्मप्रतिपिपादयिषयैवान्नमयाद्यानन्दमयान्तकोशनिरूपणेन ब्रह्मात्मताज्ञानेनान्नमयाद्यानन्दमयान्तेष्वनात्मस्वात्मतया भ्रान्तिगृहीतेष्वनात्मत्वग्रहरूपबाध एवोपसंक्रमणपदार्थः। एवं सति न पुनरुक्तिरपि। 'अस्माल्लोकात्प्रेत्य' इत्यत्र स्त्रीपुत्रादिदृष्टादृष्टविषयसमुदायो ह्ययं लोकः। स्वोपकारकत्वात्स्वीयत्वेनाऽऽत्मतया गृहीतः। तदुक्तमध्यासभाष्ये—स्त्रीपुत्रादिषु सकलेषु विकलेषु वाऽहमेव सकलो विकलो वेति बाह्यधर्मानात्मन्यध्यस्यतीति। तस्मात्—लोकात्प्रेत्य ममैत एते नाहमिति विवेकेनान्नविकारेऽन्नमये देह आत्मबुद्धिं कृत्वा ततो यथाव्याख्यातमन्नमयमात्मानमुपसंक्रामत्यनात्मत्वेन पश्यति। ततः प्राणमयं ततो मनोमयं ततो विज्ञानमयं तत

आनन्दमयमुपसंक्रामति । अथादृश्यत्वादिधर्मके सत्यज्ञानानन्दादिरूप आत्मन्यभयं प्रतिष्ठां विन्दते ब्रह्मरूपेण स्थितो भवतीत्यस्यैव विवक्षितत्वात् ।

यच्चोक्तम् 'अन्नं ब्रह्म' इति ब्रह्मशब्दात् 'अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते' (तै० ३।२)इति ब्रह्मलक्षणाच्च तत्समाख्ययाऽन्नाप्यन्नमयादीनां ब्रह्मत्वमिति । तदप्यसत् । 'अधीहि भगवो ब्रह्मेति' (तै० ३।१) इति ब्रह्मप्रश्नानन्तरम् 'तस्मा एतत्प्रोवाच । अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति । तꣳ होवाच । यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा । अन्नं ब्रह्मेति व्यजानात्' (तै० ३ । १—२) इत्याद्याम्नायते । तत्रायमर्थः—भृगोः प्रश्नानन्तरं पिता वरुणो ब्रह्मप्रतिपत्तावन्नादीनां द्वारत्वम् 'अन्नं प्राणम्' इत्यादिनाऽभिधाय 'यतो वै' इत्यादिना ब्रह्मलक्षणं चाभिधायैवंलक्षणं ब्रह्मान्नादिद्वारेण प्रतिपद्यस्वेत्युक्तवान् । अन्नादीनां ब्रह्मप्रतिपत्तौ द्वारत्वं च 'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुस्ते निचिक्युर्ब्रह्म पुराणम्' (बृ० ४ । ४ १८) इति श्रुत्यन्तरप्रसिद्धमेवेहोक्तम् । स भृगुर्ब्रह्मोपलब्धौ द्वाराणि ब्रह्मलक्षणं च श्रुत्वा 'इदमित्थम्' इति स्वरूपेण ब्रह्मानिर्दिशन्पिता ब्रह्मप्रतिपत्तौ नूनं साधनान्तरमपेक्षत इत्यनिर्दिष्टमपि तपसो ब्रह्मप्रतिपत्तौ साधनत्वमवगत्य भृगुः—कुत्रेदं पित्रोदितं लक्षणं वर्तते, क्वेदं परिपूर्णं भवतीत्येकाग्रेण चेतसा पर्यालोचनात्मकं तपः कृत्वा 'अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते । अन्नेन जातानि जीवन्ति । अन्नं प्रयन्त्यभिसंविशन्तीति' । तस्माद्युक्तमन्नस्य ब्रह्मत्वमिति प्रथमतोऽन्नं ब्रह्मेति व्यजानाज्ज्ञातवान् । अन्नं ब्रह्मेति विज्ञायाप्यन्नस्योत्पत्तिदर्शनाच्छ्रुत्युक्तं लक्षणं तत्र परिपूर्णं न भवतीति पुनरपि संशयमापन्नो भृगुः पितरमुपसृत्याधीहि ब्रह्मेत्युक्तवान् । ततो यावद्ब्रह्मणो लक्षणं परिपूर्णं न भवति यावच्च ते जिज्ञासा न निवर्तते तावत्तप एव ते



१ 'अन्नस्यान्नम्' इत्यानन्दाश्रमस्थपुस्तके नास्ति ।

ब्रह्मप्रतिपत्तौ साधनं न त्वन्यदिति प्रतिपर्यायं तपसा ब्रह्म विजिज्ञासस्वेति पिता तस्मा उक्तवान्। ततस्तपसा विशुद्धात्मा प्राणादिष्वपि साकल्येन ब्रह्मलक्षणमपश्यञ्शनैः शनैरान्तरमानन्दं ब्रह्मेति प्रतिपन्नवानित्यर्थः प्रकरणस्य प्रतीयते। तत्र कथम् 'अन्नं ब्रह्म' इति ब्रह्मशब्दादन्नादौ 'अन्नाद्ध्येव' इति ब्रह्मलक्षणाच्चान्नस्य ब्रह्मत्वं वक्तुं शक्यम्। तथा सति पुनरुपसत्त्यनुपपत्तेः।

यत्तु चन्द्रिकायाद्–अन्नादीनां ब्रह्मत्वेऽपि 'तद्विज्ञाय पुनरेव वरुणं पितरमुपससार, अधीहि भगवो ब्रह्म' इति पुनरुपसत्तिस्त्वेकं रूपं निदिध्यासनेन साक्षात्कृत्य रूपान्तरस्य गुणान्तरविशिष्टतया निदिध्यासनार्थमनुज्ञामादातुं तत्रानुजानीहीति वक्तव्ये यदधीहीत्याह तद्विनयातिशयादित्युक्तम्। तदसत्। अधीहीत्यस्यानुजानीहीत्यर्थकत्वे मुख्यार्थत्यागापत्तेः। अस्मदुक्तरीत्या निर्वाहे लक्षणायां बीजाभावात्। किंच—एवं हि पुनरुपसत्तौ तत्तद्ब्रह्मरूपसाक्षात्कारे भृगोरकृतार्थताबुद्धिरेव हेतुर्नान्यत्। तथा चान्नाद्येकद्वित्रादिब्रह्मरूपसाक्षात्कारेऽप्यकृतार्थताबुद्ध्या ततोऽपि गुणान्तरविशिष्टतया निदिध्यासनायानुज्ञामादातुं पुनरुपसन्नस्य तस्याऽऽनन्दमयान्तपञ्चब्रह्मरूपसाक्षात्कारानन्तरमपि ब्रह्मणोऽनन्तरूपतयाऽनन्तगुणविशिष्टतया चाकृतार्थताबुद्ध्या ततोऽपि गुणान्तरविशिष्टतया निदिध्यासनायानुज्ञामादातुं पुनरनुपसत्तौ बीजाभावात्। नापि ब्रह्मणोऽनन्तरूपत्वेऽप्यन्नमयादिपञ्चरूपसाक्षात्कार एव कृतार्थतेति भृगोर्निश्चये किंचिद्गमकमस्ति।

अथ 'ब्रह्मविदाप्नोति परम्' इत्युपक्रमे ब्रह्मज्ञानस्य फलवत्त्वं प्रतिज्ञाय किं तद्ब्रह्म किंवा तद्वेदनमित्याकाङ्क्षायाम् 'सत्यं ज्ञानमनन्तं ब्रह्म' इति तल्लक्षणमुक्तम्। तत्रानन्तपदबोधितं सर्ववस्त्वनुस्यूततया सर्वान्तरत्वमेव 'यो वेद निहितं गुहायाम्' इत्यनेन वेदनस्वरूपकथनपरेण 'तस्माद्वा एतस्मात्' इत्यादिना चोपपादितम्। तस्य च सर्वान्तरत्वस्याऽऽनन्दमय एव पर्यवसानस्य कृतत्वात्तस्यैवोक्तलक्षणवत्तया परमाप्तिफलक-

वेदनविषयत्वजगत्कारणत्वादिना ब्रह्मत्वावगमान्निरुक्ताभ्यास आनन्दमयविषय इति निश्चीयते इति चेत् । न । आनन्दमयस्योपक्रान्तसर्वान्तरत्वपर्यवसानस्यासिद्धेः । अन्नमयादिभ्य इव ततः 'अन्योऽन्तर आत्मा' इत्यनाम्नानात्तत्सिद्धिरिति चेत् । न । आनन्दमयपर्यायोत्तरम् 'तस्यैष एव शारीर आत्मा । यः पूर्वस्य' इत्यानन्दमयादन्यस्यान्तरात्मन आम्नानेन तत्रैव सर्वान्तरत्वपर्यवसानेन पुच्छब्रह्मरूपतद्विषय एवाभ्यास इति वक्तुं युक्तत्वात् । अभ्यासस्य पुच्छब्रह्मविषयत्वेऽपि 'सोऽकामयत' इति पुंलिङ्गनिर्देशोपपत्तिः प्राक् समर्थितैव ।

वस्तुतस्तु सर्वान्तरत्वं नात्रोपक्रान्तम् । 'यो वेद निहितं गुहायाम्' इति गुहानिहितत्वमात्रोक्तेः । तस्य चाऽऽनन्दमय एव पर्यवसानं तस्य जीवत्व एव लिङ्गम् । × द्विप्रकारेण हि ब्रह्मणो गुहानिहितत्वम् । ब्रह्मणः पारमेश्वररूपेण जैवरूपेण च । तत्र च 'यो वेद निहितं गुहायाम्' इत्यत्र गुहायां स्थितमित्यनभिधाय निहितमित्युक्त्या पारतन्त्र्यावगमात् । 'परमे व्योमन्प्रतिष्ठितम्' इति तस्य परमेश्वराश्रितत्वोक्तेश्च । अत्र हि परमव्योमशब्दः परमेश्वरपरः । भृगुवल्ल्यां सप्रपञ्चं ब्रह्मस्वरूपं निरूप्य 'सैषा भार्गवी वारुणी विद्या । परमे व्योमन्प्रतिष्ठिता' इति ब्रह्मपरपरमव्योमशब्दसमानार्थकत्वानुरोधात् । अत एवोपसंहारेऽपि 'ब्रह्म पुच्छं प्रतिष्ठा' इति तस्य ब्रह्माश्रितत्वं प्रतीयमानं न यथाकथंचिन्नेयम् । उपक्रमोपसंहारैकरूप्यस्य न्याय्यत्वात् । न चैवं सति 'ब्रह्मविदाप्नोति परम्' इति संक्षिप्य कथितस्यार्थस्य 'यो वेद निहितं गुहायाम्' इत्यादि 'सोऽश्नुते सर्वान्कामान्' इत्यनेन विवृतत्वेन गुहानिहितस्य जीवत्वे तद्वेदनस्य सर्वकामावाप्तिफलकत्वासंभव इति शङ्क्यम् । गुहायां निहितं सत्यं ज्ञानमनन्तं ब्रह्मेति यो वेदेति योजनया सर्वकामावाप्तेर्ब्रह्मज्ञानफलकत्वस्यैव प्रतीतेः । न च जीवस्य

× द्विप्रकारेणेति । द्वौ भागौ यस्मिन्द्विभागः । स चासौ प्रकारश्चेति विग्रहः । शाकपार्थिवादित्वादुत्तरपदलोपः । प्रकारद्वयेनेति यावत् । प्रकारद्वयेनेत्युचितः पाठः ।

ब्रह्मताज्ञानस्य ब्रह्मणा सह सर्वकामावाप्तिः फलं तव मते न संभवतीति वाच्यम्। यतः 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता' (तै० २।१) इत्यत्र न सहार्थे तृतीया। सहेत्यस्य हि न ब्रह्मणेत्यनेनान्वयः। वैदिकसंप्रदायागतसहेत्यत्र[ त्य ]विरामस्य तत्र गमकत्वात्। किंतु सहेति यौगपद्ये। कामानित्यत्रान्वेति। ब्रह्मणेतीत्थंभावे तृतीया। तादात्म्येन ब्रह्माश्नुवानस्य लक्षणम्। तथा च ब्रह्मात्मना सर्वान्कामानश्नुते। 'एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति'(बृ०४।३।३२) इति श्रुतेर्बिम्बभूतानन्दानुभवेन सर्वकामावाप्तेः सुकरत्वान्न निर्विशेषप्रकरणाननुगुणयम्। न च पूर्वपर्यायेषु 'अन्नाद्वै प्रजाः प्रजायन्ते' 'प्राणं देवा अनुप्राणन्ति' 'विज्ञानं यज्ञं तनुते' (तै० २।२–३–५) इति श्लोकानामवयवविषयत्वदर्शनात्प्रायपाठादानन्दमयपर्यायेऽपि 'असन्नेव स भवति। असद्ब्रह्मेति वेद चेत्' (तै० २ ६) इत्यादिनिगमनश्लोकस्याऽऽनन्दमयविषयत्वे तत्रत्यब्रह्मशब्दाभ्यास आनन्दमयविषय इति वाच्यम्। मनोमयपर्याये 'यतो वाचः' इति श्लोकस्य ब्रह्मविषयत्वेन तादृशनियमासिद्धेः प्रायपाठभङ्गात्। यदि च तत्रापि ब्रह्मविषयकप्राप्त्याश्रयतया मनः प्रतिपादितमेव, प्राप्तेर्ज्ञानरूपत्वात्तस्य च मनोवृत्तिरूपत्वादिति श्लोकस्य कथंचिन्मनोविषयत्वमित्युच्यते तदा प्रकृतेऽपि 'असन्नेव स भवति' इत्यत्र स इत्यनेन परामृष्टस्याऽऽनन्दमयस्य ब्रह्मविषयकसदसद्वेदनाभ्यां सत्त्वासत्त्वाश्रयतया प्रतिपादनमस्तीति श्लोकस्याऽऽनन्दमयविषयत्वं वक्तुं सुवचम्। परं तन्नाऽऽनन्दमयस्य ब्रह्मत्वसाधकम्। तेनाऽऽनन्दमये ब्रह्मशब्दाभ्यासासिद्धेः। 'असन्नेव स भवति' इति श्लोकस्थसर्वनाम्नाऽतिसंनिहितत्वेन परामृष्टस्य प्रियादिविशिष्टस्य सत्त्वासत्त्वशङ्कानास्पदतया तन्निवारणाय प्रवृत्तमन्त्रस्य तद्विषयत्व आनर्थक्यप्रापातस्य पूर्वमुक्तत्वाच्च। एतेन तद्धेतुव्यपदेशप्रमान्त्रवर्णिकगानव्यपदेशादयोऽप्यानन्दमये सुतरामसिद्धा इति व्याख्यातमायमेव। 'सोऽकामयत' इति पुंलिङ्गेन सर्वनाम्नाऽतिसंनिहितस्याऽऽनन्दमयान्तरात्मनः 'तस्यैष एव शारीर आत्मा' (तै०

२।५) इति निर्दिष्टस्यैव परामर्शो नाऽऽनन्दमयस्येत्यप्युक्तमेवेति न तद्बलादपि तद्धेतुव्यपदेशोपपत्तिः।

यदप्यन्नमयादीनामपि ब्रह्मशब्दादेव ब्रह्मत्वापत्तिरिति जयतीर्थोक्तं श्रुतावन्नमयस्याऽऽदित्वेऽपि सूत्र आनन्दमयस्येतरोपलक्षकतयोपादानं युक्तमिति चन्द्रिकोक्तम्। तदप्यसत्। अभ्यासादित्यसंगतेः। यद्यपि 'विज्ञानं देवाः सर्वे। ब्रह्म ज्येष्ठमुपासते। विज्ञानं ब्रह्म चेद्वेद' (तै० २।५) इति विज्ञाने ब्रह्मशब्दाभ्यासोऽस्ति तथाऽपि 'येऽन्नं ब्रह्मोपासते' 'ये प्राणं ब्रह्मोपासते' (तै० २।२ ३) इति सकृदेव ब्रह्मशब्दश्रवणादन्नमयादौ ब्रह्मशब्दाभ्यासाभावात्। यदि च ब्रह्मशब्दाभ्यासादिति भाष्ये ब्रह्मार्थकशब्दाभ्यास एव विवक्षितः। तथा च 'एतमन्नमयमात्मानमुपसंक्रम्य' (तै०३।१०) इत्यादौ ब्रह्मशब्दसमानार्थकात्मशब्दस्यापि सत्त्वात्। 'येऽन्नं ब्रह्मेत्यादिरूपादभ्यासात्तैत्तिरीयके' इत्यनुव्याख्यानानुसारेणैकविषयासकृदुक्तिलक्षणमुख्याभ्यासाभावेऽप्यसकृदुक्तिरस्ति। तथा चान्नमयादिविषयत्वेन ब्रह्मशब्दस्यासकृच्छ्रुतत्वाभिप्रायोऽभ्यासशब्द इति सुधोक्तरीत्या वा नानुपपत्तिरिति विभाव्यते तदाऽपि सूत्रे प्रथमोपस्थितान्नमयनिर्देशत्यागे बीजाभावः।

यत्तु—अन्नमयादीनां तर्हि ब्रह्मतां किं नासूत्रयदित्याक्षिप्य सूत्रस्याल्पाक्षरत्वादादिमत्त्वेऽप्यानन्दमयस्य संगतत्वेन ग्रहणमिति जयतीर्थोक्तं समाधानम्, यच्चात्र श्रुतावन्नमयस्याऽऽदित्वेऽपि सूत्र आनन्दमयस्येतरोपलक्षकत्वेनोपादानं युक्तम्, तत्र जिज्ञासासूत्राक्षेपकस्यावयवत्वादिपूर्वपक्षहेतोः सत्त्वादिति चन्द्रिकोक्तं चासत्। जिज्ञासासूत्रासंगतेः प्रागेव निरस्तत्वात्। अन्नमयेऽप्यद्यत्वश्रुतिविकारार्थतोपपादकस्य 'अन्नात्पुरुषस्तस्मात्सर्वौषधमुच्यते' इत्यादेः पूर्वपक्षोपपादकस्य सत्त्वाच्च। एवमन्नमयादितः पूर्वपूर्वस्मादुत्तरोत्तरस्य प्राणमयादेरन्यत्वोपदेशेन न पञ्चानां ब्रह्मता। ब्रह्मशब्दमात्रं च 'ये नाम ब्रह्मोपासते' इत्यादाविव न ब्रह्मतागमकं किंतु ब्रह्मत्वेनोपासनमात्रम्।

यत्तु—नाविद्यमानं ब्रुवते वेदा ध्यातुं न वैदिकाः ।
न बत रमन्त्यहो असदुपासनयाऽऽत्महनने ॥

इति स्मृत्या 'अचेतनासत्यायोग्यान्यनुपास्यान्यफलत्वाविपर्ययाभ्याम्' इति संकर्षणसूत्रेण चासदुपासनाया निषेधात् 'नाम ब्रह्म' इति वाक्ये ब्रह्मशब्दः

नामाभिमानिनी चोषा तस्यां ब्रह्म हरिं स्मरेत् ।

इति स्मृत्यनुरोधेन ब्रह्माधिकरणे नामपदार्थोषादौ गौणः । नामेति प्रथमावचनं वा 'वसन्तो मारुतः' इति वत्सप्तम्यर्थे सप्तम्या वा स्वादेशः । 'सुपां सुलुक्' (पा०सू०७।१।३९) इति सूत्रात् । अन्यथा 'श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मवित्' (छा०७।१।३) इति शुद्धात्मानं पृष्टवन्तं नारदं प्रति नामोपास्तिकथनमयुक्तमेव स्यात् । उषःकालादिकं ध्येयस्य हरेराधार इति उपासीत । उषादिकं यथाऽऽधारो भवति तथोपासीत । उषःकालादौ विद्यमानः सन्हरिमुपासीतेति तादृशस्मृतेरर्थः । एवं प्रतिमायामपि देवताधारत्वबुद्ध्यैवोपासनं न तु देवतातादात्म्यबुद्धित इत्यादिकमानन्दतीर्थीयैरुक्तम् । तदसत् । उक्तस्मृत्याऽसदुपासनानिषेधेनान्नादौ ब्रह्मदृष्टिविधानासंभवेऽपि नामादिवाक्य इवात्रापि त्वदुक्तरीत्यैव प्रथमायाः सप्तम्यर्थे वृत्तिं सप्तम्या वा स्वादेशमुपेत्य 'येऽन्नं ब्रह्मोसते' इति श्रुत्यर्थसंभवेन ब्रह्मश्रुतिमात्रेणान्नादेर्ब्रह्मत्वासिद्धेः । न च सर्वकारणत्वलिङ्गादन्नस्य ब्रह्मता, नामादौ तदभावान्न तस्य सेति वाच्यम् । 'ओषधीभ्योऽन्नम् । अन्नात्पुरुषः' ( तै०२ । १ ) इति जन्यत्वलिङ्गेनासंजातविरोधिना तस्यान्यथा नेयत्वात् । 'अन्नाद्वै प्रजाः प्रजायन्ते' इति प्रजाशब्देन संकोचावगतेश्च न सर्वकारणत्वं तस्य । उक्तस्मृतिसूत्रयोरत्यन्तासदुपास्तिनिषेधपरत्वसंभवेन नामादौ ब्रह्मत्वेनोपासनवत् 'येऽन्नं ब्रह्मोपासते' इत्यादावन्नादौ ब्रह्मत्वेनोपासनविधिपरत्वेन ब्रह्मशब्दोपपत्तेस्तस्यान्नादौ ब्रह्मत्वासाधकत्वाच्च ।

ननु—उक्तस्मृत्यादिनिषेध्योपासनाया अत्यन्तासत्त्वं प्रातीतिकत्वमलीकत्वं वा । नाऽऽद्यः । वाय्वेतुत्वादेरपास्य-

त्वात् । न चोपास्यत्वेन विहितं यत्तदन्यप्रातीतिकत्वं तदिति वाच्यम् । तदुपासनस्याप्रसक्तत्वेन तन्निषेधायोगात् । अत एव नान्त्यः । अलीकस्योपास्यत्वेनाविहितत्वात्तदुपासनस्याप्रसक्तत्वेन तन्निषेधायोगात् । अथोपास्यत्वेनाविहितस्यापि देहादे रागप्राप्तोपास्यत्वेन निषेधार्हत्वमिति प्रथमपक्षः साधुरेवेति चेत्तर्हि स्मृतेः प्रतिषेधपरत्वेन सावकाशत्वेऽपि सूत्रानर्थक्यम् । न्यायाप्रतिपादनात् । नहि सूत्रं विधिप्रतिषेधरूपम् । किंतु न्यायविशेषप्रतिपादनद्वारा प्रतिषेधतात्पर्यनिर्णायकमिति चेत् । अत्र वदन्ति—अत्यन्तासत्त्वं हि प्रकृत उपास्यत्वेनाविधेयत्वायोग्यत्वरूपं विवक्षितम् । तत्त्वं च द्वेधा । उपास्यत्वेन विध्यभावात्तद्भावे न्यायविरोधाद्वा । तथा च देहादेरुपास्यत्वेनाविधेयत्वेऽप्युपास्यत्वेन रागप्राप्तत्वात्स्मृत्योपास्यत्वेन निषेध्यता । सूत्रेण तु यत्र व्यावहारिकं प्रातीतिकं च विहितोपास्यत्वेन प्रसक्तं तत्र व्यावहारिकमेवोपास्यं शास्त्रार्थो न तु प्रातीतिकम् । व्यावहारिकस्य संभवे प्रातीतिकस्यानादेयत्वात् । यथोद्गीतो(थो)पासनायामनन्तत्वादिकं प्रातीतिकमाकाशादौ नोपास्यं किंतु ब्रह्मणि सत्यम् । यथा वा सत्यकामत्वादिकं ब्रह्मणि व्यावहारिकमुपास्यं न प्रातीतिकम् । देवताधिकरणन्यायेनोपासनावाक्यस्य व्यावहारिकप्रामाण्यात् । एवं यत्र चेतनमचेतनं चोपास्यं विधिना प्रसक्तं तत्र चेतनमेवोपास्यं शास्त्रार्थः । श्रद्धातिशयलाभात् । यत्र चोपास्यत्वेन यं पुरुषं प्रति यदयोग्यं यथा तामसं प्रति परमसात्त्विकी विष्णुमूर्तिः सात्त्विकं प्रति वा तामसी भैरवविशेषादिमूर्तिस्तत्तेन नोपास्यम् । अश्रद्धासंभवात् । इति बोध्यत इति न सूत्रवैयर्थ्यम् । 'वाचं धेनुमुपासीत, योषितमग्निं ध्यायीत' इति प्रातीतिके वाग्धेनुतादात्म्य उपास्यत्वदर्शनादुक्तस्मृत्यादेर्मिथ्याभूत उपास्यत्वनिषेधपरत्वासंभवादुक्तरीत्याऽत्यन्तासदुपास्तिनिषेधपरत्वं त्वयाऽप्यवश्यं वाच्यम् ।

यत्तु 'रात्रिं धेनुमिवायति' इति श्रुत्यन्तरे रात्रौ धेनुसादृश्योक्तेः । 'रेतो जुहोति' इति श्रुत्यन्तरे रेतोरूपाहुत्याधार-

त्वस्याग्नावुक्तेर्धेनुशब्दाग्निशब्दौ गौणौ। 'असौ वाव लोको गौतमाग्निः' इत्यादिपञ्चाग्निविद्यायां छान्दोग्यवाक्ये स्वर्लोकादयः प्रतीयमाना न पञ्चाग्नयः किंतु—

नारायणादयः पञ्च क्रमात्पञ्चाग्नयः स्मृताः।
अदनादङ्गनेतृत्वान्वितरामबलत्वतः॥

इति भाष्योक्तरीत्या नारायणादयः। योगेन तदर्थावगमादितिवत् 'योषितमग्निं ध्यायीत' इति वाक्येऽग्निशब्दो यौगिको वेति परैरुक्तम्। तदसत्। आरोपेण मुख्यत्वसंभवे गौणताया अन्याय्यत्वात्। न चैवं सति गौण्युच्छेदप्रसङ्गः शङ्क्यः। यत्रोपासनाया अश्रवणं यथा—*कौण्डपायिनामयने श्रुते 'मासमग्निहोत्रं जुहोति' इत्यादौ

---

* कौण्डपायिनामयन इति। तत्र हि 'उपसद्भिश्चरित्वा' मासमग्निहोत्रं जुहोति' इति श्रूयते। अत्र 'यावज्जीवमग्निहोत्रं जुहोति' इत्यनेन प्राप्तं नित्यमग्निहोत्रमनूद्य मासरूपो गुणो विधीयतामहोस्वित्कर्मान्तरमेतदिति संशयः। किं तावत्प्राप्तम्। नित्यमग्निहोत्रमनूद्य मासरूपो गुणो विधीयते लाघवादिति। अत्रोच्यते—किं मास एव गुणत्वेन विधीयतेऽथवोपसदोऽपि। न तावदाद्यः। नित्याग्निहोत्रप्राप्तिरहितानामुपसदामपि त्वन्मते विधातव्यत्वात्। नापि द्वितीयः। 'प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः' इति न्यायेन वाक्यभेदापत्तेः। तस्मात्कर्मान्तरमिति सिद्धान्तः। ननूक्तरीत्या गुणविधिर्मा भून्नाम तथाऽपि कर्मान्तरत्वे किं मानमिति चेत्। प्रकरणान्तरमिति ब्रूमः। नह्येतन्नित्याग्निहोत्रस्य प्रकरणम्। किंत्वयनस्यैतत्प्रकरणम्। अयनमारभ्याधीतत्वात्। ननु तर्हि नित्याग्निहोत्रे गुणविधिशङ्का कुत इति चेत्। अग्निहोत्रशब्देन समर्पणादिति गृहाण। स चाग्निहोत्रशब्दोऽवश्यमुच्चारणीयः। अन्यथा नित्याग्निहोत्रधर्माणामतिदेशो न स्यात्। ननु नायमग्निहोत्रशब्दो नित्याग्निहोत्रधर्माननतिदेष्टुमर्हति। अग्निहोत्रेति नाम्न उभयोरग्निहोत्रयोर्मुख्यवृत्त्या समानत्वादिति चेत्। मैवम्। अग्नये होत्रं यस्मिन्कर्मणि तदग्निहोत्रमित्यवयवार्थे नित्याग्निहोत्रे संपाद्य तन्नामधेयत्वं तत्प्रख्यशास्त्रान्निर्णीतम्। अतस्तत्रैवायं शब्दो मुख्यः। न चोभयत्र मुख्यत्वं संभवति। अनेकार्थत्वस्यान्याय्यत्वात्। तस्मान्मुख्यत्वासंभवान्मासाग्निहोत्रे गौण्या वृत्त्या वर्तितुं नित्याग्निहोत्रधर्माननतिदिशतीति सिद्धम्।

वेद आरोपस्य निष्प्रयोजनतयाऽग्निहोत्रसादृश्यार्थकाग्निहोत्रपदेन नैयमिकाग्निहोत्रधर्माणां तात्पर्यविषयाणां मासाग्निहोत्रे प्राप्त्यर्थं तथा सिंहो देवदत्त इत्यादौ लोक आरोपस्य निष्प्रयोजनतया सिंहगुणशौर्यादिप्रतीतितात्पर्यनिर्वाहार्थं च गौण्या आवश्यकत्वात् । रूढ्यर्थस्मारितगौणार्थविवक्षायां रूढ्यर्थस्यात्यागात् । यौगिकार्थस्य च नानावयववृत्तिसापेक्षत्वेन रूढ्यर्थापेक्षया दुर्बलत्वात् । रूढ्यर्थस्य सादृश्यादिप्रतियोगितया शाब्दबोधविषयत्वे संभवति सति गौणार्थत्यागेन यौगिकार्थग्रहणस्य रथकाराधिकरणविरुद्धत्वाच्च । ' नाम ब्रह्मेत्युपासीत ' इत्यादौ प्रथमाया सप्तम्यर्थे वृत्तिं सप्तम्या वा स्वादेशं स्वीकृत्य वाक्यार्थवर्णने समानविभक्तिकत्वाभावेनेतिशब्दानन्वयप्रसङ्गाच्च । नाम्नि ब्रह्मत्वारोपेणोपासनमेव वाक्यार्थ इति युक्तम् । एवं च प्रतिमादावपि देवतात्वारोपेण मुख्यत्वसंभवे गौणार्थग्रहणमन्याय्यम् ।

यत्तु—प्रतिमायां देवतात्वारोपेणोपासनया फलानुत्पत्तिः ।

> यः स्वात्मबुद्धिं कुणपे त्रिधातुके
> स्वधीः कलत्रादिषु भौम + ईज्यधीः ।
> यस्तीर्थबुद्धिः सलिले न कर्हिचि-
> ज्जनेष्वभिज्ञेषु स एव गोखरः ॥

इति स्मृत्या शिलादेव इति ज्ञानस्य भौम ईज्यधीरिति निषेधादिति परैरुक्तम् । तदसत् । मणिप्रभायां मणिबुद्ध्या धावतो मणिलाभवत्संवादिभ्रमरूपप्रतिमादेवताज्ञानस्य फलजनकतायाः शास्त्रप्रामाण्येन स्वीकारात् । स्पष्टं चेदमाकरे । यस्स्वात्मबुद्धिमित्युक्तस्मृतेर्देहादिभिन्न आत्मा । कलत्रभौमसलिलभिन्नाः साधवः स्वीयाः पूज्यास्तीर्थभूताश्चेत्यर्थे तात्पर्याद्देहादिभिन्नो नाऽऽत्मा । कलत्रादिभिन्नाः साधवः स्वीयत्वपूज्यत्वतीर्थत्वशून्या इति भ्रमव्युदासपरत्वेन शिलादौ देवतात्वारोपनिषेधकत्वाभावात् । प्रथमतश्चन्द्रं द्रष्टुमसमर्थं बालं प्रति शाखां प्रदर्श्य पश्चाद्यथा चन्द्रो दर्श्यते तद्वत्प्रथमतः शुद्धात्मनो दुर्बोधत्वात्पश्चा-

---

+ ईज्यधीरिति । ईज्यो गुरुस्तद्धीर्बुद्धिः । पूज्यबुद्धिरिति यावत् ।

तेनापृष्टमपि बोधयितुं नामाद्यवच्छिन्नात्मरूपानात्मोपास्तिमुक्त्वा पश्चाद्भूमाख्यशुद्धात्मोपदेशः कृत इति शुद्धात्मानं पृष्टवन्तं नारदं प्रति नामोपास्तिकथनमयुक्तमिति दूषणानवकाश इत्यलमप्रस्तुतप्रासङ्गिकविचारेण ।

एवमन्नस्य ब्रह्मत्वे 'अद्यतेत्ति च भूतानि तस्मादन्नं तदुच्यते' इति श्रुत्युक्तमद्यत्वमपि तत्रानुपपन्नमेव स्यात् ।

यत्तूपजीव्यत्वमेवाद्यत्वम् । 'स वा एषः' इत्यन्यप्रारम्भादित्यानन्दतीर्थोक्तम् । तदपि न साधु । यद्यद्यत्वमुपजीव्यत्वं तदाऽत्तृत्वमुपजीवकत्वं स्यात् । तच्च बाधितम् । नहि भूतानि परमात्मन उपजीव्यानि । किंचोपजीवनं नादिधातोः शक्यम् । 'अदि भक्षणे' इति भक्षण एव तस्य शक्तत्वात् । न वा तत्रानादितात्पर्यमाश्रित्य लाक्षणिकप्रयोगोऽपि दृष्टः । न चाद्यत इत्यत्रादिरुपजीवनपरः, अत्तीत्यत्र संहारपर इति वैरूप्ये किंचिद्गमकमस्ति । संहारोऽपि नादेर्मुख्योऽर्थः । प्रसिद्धान्नमयादिपरत्वे तूभयं युक्तम् । पुरुषात्मना परिणतस्य तस्य भूताद्यत्वात्तदत्तृत्वाच्च । तस्मादन्नमयादयः कोशा एव, न ब्रह्म । अत एव 'ओषधीभ्योऽन्नम् । अन्नात्पुरुषः' (तै० २ । १) इति प्रसिद्धान्नविकारदेहमुक्त्वा 'स वा एष पुरुषोऽन्नरसमयः' (तै० २ । १) इति तदेतच्छब्दाभ्यां प्रकृतातिसंनिहितान्नविकारः प्रत्यक्षशिरःपाण्याद्याकृतिमान्परामृष्टः ।

यत्तु 'स वा एषः' इत्यन्यप्रारम्भादित्यनेन यस्मादाकाशादिकमुत्पन्नं स एवाऽऽत्मा तदेतत्पदाभ्यां परामृश्यत इत्यानन्दतीर्थोक्तम् । तदसत् । उक्तरीत्या प्रकृतातिसंनिहितान्नमयपुरुषपरामर्शसंभवे दूरस्थपरामर्शकल्पनाया अन्याय्यत्वात् । दूरस्थपरामर्शेऽप्यस्मद्रीत्योपादानपरमात्मतादात्म्योपदेशपरतयोपपत्तेः । त्वद्रीत्याऽपि 'तत्त्वमसि' इत्यादौ तच्छब्दस्य तदधीने लक्षणयोपपत्तेश्च न ततोऽन्नलक्षणावत्तदेतच्छब्दयोरपि तदधीने लक्षणाकल्पने बीजाभावः शक्यः । मयस्य ब्रह्मत्वम् । न च लक्षणाकल्पने बीजाभावः शङ्क्यः । 'अन्नात्पुरुषः' इत्यादि 'अद्यतेत्ति च' 'ओषधीभ्योऽन्नम् । अन्नात्पुरुषः' इत्यादि-

विकारोपपादकबहुतराब्रह्मलिङ्गदर्शनस्यैव बीजत्वात् । एवं प्राणमयादीनामप्युक्तरीत्या परस्परान्यत्वबोधनान्मुख्यार्थस्य प्रसिद्धस्य त्यागात्ततोऽप्यन्तरात्मश्रवणाच्च न ब्रह्मता । मनोमये तु न ब्रह्मशब्दः श्रूयते । आनन्दात्मकशुद्धब्रह्मसाक्षात्कारसाधनत्वेन विशुद्धमनसस्तूयमानत्वादिति दिक् ।

प्रचुरानन्दत्वादानन्दमयो विष्णुरिति द्वितीयसूत्रार्थोऽप्यसाधुरेव । आनन्दमयशब्दस्य हि प्रचुरानन्दार्थकत्वम् ' तत्प्रकृतवचने मयट् ' ( पां० सू० ५ । ४ । २१ ) इति सूत्रेण प्रचुरतायां विहितमयडन्तत्वाद्वक्तव्यम् । तच्च व्याकरणतत्त्वज्ञा अस्मदीयाः केचिन्न क्षमन्ते । तथा हि तदभिप्रायः—इदं सूत्रं वैयाकरणैरित्थं व्याख्यातम् । तदिति प्रथमान्तोपस्थापकम् । तथा च प्रथमासमर्थात्प्रकृतस्य वचने प्रतिपादने विवक्षिते मयट् भवतीति सूत्रार्थः । अत्र च प्रकृत इत्येव सिद्धे वचनग्रहणाल्लोके मयडन्तैः शब्दैर्यादृशस्य प्रकृत्यर्थस्य प्रतिपादनं प्रसिद्धं तत्त्वेन प्रकृत्यर्थस्य प्रतिपादने विवक्षिते मयड् भवतीति लभ्यते । लोके च प्राचुर्येण प्रस्तुते प्रकृत्यर्थ एव विवक्षिते मयडन्तप्रयोगदर्शनात्प्राचुर्येण प्रस्तुतत्वं वचनग्रहणाल्लभ्यते । अस्मिंश्च पक्षे प्राचुर्येण प्रस्तुतत्वं प्रकृत्यर्थः । मयट् स्वार्थिक एव तदर्थद्योतकः । तस्य चोदाहरणम्—अपूपमयाः पर्वाणि । प्राचुर्येण प्रस्तुता अपूपा इत्यर्थः । अस्तु वा प्राचुर्येण प्रस्तुतत्वं प्रत्ययार्थस्तथाऽपि स विभक्त्यर्थसंख्यावत्प्रकृत्यर्थे विशेषणमेव । व्युत्पत्तिवैचित्र्यात् । अपरस्त्वर्थः—प्रथमासमर्थात्प्रस्तुतत्वविशिष्टप्रकृत्यर्थसंबन्धित्वेनान्यस्मिन्नर्थे गम्यमाने मयट् भवति । अस्मिंश्च पक्ष उच्यतेऽस्मिन्निति वचनमित्यधिकरणार्थल्युडन्तवचनशब्दं स्वीकृत्यान्यपदार्थलम्भनं बोध्यम् । अन्नमयो यज्ञ इति तदुदाहरणम् । प्रस्तुतान्नाधिकरणो यज्ञ इति तदर्थः । अस्मिन्पक्षे प्राचुर्यं न प्रकृत्यर्थः किंत्वधिकरणमात्रम् । वचनशब्दे धात्वर्थस्याविवक्षितत्वात् । तदत्र पक्षद्वयेऽपि प्राचुर्येण प्रस्तुत आनन्द आनन्दमयः, प्रस्तुतोऽस्मिन्नानन्द आनन्दमय इति वा प्रस्तुतत्वमर्थमानन्दं स्वीकृत्यैवाऽऽनन्दमयपदं व्याख्येयम् । तच्च

न संभवति । पूर्वस्मिन्ग्रन्थ आनन्दस्याप्रस्तुतत्वात्। शाब्दे चोत्सर्गतः शाब्दस्यैव प्रस्तुतत्वस्य वक्तुं युक्तत्वात्कथमत्र 'तत्प्रकृतवचने' इति सूत्रेण मयट् भविष्यतीति।

अस्तु वा यथाकथंचिदानन्दस्य प्रस्तुतत्वम्। तथाऽप्यत्र प्राचुर्यार्थकमयड्युक्त एव। तथा हि—अत्र प्राचुर्यशब्देन विवक्षितमाधिक्यं संख्याकृतमुत परिमाणकृतं वा। नाऽऽद्यः। ब्रह्मानन्दानेकत्वे प्रमाणाभावात्। 'आनन्दं ब्रह्मणो विद्वान्' (तै० २।४) इति तदेकत्वश्रवणाच्च। न ह्यसति प्रमाणान्तरे विप्रतिपन्नमयटा तन्निर्णयः संभवति। जगच्चेष्टकत्वादेरप्यनाद्यताधिकैकानन्दमात्रेणाप्युपपत्तेः। न ह्यप्रामाणिकं गौरवमसति प्रमाणान्तरे युक्तमभ्युपगन्तुम्। न च 'यतो वाचो निवर्तन्ते' (तै० २।४) इति श्रुतिरेवानन्तासंख्याकानन्दवत्त्वेयत्तापरिच्छेदकवागविषयत्वं ब्रुवती ब्रह्मानन्दानेकत्वे प्रमाणमित्यपि वक्तुं शक्यम्। अपरिच्छिन्नतामात्रेणापि तस्या अन्यथासिद्धत्वात्। न ह्यसंख्याकानन्तानन्दस्वीकारेऽपि यथाश्रुतं वाङ्मनसागोचरत्वमुपपद्यते। भगवदानन्दा अनन्ता इति वाग्विषयत्वानपायात्। विशिष्य वाचा वक्तुं न शक्यत इति तदर्थोऽपि विशिष्येत्यस्यार्थविचारे शिथिल एव। यतो विशिष्येति सकलविशेषवत्त्वयेत्यर्थकं चेदनेनैव शब्देनाऽऽनन्दो बोध्यस्तथा भवतीति व्याघातः। निवर्तन्त इत्यत्र स्वमतयावद्विशेषनिष्ठानवच्छिन्नप्रकारताशालिबोधजननासामर्थ्यमेव निवृत्तिरित्युक्तावपि मनुष्यानन्दसाधारणमेव। नहि मनुष्याद्यानन्दगता विशेषाः स्वेतरतद्दानन्दव्यावृत्तविलक्षणा विशिष्य केनापि गणयितुं शक्याः। प्रतिपादितं चैतदीक्षत्यधिकरणे विस्तरेण। तस्मात् 'यतो वाचो निवर्तन्ते' इत्यनेनेत उत्कर्षबोधका वाचो निवर्तन्त इत्येवार्थो वाच्यः। स चैकस्मिन्नप्यानन्दे सर्वानन्दान्तरावधिकोत्कर्षाभ्युपगमेनापि निर्वहतीति किमानन्दबाहुल्योपगमेन।

नापि द्वितीयः पक्षः। परिमाणाधिक्यमात्रेण लोकवेदयोः क्वापि मयट्प्रयोगादर्शनात्। न चैकहस्तिमत्यां बहुपदातियुक्तायां

१ °त्वं बोधयन्तीव, इत्यपि पाठ इति मन्यामहे।

सेनायां गजमयी सेनेति प्रयोगः प्रामाणिकः । अत एवोत्कर्ष-मात्रं पूर्णत्वं वा मयडर्थ इति निरस्तम् । एकचातुर्वैद्यमहाशौर्यौदार्यादिगुणशालिब्राह्मणवत्यपरिमितशूद्रभूयिष्ठे परिपूर्णैकतटाकादिमति तदितरान्यभूयिष्ठे ग्रामे वा विविधविचित्ररत्नखचितैकशकटवत्यामनेकचक्रीवदनुबद्धायां वा यात्रायां ब्राह्मणमयोऽयं ग्रामस्तटाकमयो वा ग्रामः शकटमयीयं यात्रेत्यादिप्रामाणिकप्रयोगादर्शनात् । तस्मादन्नमयादिशब्दवद्विकारार्थ एवाऽऽनन्दमय इत्यत्रापि मयट्प्रयोगो युक्तः । एतेन प्रचुरानन्दत्वेनाऽऽनन्दमयपदवाच्यो विष्णुरेवाभ्यासादित्युक्तं तदेव हेत्वन्तरेण प्रतिपादयतीति पराभिमतव्याख्याऽपि प्रत्याख्यातैव । या तु 'सत्यं ज्ञानमनन्तम्' इति मन्त्रवर्णे लक्षणवत्तयोक्तं परमेव ब्रह्मान्नमयादिशब्दपञ्चकेन मीयते, सत्यज्ञानानन्तशब्दानामन्नमयादिशब्दानां चार्थानुसंधान एकार्थत्वप्रतीतेरिति चतुर्थसूत्रव्याख्या साऽपि न युक्ता । सत्यादिशब्दप्रतिपाद्यस्य कालत्रयाबाध्यत्वादेरन्नमयादिशब्दप्रतिपाद्येऽनवगमात्तेषामेकार्थत्वप्रतीतेरसिद्धेः ।

यत्तु सत्यमित्यत्र सच्छब्दः सद्भाववाची । सद्भावश्च जन्म । तथा च जन्मात्मककर्मवाचिनि सच्छब्द उपपदेऽन्तर्भूतण्यर्थाद्याधातोः 'आदन्ताद्धातोरनुपसर्गात्कर्मण्युपपदे कः स्यात्' इत्यर्थकेन 'आतोऽनुपसर्गे कः' (पा० सू० ३।२।३) इति सूत्रेण कप्रत्यये कृते सत्यमिति स्रष्टृत्वमुच्यते । एवमस्ति देवदत्त इत्युक्ते जीवतीति प्रत्ययाज्जीवनमपि सद्भावः । तथा षद्लृ विशरणगत्यवसादनेष्विति स्मरणात्सदिना विशरणादिकमुच्यते । ततश्चास्तेः शत्रन्तस्य सदेः क्विबन्तस्य रूपं सदिति । भावप्रधानं चैतदिति । अन्यत्प्राग्वत् । एवं च सत्यशब्देन जगत्स्रष्टृत्वादिकमुच्यते । तदेवान्नप्राणयोरवगम्यते 'अन्नाद्वै प्रजाः प्रजायन्ते' (तै० २।२) 'प्राणं देवा अनुप्राणन्ति' (तै०२।३) इत्यादिना च । इति तेषामेकार्थताप्रतीतिर्नासिद्धेति पराभिप्रायवर्णनं केषांचित्तन्न वैयाकरणसंमतम् । तथा सति श्रुतौ सद्य इति प्रयोगापत्तेः । अयस्मयादित्वाद्भसंज्ञेत्यपि न श्रद्धेयम् । सत्यादिशब्दस्यायस्मयादिगणपठितत्वासिद्धेः । त्वदीयव्याख्या-

जमात्रेण तत्कल्पनाया अश्रद्धेयत्वात् । अस्तु वा = नव्यमतेऽकृत-
व्यूहपरिभाषाया असत्त्वेन हरिः गच्छतीतिवत्सत्यमित्यस्योप-
पत्तिः । पूर्वमवसानविवक्षया जश्त्वापवादचर्त्वे तत उपपदसमास
इष्टरूपसिद्धेः । तथाऽपि सत्यशब्दस्याबाधिते रूढस्य रूढिं परि-
त्यज्य निरुक्तयौगिकार्थग्रहणे त्वन्मते जन्माधिकरणे 'तद्विजिज्ञा-
सस्व तद्ब्रह्म' इति वाक्ये ब्रह्मशब्दस्य रूढित्यागेन यौगिकार्थ-
ग्रहणे रूढ्यर्थे जीवे 'यतो वै' इत्यादिश्रुत्युक्तजगत्कारणत्वा-
नुपपत्तिवदनुपपत्त्यादिबाधकादर्शनेन तदनुसरणायोगात् । सत्य-
शब्दस्योक्तयौगिकार्थकत्वाभावेऽपि श्रुतिबलादेव कारणत्वसि-
द्धिसंभवात् । भगवतः सूत्रकारस्य तावकाभिप्रायानुसारित्वे
'तल्लिङ्गात्तद्धर्मोपदेशात्' इति विन्यासोपेक्षायां बीजाभावात् ।

---

= नव्यमत इति । अयं भावः—सेदुष इत्यत्र 'वसोः संप्रसारणम्'
इत्यनेन संप्रसारणकरणात्पूर्वमन्तरङ्गत्वादिडागमे कृते ततः शस्प्रत्ययं निमि-
त्तीकृत्य भसंज्ञायां संप्रसारणेऽपीडागमः श्रूयेतेति 'अकृतव्यूहाः पाणिनीयाः'
इति परिभाषा प्राचीनैरङ्गी क्रियते । तदर्थस्तु—अन्तरङ्गशास्त्रीयनिमित्तविनाश-
कबहिरङ्गशास्त्रप्रवृत्तिसंभावनायामन्तरङ्गं न प्रवर्तत इति दीक्षितैरङ्गी क्रियते ।
कैयटस्तु—अन्तरङ्गे कृते ततो बहिरङ्गशास्त्रेणान्तरङ्गशास्त्रीयनिमित्तविनाशे जाते
सति वा प्राप्ते सति जातमप्यन्तरङ्गं निवर्तत इति तदर्थं मन्यते । नवीनास्तु—
निरुक्तवाक्यार्थद्वयमध्ये कैयटोक्तार्थ एव युक्ततर इत्युक्त्वा सिद्धान्ते 'अकृत-
व्यूहाः पाणिनीयाः' इति परिभाषां नाङ्गी कुर्वन्ति । भाष्ये तस्याः क्वाप्यनुल्ले-
खात् । ननु यदि परिभाषा नास्ति तर्हि 'हरिर्गच्छति' इत्यत्र दोषः प्राप्नोति ।
तथा हि—हरिशब्दात्सुप्रत्यये रुत्वविसर्गयोश्च कृतयोः पुनर्गच्छतीत्यनेन संब-
न्धे विसर्गः श्रूयेत । इष्यते तु रेफः । परिभाषास्वीकारे तु गच्छतीत्यनेन
संबन्धेऽवसानस्य विनाशात्तन्निमित्तको विसर्गोऽपि निवर्तत इति चेत् । अत्रैवं
समादधते—परिभाषाया अभावे पूर्वं विसर्गे ततो गच्छतीत्यनेन संबन्धे
विसर्गघटित एव प्रयोगः साधुः । अथवा तद्विषये पदसंस्कारपक्षं परित्यज्य
वाक्यसंस्कारपक्षमेवाङ्गीकृत्य रेफघटितः प्रयोगः साधनीयः । सेदुष इत्यत्रापि
पदसंस्कारपक्षे 'सेद् वस् अस्' इति स्थित इट्संप्रसारणयोः प्राप्तौ प्रतिपद-
विधित्वेन पूर्वं संप्रसारणे ततो वलादित्वाभावादिडागमो नैव प्राप्नोतीति
तत्सिद्धिरिति ।

एवं सर्वज्ञत्वसर्वकर्तृत्वसर्वप्राणनहेतुत्वसर्वभीषकत्वादीनां स्पष्टतया बोधकश्रुतिशतसिद्धार्थस्यातिक्लेशेन सत्यादिशब्देनोक्तिकथननैष्फल्याच्च न किंचिदेतत्।

पञ्चमसूत्रार्थोऽपि न युक्तः। ज्ञात्वा शिवं शान्तिमत्यन्तमेति।
यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः।
तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति॥

इत्यादिश्रुतिभिः शिवज्ञानादपि मोक्षोक्तेः 'तमेव विदित्वा' इत्यादिश्रुतेरपि शिवपरत्वव्युदासे हेत्वदर्शनात्। पुरुषादिशब्दानां विष्ण्वेकनिष्ठत्वनिरसनेन शिवसाधारण्यस्य पुंसूक्तस्यापि शिवपरत्वस्य च पूर्वमेवाऽऽवेदितत्वाच्च।

षष्ठसूत्रार्थोऽप्यनुपपन्न एव। रुद्रानन्दस्य ब्रह्मानन्दशतगुणन्यूनताया अनुक्तेः। नहि बृहस्पतिशब्दः प्रजापतिशब्दो वा शिववाची। योगमात्रस्यातिप्रसङ्गान्न तदादरः साधुः। देवशब्दस्त्रयस्त्रिंशद्वाची। तत्र रुद्रा अपि निविष्टास्तथाऽपि परशिवस्य न तत्र निवेशः। किंतु कार्यरुद्राणामेव। द्वादशादित्येषु निविष्टो विष्णुर्विभूतिविशेष एवेति त्वया वक्तव्यं न्यायसाम्यात्।

सप्तमसूत्रव्याख्याऽपि न साधीयसी। यतो जीवसामान्यमानन्दमय इति शङ्कानिरासायेदं सूत्रमिति हि तव मतम्। 'भेदव्यपदेशाच्च' इति सूत्रेण पूर्वतनेन ब्रह्मरुद्रादेः शतगुणानन्दत्वोक्तेरानन्दमयस्य विष्णुत्वं प्रसाध्यास्त्वानन्दमयो विष्णुस्तथाऽपि कथं तेन ब्रह्मादिजीवानां भेदस्तत्त्वमस्यादिश्रुतिबाधितत्वादित्याक्षेपे तत्त्वमस्यादिश्रुतीनां गौणाभेदपरत्वं व्याख्याय श्रुतिविरोधाभावेऽप्यनुमानविरोधान्न तेषां तेन भेद इत्येतत्सूत्रनिरस्यशङ्काया ब्रह्मादिजीवसमूह एवाऽऽनन्दमय इत्यस्मिन्नर्थ एव पर्यवसानात्। तच्च न संभवति। जीवपूर्वपक्षस्यैवात्रासंगतेः। तथा हि—न तावत्स्वमताभिप्रायेणायं पूर्वपक्षः। उपदर्शितानुमानस्य स्वपक्षप्रातिकूल्येन शङ्कितुमशक्यत्वात्। नाप्यद्वैतिमताभिप्रायेण। तेनाप्यविद्यान्तःकरणोपहितस्य जीवस्य संकल्पपूर्वकजगत्स्रष्टृत्वस्यानभ्युपगमात्। आनन्दमयस्य च

तथा श्रवणमिति त्वयाऽभ्युपगमात्तदुपलक्षितब्रह्मैवाऽऽनन्दमय इति पूर्वपक्षिणा वाच्यम् । तदपि नोचितं वक्तुम् । शुद्धस्य ब्रह्मणोऽभोक्तृत्वेनोक्तानुमानस्य तद्विषये तेन शङ्कितुमशक्यत्वात् । अस्यानुमानस्याद्वैतिपूर्वाचार्यैः सर्वशरीरेषु जीवैक्यसाधन एवोपन्यस्तत्वाच्च न शुद्धब्रह्मसाधकता नापि जीवब्रह्मभेदसाधकतेत्यस्य तद्विदामतिस्पष्टत्वात् । तस्मादुक्तानुमानमवष्टभ्य पूर्वपक्षाप्रसराच्तत्समाधानायैतत्सूत्रमित्युक्तिरत्यन्तायुक्तैव । किंचास्य स्वतन्त्रानुमानविरोधनिरासकत्वमिति ते मतम् । अद्वैतश्रुत्यादेरभावस्योक्तत्वात्, पृथगनुमानस्य कामगतित्वेनादृष्टार्थविषयेऽनपेक्षिततयोक्तबाधकत्वायोगादिति 'कामाच्च' (ब्र० सू० १ । १ । १८) इति सूत्रावयवव्याख्यानात् । तथा सत्यनुमाननिरासकनय एवेदं वक्तव्यं नात्रेति दूषणस्य स्पष्टत्वात् । किंच 'भेदव्यपदेशाच्च' इति सूत्रेण प्रतिपादिते भेदे प्रसक्तं तत्त्वमस्यादिश्रुतिविरोधं बहिर्निरस्यानुमानविरोधमनेन निरस्यतीति व्याख्यानम् 'अवश्यं निरसनीयं न सूत्रितं क्षुद्रं निरस्तप्रायं तु सूत्रितम्' इति सूत्रकारोपालम्भमात्रफलकं सुचिन्त्यमेव सूक्ष्मबुद्धिभिः ।

अष्टमसूत्रार्थोऽप्यनुपपन्न एव । भेदव्यपदेशादित्यनेन चारिताथ्र्यात् । भेदव्यपदेशादिति सूत्रोदाहृतवाक्येऽपि न साक्षाद्भेदव्यपदेशः । किंतु प्रजापत्याद्यानन्दस्य ब्रह्मानन्दाच्छतगुणन्यूनत्वोक्त्या सोऽनुमेय एव । प्रकृतेऽपि गम्यं भेदमाश्रित्यैव भेदव्यपदेशसमर्थनेऽविशेषात् । अथ 'भेदव्यपदेशाच्च' इति सूत्रोदाहृतवाक्ये गम्यस्यापि भेदस्य प्रापञ्चिकत्वशङ्कया मुक्तिकालेऽपि 'सोऽश्नुते सर्वान्कामान्सह' इति श्रुत्या जीवस्याऽऽनन्दमयेन ब्रह्मणा संबन्धशासनाच्चद्गम्यस्य भेदस्य पारमार्थिकत्वमस्मिन्सूत्रे समर्थनाच्चथैव भाष्यतत्त्वप्रकाशिकयोर्व्याख्यानान्नास्य 'भेदव्यपदेशाच्च' इत्यनेन गतार्थत्वमिति चेत् । न । तथा सत्यनेन तस्य वैयर्थ्यं दुर्वारम् । मुक्तिकालेऽपि जीवब्रह्मणोर्भेदस्य प्रामाणिकत्वस्य आनन्दमयेन ब्रह्मादीनां भेद एवास्त्विति 'भेदव्यपदेशाद्' इतिसूत्रनिवर्तनीयशङ्कया एवानुद-

यात् । मुक्तिकालेऽपि यदि जीवब्रह्मणोर्भेदस्तदा संसारकाले सुतरामित्यतिस्पष्टत्वात् । मुक्तिकाले जीवस्य ब्रह्मभावापत्तिबोधकश्रुतिविरोधेन 'सोऽश्नुते सर्वान्कामान्' इति श्रुतेः सहेत्यस्य यौगपद्यार्थकत्वं ब्रह्मणेतीत्थंभूतलक्षणे तृतीयेति रीत्या वाक्यार्थस्याऽऽवश्यकतायाः पूर्वमेवोदितत्वेन तस्यां मुक्तिकाले पारमार्थिकजीवेश्वरभेदबोधकत्वाभावाच्च जीवेश्वरभेदस्य पारमार्थिकताया विचारासहत्वाच्च । तथा हि—न तावद्भेदस्य पारमार्थिकत्वं गोत्वादिवज्जातिविशेषः कश्चिद्धर्मः । पदार्थमात्रवृत्तिजातेरभावात् । सत्तायाश्च भेदानधिष्ठानत्वात् । स्पष्टं चेदमाकरे । किंतु बाधागोचरत्वम् । तच्च न जीवेश्वरभेदेऽस्ति । 'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञाता' ( बृ० ३ । ७ । २३ ) इति श्रुतिवाक्येन जीवेश्वरयोर्भेदनिषेधात् । अथ प्रत्यक्षबाधागोचरत्वं तत्, तच्च जीवेश्वरभेदेऽप्यस्तीति चेत् । लाघवेन बाधागोचरत्वस्यैव परमार्थपदार्थत्वात् । चन्द्रमादेशिकत्वादावतिव्याप्तेश्च । अथ 'नान्योऽतोऽस्ति श्रोता' इति वाक्यं न स्वार्थपरम् । 'भिन्नोऽचिन्त्यः परमो जीवसंघात्' इत्यभेदनिषेधानुवादित्वादिति चेत् । न तावदिदं वाक्यमभेदनिषेधकम् । निषेधबोधकनञादेरश्रवणात् । नन्वभेदाभावो भेदः, अभावबोधकं च निषेधबोधकमिति चेत् । तथा सति सर्वस्यैव प्रमाणस्य निषेधकत्वापत्तेः । तत्प्रमेयस्य स्वाभावाभावरूपत्वात् । किंचासतोऽप्राप्तस्य वा निषेधायोगात् । भेदवाक्येनाभेदो निषिध्यत इति वदतोऽभेदः प्रातीतिक आहोस्विद्व्यावहारिकः स्यात् । नाऽऽद्यः । 'अहं ब्रह्मास्मि' इत्यैन्द्रियकाभेदाप्रतीतेः । 'नाहं ब्रह्म' इति भेदग्राहिप्रत्यक्षविरोधाच्च । अत एव न द्वितीयः । नहि तत्त्वावेदकभेदप्रमायां व्यावहारिकभेदप्रमायां वा सत्यां व्यावहारिकाभेदः संभवदुक्तिकः । तस्मात् 'नान्योऽतोऽस्ति द्रष्टा' इति वाक्यं न भेदवाक्यशेषं किंतु पारमार्थाभेदपरमेव । किंच 'भिन्नोऽचिन्त्यः' इति वाक्ये भेदोऽनूद्य निषिध्यते । अचिन्त्य इति भेदव्यापकचिन्त्यत्वनिषेधे भेदनिषेधपर्यवसा-

नस्य व्यापकाभावस्य ; व्याप्याभावव्याप्यतयाऽतिस्पष्टत्वात् । स्वरूपाख्यानमात्रपरत्वे प्रयोजनाभावात् । प्रतिपादितं चैतज्जिज्ञासासूत्रे । नापि 'नान्योऽतोऽस्ति द्रष्टा' इति द्रष्टृभेदनिषेधश्रुतिरनुवादः । द्रष्टृभेदाभावस्यान्यतोऽप्राप्तेः । नन्वभेदवादिभ्रमसिद्धभेदाभावमनुवदति । तथा च तत्त्वप्रकाशिकायाम् 'भेदव्यपदेशाच्च' इति सूत्रेऽद्वैतश्रुत्यभावे कथमद्वैतं श्रुत्या निषिध्यते । तस्याप्रत्यक्षत्वेन श्रुतिं विना प्राप्त्यभावात् । अप्राप्तस्य च निषेधायोगादित्याशङ्क्या 'उक्ता च प्राप्तिः' इति भाष्यमवतार्य न च 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इति श्रुतिविरोध इति भाष्ये द्वैतनिषेधाय श्रुत्यर्थापरिज्ञाननिमित्तप्राप्तेरुक्तत्वाद्युज्यते तन्निषेध इत्युक्तम् । तत्र च श्रुत्याऽर्थापरिज्ञाननिमित्तप्राप्तेरित्यनेन भ्रमसिद्धभेदाभावस्यैव निषेधायानुवादत्वोक्तेरिति चेत् । नह्यभेदवाद्यन्यो वा कस्यचिज्ज्ञानस्य स्वयमेव कारणम् । किंतु करणान्तरज्ञानजन्यज्ञानस्याऽऽश्रयः । तज्ज्ञानशब्दितायाः प्रसिद्धेः किंचित्करणं निरूपणीयम् । नहि प्रमैव हेतुमपेक्षते न भ्रान्तिः । सर्वेषां सर्वदा भ्रान्तिप्रसङ्गात् । न तावत्प्रत्यक्षमभेदसिद्धौ हेतुः । जीवपराभेदस्य प्रत्यक्षेण केनाप्यगृहीतत्वात्प्रत्यक्षभेदप्रमायां सत्यामभेदभ्रान्त्यनुदयाच्च । नाप्यनुमानम् । स्फुटतरप्रत्यक्षविरोधेन वह्न्यनौष्ण्यानुमानवत्तदनुदयात् । भेदेऽप्यनेकेषां लिङ्गानां सत्त्वाच्च । न च प्रत्यक्षस्य भ्रमत्वाभिमानान्न तद्बाधकमिति वक्तुं युक्तम् । बाधकप्रमितिं विना तद्भ्रमत्वाभिमानायोगात् । नाप्यनादिपौरुषेयवाक्यमद्वैतवादिनोऽन्यस्य वाऽभेदभ्रान्तौ हेतुः । स्फुटतरभेदादयोग्यत्वनिश्चयेन शाब्दबोधानुदयात् । शाब्दबोधमात्रस्य योग्यताज्ञानजन्यत्वात् । पौरुषेयवाक्यस्य च प्रत्यक्षादिविलक्षणप्रामाण्यासिद्ध्याऽद्वैतवादिभिरनभ्युपगमाच्च न तस्य भेदनिषेधश्रुतितुल्ययोगक्षेमता । न च प्रत्यक्षेण भेदाप्रतीतिदशायामनुमानात्पौरुषेयवाक्याद्वाऽभेदभ्रम इति वाच्यम् । जीवपरपदार्थद्वयज्ञाने सति तद्भेदज्ञानस्य विशेषदर्शनवशादवश्यमुत्पत्तेः । पदार्थद्वयज्ञानाभावेऽभेदानुमितिशाब्दादेरनुदयात् । सर्गप्रलययोरङ्गीकारेण

पौरुषेयवाक्यस्यानुमानप्रवाहस्योच्छिन्नत्वात् । सर्गाद्यकालीन-भ्रमासंभवाच्च । न च जीवभेदनिषेधश्रुतेर्जीवपराभेदे तात्पर्य-भ्रमादद्वैतप्रसिद्धिः । अनुपस्थिते प्रमाणान्तराप्राविते वाऽभेदे तत्र श्रुतितात्पर्यभ्रमासंभवात् । श्रुतिप्रमिते तन्निषेधायोगात् ।

यत्तु 'इष्टापूर्तं मन्यमाना वरिष्ठम्' इत्यादाविव श्रुतितात्प-र्याज्ञानेन 'तद्धैक आहुरसदेवेदमग्र आसीत्' ( छा० ६।२।१) इत्यादाविवानादिकुसमयेन वा देहेन्द्रियादीन्प्रति स्वातन्त्र्यरू-पस्यैश्वर्यस्य सर्वैरपि स्वात्मन्यभिमन्यमानत्वेन प्रत्यक्षेण वैक्य-स्य प्रसक्तिरिति । तन्न । तात्पर्यनिर्णायकैरुपक्रमादिलिङ्गैरैक्य-तात्पर्यस्य प्रमितत्वेन सुसमयत्वस्याऽऽकरे व्यवस्थापितत्वेन च तात्पर्याज्ञानकुसमयप्राप्तत्वस्य वक्तुमशक्यत्वात् । ऐक्यलि-ङ्गस्याऽऽभिमानिकत्वाभावेन तेन प्रसक्तस्य निषेधायोगाच्च । देहेन्द्रियादीनां जीवैक्येनाध्यस्तत्वात्तान्प्रति स्वातन्त्र्याभिमान-स्य सार्वलौकिकस्य वक्तुमशक्यत्वात् । यत्किंचित्प्रति स्वातन्त्र्यस्येश्वरलक्षणत्वाभावाच्च । न च यत्किंचित्प्र-त्यपि स्वातन्त्र्यं न जीवस्येति तदपीशलक्षणमेव, स्वातन्त्र्यं हि स्वभिन्नानधीनतया देहादिविनियोक्तृत्वम् । जीवस्तु स्वभिन्न-स्येशस्याधीन एव । तथा च स्वामित्वस्य स्वातन्त्र्यरूपत्वाभा-वादैक्याध्यस्ते देहादौ स्वामित्वाभावेऽपि न क्षतिरिति वाच्यम् । स्वत्वाननुगमात् । ईशे हि तदन्यानधीनत्वघटितमेव स्वातन्त्र्यम् । तच्च जीवेऽपीति तस्येशलक्षणत्वाभावात् । किंच जीवे यत्किंचित्प्र-त्येव स्वातन्त्र्यं वाच्यम् । तदपि नेशस्वरूपस्य शुद्धस्य लक्षणं किंतूपहितस्यैव । तथा चाभेदवाक्येषु तद्भेदबोधकत्वे स्थापितेऽपि न त्वदिष्टसिद्धिः । अस्मत्संमतस्य शुद्धयोरैक्यस्यानुपमर्दात् । तस्मादद्वैतप्रसिद्धेर्मूलान्तराभावात् 'नान्योऽतोऽस्ति द्रष्टा' इती-यमेव श्रुतिः साक्षाद्भेदनिषेधबोधिनी मूलमिति नाद्वैतश्रुतिरनुवादः । किंच प्रमाणसिद्धस्यैवानुवाद इति वदतः कथमद्वैतमप्रमाणम् । भेदादावद्वैतिमत इव तत्र व्यावहारिकप्रमाणाप्रसराच्चदंशे तात्त्वि-कप्रमाणविषयत्वस्यैव वक्तव्यत्वात् । न च निषेधार्थत्वात्प्रमाणा-नपेक्षेति वाच्यम् । भेदिना मते क्वचित्प्रमितस्यैवान्यत्र निषे-

धात् । जीवेश्वराभेदस्यान्यत्राप्रमितत्वात् । न चैवम् 'असदेवेदमग्र आसीत्' इत्यसद्वादो न स्यात्, प्रपञ्चसत्त्वग्राहिप्रत्यक्षविरोधेन तद्बुमानुपपत्तेः, अतस्तत्प्रसिद्धिरपि श्रुतिमूलैव स्यादिति वाच्यम् । असद्वादिना श्रुतिप्रामाण्यानभ्युपगमात् । उत्पत्तेः पूर्वं कार्यमसदेवान्यथोत्पत्त्ययोगादित्यादितर्काभासप्रसिद्धस्यासतोऽनुवादसंभवात् । न च प्रत्यक्षविरोधोऽपि । तस्येदानींतनप्रपञ्चसत्त्वग्राहिणो भिन्नविषयत्वात् । तस्मान्न द्रष्टृभेदश्रुतिर्भेदश्रुतिशेषार्था । नापि द्रष्टृभेदोपासनार्था । अन्तर्याम्यक्षरब्राह्मणयोरुपासीतेत्यादिलिङ्गाद्यश्रवणात्कल्पकाप्रतीतेश्च । वाक्यस्यानुभूयमानप्रमेयपरत्वे संभवति तद्विरुद्धाश्रुतार्थकल्पनाया अन्याय्यत्वात् । अथ 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति, एष त आत्मा' (बृ० ३।७।२२) इत्यादिवाक्येन नियन्तृनियन्तव्यत्वादिनेश्वरजीवयोर्भेदप्रतीतेस्तत्संनिधावाम्नातम् । 'नान्योऽतोऽस्ति द्रष्टा' इत्यादि वाक्यं तदविरोधेन 'अतः— अन्तर्यामिणः सकाशात्तत्सजातीयोऽन्यो द्रष्टा नास्ति' इत्येवमर्थकतया व्याख्येयम् । न च तत्सजातीय इति मध्ये पूरणमयुक्तमयुक्तं च चाक्षुषज्ञानाश्रयवाचिनां द्रष्ट्रादिशब्दानामन्तर्यामिद्रष्टृपरत्वमिति वाच्यम् । सजातीय इत्यस्य 'नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थावगतिः' इतिव्युत्पत्तिसिद्धत्वात् । यथा सिंह इवायमितीवशब्दघटितं वाक्यं सिंहान्यं सिंहसदृशं बोधयति । तथा नञ्युक्तमपि 'अनश्वमानय' इत्यादि वाक्यमश्वान्यमश्वसदृशं वस्तु बोधयतीत्यस्य लोकप्रसिद्धत्वात् । नञ्पदं चान्यपदस्याप्युपलक्षणम् । लौकिकव्युत्पत्तेस्तत्रापि तुल्यत्वात् । ब्राह्मणादन्यमानयेत्याद्युक्ते न घटादिरानीयते । अपि तु तत्सदृशः क्षत्रियादिरेवेत्यस्य सर्वलोकसिद्धत्वात् । नापि द्रष्ट्रादिपदासांगत्यम् । 'पश्यत्यचक्षुः स शृणोत्यकर्णः' इत्यादिप्रयोगाद्रूपादिसाक्षात्कारवाचिन एव दृश्यादिधातव इति तेषां तादृशसाक्षात्काराश्रयपरत्वेऽसंगत्यभावादिति चेत् ।

अत्र वदन्ति—नञिवेति न्यायो न सर्वत्र प्रवर्तते । किंतु यत्रा-घटमानयेत्यादौ विशेष्यानिर्देशात्कि तद्भिन्नमित्याकाङ्क्षायां

प्रतियोगिसमर्पकेण पदेन तत्सदृशोपस्थित्या तदेवान्यत्वेन नि- र्णीयते तत्रैव। न तु यत्र विशेष्यस्य निर्देशेन निराकाङ्क्षता तत्रा- पि। अपीतं घटमानयेत्यादौ तदप्रवृत्तेः। प्रकृते च 'नान्योऽतोऽस्ति द्रष्टा' इत्यादौ द्रष्ट्रादिपदैर्विशेष्यस्य निर्देशान्न तदाकाङ्क्षेति श्रुतिसंकोचकतया न तादृशो न्यायः कुलधर्म इत्येवाऽऽश्रयितुं युक्तः। नापि द्रष्ट्रादिपदानां रूपसाक्षात्कारत्वमात्रनिमित्तक- त्वेन जीवेश्वरसाधारणत्वम्। येन तत्र विशेष्यनिर्देशेऽपि तद्विशेषा- काङ्क्षायां तन्न्यायप्रवृत्त्या तेषामीश्वरव्यवस्थापकत्वं स्यात्। दृ- श्यादिधातूनां चक्षुर्जन्यतावच्छेदकजातिविशेष एव प्रवृत्तिनिमि- त्तम्। न रूपसाक्षात्कारत्वं साक्षात्कारत्वमात्रं वा। आद्ये गौरवात्। रूपं पश्यतीति प्रयोगासामञ्जस्यप्रसङ्गाच्च। 'दर्शनाय चक्षुश्चक्षुश्च द्रष्टव्यं च' इत्येवमादिश्रुत्या चक्षुःसंबन्धितयैव दर्शनादिबोध- नाच्च द्वितीयेऽतिप्रसङ्गात्। न चैवं सति 'पश्यत्यचक्षुः स शृणोत्य- कर्णः' इति श्रुतिविरोधः शङ्क्यः। 'अपाणिपादो जवनो ग्रहीता' इति तदुपक्रमे जवनादिशब्दस्य तत्तत्पदार्थप्राप्त्यादिमात्रपरत्वेन लाक्षणिकताया दर्शनात्तत्साहचर्याद्दर्शनादीनामपि तत्र गौण- त्वोपपत्तेः। चक्षुराद्यभावेऽपि दर्शनमत्यद्भुतमेवेति वक्तुं प्रवृत्ता- यां एतच्छ्रुतेर्जातिविशेष एव दृश्यादीनां प्रवृत्तिनिमित्तमित्यत्रैव तात्पर्याच्च। अपि चात्र 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ० २। ४। ५) इति श्रुतिप्रतिपादितानाम् 'आत्मनो वा दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्' इति श्रुतिप्रतिपादितानां वा दर्शनादीनां ग्रहणं न्याय्यम्। शब्दक्रमसं- ख्याप्रत्यभिज्ञानात्। ते च जीवधर्मा एवेति द्रष्ट्रादिशब्दैर्जीवस्यैव विशेष्यस्य समर्पितत्वात्प्रकृतादन्तर्यामिणः सकाशाद्द्रष्ट्रादि- रूपो जीवोऽन्यो नास्तीत्येव प्रतीयते, न तु तत्सजातीयोऽन्यो द्रष्टा नास्तीति। अस्तु वा यथाकथंचित्तत्र नञिवेतिन्यायप्रवृ- त्त्या तदन्यतत्सजातीयस्य द्रष्ट्रादिशब्दैरुपस्थितिस्तथाऽपि तद्वा- क्येऽतोऽन्तर्यामिणः सकाशात्तत्सजातीयो द्रष्टा नास्तीति जीवे- श्वरयोर्भेदमादाय वाक्यार्थवर्णनमसंगतमेव। तथा हि—किमत्र साजात्यं यथाकथंचिज्जीवेश्वरसाधारणरूपेणोतेश्वरासाधारणरू-

पेण । नाऽऽद्यः । तथा सति जीवस्यापि परमात्मसदृशतया द्रष्ट्रादिशब्दैरुपस्थिते जीव एवान्तर्यामिभेदो निषिध्यत इति पर्यवसानात्तवाभीष्टासिद्धेः । नापि द्वितीयः । तथाऽन्तर्यामिणा सजातीयस्याप्रसक्ततया तन्निषेधायोगात् । एतेन 'नान्योऽतोऽस्ति श्रोता' इति वाक्य ईश्वरान्तरनिषेधकत्वं निरस्तम् । ईश्वरभेदस्येश्वरनानात्वरूपस्याप्रसक्तेः । न च क्षित्यादिकमनेककर्तृकं विचित्रकार्यत्वात्प्रासादादिवदित्यनुमानेनेश्वरनानात्वभ्रमे तन्निषेधतीति वक्तुं युक्तम् । पृथिव्यादेः स्वतन्त्रनानेश्वरकर्तृकत्व एकस्य सर्जनेच्छायामेकस्य संहारेच्छायामेकस्य पालनेच्छायां जगदुच्छेदप्रसङ्गः । असर्वज्ञनानाशिल्पिकर्तृकप्रासादादिदृष्टान्तेन नानाकर्तृकत्वसाधनेऽसर्वज्ञनानाकर्तृणामेव सिद्ध्या तेषामीश्वरत्वासिद्धिरित्यादितर्कबाधितत्वात् । 'कामाच्च नानुमानापेक्षा' (ब्र० सू० १ । १ । १८) इति सूत्रेऽनुमानस्य कामचारत्वेनादृष्टविषयेऽप्रमाणत्वव्यवस्थापयता त्वयाऽऽनुमानिकेश्वरनानात्वप्रसक्तेर्वक्तुमशक्यत्वात् । औपनिषदत्वश्रवणात् 'एको देवः सर्वभूतेषु गूढः' इत्येकत्वश्रवणाच्चादृशानुमानस्य श्रुतिबाधितत्वाच्च । अस्तु वा कथंचित्प्रसक्तिस्तथाऽप्यन्नादीनां पञ्चानामपि ब्रह्मत्वं वदता त्वयाऽस्याः श्रुतेरीश्वरनानात्वनिषेधकत्वं वक्तुं न शक्यम् । किंचास्याः श्रुतेः परमात्मभेदनिषेधकत्वे 'नान्योऽतोऽस्ति द्रष्टा' इत्येतावन्मात्रेणोपपत्त्या 'नान्योऽतोऽस्ति श्रोता' इत्यादिकं निरर्थकमेव स्यात् । असंगतमेव च स्यात् । परमात्मनो नित्यज्ञानाश्रयस्य तद्रूपस्य वाऽशरीरिणः श्रोत्रादिजन्यज्ञानाश्रयत्वरूपश्रोतृत्वाद्ययोगात् । न च 'नान्योऽतोऽस्ति' इत्यादिवाक्यस्य जीवेश्वरभेदनिषेधकत्वे 'य आत्मनि तिष्ठन्' इत्यादिना नियन्तृनियन्तव्यत्वादिना भेदव्यपदेशः 'एष त आत्मा' इति भेदव्यपदेशश्चानुपपन्न इति वाच्यम् । 'य आत्मनि' इत्यत्र शुद्धात्मा न निर्दिष्टः । 'यो विज्ञाने तिष्ठन्' इत्याम्नानेनान्तःकरणचतुष्टयान्तर्गतविज्ञानोपाधिकस्याभिधानात् । अत्रापि तस्यैवाऽऽत्मशब्देन निर्देश इत्यभ्युपगमात् । स्पष्टं चेदं भाष्यतट्टीकादौ । तथा चोपा-

धिकरूपेण नियन्तृनियन्तव्यभेदसत्त्वेऽपि शुद्धरूपेण तदभेदे बाधकाभावात् । 'एष त आत्मा' इति निर्देशस्य घटस्य स्वरूपमितिवदुपपन्नत्वात् । तस्मादनवकाशेयम् 'नान्योऽतोऽस्ति' इत्यभेदधीर्भ्रान्तिप्रतीतजीवेशभेदमेवापवदतीति निर्बाधः पन्थाः । एतेन सन्तु चैताः श्रुतयोऽद्वैतपरास्तथाऽपि नोक्तभेदस्य तद्विरोधः । भगवतः सकलस्वामित्वेनैक्यव्यपदेशोपपत्तेरिति जीवेश्वरभेदप्रमाणत्वेनाऽऽनन्दतीर्थोपन्यस्तस्य 'इदं हि विश्वं भगवानिवेतरो यतो जगत्स्थाननिरोधसंभवः' (भाग० १ । ५ । २० ) इति वाक्यस्याभिप्रायवर्णनं जयतीर्थीयं निरस्तम् । 'नान्योऽतोऽस्ति' इति जीवेश्वरभेदनिषेधकनिरवकाशश्रुतिविरोधेनाद्वैतश्रुतेस्तथातात्पर्यवर्णनायोगात् । 'इदं हि विश्वं भगवानिवेतरः' इत्यस्य 'इतरद्विश्वं भगवान्' इति 'यः स्थाणुः स पुमान्, यद्रजतमभात्सा शुक्तिः' इतिवद्बाधायामप्युपपन्नं सामानाधिकरण्यम् । न त्वदुक्तार्थगमकमित्याकरे स्पष्टत्वात् ।

यत्तु भेदः पारमार्थिक एव 'सत्य आत्मा सत्यो जीवः सत्यं भिदा सत्यं भिदा' इति श्रुतेरिति । तन्न केचित्क्षमन्ते । प्रसिद्धशाखास्वनवगमादस्याः श्रुतित्व एव विप्रतिपत्तेः । अस्तु वा श्रुतित्वं तथाऽपि 'नान्योऽतोऽस्ति' इत्याद्यनवकाशश्रुतिविरोधेन निषेधापेक्षितसत्यत्वेन प्रतीतव्यावहारिकभेदानुवादपरत्वेन तच्छेषतया स्वार्थपरत्वाभावात् । अभेदश्रुतेर्व्यावहारिकभेदविषयत्वासंभवात् । माऽस्तु वाऽस्याः श्रुतेरभेदश्रुतिशेषत्वं तथाऽपि भेदनिषेधश्रुत्यविरोधायास्या भेदनिषेधपरत्वमेवास्तु । तथा हि—सत्य आत्मेत्यात्मनस्त्रिकालाबाध्यत्वमाह । किं तर्हि जीवत्वमपि वास्तवम्, नेत्याह—असत्यो जीव इति । भावप्रधानो निर्देशः । जीवत्वमिति यावत् । विशिष्टनिषेधस्य विशेष्यबाधे विशेषणोपसंक्रमात् । द्विविधे पदविभागे संभवत्यपि बह्वभेदश्रुतिवाक्यानुरोधेनोक्तन्यायेन चात्रासत्य इति पदच्छेद एवोचितः । एवं सजातीयभेदं निराकृत्य विजातीयभेदं निराकरोति—सत्यं भिदाऽसत्यं भिदेति । सत्यशब्देन पञ्चभूतात्मकं जगत्प्रतिपाद्यते 'सच्च त्यच्चाभवत्' (तै० २ ।

६ ) इति श्रुतेः । तत्र सदिति पृथिव्यप्तेजांसि । त्यदिति वाय्वाकाशौ । तदेव भिद्यत इति भिदा । असत्यमनिर्वचनीयम् । तस्य दाढर्याय पुनरुक्तिः 'भिदाऽसत्यं भिदा' इति । काकाक्षिगोलकन्यायेनासत्यमित्यस्योभयत्रानुषङ्गः । स्मृतिरपि भेदमपवदति—

विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥ इति ।

'द्वा सुपर्णौ' ( मु० ३ । १ । १ ) इत्यादिश्रुतीनामपि भेदपरत्वं निरस्तं प्राक् । आकरे चातिविस्तरेणेति दिक् ॥ १९ ॥

श्रीमच्छंकरपादाब्जभूषणे परदूषणे ।
आनन्दमयसिद्धान्ते राघवाचार्यसूरिणाम् ॥
शिष्यस्य रघुनाथस्य कृतिर्भवतु सन्मुदे ।
अनया तुष्टिमायातु ह्रीपतिः श्रीपतिः स्वराट् ॥

इत्यानन्दमयाधिकरणम् ।

